लमस्येति स्वैरी णिन्यन्तः । अथवा ईरणमीरो घञंतः ततो मत्वर्थीय इनिः । स्वैरिणी ईबंतः ॥

तत्त्व०—अक्षादेरूहिण्यादाविति । अक्ष प्र स्व इत्यक्षादयः ऊहिनी ईर ईरिण ऊढः ऊढि ऊठ इत्यूहिन्यादयः। अविधिसामर्थ्यादादौ सवर्णदीर्घो न । अक्षौहिणीति सेनाविशेषस्य संज्ञा । तथाहि । " अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संयुक्तानि सहस्राणि गजानामेकविंशतिः ( २१८७० )॥ एवमेव रथानां तु संख्यानां कीर्त्तितं बुधैः ( २१८७० )। पंचषष्टिसहस्राणि षट् शतानि दशैव तु ॥ संख्यातास्तुरगास्तज्ज्ञैर्विना रथ्यैस्तुरंगमैः ( ६५६१० )। नृणां शतसहस्रं तु सहस्राणि नवैव तु ॥ शतानि त्रीणि चान्यानि पंचाशत्तु पदातयः ( १०९३५० )॥ " सप्ततिसहिताष्टशताधिकैकविंशतिसहस्राणि गजाः इयन्त एव रथाः दशोत्तरषट्शताधिकानि पंचषष्टिसहस्राणि अश्वाः । पंचाशदुत्तरशतत्रयसहितं नवसहस्राधिकमेकलक्षपदातयः इत्यक्षौहिणीलक्षणम् ॥

**य्वोर्लोपश् वा पदांते ॥ ४४ ॥** पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति ॥ त आगताः, तयागताः । पटो इह, पट इह, पटविह । हे सखायिति, हे सख इति । तस्मा इदम्, तस्मायिदम् । ता इह, ताविह । लोपशि न संधिः । न लोपशि तु भवति छंदसि च श्वादेरिति निर्देशात् । दामोदरः । राजाश्वः ॥

सुबो०—य्वोर्लोपश् वा पदांते । य् च व् च य्वौ तयोर्य्वोः । पदस्यांतः पदांतः अंतशब्दो अवयववाची । पदं तु विभक्त्यंतमेव गृह्यते । पद्यते गम्यतेऽर्थोऽनेनेति व्युत्पत्तेः । पूर्वसूत्रेभ्योऽय् अव् आय् आव् इत्यनुवर्तते । अनुवृत्तं च षष्ठ्या विपरिणम्यते । पदांते स्थितानामयादीनां य्वोर्लोपश् वा स्यात् । दाम उदरे यस्य स दामोदरः । राज्ञोऽश्वः राजाश्वः । दाम्नो न लोपशिति लोपशि कृतेऽपि पुनः संधिर्जातः । समासे न लोपशि तु भवतीत्युक्तत्वात् । पदांते किम् । नायकः । पावकः । अयादीनां किम् । दध्यानय । मध्वत्र । ननु वृक्षं वाति वेति वा । वृक्षवाः, वृक्षवीः। वा गतिगंधनयोः, वी गतिव्याप्तिप्रजननादौ आभ्यां क्विप् । वृक्षवां वृक्षव्यं वा करोतीति ञिर्डित्करणे इति ञिप्रत्यये टिलोपे च सति स धातुरिति धातुत्वं ततः क्विपि ञिलोपे च वृक्षव् इति । वृक्षव् इहेत्यादाववूरूपस्य सत्त्वात् वकारस्य लोपश् कस्मान्न । उच्यते । अव् इति रूपस्य लाक्षणिकत्वान्न । अयादीनां रूपमव्युत्पन्नमेव ॥

तत्त्व०—य्वोर्लोपश् वेति । य् च व् च य्वौ तयोः अनन्तरोक्तत्वादयादीनामेव यकारवकारौ गृह्येते इत्याशयेनाह । अयादीनामिति । अयादयश्च अय् आय् अव् आव् । पदस्यान्तः पदान्तः । अन्तशब्दोऽवयववाची । पदं च विभक्त्यन्तमेव । अयादयश्चैतत्सूत्रभाषिता एव गृह्यन्ते तेन वृक्ष वातीति वृक्षवाः तं करोति ञिर्डित्करणे इति ञिप्रत्यये टिलोपे च सति स धातुरिति धातुत्वं ततः क्विपि ञिलोपे च वृक्षमिति, भवति । वृक्षविहेत्यत्र लोपो न । पदांते किम् । नयनम् । श्वादेरिति । श्वा आदिर्यस्य सः श्वादिः तस्य । बहुव्रीहिरन्यार्थ इति समासे नाम्नो लोपश् धाविति न लोपशि सवर्णे दीर्घः ॥

**एदोतोतः ॥ ४५ ॥** पदांते स्थितादेकारादोकाराच्च परस्याकार-

स्य लोपश्च भवति ॥ तेऽत्र । पटोऽत्र । गोर्वा । तेन गो अजिनं गवाजिनम् ॥

सुबो०—एदोतोतः । अयवोरपवादः । एच्च ओच्च तयोः समाहारः एदोत् तस्मात् एदोतः । तपरकरणं स्पष्टार्थम् । प्लुतव्यावृत्तिः प्लुत इत्यादिना बोध्या । तेन आगच्छाग्ने ३ अत्र तिष्ठ । एहि विष्णो ३ अत्र हविर्भुङ्क्ष्वेत्यादौ न संधिः । प्लुतस्य निषेधादिति । पदांते एदोतः परस्यातो लोपश्च स्यात् । पदांते किम् । नयनम् । भवनम् । एदोतः किम् । तस्मै अन्नम् । तौ अत्र । अतः किम् । ते आगताः । गोर्वा । पदांते ओदंतात् गोशब्दात् परस्यातो लोपश्च पक्षे प्रकृतिभावश्च । ओदंतात्किम् । चित्रग्वग्रम् । पदांते किम् । गोः । प्रकृतिभावे गो अजिनम् । अल्लोपे गोजिनम् । गोरग् वेत्यगागमे गवाजिनम् ॥

तत्त्व०—एदोतोतः । एच्च ओच्च एदोत् तस्मात् तपरकरण सुखमुखोच्चारणार्थम् । अत इति तपरकरणं दीर्घादिनिवृत्त्यर्थम् । तेन हरे आगच्छेत्यादौ लोपो न । तेऽत्रेति । अत्रापवादत्वाल्लोप एव न त्वायादयः । गोर्वेति । गोशब्दादकारस्य लोपो वेत्यर्थः । तेन गोजिनमित्यत्र रूपत्रयम् ॥

सवर्णे दीर्घः सह ॥ ४६ ॥ सामान्यं सवर्णे परे सह दीर्घो भवति ॥ दैत्यारिः । श्रद्धात्र । दधीह । भानूदयः । श्रीशः । होतॄकारः । होतृकारः । " सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् । परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ "

सुबो०—सवर्णे दीर्घः सह । सवर्णशब्दस्य च ससंबंधिकत्वात्सवर्णादिति लभ्यते । वर्णशब्दोऽक्षरेऽस्ति । " वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे । " इत्यभिधानात् । सशब्देन तु समानशब्दो लक्ष्यते । नामैकदेशेनापि नामग्रहणस्य संमतत्वात् । सगोत्रः सनामेत्यादाविव समानशब्दस्यादेशः स इति वा । ततः समानं तद्वर्णं च सवर्णं तस्मात् सवर्णसंज्ञकस्य सवर्णस्यात्र ग्रहणं नास्ति किंतु यौगिकस्य ग्रहणम् । तेन समानसंज्ञात्मको वर्णः समानशब्देन ग्राह्यो न तु तुल्यार्थकः । समानसंज्ञकाद्वर्णात्सवर्णे परे सह दीर्घो भवतीत्यर्थः । सहग्रहणं तूभयोः स्थानित्वलाभार्थं कृतं तच्च नामी इति यावदनुवर्तते । ननु विना सहेत्यनेन सहशब्दयोगे तृतीया किं न स्यात् । उच्यते । उपपदविभक्तेः कारकविभक्तिर्बलीयसीत्युक्तत्वात् सहशब्दयोगे विधीयमाना तृतीयोपपदविभक्तिः । सवर्णे इति । सप्तमी तु भावे सामीपिकाधारे वा विहिता कारकविभक्तिः । क्रियान्वयित्वात् क्रियापदं अध्याहृतं भवति । नायोगे दीर्घ इत्यत्रान्योक्ते इत्यनेन प्रथमापि कारकविभक्तिः । सवर्णे किम् । दध्यत्र । मध्वेतत् । उत्त दधीह । भानूदयः । श्रीशः । वधूपमेत्यादौ उकारे वकारादिप्राप्तिः सवर्णे दीर्घ इत्यस्य प्राप्तिश्चास्ति । तत्र किं भवतीत्यत आह । "सामान्यशास्त्रतो नूनं

विशेषो बलवान् भवेत्।" नूनमित्यव्ययं निश्चये विचारे वा। बहुव्यापकं शास्त्रं सामान्यशास्त्रम्। शासनाच्छास्त्रम्। लक्षणं सूत्रमित्यर्थः। तस्मादल्पव्यापको भवतीत्यर्थः। यथा रामोऽग्नेत्यादौ लोपशोऽपवाद उत्वम्। सर्वस्मै इत्यादौ ङेरगित्यस्यापवादः स्मट्। कार्य्येऽणित्युत्सर्गः आतो ड इत्यपवादः। नुडागम इत्युत्सर्गः सुडागम इत्यपवादः। एवं यत्ववत्वरत्वादिविधिरुत्सर्गः दीर्घविधिरपवादः। पुनः परिहारांतरमाह। परेण पूर्वबाधो वा। वेति पक्षांतरे सूत्रपाठे परेण परपठितेन विधिना पूर्वबाधः क्रियते पूर्वपठितो विधिर्बाध्यते इत्यर्थः। इदं परिहारांतरं च नित्यांतरंगापवादव्यतिरिक्तस्थले एव द्रष्टव्यम्। तत्र नित्यं बाधकं आवश्यकत्वात्। अंतरंगं तु बाधकं लाघवात्। अपवादस्तु बाधको भवति वचनप्रामाण्यात्। नुमागमआदेशयोः यथा प्रधीनीत्यादौ परेण नुमा य्वौ वेति यत्वं बाध्यते तथा दीर्घविधिना यत्वादिविधिर्बाध्यते। ननु वारीणां स्त्रीणामित्यादौ परत्वान्नुमियोः सतोर्नुडागमो न स्यादित्यत आह। प्रायशो दृश्यतामिह प्रायश इत्यव्ययं बाहुल्येऽर्थे। इह शास्त्रे पूर्वोक्तो न्यायो बाहुल्येन भवद्भिर्दृश्यतां ज्ञायतां न सर्वत्र। दृशिर्ज्ञापनार्थः। दृशिर्ज्ञानेऽक्षिण दर्शने इत्युक्तत्वात्। कर्मणि लोट्। प्रायश इति कथनात् क्वचित्पूर्वेणापि परविधिर्बाध्यते इति दृश्यताम्। यथा स्त्रीणां वारीणामित्यादौ वियूनुमौ परावपि पूर्वेण नुटा बाध्येते॥

तत्त्व०–सवर्णे दीर्घः सहेति। सवर्णशब्दस्य ससंबंधिकत्वात्सवर्णस्येति लब्धम्। सवर्णसंज्ञा च समानस्यैव नान्यस्येति स्पष्टार्थम्। समानस्येति। सहयोगे तृतीया तु न। उपपदविभक्तित्वात्। सप्तम्यास्तु सामीपिकाधारे विहितत्वात्कारकविभक्तित्व दीर्घ इति प्रथमायाश्चाध्याहृत भवति। 'नायोगाद्‌न्योक्त 'इत्यनेन विहितत्वात्कारकविभक्तित्वम्। उपपदविभक्तेः कारकविभक्तिर्बलीयसीति वचनात्। सामान्यस्येति किम्। हरये श्रद्धात्रेति। पर्जन्यवल्लक्षणप्रवृत्तिरिति दीर्घस्यापि दीर्घः। यत्तु अदीर्घो दीर्घतां याति इत्यादि कलापानुसारिभिरुक्त तद्भाष्यविरोधादुपेक्ष्यम्। अलो लि दीर्घ इत्येव सुवचम्। सामान्यशास्त्रत इत्यादि। बहुव्यापक सामान्यं अल्पव्यापको विशेषः॥

हलादेरीषादौ टेर्लोपो वक्तव्यः॥४७॥ हलीषा। लांगलीषा। मनीषा। अर्वा। शकंधुः। कर्कंधुः। कुलटा। पटत् इति पटिति। सारंगः पशुपक्षिणोः। साराङ्गोऽन्यः। सीमंतः केशवेशे। सीमान्तोऽन्यः॥

सुबो०–हलादेरीषादौ टेर्लोपो वक्तव्यः। हलादेष्टेर्लोपः स्यादीषादौ परे। ईष उंछे ईष गत्यादिषु च। आस्यां गुरोर्हसादित्यङ्प्रत्यये ईषाशब्दः। हलस्य ईषा हलीषा लांगलदंडः। लांगलस्य ईषा लांगलीषा। मनसः ईषा मनीषा। शकानां देशविशेषाणामंधुः कूपः शकंधुः। कर्कोणां राज्ञामंधुः कर्कंधुः। अटतीत्यटा पचाद्यप्रत्ययः। कुलस्याटा कुलटा। यदा तु कुलमटतीति विगृह्येत तदा कार्येऽणित्यण्प्रत्यये ईपि च कुलटीति स्यात्। अन्यस्मिन् अर्थे साराणि प्रधानान्यंगानि

यस्य स सारंगः। टिलोपो न। केशवेशे केशरचनायामर्थे टिलोपो भवति । सीमंतः। अन्यस्मिन्नर्थे सीमाया अंतः । सवर्णे दीर्घः । सीम्नो अंतः सीमांत इति वा । नाम्नो नो लोपशिति नलोपे कृते दीर्घोऽत्र । "सीमसीमे स्त्रियामुभे" इत्यमरः ॥

तत्त्व०—हलादेरीति । हलादेरीषादेशश्च आकृतिगणत्वं बोध्यम् । तेन पतजलिर्मार्तंड इत्यादि सिद्धम् । हलीषेति । "ईषा लांगलयष्टिः स्यात्" इत्यमरः । मनीषेति । "बुद्धिर्मनीषा धिषणा" इत्यपि च । शकन्धुरीति । शकानां देशविशेषाणामंधुः कूप इत्यर्थः । सीमान्तोऽन्य इति । सीम्न अन्तः सीमान्तः ॥

**ओत्वोष्ठयोः समासे वा ॥ ४८ ॥**

**ओऔ औ ॥ ४९ ॥ अवर्णादोकारे च परे सह औकारो भवति ॥**

**बिम्बोष्ठः, बिम्बौष्ठः। स्थूलोतुः, स्थूलौतुः। समासे इति किम्। तवौष्ठः॥**

सुबो०—ओत्वोष्ठयोः समासे वा । समासे अकारस्य लोपो वा स्यादोतुशब्दे ओष्ठशब्दे च परे । बिंबवदोष्ठो यस्य स बिंबोष्ठः । स्थूलश्चासौ ओतुश्च स्थूलोतुः । "ओतुर्बिडालो मार्जारः" इत्यमरः । एकस्मिन्समासे इदं प्रवर्तते तेनेह न । हे वृषलसुतौष्ठव्रणस्ते इति । पक्षे औत्वम् । ओऔ औ । आद्यौ सप्तम्यंतौ । प्रथमांतोऽन्त्यः ॥

तत्त्व०—ओत्वोष्ठयोरिति । ओतुश्च ओष्ठश्च तौ तयोः । अत्र स्वराद्यदन्तत्वादोष्ठशब्दस्य पूर्वनिपाते न्याय्ये स्वराद्यदन्तमित्यस्यानित्यत्वज्ञापनायेदम् । स्थूलोतुरिति । स्थूलश्चासौ ओतुश्च स तथा । ओतुर्मार्जारः । ननु वृषलसुतौष्ठव्रणस्ते इत्यत्र कथं न टिलोपः स्यादिति चेत्सत्यम् । ओत्वोष्ठयोश्चैकत्र समासे स्थितावित्र बोध्यम् ॥

**एदोदादौ धातौ ॥५०॥ अवर्णांतोपसर्गस्य लोपः ॥ प्रेजते । उपोषति ॥**

सुबो०—एदोदादौ धातौ । अवर्णांते यस्य स अवर्णांतः अवर्णांतश्चासौ उपसर्गश्च अवर्णांतोपसर्गस्तस्य अवर्णांतोपसर्गस्य लोपः स्यात् । एच्च ओच्च एदोतौ एदोतावादौ यस्य स एदोदादिस्तस्मिन् ऐदोदादौ धातौ परे । राजृ दीप्तौ कंपने च । कंपनार्थस्तु परस्मैपदी प्रेजतीति । प्रेजते इति दीप्त्यर्थः ॥

तत्त्व०—एदोदादाविति । एच्च ओच्च एदोत् स आदिर्यस्य सः तथा तस्मिन् । प्रेजत इति । एजृ दीप्तौ नतु एजृ कंपने भ्वादिः । तस्य परस्मैपदित्वात् । उपोषतीति । उष दाहे । एदोदादिकं च कृत्रिममकृत्रिमं च ग्राह्यं विशेषानुपादानात् । एत्येधत्योरिति निषेधज्ञापनाच्च ॥

**एदोदादौ नामधातौ वा ॥५१॥ उपेडकीयति, उपैडकीयति । प्रोघीयति, प्रौघीयति ॥**

सुबो०—एदोदादौ नामधातौ वा । अवर्णांतोपसर्गस्य वा लोपः स्यात् एदोदादौ नामधातौ परे । आत्मन एडकमिच्छतीत्यैडकीयति । नाम्नो य ईश्चास्येति यः । आत्मन ओघमिच्छतीत्योघीयति ॥

तत्त्व०—उपेडकीयति इति । एडकमिच्छति इति वाक्ये नाम्नो य ई चास्येति सूत्रेण यात्यये ऽकारस्येकारादेशे रूपसिद्धिः । एवं प्रोघीयतीत्यादि ॥

एत्येधत्योर्न ॥ ८२ ॥ उपैति । उपैधते ॥

सुबो०–एत्येधत्योर्न । अवर्णांतोपसर्गस्य लोपो न भवति । एतिश्च एधतिश्च इति एत्येधती तयोरेत्येधत्योः परतः । संध्यक्षराद्योरेत्येधत्योरेव । तेनेह न । उपेति । मा भवान्प्रेदिधदिति । प्रपूर्वस्य एधतेर्ण्यंतस्य लुङि परे । आङि लघाविति ह्रस्वे कृते पश्चाद् द्वित्वे मेऽट इत्यडागमाभावे चेदं रूपम् ॥

तत्त्व०–एत्येधत्योरिति । इण् गतौ । एध वृद्धौ ॥

प्रस्यैष्यैषयोर्न ॥ ८३ ॥ एषः, एष्यः । प्रेष्यः प्रेषः । प्रस्य किम् । अपेषः ॥

सुबो०–प्रस्यैष्यैषयोर्न । प्रोपसर्गस्याकारस्य लोपो न स्यादेष्यशब्दे एषशब्दे च परे । एदोदादौ धाताविति प्राप्तेऽयं निषेधः । इष् इच्छायां तुदादिः । इष गतौ दिवादिः । इष आभीक्ष्ण्ये क्र्यादिः । एषां धातूनां घञ्प्रत्यये ध्यण्प्रत्यये च एष एष्य इति रूपे भवतः । किंच एषुसाहचर्यादेष्योऽप्यनव्ययं गृह्यते । तेन ञ्यं तादिषेः क्यः । क्यपि कृते एष्येत्यव्ययम् । तत्राकारस्य लोपो भवतीत्यर्थः । प्रेष्य गत इति ॥

तत्त्व०–प्रेष इति । इषु इच्छायां तुदादिः । इष गतौ दिवादिः । इष आभीक्ष्ण्ये क्र्यादिः । घञि ध्यणि च एष एष्य इति रूपे सिद्धे । तत्र लोपे प्राप्तेऽनेन निषेधः । यस्तु ईष उंछे यश्च ईष गतिहिंसादानेषु तयोर्दीर्घोपधत्वादिष ईष्यस्तत्रैत्वे । प्रेषः प्रेष्यः ॥

एवेऽनवधारणे ॥ ८४ ॥ अद्येव । अवधारणे त्वद्यैव ॥

सुबो०–एवेऽनवधारणे । अकारस्य लोपः स्यादनिर्द्धारणे एवशब्दे परे । अद्येव कुरु । अनिश्चयार्थे एवशब्दोऽत्र । निश्चयार्थे त्वकारस्य लोपो न । अद्यैव ॥

तत्त्व०–एव अनवधारणे इति । एवशब्दे परे अनवधारणेऽर्थे अकारांतपूर्वपदस्य लोप इत्यर्थः ॥

अ इ ए ॥ ८५ ॥ अवर्णादिवर्णे परे सह ए भवति ॥ ममेदम् ॥

सुबो०–अ इ ए । अ इति पंचम्यंतं इ इति सप्तम्यन्तं ए इति प्रथमांतं सांकेतितम् ॥

तत्त्व०–अ इ ए इति । अ इति पचम्यंतमित्यभिप्रेत्याह । अवर्णादिति । इ इति सप्तम्यंतम् । यत्तु प्राचा अ इत्यस्य प्रथमांतत्वमंगीकृत्य अवर्ण इवर्णो पर इति विवृतं तत्पाणिनीयग्रंथानुसारित्वादुपेक्षितम् ॥

उ ओ ॥ ८६ ॥ अवर्णादुवर्णे परे सह ओ भवति ॥ गङ्गोदकम् ॥

सुबो०–उ ओ । उ इति सप्तम्यंतम् । ओ इति प्रथमांतं सांकेतितम् ॥

तत्त्व०–उ ओ इति । उ इति सप्तम्यतम् ॥

ऋ अर् ॥ ८७ ॥ अवर्णादृवर्णे परे सह अर् भवति ॥

सुबो०–ऋ अर् । ऋ इति सप्तम्यंतम् । अर् इति प्रथमांतं सांकेतितम् ॥

सत्त्र०–क आरिति । अ इति सप्तम्यंतम् । तर्वार्द्धरीति रूपत्रयम् । तथा च द्वित्वाभावे लोपे सत्येकधम् । असति लोपे द्वित्वलोपयोर्वा द्विधम् । सति द्वित्वे लोपे चासति त्रिधम् ॥

**हसात्परस्य झसस्य लोपो वा सवर्णे झसे ॥५८॥ तवार्धः, तवार्द्धः ॥**

सुबो०–हसात्परस्य झसस्य लोपो वा सवर्णे झसे । हसात्किम् । प्रतम् । झसस्येति किम् । शार्ङ्गम् । झसे इति किम् । भियपंचानाम् । सवर्णे किम् । तप्ता । तव ऋद्धिरित्यत्रार् ततो रहाद्यपो द्विरित्यनेन पक्षे ऋद्धेर्धस्य द्वित्वम् । द्वित्वाभावे लोपे सति एकधम् । तवार्धः । लोपाभावपक्षे द्वित्वलोपयोरसतोर्वा द्विधम् । तवार्द्धः । द्वित्वे सति लोपे चासति त्रिधम् । तवर्द्धिः । यवलाद्यपो द्विर्वेति लक्षणांतरेण पुनर्द्वित्वे चतुर्धमपि बोध्यम् ॥

**ऌ अल् ॥ ५९ ॥ अवर्णाद् ऌवर्णे परे सह अल् भवति ॥**

सुबो०–ऌ अल् । ऌ इति सप्तम्यंतम् । अल् इति प्रथमांतम् । हसेऽर्हस इत्यनेन लस्य द्वित्वम् ॥

**यवलाद्यपो द्विर्वा ॥ ६० ॥ तवल्कारः, तवल्ल्कारः, तवल्क्कारः, तवल्ल्क्कारः ॥**

सुबो०–यवलाद्यपो द्विर्वा । अर्थवशाद्विभक्तिविपरिणाम इत्यनेन यपाद् यवला द्विरित्यस्य स्थाने । यवलादिति पंचमी यप इति प्रथमेति पक्षे ककारस्यापि द्वित्वे तवल्कार इत्यत्र रूपचतुष्टयं भवति । "द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि । तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम् ॥"

**ए ऐ ऐ ॥ ६१ ॥ अवर्णादेकारे ऐकारे च सह ऐकारो भवति । तवैषा । देवैश्वर्यम् ॥**

सुबो०–ए ऐ ऐ । आद्यौ सप्तम्यंतौ । प्रथमांतोऽन्त्यः ॥

**प्रवत्सतरकम्बलवसनार्णदशभ्य ऋणे ॥ ६२ ॥ प्रार्णम् । वत्सतरार्णम् । कम्बलार्णम् । ऋणार्णम् । दशार्णः ॥**

सुबो०–प्रवत्सतर[illegible]वसनार्णदशभ्य ऋणे । एषामृणशब्दे परे आर् भवति । इति [illegible] वत्सतरशब्दे [illegible] । भाष्ये तु वत्सशब्दो नोक्तः । ऋणस्यापनयनाय [illegible] । वत्सतरस्य ऋणं वत्सतरार्णमित्यत्र हसेऽर्हस इत्यनेन [illegible] रूपाणि । रेफात्परस्य णस्य तु रहाद्यपो द्विरि[illegible] द्वित्वे [illegible] द्विरिति [illegible] पुनर्द्वित्वे एकर्णं द्विर्णं त्रिर्णमिति द्वादश । [illegible] द्विरिति [illegible] वा [illegible] चतुर्विंशतिः । दशार्णो देशः । [illegible] ॥

**ऋदादौ नामधातौ वा ॥ ६३ ॥ प्रार्षभीयति, प्रर्षभीयते ॥**

सुबो०—ऋदादौ नामधातौ वा । अवर्णान्तादुपसर्गादृकारादौ नामधातौ परे सह वार् भवति । आत्मानं ऋषभमिच्छतीति ऋषभीयति । यप्रत्ययः ॥

**अवर्णान्तादुपसर्गादृकारादौ धातावार् ॥ ६४ ॥ उपार्छति ॥**

सुबो०—अवर्णान्तादुपसर्गादृकारादौ धातावार् । उपसर्गादिति किम् । खट्वर्छति । ऋकारादौ किम् । उपेतः । धातौ किम् । उपर्कारः ॥

तत्त्व०—उपार्च्छतीति । ऋ गतौ भ्वादि. । दृशादेः पश्यादिरित्यनेनास्य ऋच्छादेश । ननूपार्छतीत्यत्र रोर्विसर्ग इत्यनेन रेफस्य विसर्गोऽस्त्विति चेन्न । पदान्तत्वाभावात् । न चोपेत्यस्यात्यावयवेन सहार्विधाना-त्कथं न पदान्ततेति वाच्यम् । ऋच्छतीत्यस्याप्याद्यावयवत्वेन पदान्तत्वाभावात् । ननूपसर्गग्रहणेनैव धातो-राक्षेपे सिद्धे धाताविति ग्रहणं व्यर्थमिति चेन्न । पदान्तानां समानानामृति ऌति वा ह्रस्वः इति पाक्षिकः ह्रस्वस्यापि बाधनार्थं धातुग्रहणम् ॥

**अवर्णादृते परे तृतीयासमासे ॥ ६५ ॥ दुःखार्तः । शीतार्तः । तृतीयासमासे किम् । परमर्तः ॥**

सुबो०—अवर्णादृते परे तृतीयासमासे । अवर्णादृते परे सह आर् स्यात् । सुखेन ऋतः सुखार्तः । शीतेन ऋतः शीतार्तः । तृतीयासमासाभावे तु परमश्चासौ ऋतश्च परमर्तः । " ऋतं शिलोंछे पानीये पूजिते दीप्तिसत्ययोः।" इति हेमचंद्र । तृतीया-समासार्थवाक्येऽपि न । तृतीयासमासोऽर्थः प्रयोजनं यस्य तत् तृतीयासमासार्थं तृतीयासमासार्थं च तद्वाक्यं च तृतीयासमासार्थवाक्यं तस्मिन् तृतीयासमासार्थ-वाक्ये अवर्णादृकारे सह आर् न भवति किं त्वर् ॥

तत्त्व०—अवर्णादृते पर इति । अवर्णादृते शब्दे परे तृतीयासमासे आर् भवति इत्यर्थः। सुखार्त इति सुखे-न ऋत इति विग्रहः । समासे किम् । सुखेनर्तः । तृतीयेति किम् । परमर्त. । प्रवत्सतरेत्यादि । प्रादिभ्य. पञ्चभ्यः ऋणशब्दे परे सह आर् भवतीत्यर्थः । प्रार्णमित्यादि । प्रकृष्टं ऋणमिति विग्रहः । वत्सतरार्णमित्यादि । वत्सतरेण देयमृणमित्यादि । एवं कंबलार्णमित्याद्यपि । ऋणार्णमिति । ऋणस्यापनयनाय यदृणं क्रियते तदृ-णार्णमित्यर्थः । दशार्णो देशः नदी च दशार्णा । ऋणशब्दो दुर्गभूमौ जले च । अत्र कलापानुसारिणः वत्स-तरशब्दमपि पठित्वा वत्सतरे देयमृणं वत्सतरार्णमित्युदाहरन्ति । अपरे तु वत्सरशब्दमपि पठन्ति तत्सर्वं भाष्यादिविरुद्धम् । ऋदादावित्यादि । प्रार्षभीयतीत्यादि । ऋषभमिच्छति ऋषभीयति । नाम्नो य ई चास्ये-ति यप्रत्यये अवर्णस्येकारः ॥

**ऌदादौ नामधातौ वाऌ ॥ ६६ ॥ प्राल्कारीयति, प्राल्ल्कारीय-ति, प्राल्कारीयति प्राल्ल्कारीयति ॥ इति स्वरसंधिः ॥**

सुबो०—ऌदादौ नामधातौ वाऌ । अवर्णान्तादुपसर्गाद् ऌकारादौ नामधातौ सह आऌ वा स्यात् । आत्मनः ऌकारमिच्छतीति ऌकारीयति । यप्रत्ययः । प्रा-ल्कारीयति इत्यादावपि पूर्ववद्रूपचतुष्टयं बोद्धव्यमिति ॥इति स्वरसंधिः ॥

तत्त्व०—ऌ आलिति । ऌ इति सप्तम्यतम् । यवलाच्चपो द्विर्वेति हसेऽर्हस इति द्वित्वविकल्पाच्चत्वारि रूपाणि । एवं प्राल्कारीयतीत्यादावपि बोध्यम् ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । विहितायां हि टीकायां स्वरसंधिरगादयम् ॥

## इति स्वरसंधिः ।

नामी ॥ ६७ ॥ अदसामीशब्दः संधिं न प्राप्नोति ॥ अमी आदित्याः । अदसः किम् । अम्यत्र ॥

सुबो०—नामी । अदस इति वक्तव्यमत्र व्यवस्थार्थे वानुवृत्तेः । अदस्शब्दस्यामी रूपं स्वरे परे संधिं न प्राप्नोति । अदस इति वचनादमो रोगोऽस्यास्तीत्यमी इत्यत्र संधिर्भवत्येव । नामीति ज्ञापकादकारस्य न निषेधः ॥

तत्त्व०—नामी । अदसो शब्दस्येकार एव संधिं न प्राप्नोति न त्वकारोऽपि । नामीति सूत्रज्ञापकादिति भावः । अमू असाते इत्यत्र य्वे द्वित्वे इत्यनेनैव संधिनिषेधः । अदसः किम् । अम्यत्रार्थवद्ग्रहणपरिभाषयाप्येतद्वारयितुं शक्यते तदा अम्यत्रेति प्रत्युदाहरणं बोध्यम् । अमो रोगः सोऽस्यास्तीत्यमी । अदस एवेति सुन्धेरयस्य व्यवस्थितस्यानुवृत्तेः ॥

य्वे द्वित्वे ॥६८॥ ईकारांत ऊकारांत एकारांतश्च शब्दो द्वित्वे वर्तमानः संधिं न प्राप्नोति । अग्नी अत्र । पटमाले आनय । पचेते इमौ ॥

सुबो०—य्वे द्वित्वे । ईश्च ऊश्च एश्च एषां समाहारो य्वे । एकत्वे द्विगुद्वंद्वाविति नपुंसकस्येति ह्रस्वो न । द्विग्वादिसंज्ञापूर्वकत्वेनानित्यत्वात् । अथवा भिन्नमेवेदं सर्वत्राविभक्तिकनिर्देशश्च । ननु ईदूतोः स्थाने यवयोः कृतयोः संदेहो भवति । किं ह्रस्वयोर्निर्देश उत दीर्घयोरिति । उच्यते । दीर्घयोरेवात्र ग्रहणं न ह्रस्वयोः दीर्घस्यैकारस्य साहचर्यात । तेनाऽकुर्वह्यावामित्यादौ प्रकृतिभावो न । पदग्रहणमित्यनुवर्त्यते तस्य य्वे इति विशेषणं तदंतविधिराश्रीयते । ईदूदेदंतं पदमिति । तेन पचेते इमावित्यादौ प्रकृतिभावः सिद्ध्यति । न ह्यत्रेदूद्द्वित्वेऽस्ति द्वित्वे इति तु य्वे इत्यस्य विशेषणम् । किंभूतं ईदूदेदंतम् । द्वित्वे वर्तमानम् । ननु कुमार्योरगारं कुमार्यगारं वध्वोरगारं वध्वगारमित्यत्रापि लुप्ते ईदूदंतं द्वित्वे वर्तते ततः प्रकृतिभावः स्यात् । उच्यते । ईकारादीनां प्रत्ययत्वस्यासिद्धेर्न प्रकृतिभावः । न ह्यत्र प्रत्ययत्वोपस्थापकं [illegible] । यद्वा । समासे कृते समुदायस्यैवार्थवत्त्वेन पूर्वोत्तरपदयोरनर्थकत्वान्न प्रकृतिभावः । "मणी वोष्ट्रस्य लंबेते प्रियौ वत्सतरौ मम ।" इति भारतप्रयोगे तु [illegible] बोध्यः । विकल्पोपमानयोरिति । "व प्रचेतसि जानीयादिवार्थे च तदव्ययम् ।" इति मेदिनी ॥

तत्त्व०— [illegible] । [illegible] सति बोध्यम् । ननु कुमार्योरगारं कुमार्य्यगारं [illegible] द्वित्वे [illegible] प्रत्ययलक्षणेनेति चेन्न । ईकारा- [illegible] । समासे कृते समुदायस्यैवार्थवत्त्वेन पूर्वो-

त्तरपदयोरनर्थकत्वाद्वा । नन्वेवमपि अशुक्ले वस्त्रे शुक्ले संपद्यतेतरां शुक्लयास्तां वस्त्रे अत्र प्राप्नोति । अत्र हि ईकारादिवत् द्विवचनांतत्वं च भवति, प्रत्ययलक्षणं नेति चेत्सत्यम् । अत्राप्यकृते ईभावे लुग्भविष्यति च्व्यन्तस्याव्ययत्वेनासंख्यत्वाद्दद्वित्वार्थत्वाद्वा । यत्तु मणीवादिवर्जमिति पठित्वा मणीवाद्युदाहृतं प्राचा तच्च मुनित्रयानुक्तत्वादप्रमाणमिति सन्तः । एवं " मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम । " इति भारतप्रयोगसमर्थनाय इवार्थे वशब्दो वाशब्दो वा बोध्यः । " व वा यथा तथैवैवं साम्ये " इत्यमरग्रंथव्याख्यावसरे " शात्रवं व पपुर्यशः " इति कालिदासप्रयोगस्याभियुक्तैरुदाहृतत्वात् । " कादंबखंडितदलानि वं पंकजानि " इत्यादिदर्शनाच्चेति भावः ॥

**औ निपातः ॥६९॥ स्वरो निपातश्च संधिं न प्राप्नोति । अ अपेहि । इ इंद्रं पश्य । उ उत्तिष्ठ । आ एवं मन्यसे ॥**

सुबो०–औ निपातः । औ इति आकारादारभ्य औकारेण प्रत्याहारो ग्राह्यः । ततो निपातसंज्ञकः स्वरे परे संधिं न प्राप्नोति । अ अपेहि । अ इति निषेधाक्षेपयोः । इ इंद्रं त्वं पश्य । इ इति विस्मये । उ उत्तिष्ठ । उ इति जुगुप्सासंतापान्वर्थाद्यर्थेषु । आ एवं त्वं मन्यसे । पूर्वं प्रक्रांतवाक्यार्थस्याऽन्यथात्वद्योतकोऽयमाकारः । पूर्वमित्थं न त्वममंस्था इदानीं त्वेवं मन्यसे इत्यर्थः । आ एवं किल तत् । स्मरणद्योतकोऽयमाकारः । ङित आकारस्य तु निपातसंज्ञा नास्ति प्रादिषूपसर्गेषु आङः पाठात् । निपातसंज्ञाऽऽदीनामेवास्ति नतु प्रादीनाम् । ततो ङित आकारस्य प्रकृतिभावो न । आ ईषदुष्णं ओष्णम् । किंच । "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥" इति भाष्ये उक्तम् । आङऽनाङोरर्थे एव भेदकोऽस्ति स्वराणामपि निपाताऽनिपातविवेकोऽर्थाधीन एव । निपातग्रहणं किम् । अकारो वासुदेवस्तस्य धौ अ इति रूपम् । अ आगच्छ आगच्छेति । उः शंभुस्तस्य धौ ओ इति रूपं ओ आगच्छ अवागच्छेति । इः कामस्तस्य धौ ए इति रूपम् । ए आगच्छ अयागच्छेति । स्वररूपनिपातस्य परेण स्वरेण सह संधिनिषेधोऽस्ति । पूर्वेण स्वरेण सह तु संधिर्भवत्येव । जातु उ अस्य रुजतीत्यत्र उकाराकारयोः सवर्णे दीर्घे कृते निपातस्य धिकृतत्वात् परेणापि संधिर्भवत्येव जान्वस्येति ॥

तत्त्व०–औ निपात इति । अकारादिरौकारान्त औप्रत्याहारः इत्यभिप्रेत्याह । स्वर इति । स्वरोऽप्येक एव बोध्यः नतु स्वरान्तः । चार्थे वेङयोरित्यादिनिर्देशात् । तेन प्रेद ब्रह्मेत्यत्र न संधिनिषेधः । निपात इति किम् । चकारात्र जहारात्र आङो न निषेधः तस्य प्रादिषु पाठे वा निपातत्वात् । चादिर्निपात इति । चादेरेव तत्त्वात् ङित्त्व च भाष्यात् । " ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ " इति । आ एवमिति । पूर्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतकोऽयमाकारः । पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यसे इत्यर्थः । ओदन्त इति । अत्र भाष्यम् । ओतश्च प्रतिषेधः ओदन्तो निपात इत्यर्थतस्य प्रतिषेधो वक्तव्यः । अनदः अदः अभवत अदोऽभवत् तिरोभवदिह यथा न स्यात् । स च वक्तव्यो न वक्तव्यः लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येन न भविष्यति । एवमपि अगौर्गौः समपद्यत गोऽभवत् अत्र प्राप्नोति । एवं तर्हि गौणमुख्ययोर्मुख्ये कार्यं संप्रत्यय इति । तद्यथा । गौरनुबध्यते इत्यत्र न वाही-

कोऽनुबध्यते । कृयतस्य क्त्वाद्यन्तर्गतत्वेन निपातत्वाभावान्नेत्यपरे । निपातः किम् । सुद्योग्रम् । यत्तु मनोरमायां निपातः । किं देवोऽसि वायवायाहि इति प्रत्युदाहृतम् । तद्भाष्यविरोधादुपेक्ष्यम् ॥

औदन्तो निपातश्च ॥ ७० ॥ अहो ईशाः । अहो आगताः ॥

सुबो०—औदंतो निपातश्च । ओदंतो निपातः संधिं न प्राप्नोति । निपातः किम् । देवोऽसि ॥

ओदन्तो धौ वेतौ ॥ ७१ ॥ विष्णो इति, विष्णविति ॥

सुबो०—ओदंतो धौ वेतौ । संबोधननिमित्तक ओकारः संधिं वा प्राप्नोति इतिशब्दे परे । इतौ किम् । पटोऽत्र । धौ किम् । अहो इति । प्रकृतिभावे विष्णो इति । पक्षे अवादेशः य्वोर्लोपशिति वलोपे विष्ण इति । पक्षे विष्णविति ॥

तत्त्व०—ओद तो धाविति । अवैदिके इतौ बोध्यम् । धाविति किम् । अहो इति । अत्र विकल्पो मा भूत् ॥

य्वृणामसवर्णे स्वरेऽसमासे पदान्ते वा ह्रस्वः ॥ ७२ ॥ चक्रि अत्र चक्र्यत्र । मधु एतत् मध्वेतत् । कर्तृ इदं कर्त्रिदम् । ह्रस्वविधानसामर्थ्यान्न संधिः । समासे तु हर्य्यर्थः । पदान्ते किम् । गौर्य्यौ ॥

सुबो०—य्वृणामसवर्णे स्वरेऽसमासे पदांते वा ह्रस्वः । इश्च उश्च आ च ते य्वरस्तेषां य्वृणाम् । असमासे पदांते स्थितानामिवर्णोवर्णऋवर्णानां प्रकृतिभावो ह्रस्वश्च वा भवत्यसवर्णे स्वरे परे । ह्रस्वपक्षे चक्रि अत्र । प्रकृतिभावे चक्री अत्र । पक्षे यत्वम् । चक्र्यत्र । इह स्कोरिति कस्य लोपो न यत्वस्य बहिरंगपरिभाषयाऽसिद्धत्वात् स्थानिवद्भावाच्च । हरेरर्थमिति हर्य्यर्थः । समासत्वादत्र ह्रस्वप्रकृतिभावौ न ॥

तत्त्व०—य्वृणामिति । इश्च उश्च आ च य्वरः तेषाम् ॥

पदान्तानां समानानामृति ऌति च वा ह्रस्वः ॥ ७३ ॥ ब्रह्म ऋषिः ब्रह्मर्षिः । दण्डि ऋषिः दण्ड्यृषिः । वधु ऋकारः वध्वृकारः । होतृ ऋकारः होतृ ऌकारः होतॄकारः । पदांतानां किम् । आर्च्छेत् ॥

सुबो०—पदांतानां समानानामृति ऌति च वा ह्रस्वः । पदांते स्थितानां समानानां प्रकृतिभावो ह्रस्वश्च वा भवति ऋकारे ऌकारे च परे । होतृ ऌकारः ब्रह्म ऋषिरित्यादौ प्रकृतिभावार्थमिदम् । य्वृणां तु पूर्वेणैव प्रकृतिभावः सिद्ध्यति । समासेऽप्ययं प्रकृतिभावोऽस्ति तेन सप्त ऋषीणां इति । प्रकृतिभावे ब्रह्मा ऋषिः । ह्रस्वे ब्रह्म ऋषिः । संधौ ब्रह्मर्षिः । पदांते किम् । आ ऋच्छदित्यत्र आ इत्यस्य ह्रस्वो न ऋकारे परे हि पदांताभावात् । ऋच्छ गत्यादावित्यस्य लङि तुदादेरित्यप्रत्यये दिगादावडिति स्वरादेरित्याड्डागमयोश्च कृतयो रूपम् ॥

अयादुञो वो वा स्वरे ॥ ७४ ॥ किम्वुक्तम्, किमु उक्तम् ॥

सुबो०—ञयादुञो वो वा स्वरे । ञयात्परस्य उञोनिपातस्य वो वा स्यात्स्वरे परे । किमु उक्तं, वत्वपक्षे किम्वुक्तम् । वस्यासिद्धत्वान्नानुस्वारोऽत्र ॥

तत्त्व०—ञयादुञ इति । किम्वुक्तमिति वत्वस्यासिद्धत्वान्नानुस्वारः । ओदन्तो निपात इत्यारभ्यैतत्पर्यंतं वेत्यस्य व्यवस्थितस्यानुवृत्तेर्लभ्यते इति बोध्यम् ॥

दूरादाह्वाने टेः प्लुतः॥७५॥ दूरात्संबोधने यद्वाक्यं तस्य टेः प्लुतो वा ॥ प्लुतः संधिं न प्राप्नोति । एहि देवदत्त ३ अत्राधीष्व ॥

सुबो०—दूरादाह्वाने टेः प्लुतः। दूरत्वमिहाह्वानापेक्षं बोध्यते न देशापेक्षम् । पुरुषापेक्षं च न गृह्यते । आह्वाने इति संबोधनमात्रोपलक्षणम् । तेनाह्वानादन्यत्रापि भवति । सक्तून्पिब देवदत्त ३ इति । आह्वाने इत्याधारे सप्तमी । आधारश्चाधेयमपेक्षते आधेयं च वाक्यमेव । तेनैवाह्वानसंभवात् संबोधने वाक्यस्य टेः प्लुतः स्यादित्यर्थः । ह्रस्वदीर्घव्यक्त्योरुच्चारणात्स्वरूपलिखनाच्च भानं प्लुतव्यक्तेरुच्चारणादेव ॥

तत्त्व०—दूरादाह्वान इति । दूरत्वमिहाह्वानापेक्षं नतु देशापेक्षं पुरुषापेक्षं वा । वाक्यस्य टेरिति । वाक्य च सामर्थ्याल्लभ्यते । आह्वाने इत्याधारे सप्तमी । आधारश्चाधेयमपेक्षते आधेय च वाक्यमेव । तेनैवाह्वानसंभवात् इति नव्याः । संबोधनमात्रोपलक्षक इत्यभिमेत्याह । दूरात्संबोधन इति ॥

हैहेप्रयोगे हैहयोः प्लुतो वा ॥ ७६॥ हे अम्ब, हायम्ब । हे ईश, हयीश ॥

सुबो०—हैहेप्रयोगे हैहयोः प्लुतो वा । हैहेप्रयोगे दूरात्संबोधने यद्वाक्यं तत्र हैहयोरेव प्लुतो वा स्यात् । प्लुताभावे आय् । हायंब । हयीशेत्यत्र अय् ॥

सप्तम्यर्थे ईत् संधिं न याति ॥ ७७ ॥ वातप्रमी आस्ते । ययी इदम् । पपी एषः ॥

सुबो०—सप्तम्यर्थे ईत्संधिं न याति । सप्तम्यर्थे संसिद्धमीकारांतं पदं संधिं न प्राप्नोति अर्थग्रहणात्समासे मा भूत् । वाप्यामश्वो वाप्यश्व इत्यत्र वापीशब्दो वाप्यधिकरणकद्रव्ये उपसंक्रांतो न तु सप्तम्यर्थे । वातप्रमी ययी पपी शब्दा औणादिक ईकारांताः संति तेषां सप्तम्येकवचनेन सवर्णे दीर्घे रूपम् ॥

तत्त्व०—सप्तम्यर्थे इति । अर्थग्रहणं किम् । वाप्यामश्वो वाप्यश्वः । इह यथा न स्यात् । अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न भवति जहत्स्वार्थावृत्तिरिति सप्तम्यर्थाभावात् । अथाजहत्स्वार्थाया वृत्तौ दोष एवेति चेन्न । समुदायार्थोऽभिधीयते ॥

इतौ वा उञ् ॥ ७८ ॥ उ इति विति ॥

सुबो०—इतौ वा उञ् । उञ् निपातः संधिं वा प्राप्नोति इतिशब्दे परे । ओनिपात इति नित्यं प्राप्ते विकल्पोऽयम् ॥

तत्त्व०—इतौ वेति । उभयत्र सानुबंधक एव गृह्यते ॥

**अप्लुतवदितौ ॥ ७९ ॥ देवदत्तेति ॥**

सुबो०–अप्लुतवदितौ । प्लुतोऽप्लुतवद्भवति इतिशब्दे परे । अप्लुतवत्कार्यं यत्वादिकं करोतीत्यर्थः ॥

तत्त्व०–अप्लुतवदिति । अत्रापि अवैदिके इति बोध्यम् । वत्किम् । अग्नी इति इत्यत्र यथा न स्यात् ॥

**गुरोरनृतोऽनंत्यस्यापि वा पर्यायेण प्लुतः ॥८०॥ दे ३ वदत्त, देवद ३ त्त । अपिशब्दादंत्यस्याप्यगुरोर्वा पर्यायेण प्लुतः । देवदत्त ३ । गुरोः किम् । वकारादकारस्य मा भूत् । अनृतः किम् । कृष्ण ३ गौश्चरति ॥ इति प्रकृतिभावः ॥**

सुबो०–गुरोरनृतोऽनंत्यस्यापि वा पर्यायेण प्लुतः। दूरात्संबोधने यद्वाक्यं तस्य ऋद्भिन्नस्यानंत्यस्यापि गुरोर्वा पर्यायेणानुक्रमेण प्लुतः स्यात् । एकत्र दे इत्येकारस्य प्लुतता । अन्यत्र द इत्यकारस्य प्लुतता । त इत्यकारस्य तु दूरादाह्वाने टेः प्लुत इत्यनेन प्लुतसंज्ञा । प्रकृतेर्मूलरूपस्य भवनं प्रकृतिभावः ॥

तत्त्व०–गुरोरनृत इति । अपिशब्दो गुरोरगुरोश्च टे. प्लुतार्थ. ॥

श्रीविद्यानगरस्थायिक्षेमकरसुतोऽकरोत् । श्रीलोकेशकरो व्याख्यां सध्यभावस्य सत्तमाम् ॥

इति प्रकृतिभावः ।

---

**चपा अबे जबाः ॥८१॥ पदांते वर्तमाना चपा जबा भवंति अबे परे ॥ षडत्र । वाग्यथा ॥**

सुबो०–चपा अबे जबाः । पदांते इत्यनुवर्तते । पदाते वर्गप्रथमास्तृतीया भवंत्यबे परे । पदाते किम् । वाचौ । भवंतौ । बहुवचनं सर्वव्यक्तिषु तात्पर्यबोधनार्थम् ॥

तत्त्व०–अथ हससंधिः । चपा अबे जबा । अत्र लघुभाष्यम् । अझपा इति पाठ्यम् । समिदत्र ककुबत्र अग्निमदासनमित्यादावव्याप्तिर्यथा न स्यात् । यद्वा अबे जबा इत्येव कर्तव्यम् । पदान्त इत्यनुवर्त्तते । पदान्ते वर्त्तमानस्य जबा भवन्त्यबे परे इत्यर्थः । स्वराणां पूर्वविधयो बाधका हसानां तूत्तरविधय इति । अत्रोच्यते । तथागता. पटान्हिंहेत्यादौ अतिप्रसंगवारणाय तावत् अन्यतरद्वक्तव्यम् । तत्र व्यक्तिलाघवाच्च यग्रहणमेव कर्तव्यम् । न चोक्तदोष. वाऽवसान इतीष्टसिद्धेः । अवसान किमिति चेत् अत्र एवेति गृहाण । विद्यावसानमित्यादिप्रयोगदर्शनात् । अत्रापि चपग्रहणस्यापि मानत्वात् इति । अत्रेदमवधेयम् । वाऽवसान इत्यत्रावसानशब्दस्यान्तवाचकता नोचिता । विरामोऽवसानमित्यनेन वर्णाभावस्यावसानसंज्ञां कुर्वता सूत्रकारेण विरुद्धत्वात् । किंचेद भवत्पुत्र बृहत्फणी महत्सदन इत्यादिषु वाऽवसान इत्यनेन पक्षे दकारश्रवणापत्तेः न चेष्टापत्तिः तदसाधुत्वस्य सर्वत्र दर्शनात् । न च ककुबत्रेत्यादौ अव्याप्तिपरिहारः कथमिति चेत् इत्थम् । ञमे ञमा वेत्यत्र व्यवस्थितविभाषाश्रयणात् झपानामपि जबा ञमाश्च भवतीति व्याख्यानात् । तन्मयमित्यादौ ञमकरणार्थं भवत्येव ञमे जकारवापीति भाष्यकारैरपि व्यवस्थितविभाषाश्रयणस्य स्वीकृतत्वात् । अथ भवत्पुत्र इत्यादौ खसे चपा झसानामिति सूत्रेण पाक्षिकदकारस्यापि तकारेण रूपसिद्धिरिति चेत्सत्यम् । खसे चपा झसानामिति सूत्र प्रति [illegible] वाऽवसान इत्यस्य बहिरङ्गत्वेनासिद्धत्वेनासिद्धत्वात् । किं च तच्छिव इत्यत्र तदो वाऽवसान इति

चर्त्वे कृते पश्चाच्छित्व इत्यनेन संबंधे झलां जशोऽन्त इति जस्त्वे खरि चेति चर्त्वमिति व्याकुर्वतां कृष्णपंडितानां मते भाविन्यवसानभंगे अकृतव्यूहपरिभाषया कृतमपि शास्त्रं वा निवर्त्तयन्तीत्यनया वावसान इत्यस्याप्रवृत्तिरित्युक्त्या दूषयतां भट्टोजिदीक्षितानां मते नातिविरोधात् इति दिक्। अवग्रहणं किम्। जगत्सर्वमित्यादौ खसे मा भूत्। अथ तत्र खसे चपा झसानामित्यस्यैव प्रवृत्तिरिति चेत् तर्हि उत्तरार्थमवग्रहणं स्पष्टार्थमिहैव कृतम्। पदान्त इति किम्। त्वचौ ॥

भमे भमा वा ॥ ८२ ॥ पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवंति ॥ षण्मम, षड्मम। वाङ्मधुरा, वाग्मधुरा ॥

सुबो०–ञमे ञमा वा। पदान्ते इत्यनुवर्तते। पदांते वर्गप्रथमाः पंचमाः स्युः पंचमे परे। पदांते किम्। वच्मि। पाप्मा। यत्नः। पक्षे तृतीयाश्चपा अवे जबा इत्यनेनैव ॥

तत्त्व०–ञमे ञमा वेति। अत्रापि पदान्त इत्यनुवर्तते। तेन वच्मीत्यादौ न। वाशब्दोऽत्र व्यवस्थावाची। तेन क्वचित् झपानामपि ञमा भवंति। प्रत्यये च नित्यतालाभः। यत्तु कैश्चिन्मयादि नित्यमित्युक्तं तद्भाष्यविरोधादुपेक्ष्यम्। चपा इति किम्। विष्णो मां रक्षेत्यादौ स्वरस्य मा भूत् ॥

प्रत्यये भमे जबस्यापि नित्यम् ॥ ८३ ॥ तन्मयम्। चिन्मात्रम् ॥

सुबो०–प्रत्यये ञमे जबस्यापि नित्यम्। वर्गतृतीयानां पंचमा भवंति प्रत्ययसंबंधिनि ञमे परे। अपिशब्दाद्वर्गप्रथमानामपि। कथं तर्हि रघुकाव्ये। " मदोदग्राः ककुद्मंतः " इति उच्यते। यवादिगणे दकारस्य निपातनान्न यमो भवतीति कौमुदी। क्वचिज्जबस्यापि ञमो भवति। त्वन्मदेकत्वे इति ज्ञापकात्। तत्स्वरूपमस्येति तन्मयम्। प्राचुर्यविकारप्राधान्यादिष्विति मयट्। चित्प्रमाणमस्येति चिन्मात्रम्। प्रमाणे द्वयसद्दघ्नञ्मात्रट् इति मात्रट् ॥

चपाच्छः शः ॥ ८४ ॥ पदांते वर्तमानाच्चपादुत्तरस्य शकारस्य छो वा भवत्यवे परे ॥ वाक्छूरः, वाक्शूरः। अवे किम्। वाक् श्च्योतति ॥

सुबो०–चपाच्छः शः। चपादुत्तरः शकारः छकारो वा भवत्यवे परे। चपादिति किम्। प्रशान् शेते। अवे इति किम्। वाक्श्च्योतति। शः किम्। वाक्साधुः। ननु चपाच्छः श इत्युक्ते संदेहो भवति किं शस्य छः छस्य शो वेति। लोकाच्छेपस्येति निर्देशान्न संदेह इति ॥

तत्त्व०–चपाच्छः श इति। पदान्त इति किम्। विरप्शम्। रपेर्विपूर्वादौणादिशप्रत्यये रूपमेतत् इति माधवः तच्चिन्त्यम्। विरप्शमित्यस्य छांदसत्वलाभात् छंदसि दृष्टानुविधिस्वीकारात् इत्युक्तं लघुभाष्ये। तत्रेदमवधेयम्। विरप्शमित्यस्य पदांतप्रत्युदाहरणत्वमेवौचित्यं पतंजलिसमतत्वात्। किं च शश्छोटीत्यस्य हि पदान्ताज्झय. परस्य शस्य छ इत्यर्थः। आकरे स्थितः। विपूर्वाद्रपेरौणादिकशप्रत्यये मन्त्रश्च्योतंत्याभितो विरप्शमित्यादौ यथेति मनोरमायामुक्तवन्तां दीक्षितानां मतेन विरोधात् छांदसत्वादित्यस्यागतिकत्वेनोपेक्षितत्वात्। चपादिति किम्। प्रशान् शेते। अवे इति किम्। वाक् श्च्योतति। शः किम्। वाक्साधुः। ननु चपा इत्यनुवर्त्यार्थवशाद्विभक्तिविपरिणामं कृत्वा चपादिति व्याख्यायां क्रियेत इति चेन्न सर्वेत्तरार्थं तस्य हि।

झभा इत्यत्र वक्ष्यते इहार्थे न । अत्र तन्त्रादिना वाक्यद्वयमाश्रियते । तत्राद्य उक्त एव द्वितीयस्तु चपमततीति चपात् तेन सहितः छ तस्य शो अमे । तेन च पामश्मीत्यादौ सत्वं विधेयस्य पूर्वनिर्देशस्त्वसंदेहार्थः । चपात्ः छ इत्युक्ते सन्देहः स्यात् ॥

हो झभाः ॥८५॥ चयादुत्तरस्य हकारस्य झभा वा भवंति ॥ यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति । तद्धविः, तद्हविः । वाग्घरिः, वाग्हरिः ॥

सुबो०–हो झभाः । चपाच्छः शः इत्यतश्चपादित्यनुवर्तते । चपात्परस्य हस्य स्थाने झभाः स्युर्वा । निमित्तादेशयोश्चपझभयोः समसंख्ययोर्यथाक्रमं वक्ति । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवतीति । चात्परस्य हस्य झः । टात्परस्य हस्य ढः । कात्परस्य हस्य घः । तात्परस्य हस्य धः । पात्परस्य हस्य भः इति । चपादिति किम् । भगवन् हरे । हस्येति किम् । तत् षष्ठम् । वाग्घरिः । वर्गचतुर्थाभावे वाग्हरिः । उभयत्र जबत्वम् ॥

तत्त्व०–हो झभा इति । चपादित्यनुवृत्तेर्नेह । भगवन् हरे । हकारस्येति किम् । तत्षष्ठम् । चपानां झभानां यथाक्रमं प्रवृत्तिरित्याह । यद्वर्ग इति । ननु उद्दिश्यमानविधीयमानयोर्यथाक्रमप्रवृत्तिर्भवतीति वचनं विना कथं यथाक्रमं लभ्यत इति चेन्न । ज्ञापकाद्वचनमस्तीति अनुमानात् । ज्ञापकं तु शात्सुसे इति सूत्रे तकारात्परत्वं [illegible] ॥

स्तोः श्चुभिः श्चुः ॥ ८६ ॥ सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ भवतः ॥ उद्दिश्यमानप्रतिनिर्दिश्यमानयोर्यथाक्रममिति वाच्यम् ॥ कश्चरति । कश्शूरः । तच्चित्रम् । तच्छादयति ॥

सुबो०–स्तोः श्चुभिः श्चुः । स् च तुश्चानयोः समाहारः स्तु तस्य स्तोः । आगमशासनमनित्यमित्युक्तत्वान्न नुम् । अथवा सा सहितः तुः स्तुः तस्य स्तोः । शाकपार्थिवादित्वान्मध्यमपदलोपः । श् च चवश्च श्चुस्तैः श्चुभिः । श्चुरिति पुँल्लिङ्गनिर्देशोऽपि [illegible] । नपुंसकनिर्देशोऽयमित्यन्ये । श्चुभिरिति सहादियोगं विनापि सहार्थे तृतीया । भिन्नेति निर्देशात् । अत्र स्थान्यादेशयोर्यथासंख्यमस्ति । निमित्तस्थानिनोस्तु न यथासंख्यम् । न शादिति ज्ञापकात् । उद्दिश्यत इति । उद्दिश्यमानः स्थानी निर्दिश्यते विधीयते यः स निर्दिश्यमान आदेशस्तयोर्यथाक्रमं यथासंख्यं [illegible] । [illegible] कश्चलतीति कश्शूर इत्यत्र शसे वेत्यस्य पाक्षिकत्वाद्विसर्जनीयस्य [illegible] शकारेण योगे शः । तच्चित्रमित्यत्र चवर्गयोगे तवर्गस्य चुत्वम् । [illegible] योगे [illegible] ॥

[illegible] स्तोः । [illegible] द्विगुर्द्वन्द्वादित्यस्यानि- [illegible] । श् च चवश्च श्चुः तैः श्चुभिः [illegible] निमित्तकार्यिणोस्तु न नशादिति ज्ञापकात् [illegible] । क्रमम- [illegible] प्रतिनिर्दिश्यमानं [illegible] । स्तोः

श्चौ श्चुरित्येव सुवचम् । न च तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानेन यज्ञः याच्ञा इत्यादि न सिध्येत् । न शादिति लिंगेन तस्यानुपस्थानाभ्युपगमात् ॥

**न शात् ॥८७॥** शकारात्परस्य तवर्गस्य चुत्वं न भवति ॥ प्रश्नः । विश्नः ॥

सुबो०—न शात् । स्तोः श्चुरित्यनुवर्तते । शात्परस्य सस्य शकारप्रसंगो नास्त्यतः शात्परस्य तोश्चुत्वं न । प्रच्छ ज्ञीप्सायां विच्छ गतौ आभ्यां नङ्क्षीति नङ्प्रत्ययः । क्विति ज्ञसे कौ ञमे चेति छस्य शत्वम् । नङो ङित्वाद्गुणाभावः । प्रच्छेस्तु संप्रसारणं न । भाष्येऽनुक्तत्वात् ॥

तत्त्व०—न शादिति । शात्परस्य सस्य शकारप्रसंगो नास्ति अतः शात्परस्य तवर्गस्य चवर्गो निषिध्यते । शादिति किम् । याच्ञा ॥

**ष्टुभिः ष्टुः ॥ ८८॥** सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ भवतः ॥ कृष्णष्ठः । तट्टीकते ॥

सुबो०—ष्टुभिः ष्टुः । स्तोरित्यनुवर्तते । ष् च टवश्च ष्टवस्तैः ष्टुभिः । ष् च टुश्चानयोः समाहारः ष्टु । नपुंसकनिर्देशोऽयमित्येके । षा सहितः टुः ष्टुः । शाकपार्थिवादित्वान्मध्यमपदलोपः इति पुंल्लिगनिर्देशोऽयमित्यन्ये । इहापि स्थान्यादेशयोर्यथासंख्यम् । निमित्तस्थानिनोस्तु न । न षीति निषेधात् । स्तोः ष्टुभिर्योगे ष्टुः स्यादिति ॥

तत्त्व०—ष्टुभिः ष्टुरिति । स्तोरित्यनुवर्त्तते । समासः पूर्ववत् । अत्रापि ष्टोः ष्टुरित्येव सुवचम् ॥

**न षि ॥ ८९ ॥** षकारे परे तवर्गस्य टुत्वं न भवति ॥ भवान्षष्ठः ॥

सुबो०—न षि । तोष्टुर्न स्यात् षकारे परे । तोरिति किम् । कृष्णष्ठः । षीति किम् । तट्टीका । षीति सप्तमीनिर्देशात्पूर्वं षकारे ष्टुत्वं स्यादेव । पेष्टि ॥

तत्त्व०—न षीति । अत्र तोरित्यनुवर्त्तते । षीति किम् । तट्टीकते । षीति सप्तमीनिर्देशात्पूर्वस्य षकारस्य योगे ष्टुत्वं स्यादेव । कोष्टा ॥

**टोरंत्यात् ॥९०॥** पदांते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुर्न भवति ॥ षण्नरः, षट्नरः । षट्सीदंति ॥

सुबो०—टोरंत्यात् । स्तोरित्यनुवर्तते । अंते भवोऽन्त्यस्तस्मादंत्यात् । अंत्यशब्देन पदांतं कथ्यते । भवार्थे ण्यः । णितो वेति णित्वविकल्पाद्वृद्ध्यभावः । पदांते स्थिताट्टोः परस्य स्तोः ष्टुत्वं न भवति । पदांतात् टोः किम् । ईट्टे । टोः किम् । सर्पिष्टमम् । ञमे ञमा वेति ञमे । षण्नरः । जमाभावपक्षे षट्नरः । नर इति बहुवचनम् ॥

तत्त्व०—टोरन्त्यादिति । स्तोरित्यनुवर्त्तते न टोरिति । टोरिति किम् । [illegible] । [illegible] ञमे ञमा [illegible] णितो वेति वृद्धिविकल्पाद्वृद्ध्यभावः ॥

**नवतिनगर्योर्न ॥ ९१ ॥** षण्णवतिः । षण्णगर्यः ॥

सुबो०—नवतिनगर्योर्न । पदांताट्टवर्गात्परयोर्नवतिनगरीशब्दयोर्न ष्टुत्वं भवति । टोरंत्यादिति निषेधो न प्रवर्तते इत्यर्थः । षड्भिरधिका नवतिरित्यत्र षस्य डत्वे कृते तस्य ष्टुत्वम् । ततः षण्णवतिः षड्नगर्य्यः इत्यत्र नस्य ष्टुत्वम् । षण्णगर्य्यः ॥

तत्त्व०—पदान्त इत्यनुवृत्तेः पदान्तादिति लब्धे अन्त्यादिग्रहणमस्यानित्यत्वज्ञापनायेत्यभिमेत्याह । नव- तिनगर्य्योर्नेति षण्णवतिरिति । षट् च नवतिश्च षडाधिका नवतिरिति वा ॥

## सुपो न ॥ ९२ ॥ लिट्सु ॥ टनात्सस्य वा धुट् । लिट्त्सु ॥

सुबो०—सुपो न । टवर्गात्परस्य स्यादीनां सुपः सकारस्य ष्टुत्वं न भवति ॥

तत्त्व०—न शान्त धीत्यत्र नञ्द्वयोपादानं ष्टुत्वस्यानित्यत्वज्ञापनार्थमित्याशयेनाह । सुपो नेति । सुपः सका- रस्य ष्टुत्वं नेत्यर्थः ॥

## तोर्लि लः ॥९३॥ तवर्गस्य लकारे परे लकारः स्यात् ॥ तल्लुनाति । भवाँल्लिखति । अनुनासिकाननुनासिकत्वेन द्विधा यवलास्तत्र नकारस्यानुनासिको लकारः ॥

सुबो०—तोर्लि लः । तोरिति किम् । शक्नोतीति शक् । शक्लुनातीति । लि इति किम् । तद्नम् । यकारवकारलकाराः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिकस्य नकारस्य स्थाने सानुनासिक एव लो भवतीत्यर्थः ॥

तत्त्व०—तोर्लि ल इति । अत्र लघुभाष्यम् । स्तोरित्यनुवर्त्तमाने तोः ग्रहणं सकारनिवृत्त्यर्थमित्येके तन्न । लकारपरस्य सकारस्याभावात् । न च को लुनातीत्यादावतरगेण विसर्गेण भाव्यम् । सल्लावक इत्यत्रापि पर- त्वादन्तरगत्वाच्च दत्वे कृते लः । तोर्लि इति द्विलकारं पाठ्यम् । ल् लि चेति छेदः । एवं सार्द्धमात्रा न्यूना कि च स्तो. शुभि. श्चुरित्यत्र प्रकृतस्य श्चुरित्यस्य विधेयत्वेनोपन्यासाद्वा भवाँल्लिखति इति अत्रानुनासिको लकारः ॥

## उदः स्थास्तंभोस्सलोपः ॥ ९४ ॥ उत्थानम् । उत्तंभनम् ॥

सुबो०—उदः स्थास्तंभोः सलोपः । उदः परयोः स्थास्तंभोः सकारस्य लोपो भवति । ष्ठा गतिनिवृत्तौ । स्तंभु निरोधने । सलोपे कृते खसे चपा झसानामिति दस्य तः । उत्थानम् ॥

तत्त्व०—उदः स्थास्तंभोरिति । उदः परयोः स्थास्तभोः सलोपः स्यादित्यर्थः । उत्थानं उत्तंभनमिति । उत्थितं इति स्थानम् । भावे युट् । युवोरनाकावित्यनादेशे कृते सलोपे खसे चपा झसानामिति दकारस्य तकारः ॥

## नः सक् छते ॥ ९५॥ नांतस्य पदस्यावपरे छते सगागमो भवति ॥ राजँश्छिनद्धि । भवाँस्तनोति । अवपरे किम् । सन्त्सरुः ॥

सुबो०—नः सक् छते । नांतस्य पदस्य सक् स्यात् । अवः परो यस्मात्सः अव-

परस्तस्मिन् अवपरे छते । कित्वादंते सकोऽकारस्तूच्चारणार्थः । कस्यांते इत्याकांक्षायां पदस्यांते भवति । नस्यापदांतत्वान्नश्चापदांते झसे इत्यनुस्वारः । तस्य सगागमो भवतीति वचने तु नस्यानुस्वारो न स्यात् । सको नकारस्य भक्तत्वात् । तस्य पदांतत्वाऽनपायात् । आगमाश्चित्कित्मितस्ते यस्य गुणीभूता यद्गुणीभूताः यस्य विशेषणीकृतास्तद्ग्रहणेन कृत्वा ते आगमाः आचार्यैर्गृह्यंते अभ्युपगम्यंते । तद्यथा । सगागमः पदस्य विहितः पदं विशेष्यं सगागमो विशेषणं पदग्रहणेन सक् गृह्यते । सक्पर्यंतं पदमित्यर्थः । पदस्येति किम् । हंति । नांतस्येति किम् । तट्टीकते । छते किम् । भगवन् कुरु । अवपरे छते किम् । सन्त्सरुः । खड्गमुष्टिः ॥

तत्त्व०—नः सक् छते इति । अत्र पदस्य सगागमः न तु नस्य । तथा सति नस्यानुस्वारो न स्यात् अपदान्तत्वाभावात् इत्याशयेनाह । नांतस्येत्यादि । पदस्येति किम् । हन्ति । न इति किम्- । तट्टीकते । छते किम् । भगवन्कुरु । अवपरे किम् । सन्त्सरुः । "त्सरुः खड्गादिमुष्टिः स्यात्" ॥

**न प्रशान्वः ॥ ९६ ॥ प्रशांतनोति ॥**

सुबो०—न प्रशानः । प्रशानिति नांतस्य पदस्य सग् न भवत्यवपरे छते । प्रपूर्वात् शाम्यते क्विप् । यमांतस्योपधाया दीर्घः इत्यनेन दीर्घः । मो नो धातोरिति नः नस्यासिद्धत्वान्नलोपो न । प्रशाम्यतीति प्रशान् ॥

तत्त्व०—अवेत्याकृष्य तस्य व्यवस्थितत्वाश्रयणात् मस्थानिकस्य नस्य सन्नेत्याशयेनाह । न प्रशानिति । प्रशान् तनोतीति शमु उपशमे इत्यस्मात् क्विपि अमांतस्य क्वाविति दीर्घे मो नो धातोरित्यनेन नत्वे रूपम् ॥

**शे चक् वा ॥९७॥ नांतस्य पदस्यावपरे शे वा चगागमो भवति ॥**

**भवाञ्छूरः, भवाञ्च्छूरः, भवाञ्च्शूरः, भवाञ्शूरः ॥**

सुबो०—शे चक् वा । न इत्यनुवर्तते । नांतस्य पदस्य चक् स्याद्वा शे । पदस्येति किम् । भवान् श्विनोति । चक् वा इत्यत्र वाक्ये सा विवक्षामपेक्षते इत्युक्तत्वाज्जवाभावः । भवान् शूर इत्यत्र चगागमस्य कित्वात् पूर्वांतत्वेन चपाच्छः श इति छत्वविकल्पः । पक्षे हसात्परस्य झसस्येति चलोपः । नकारस्यानुस्वारपरसवर्णौ अपदांतत्वात् । भवाञ्छूरः, भवाञ्च्छूरः, भवाञ्च्शूरः, भवाञ्शूरः । "ञछौ ञच्छा ञचशा ञशाविति चतुष्टयम् । रूपाणामिह चक्छत्वचलोपानां विकल्पनात् ॥" कुर्वंस्तिष्ठ कुर्वञ्च्छेते इत्यत्राऽपदांतनकारस्य स्थानेऽनुस्वारचुत्वाभ्यां परत्वात्प्राप्तं णत्वं न । कस्मात् । असिद्धं बहिरंगमंतरंगे इति परिभाषया । बहिरंगयोः सक्चकोरसिद्धत्वात् । अनंते इत्यंतरंगे णत्वनिषेधे सति तच्छास्त्रं सञ्च्शंभुरित्यादौ चोः कुरिति कुत्वमपि न । अंतरंगे कुत्वे कर्तव्ये चुत्वस्य चकारासिद्धत्वात् । कुत्वविधिस्तु वाग्भ्यां वक्ष्यतीत्यादावेकपदस्थे चवर्गे सावकाशः । चपाच्छः शः अस्व्युस्माच्छसादावित्यादिनिर्देशात् ॥

तत्त्व०—शे चक् वेति । भवाञ्छूर इत्यादि । " अछौ अचछा अचशा अशाविति चतुष्टयम् । रूपाणामिह चकुछत्वचलोपानां विकल्पनात् ॥ " पदस्येति किम् । दश । नान्तस्य किम् । पञ्चशः । पदस्येति किम् । भवांश्चिनोति । अत्र शीत्येव वक्तुमुचितं मात्रालाघवात् । ननु कुर्वंस्तिष्ठ कुर्वञ्छेते इत्यत्र अपदान्तत्वान्नस्य चुत्वादनुस्वाराच्च परत्वाञ्च णत्वं प्राप्नोति । सत्यम् । अनन्त इत्यतरग निषेधं प्रति बाहिरंगयोश्छकसकोरसिद्धत्वाश्रयणात् । तच्छास्त्रमित्यत्रापि चुत्वे कुत्वमप्यासिद्धत्वादेव न ॥

ङ्णनो ह्रस्वाद्द्विः स्वरे ॥ ९८ ॥ ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवंति स्वरे परे पदांते च ॥ प्रत्यङ्ङिदम् । सुगण्णिह । राजन्निह । ह्रस्वात्किम् । प्राङास्ते । पदांते किम् । परमदण्डिनौ ॥

सुबो०—ङ्णनो ह्रस्वाद्द्विः स्वरे । ङ् च ण् च न च ते ङ्णनः । पदांते इत्यनुवर्तते । ह्रस्वात्पराः पदांते स्थिताः ङ्णनः द्विः स्युः स्वरे परे । ह्रस्वादिति किम् । प्राङास्ते । प्राण् आस्ते । भवान् आस्ते । ङ्णन इति किम् । आस्ते । स्वरे किम् । प्रत्यङ् करोति, सुगण् वदति, पचन्वदति । पदांते किम् । दंडिनौ। ननु समिद्दण्डिनावित्यादौ पूर्वपदस्येव चोत्तरखंडस्यापि प्रत्ययलक्षणेन पदत्वात् नस्य द्वित्वं स्यात् । उच्यते । उत्तरखंडस्य प्रत्ययलक्षणेन पदांतकार्यं न । एदोतोतः वात्विनावित्यादिनिर्देशात् । अत एव परमवाचौ परमगोदुहौ परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न भवंति । ननु अनश्च इत्यादौ नस्य द्वित्वं स्यात् । उच्यते । अनंते अनऽपीत्यादिज्ञापनान्न द्वित्वम् ॥

तत्त्व०—ङ्णनो ह्रस्वाद्द्विः स्वरे इति । ङ् च णु च न च ते ङ्णनः।ह्रस्वादिति किम् । प्राङ् आस्ते । स्वरे इति किम् । प्रत्यङ् करोति । पदान्ते इति किम् । दण्डिनौ । ननु समिद्दण्डिनावित्यत्र पूर्वपदस्येवोत्तरखण्डस्यापि प्रत्ययलक्षणत्वेन पदत्वात् तस्य द्विवचन प्राप्नोतीति चेन्न । उत्तरपदस्य प्रत्ययलक्षणेन न पदान्तकार्येतेति एदोतोत इति ज्ञापनात् । अत एव नलोपोऽपि न । अनश्व इत्यादौ तु अनपीत्यादिज्ञापकाद्द्वित्व न । नलोपस्तु अमुविधिसामर्थ्यान्न द्विरिति क्रियावृत्तौ द्विस्त्रिचतुर्भ्यःसुरिति स्वन्तत्वादव्ययम् । क्रिया चात्रोच्चारणमेव । तथा च द्विरुच्चार्या इत्यर्थो बोद्धव्यः ॥

छः ॥ ९९ ॥ ह्रस्वात्परश्छकारो द्विर्भवति ॥

सुबो०—छः । ह्रस्वादित्यनुवर्तते । छकारे अकार उच्चारणार्थः । तेन विंच्छिन्नमित्यादि सिद्ध्यति ॥

तत्त्व०—छ इति । अत्र स्वरे इत्यनुवर्त्य विभक्तिव्यत्ययेन स्वरात् इति बोध्यम् । पदान्ते वेत्यनुवर्तते । तच्च वाक्यभेदेन सबध्यते । विकल्पस्तु व्यवस्थितः । तेन पदान्ते दीर्घादाङ्माङ्वर्जिताद्वा । स्वरादिति किम् । छन्नम् । सयोगांतस्य लोप इत्यत्र वावसान इत्यतो वेत्यपकृष्य तस्य व्यवस्थितत्वाश्रयणात् क्वाचिन्न इत्याशयेनाह । पुंसोऽक्पर इत्यादि । तेन स्यातौ वा समिन्नस्य रात्र इत्यादि सिद्धम् ॥

खसे चपा झसानाम् ॥ १०० ॥ तव छत्रं, तवच्छत्रम् ॥

सुबो०—खसे चपा झसानाम् । झसानां चपाः स्युः खसे परे । झसानामिति किम् । खन्सु । खसे किम् । वेद्मि ॥

**दीर्घाच्च ॥ १०१ ॥ हीच्छः ॥**

सुबो०—दीर्घाच्च । दीर्घात्परश्छकारो द्विः स्यात् ॥

**पदांताद्दीर्घाद्वा ॥ १०२ ॥ लक्ष्मीछाया, लक्ष्मीच्छाया ॥**

सुबो०—पदांताद्दीर्घाद्वा । पदांताद्दीर्घात्परश्छो वा द्विः स्यात् ॥

**आङ्माङ्भ्यां नित्यम् ॥ १०३ ॥ आच्छादयति । आच्छिदत् ॥**

सुबो०—आङ्माङ्भ्यां नित्यम् । पदांताद्दीर्घादित्यस्यापवादोऽयम् । आङ्माङ्भ्यां परश्छो द्विः स्यान्नित्यम् ॥

**पुंसोऽवपरे खपे संयोगांतस्य लोपो न ॥ १०४ ॥ पुंस्कोकिलः। पुंस्पुत्रः । अवपरे किम् । पुङ्क्षीरम् । खपे किम् । पुन्दासः ॥**

सुबो०—पुंसोऽवपरे खपे संयोगांतस्य लोपो न । पुंस्शब्दस्य सस्य लोपो न भवति । अवः परो यस्मात्स अवपरस्तस्मिन् अवपरे खपे । संयोगांतस्य लोप इति प्राप्तावयं निषेधः । अवपरे किम् । पुंक्षीरम् । सलोपोऽत्र । खपे किम् । पुंदासः । अत्रापि सलोपः ॥

तत्त्व०—पुंस्कोकिल इति । पुमांश्चासौ कोकिलश्च सः ॥

**ख्याधातौ वा ॥ १०५ ॥ पुंख्यानम्, पुङ्ख्यानम् ॥**

सुबो०—ख्याधातौ वा । पुंस्शब्दस्य सकारस्य लोपो वा भवति । चक्षिङः ख्याञ् इति ख्याधातौ परे पुंख्यानमिति । चाक्षिङो युटि रूपम् ॥

**मोऽनुस्वारः ॥१०६॥ मकारस्यानुस्वारो भवति हसे पदांते च ॥ तं हसति । पटुं वृथा । पदांते किम् । गम्यते । हसे किम् । किमत्र ॥**

सुबो०—मोऽनुस्वारः । पदांते इत्यनुवर्तते । पदांते मोऽनुस्वारः स्यात् हसे परे । पदांते किम् । गम्यते । म इति किम् । भवान्हसति । हसे किम् । फलमस्ति । म इत्यत्राकार उच्चारणार्थः । अनुस्वार इति पूर्वाचार्याणां संज्ञा ॥

तत्त्वं०—मोऽनुस्वार इति । पदांते किम् । गम्यते । मकारस्य किम् । भवान् हसति । हसे इति किम् । फलमस्ति । अत्र लघुभाष्यम् । ननु मो इति सूत्र्यताम् । अत्राकार उच्चारणार्थः । ततः परस्यादेशः स्यादिति सत्यम् । संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येवमर्थमिदम् । अनुस्वार इति प्राचां संज्ञा । तेन सम्राडिति सिद्धम् । वस्तुतस्तु मो इति कर्तुं शक्यं अम्शसोरित्यादिनिर्देशेनास्यानित्यत्वज्ञापनात् सम्राडित्यादि सिद्धम् । अत्रेदमवधेयम् । मों इति कृते ओ अवित्यादिष्विव म इत्यस्य प्रथमांतत्वमाशंक्य ओकारस्य विधेयत्वशंकाया अनिर्वार्यत्वादनुस्वारस्य तत्सदेहनिराकरणायावश्यं वक्तव्यत्वात् । यत्तु अत्र म इति योगं विभज्य तत्र सर्कं चानुवर्त्य कश्चिन्मस्य सगागम इति व्याख्येयम् । तेन पुंस्कोकिल पुंस्पुत्र इत्यादि सिध्यतीत्युक्तम् । यत्तु पुंसोऽवपरे खपे सयोगांतस्यालोप इति स्वोक्त्या विरोधादुपेक्ष्यम् ॥

**नश्चापदांते झसे ॥ १०७ ॥ नस्य मस्य चापदांते वर्तमानस्या-**

नुस्वारो भवति झसे हकारे च परे ॥ यशांसि । पुंभ्याम् । स्वनड्वांहि । अपदांते किम् । ब्रह्मन् पाहि । झसे किम् । तन्यते ॥

सुबो०—नश्चापदांते झसे । चकारो मकारस्य समुच्चयार्थः । अपदांते नस्य मस्य चानुस्वारः स्यात् झसे परे । अपदांते किम् । भवान् भाति । झसे किम् । मन्यते । यम्यते ॥

तत्त्व०—नश्चापदान्ते झस इति । चकारो मकारस्य समुच्चयार्थः । अन्यथा अपदान्ते नस्यैव स्यात् । अपदान्ते किम् । भवान् याति । अत्रापदान्तग्रहणादेतत् सूत्रपर्यन्तः पदान्त इत्यधिकारो बोध्यः । झस इति किम् । मन्यते । यम्यते । अत्र हो झभा इत्यतो हकारोऽनुवर्त्यः । स च विभक्तिविपरिणामेन सप्तम्यन्तो बोध्यः इत्याशयेनाह । हकारे चेति ॥

यमा यपेऽस्य ॥ १०८ ॥ अपदांते वर्तमानस्यानुस्वारस्य यमा भवंति यपे परे ॥ अस्य यपस्य सवर्णाः । शान्तः । अङ्कितः । अञ्चितः । कुण्ठितः । गुम्फितः ॥

सुबो०—यमा यपेऽस्य । अस्येति यपपरामर्शार्थम् । अनुस्वारस्यानुवृत्त्यैव लाभात् । अपदांते अनुस्वारस्य यमा भवंति यपे परे । ते यमा अस्य यपस्य सवर्णा भवंतीत्यर्थः । सानुनासिकस्यानुस्वारस्य सानुनासिका एव यमाः स्युः । यमा इति वहुवचनं जातौ ज्ञेयम् । कुंडं रथेनेत्यत्रानुस्वारस्य पाक्षिको यमो न रकारस्यानुनासिकत्वाभावात् । यपे किम् । आक्रंस्यते । स्वनड्वांहि । अनुस्वारस्येति किम् । राजन् गच्छ । गम्यते । अंकपदे लक्षणे चेति चुरादिर्ण्यंतात् क्तः । सेटोः क्तक्तवत्वोर्णिलोप इति णेर्लोपः । अनेनानुस्वारस्य ङः । अकि लक्षण इत्यस्माद्वा क्तः । नुमोऽनुस्वारे परसवर्णेन ङः । अङ्कितः । अंचेः पूजायामिडितीट् । पूजार्थस्यांचतेर्नेति नलोपो न । अंचितः । कुठि प्रतिघाते क्तः । नुमोऽनुस्वारे परे परसवर्णेन णः । कुण्ठितः । शमु उपशमे क्तः । दांतादयो वा निपात्यंते इति निपातनादिडभावः । अमांतस्योपधाया दीर्घः काविति दीर्घः । मस्यानुस्वारे परसवर्णेन नकारः । शान्तः । गुंफ ग्रंथे क्तः । मस्यानुस्वारे परसवर्णेन मः । गुम्फितः । ननु कुर्वन्तीत्यत्रानेन कृतस्य नस्य णत्वं कस्मान्न । उच्यते । असिद्धं वहिरंगमंतरंगे इति परसवर्णस्यासिद्धत्वान्न णत्वम् ॥

तत्त्व०—यमा यपेऽस्येति । अस्येति किमर्थम् अनुस्वारपरामर्शार्थं चेन्न तस्यानुवृत्त्यैव लाभात् । न च प्रथमांतस्यानुवृत्तस्य अनुस्वार इत्यस्य षष्ठीविपरिणामार्थमिति वाच्यम् । यमा इत्यादेशापेक्षया अर्थात् षष्ठीविपरिणामसंभवात् । एवं तर्हि यपपरामर्शार्थम् इत्यभिप्रेत्याह । अस्य यपस्य सवर्णा इति । अनुनासिकस्यानुस्वारस्य सदृशयपस्य सवर्णा यमा भवंतीत्यर्थः । तेन रेफो न भवति अनुस्वारसादृश्याभावात् । न च सादृश्याभावेऽपि वचनात् स्यादिति वाच्यम् । यपे इत्यस्य जातिपरत्वेन यपजातीये सवर्णे यस्य जातीयस्यानुस्वारसदृशस्य विधानेन वचनस्य चरितार्थत्वात् । यत्तु यमोऽस्येति सूत्र युक्त अनुस्वारेण झसे हसे इति वा

क्षेपणीयम् । अनुस्वारस्य सदृशझसहसयोः सवर्ण आदेशो भविष्यतीति व्यर्थमिह । यपे इति । शषसहेषु तु नातिव्याप्तिः तेषां यमे सवर्णाभावादिति तत्रेदमवधेयम् । हसाक्षणेनैव तदंतर्गस्य झसस्याक्षेपस्याशक्यत्वात् किंच अनुवृत्तिलब्धेनानुस्वारेण हसाक्षेपे पदान्तस्याक्षेपाच्च ॥

**वा पदांतस्य ॥ १०९ ॥** पदांते वर्तमानस्यानुस्वारस्य यमा वा भवंति यपे परे ॥ अस्य यपस्य सवर्णाः । त्वङ्करोषि, त्वं करोषि । तन्तनोति, तं तनोति । सँय्यन्ता, संयंता । सँव्वत्सरः, संवत्सरः । यँल्लोकं, यं लोकम् ॥

सुबो०—वा पदांतस्य । अत्रानुस्वारस्यानुनासिका एव यमा वा स्युः ॥

तत्त्व०—वेति । द्वितीयसूत्रोपन्याससामर्थ्यादेतत्पदान्तविषयमित्याशयेनाह । पदान्ते वर्त्तमानस्येति ॥

**मो राजि समः क्वौ ॥ ११० ॥** क्विबंते राजतौ परे समो मस्य म एव स्यात् ॥ सम्राट् ॥

सुबो०—मो राजि समः क्वौ । क्विबंते राजतौ परे समो मस्य म एव । मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम् । राजतौ किम् । गमादीनां ञमस्येति मलोपे ह्रस्वस्येति तुक् । संपत् । सम इति किम् । इदं राट् । क्विबंते इति किम् । संराजितव्यम् । संराजते इति । राजृ दीप्तौ संपूर्वादस्माद्वर्तमाने क्विप् षत्वडत्वचपत्वानि । सम्राट् ॥

**यवलमनपरे हकारे मस्य यवलमना वा ॥ १११ ॥** किं ह्यः, किय्ँह्यः । किँव्ह्वलयति, किं ह्वलयति । किँल्ल्हादयति, किं ल्हादयति । किम्ह्मलयति, किं ह्मलयति । किन्ह्नुते, किं ह्नुते ॥

सुबो०—यवलमनपरे हकारे मस्य यवलमना वा । यश्च वश्च लश्च मश्च नश्च ते यवलमनाः यवलमनाः परे यस्मात् सः यवलमनपरस्तस्मिन्यवलमनपरे हकारे मस्य यवलमना वा भवंति । ह्वल ह्मल संचलने । ह्नुङ् अपनयने ॥

तत्त्व०—वेति व्यवस्थितो विकल्प इत्यभिप्रेत्याह । यवलमनपरेति । हकारे इति विशेष्यम् । यश्च वश्च लश्च मश्च नश्च ते ते परे यस्य स तथा तस्मिन् । किं ह्य इति । ह्योऽतीते । किं ह्वलयतीत्यादि । ह्वल ह्मल चलने । ज्वलह्वलह्मलनमामनुपसर्गाद्वेति मित्वाद्ध्रस्वत्वम् । ह्नुङ् अपह्नवे । अदादिः । ल्हादी सुखे । कुर्वन्तीत्यत्र नस्य णत्वं तु असिद्धं बहिरंगमंतरंग इत्यसिद्धत्वात् । न वेति व्यवस्थितविभाषाश्रयणात् । शसे चपस्य द्वितीयो वेति टनात्सस्य वा धुट् । शसे ङणो कुक्टुकौ वा षकारे परे नन्तकारस्य न्स वा इत्यादि संगृहीतम् ॥

**शसे चपस्य द्वितीया वा ॥ ११२ ॥** वथ्सरः, वत्सरः । अफ्सरः, अप्सरः ॥

सुबो०—शसे चपस्य द्वितीया वा । वर्गप्रथमानां द्वितीया भवंति शसे परे ॥

**न पदांते ॥ ११३ ॥** तत्साधुः ॥

सुबो०—न पदांते । पदांते स्थितानां वर्गप्रथमानां द्वितीया न भवंति ॥

कुक्टुक्वर्जितस्य विभक्तौ न ॥ ११४ ॥ भवत्सु ॥

सुबो०—कुक्टुक्वर्जितस्य विभक्तौ न । चपस्य विभक्तौ द्वितीया न स्युः कुक्टुकोश्च द्वितीयाः स्युर्विभक्तौ परे ॥

टनात्सस्य वा धुट् ॥११५॥ षट्त्सन्तः, षट्सन्तः। सन्त्सः, सन्सः ॥

सुबो०—टनात्सस्य वा धुट् । टश्च नश्च तयोः समाहारः टनं तस्मात् टकारनकाराभ्यां परस्य सकारस्य धुट् वा स्यात् । धुटश्च चपत्वेन तकारः । ततः शसे चपस्येत्यनेन तकारस्य थो न । चपत्वस्यासिद्धत्वात् । षट्त्संतः ॥

शसे ङ्णोः कुक्टुकौ वा ॥ ११६ ॥ प्राङ्षष्ठः, प्राङ्क्षष्ठः । सुगण्साधुः, सुगण्ट्साधुः ॥

सुबो०—शसे ङ्णोः कुक्टुकौ वा । ङकारणकारयोः कुक्टुकावागमौ वा स्तः शसे परे । कुगभावे । प्राङ्षष्ठः। कुगागमे प्राङ्क्षष्ठः । कुकौ द्वितीये प्राङ्खूषष्ठः ॥

तत्त्व०—ङ् च ण च ङ्णौ तयोः । ङस्य कुक् णस्य टुक् भवतीत्यर्थः । वर्ग्यत्वात् ॥

पकारे परे नॄन्नकारस्य न्स वा ॥ ११७ ॥

सुबो०—पकारे परे नॄन्नकारस्य न्स वा । ननित्यस्य नॄकारस्य न्स आदेशः स्याद्वा पकारे परे । अकार उच्चारणार्थः । तेन नॄः पुनाति इत्यादि सिद्ध्यति ॥

स्रोर्विसर्गः ॥ ११८ ॥ सकाररेफयोर्विसर्गो भवति ॥

सुबो०—स्रोर्विसर्गः । स् च र च स्रौ तयोः स्रोः । पदांते स्रोर्विसर्गः स्यात् । धात्वधातुसाधारणमिदम् ॥

अधातो रसे पदांते च ॥ ११९ ॥

सुबो०—अधातो रसे पदांते च । अधातोः स्रोर्विसर्गः स्याद्रसे परे पदांते च । पदांत किम् । स्यात् । ब्रूयात् । पयसी । वारि । रसे किम् । चातुर्यम् । सुप्प्रत्यये परे रस्य विसर्गो न । चतुर्ष्विति निर्देशात् । तेन गीर्षु वार्षु पूर्षु इत्यादि सिद्ध्यति । नार्पत्यः मार्गवः इत्यादौ तु बहिरंगाया वृद्धेरसिद्धत्वान्न विसर्गः । वर्त्म वर्त्मेत्यादौ कर्तृसाधनयोरिति निर्देशान्न विसर्गः ॥

कुप्वोः ᳲक ᳲपौ वा ॥ १२० ॥ कवर्गपवर्गसंबंधिनि खसे परे विसर्गस्य ᳲक ᳲपौ भवतः ॥ कपावुच्चारणार्थौ । नॄँᳲपाहि, नॄँः पाहि, नॄन् पाहि ॥ इति हससंधिः ॥

सुबो०—कुप्वोः ᳲक ᳲपौ वा । आदेशनिमित्तयोर्यथाक्रममत्रास्ति । आदेशे

ककारपकारावुच्चारणार्थौ । केवलयोर्जिह्वामूलीयोपध्मानीययोरुच्चारणासंभवात् । किञ्च । ककारखकारयोः परतः ⌄कः स्यात् पकारफकारयोश्च ⌄पः स्यात् । कुप्वोरिति किम् । कश्चारः । वाग्रहणात्पक्षे विसर्गः । विसर्जनीयस्य स इत्यस्यापवादोऽयम् । उपध्मानीये नॄँ ⌄ पाहि । विसर्गे नॄँः पाहि । नृभावे नॄन्पाहि ॥ इति हससंधिः ॥

तत्त्व०–कुप्वोः ⌄ क ⌄ पौ चेति । कुश्च पुश्च कुपू तयोः अत्रादेशनिमित्तयोर्यथाक्रमं आदेशौ कपावुच्चारणार्थौ । केवलयोरुच्चारणासंभवात् । कखयोः ⌄ कः पफयोः ⌄ पः । अन्यत्रात्तरविधिभिर्बाधनात् ॥

श्रीविद्यानगरस्थायी पौत्रो रामकरस्य हि । हससंधेर्यथाद्व्याख्यां स हि लोकेशसंज्ञकः ॥

इति हससंधिः ।

---

**विसर्जनीयस्य सः ॥ १२१ ॥ खसे परे ॥ कस्तनोति ॥**

सुबो०–विसर्जनीयस्य सः । विसर्गस्य सकारः स्यात् खसे परे । कस्तनोतीत्यत्र विसर्गस्य सत्वे कृते तस्य पुनर्विसर्गादेशो न । असिद्धत्वाद्विधिसामर्थ्याद्वा ॥

तत्त्व०–अथ विसर्गसंधिः ॥ विसर्जनीयस्य स इति । आसंधिसमाप्तेरिदं षष्ठ्यन्तमधिक्रियते । परिशेषात् खसे एवास्य प्रवृत्तिः । अन्यत्र तूत्तरसूत्रैस्तत्र तत्र बाध । विसर्गस्य सः इति नोक्तम् । पर्यायशब्दानां गौरवलाघवयोरनपेक्षणात् । यत्तु प्राचामुपहासार्थं विसर्जनीयादिग्रहणं प्राञ्चो लाघवं न जानन्तीत्युक्तं तत्रेदमवधेयम् । प्राञ्चोऽत्र के विवरणकर्तारः सूत्रकर्तारो वा । आद्ये सूत्रस्थगौरवेण तेषामुपहासासंभवात् । अन्ते सरस्वत्याः सूत्रकर्तृत्वेन तदुपहासे प्रत्यवायसंभवात् । "न निंद्यन्मनसा वाचा सर्वव्याधिपराङ्मुखः।" इति निषेधदर्शनात् । अः सः इति सूत्रणीयम् । यद्विसर्जनीयस्येत्युक्तं तत्संज्ञापूर्वकत्वेन सस्यानित्यबोधनार्थम् । तेन कः साधुरित्यादि सिद्धम् । ननु कुप्वोः ⌄ क ⌄ पाविरयस्य वैकल्पिकत्वात् पक्षे सत्वं कुतो नेति चेन्न । शेषाः कार्य्ये इति निर्देशेन ⌄ क ⌄ पाभ्यामुक्ते पक्षे सत्वप्रवृत्त्यभावस्य ज्ञापनात् । अत्र वेत्यनुवृत्तस्य व्यवस्थितविभाषाश्रयणात् शसे वा सकारः ॥

**शसपरे खसे विसर्जनीयस्य विसर्ग एव ॥ १२२ ॥ कः त्सरुः । घनाघनः क्षोभणः ॥**

सुबो०–शसपरे खसे विसर्जनीयस्य विसर्ग एव । शसः परो यस्मात्स शसपरस्तस्मिन्शसपरे खसे विसर्जनीयस्य विसर्जनीय एव भवति न त्वन्यत् । यदि तु शसपरे खसे नेत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धे ⌄ क ⌄ पौ स्याताम् । विसर्गवचनात्तु विकारमात्रमपि निषिध्यते । तेन वासः क्षौमं अद्भिः प्सातमित्यादौ विसर्ग एव ॥

तत्त्व०–शसपरे खसे इत्यादि । शसः परो यस्मात्सः शसपरः तस्मिन् ॥

**शसे वा ॥ १२३ ॥ कश्शूरः, कः शूरः । कष्षण्ढः, कः षंढः । कस्साधुः, कः साधुः ॥**

सुबो०–शसे वा । शसे परे विसर्जनीयस्य विसर्जनीय एव वा भवति पक्षे सः । कस् शूरः, श्चुत्वं कश्शूरः । कः षंढः, कस् षंढः, ष्टुत्वं कष्षंढः ॥

**खपपरे शसे विसर्गस्य लोपो वा ॥ १२४ ॥ हरिस्फुरति, हरिः**

स्फुरति, हरिस्स्फुरति । कुप्वोःᳵ कᳵपौ वा । कᳵकरोति, कः करोति । कः पचति, क ᳶ पचति ॥

सुबो०–खपपरे शसे विसर्गस्य लोपो वा । खपः परो यस्मात्सः खपपरः तस्मिन्खपपरे शसे । विसर्जनीयस्य लोपो वा भवति । वाग्रहणात्पक्षे शसे वेति विसर्गे सत्वे च त्रैरूप्यम् । हरिस्फुरति, हरिः स्फुरति, हरिस्स्फुरति ॥

तत्त्व०–खपपरे इति । खपः परो यस्मात्सः खपपरः तस्मिन् । एतत्सर्वं व्यवस्थितविभाषाश्रयणादेव । कुप्वोः ᳵ क ᳶ पाविति व्याख्यानं पूर्वोक्तमेव ॥

वाचस्पत्यादयो निपातात्सिध्यंति ॥ १२९ ॥ वाचस्पतिः । बृहस्पतिः । तस्करः । कौतस्कुतः । कान्कान्, कांस्कान् । कस्कः । भास्करः । पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति । नमस्करोति । पुरस्करोति । निष्प्रत्यूहम् । आविष्कृतम् । तिरस्कर्ता । द्विष्करोति, द्विः करोति । त्रिष्करोति, त्रिः करोति । चतुष्करोति, चतुः करोति । चतुष्कपालम् । सर्पिष्करोति, सर्पिः करोति । धनुष्करोति, धनुः करोति । सर्पिष्कुण्डिका । अयस्कारः । अयस्कामः । अयस्कुम्भः । अयस्पात्रम् । अयस्सहिता कुशा अयस्कुशा । अयस्कर्णी । अधस्पदम् । शिरस्पदम् । आकृतिगणोऽयम् । अविहितलक्षणस्सकारो वाचस्पत्यादिषु द्रष्टव्यः ॥

सुबो०–वाचस्पत्यादयो निपातात् सिद्ध्यंति । सिद्धस्वरूपोच्चारणं निपातनादेते शब्दाः सिद्धिं यांति । वाचः पतिरित्यत्र षष्ठ्या अलुक् । निपातनाद्विसर्गस्य सत्वम् । वाचस्पतिः । तत् चौर्यं करोतीति तकारस्य सत्वं निपातनात् । तस्करः । बृहतां पतिरिति निपातनात् तकारस्य सत्वम् । बृहस्पतिः । कुतः कुत आगत इत्यत्र त्यननाभित्यनेनाव्ययात्त्यप्प्रत्यये प्राप्ते गणपाठसामर्थ्यादण्प्रत्ययष्टिलोपश्च । निपातनाद्विसर्गस्य जिह्वामूलीयाभावः । कौतस्कुतः । कान् कानिति । अत्र एकः शिष्टः कर्मे द्वितीये निर्दार्थे । सगागमाभावोऽत्र भिन्नार्थत्वात् । गणे चाम्रेडितस्यार्थ ग्रहणं कान् कुत्सितान् पश्यसीत्यर्थः । कांस्कान् इति । अत्र आम्रेडितस्य पूर्वनकारस्य सगागमो भवति निपातनात् । कांस्कान् । कान् कान् पश्यतीत्यर्थः । कः कः इति कस्कः । जिह्वामूलीयाभावोऽत्र । भासः करोतीति भास्करः । जिह्वामूलीयाभावः । कुत्सितं पयः इति पयस्पाशम् । कुत्सायामिति पाशः । ईष-

न्यूनं यश इति यशस्कल्पम् । ईषदसमाप्ताविति कल्पः । कुत्सितं यश इति कुत्सितेऽर्थे कः । यशस्कम् । आत्मनो यश इच्छतीति काम्यश्चेति काम्यप्रत्ययः । यशस्काम्यति इत्यादौ विसर्गस्य जिह्वामूलीयोपध्मानीयाभावो निपातनात् । कुत्सितं सर्पिरिति सर्पिष्पाशम् । ईषन्न्यूनसर्पिरिति सर्पिष्कल्पम् । कुत्सितं सर्पिरिति सर्पिष्कम् । आत्मनः सर्पिरिच्छतीति सर्पिष्काम्यति इत्यादौ विसर्गस्य षत्वं निपातनात् । नमस्करोति नमः करोतीत्यत्र विकल्पेन सकारविसर्गौ निपातनात् । पुरस्करोतीत्यत्र जिह्वामूलीयाभावः । निष्प्रत्यूहं, आविष्कृतं, दुष्कृतमित्यादौ विसर्गस्य षत्वं निपातनात् । तिरस्कर्ता तिरः कर्तेत्यत्र विकल्पेन सकारविसर्गौ । द्वौ वारौ करोतीति द्विष्करोति, द्विः करोति । त्रीन् वारान्करोतीति त्रिष्करोति, त्रिः करोति । चतुरो वारान् करोति चतुष्करोति, चतुः करोति । द्वित्रिचतुर्भ्यं इति सुः । चतुर्षु कपालेषु संस्कृत इत्यर्थे अण् । द्विगुसमासेऽणो लुक् च । चतुष्कपालः, चतुः कपालः । सर्पिष्करोति, सर्पिः करोति । धनुः करोति, धनुष्करोति । इत्यादौ विकल्पेन विसर्गस्य षत्वविसर्गौ निपातनात् । सर्पिषो घृतस्य कुंडिकेति सर्पिष्कुंडिका । नित्यं षत्वमत्र । अयसः कार इत्ययस्कारः । अयसः काम इत्ययस्कामः । अयसः कुंभ इत्ययस्कुंभः । इत्यत्र विसर्गस्य जिह्वामूलीयाभावः । अयसः पात्रमित्ययस्पात्रमित्यत्रोपध्मानीयाभावः । अयः सहिता कुशेत्ययस्कुशा । वेदे औदुंबरशंकुः कुशेति व्यवहरंति । अयोविकारे तु कुशीति । अय इव कर्णौ यस्याः सा अयस्कर्णी । नासिकोदरेतीप् । अत्र जिह्वामूलीयाभावः । पदस्याध इत्यधस्पदम् । शिरसः पदमिति शिरस्पदमित्यत्रोपध्मानीयाभावः । आकृत्या स्वरूपेण गण्यते यः स आकृतिगण इति ॥

तत्त्व०–अत्रापि वेत्यस्य व्यवस्थितत्वात् अनेकार्थलाभ इत्याशयेनाह । वाचस्पत्यादय इति । बृहस्पतिरित्यत्र तकारस्य सकारः । तस्कर इत्यत्र तकारस्य । एवमन्येऽपि ॥

**रोऽरात्रिषु ॥ १२६ ॥** अह्नो विसर्जनीयस्य पदान्ते रो भवति । न तु रात्र्यादिषु ॥ अहर्गणः । अहरहः । अरात्रिषु किम् । अहोरात्रः । अहोरूपम् । अहोरथन्तरम् ॥

सुबो०–रोऽरात्रिषु । पदांतेऽह्नशब्दस्य विसर्गस्य रः स्यात् । रात्र्यादिवर्जितेषु परतः । रात्रिष्विति बहुवचनमादिशब्दार्थे । तेन रात्रिरात्ररूपरथंतराणि रात्र्यादयः अह्नां गण इत्यहर्गणः । अह्नः इति नस्य रः अहः अहः इत्यहरहः । वीप्सायां द्वित्वम् । अहश्च रात्रिश्चानयोः समाहार इत्यहोरात्रः । समासांतोऽप्रत्ययोऽत्र । रात्राह्नाहा इति पुंस्त्वम् । अहोरात्रिरेषा । इदमह एषा रात्रिरस्तीत्यर्थः । प्रशस्तमह इत्यहोरूपम् । प्रशंसायामिति रूपः । अहोरूपः । गुणवाचको रूपशब्दोऽप्यस्ति ।

रथंतरं सामवेदसंज्ञा। अहोरथंतरम्। एषु विसर्गस्य उत्वं तत ओत्वम्। पदांते किम्। अहोभ्याम्॥

तत्त्व०—रोऽरात्रिष्विति। अरात्रिष्विति बहुवचनात् रात्र्यादि गृह्यते। अहोरात्र इति एकदेशविकृतस्यानन्यवत्वाद्रात्रशब्दस्यापि ग्रहणम्। रात्राह्नाहाः पुंसीति नियमात्पुंस्त्वम्। गतमहो रात्रिरेषेति मुख्यः प्रयोगः॥

अतोऽत्युः॥ १२७॥ अकारात्परस्य विसर्ज्जनीयस्योकारो भवत्यति परे॥ कोऽर्थः॥

सुबो०—अतोऽत्युः। आदवे लोपशित्यस्यापवादोऽयम्। अतः परस्य विसर्गस्य उत्वं स्यादति। अत इति किम्। अग्निरत्र। तपरः किम्। देवा अत्र। सुस्रोतः ३ अत्र। दूराद्धाने इति प्लुतः। अतीति किम्। देव इह। तपरः किम्। देव आगतः। तिष्ठतु पयः अग्निदत्तेत्यत्र गुरोरनृत इति प्लुतः। विसर्गस्य उत्वे ओत्वे च एदोतोत इत्यल्लोपः। कोऽर्थः॥

तत्त्व०—अतोऽत्युरिति। अत इति किम्। हरिरत्र। तपरः किम्। देवा अत्र। अतीति तपरः किम्। देव आगत०। विसर्गस्येति किम्। नाम मनु०। आदवे लोपश इत्यस्यापवादोऽयम्॥

हवे॥ १२८॥ अकारात्परस्य विसर्ज्जनीयस्योकारो भवति हवे परे॥ देवो याति। मनोरथः॥

सुबो०—हवे। अत इत्यनुवर्तते। अतः परस्य विसर्गस्य उत्वं स्यात् हवे। आदवे लोपशित्यस्यापवादोऽयम्। अतः किम्। वायुर्वद्यः। तपरः किम्। वेधा वन्द्यः। हवे किम्। देवः पश्यति॥

तत्त्व०—हवे इति। लोपशोऽपवाद। अत० किम्। भानुर्वद्यः। तपरः किम्। वेधा नम्यः। हवे किम्। राम कर्त्ता। अत्र लघुभाष्यम्। अतो हवे उरित्येकयोगो न कृतोऽस्यानित्यत्वज्ञापनाय तेन उपर्बुध इत्यादि सिद्धम्। अत्रेदमवधेयम्। कुप्वोः ᳲ क ᳲ पौ वेत्यस्य व्यवस्थितत्वाश्रयणेनैव वाचस्पत्यादीनां सिद्धत्वेनोपर्बुध इत्यत्रापि रत्वसिद्धेरनित्यत्वज्ञापनस्यानुचितत्वात्। किंच ज्ञापितेऽप्यस्यानित्यत्वे आदवे लोपश इत्यस्यापातो रेफार्थयत्नस्य त्वयाप्यऽभ्युपगमात्॥

आदवे लोपश्॥ १२९॥ अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यवे परे॥ देवा अत्र। वाता वान्ति। देवा इह॥

सुबो०—आदवे लोपश्। आदिति पंचम्यन्तम्। न तु तपरत्वम्। दिव औ इत्यादिनिर्देशात्। अवे किम्। देवाः संति॥

तत्त्व०—आदवे लोपशिति। नन्वाद्ग्रहणं किमर्थम्। न चेकारादिनिवृत्त्यर्थं नामिनो र इति रेफेण बाधितत्वात्। न च हस्य व्यावृत्त्यर्थं हसाद्विसर्गस्यासंभवात्। तस्मादुत्तरार्थमेव। नन्ववग्रहणं किमर्थं न च हवग्रहणाननुवृत्त्यर्थं ननु आह पूर्वं उपधेत्यादिनिर्देशस्य ज्ञापनात् नाप्युत्तरार्थम्। असंदेहार्थं लाघवार्थं च तत्रैवाकारिष्यत्। नाप्यवसानवाधनार्थं ज्ञापकादेव तत्राप्यस्याप्रवृत्तेः। तथाहि यदाप इति सिलोपं शास्ति तज्ज्ञापयति नानेनावसाने लोपश् भवतीति। अन्यथा सोर्विसर्गलोपशोः कृतयोर्गतेत्यादिसिद्धौ किं सिलोपविधानेन। ननु लोपशि सति गगात्रेत्यादौ संधिर्न स्यान्तो लोपविधानं न ज्ञापकमिति चेन्न। यस्मिन् स्वरे परे

लोपश् तेन सह संधिर्नेति ज्ञेयम् । वस्तुतोऽवसानेति प्रसंगवारणार्थमेवावग्रहणम् । ननु आद्यो-अवे इत्येन सूत्र्यतां स्वरे यत्वं वेति तु नाकर्त्तव्यम् । देव इहेत्यादौ यकारे व्योर्लोपश् वेत्यनेन लोपशि कृते रूपसिद्धेः । न च तत्र याद्यनुवर्त्तनादस्य कथं लोप इति वाच्यं वात्पूर्वमवर्णं गृहीत्वा अप इत्यादिरूपसंभवात् । लक्षण-प्रतिपदोक्तयोः परिभाषायास्तु अनित्यत्वात् । उच्यते । भोस इत्यत्रापि यो वेत्यनुवर्त्तेत ततश्च भो इत्यादि न सिध्येत् ॥

**स्वरे यत्वं वा ॥ १३० ॥ देवायिह ॥**

सुबो०–स्वरे यत्वं वा । लोपशो विकल्पेनाऽपवादोऽयम् । अवर्णात्परस्य विसर्गस्य यत्वं वा स्यात् । पक्षे लोपश् । स्वरे किम् । रामश्चतुरः ॥

तत्त्व०–स्वरे यत्वं वेति । अवर्णात्परस्य विसर्जनीयस्य स्वरे यत्वं वेत्यर्थः ॥

**भोसः भोस् भगोस् अघोस् ॥ १३१ ॥** इत्येतस्य विसर्ज्जनीयस्य लोपश् भवत्यवे परे ॥ भो हरे । भगो नमस्ते । अघो याहि । स्वरे यत्वं वा । भोस्भगोस्अघोस्विसर्गस्य स्वरे यत्वं वा भवति । भोयेहि । भगोयेहि । अघोयगच्छत् ॥

सुबो०–भोसः भोस् भगोस् अघोस् । इति सकारांता निपाताः संति । तत्राऽऽद्यंताभ्यां प्रत्याहारो भोस इति गृहीतः । भोसः इति षष्ठ्यंतम् । भोसः भोस् भगोस् अघोस् एषां विसर्गस्य लोपश् स्यादवे । अवे किम् । भोस्तपस्विनः । स्वरे यत्वं वा । भोस्भगोस्अघोसां विसर्गस्य यत्वं वा भवति स्वरे । पक्षे लोपश् ॥

तत्त्व०–भोस इति । षष्ठ्येषा नतु पंचमी । भोःशब्दस्य सान्तत्वेन ततः परस्य विसर्गस्याभावादित्यभिप्रेत्याह । भोस् भगोस् अघोस् इत्येतस्येति भोस भगोस अघोस् इत्येतस्मात्परस्येति तु प्राचः प्रमाद एव । भोस इत्यत्र निपातभवच्छब्दयोरपि सामान्येनानुकरणम् । तथा च भो देव भो इदिम भो विद्वन् इत्यादि सिद्धम् । न च, भोस इत्यत्र भोस्मात्रग्रहणात् भगो इह अघो याहीत्यादावव्याप्तिमिति वाच्यम् । प्रत्याहाराश्रयणेनाव्याप्तिवारणात् एव च विभोरित्यादावतिप्रसंगवारणं च संभवति तस्य प्रत्याहारेऽनंतर्भावात् । अत्र लघुभाष्यम् । ननु अभोसो लोपशित्येकयोग एव लाघवाय कर्त्तुमुचितः । उच्यते । नञ्समासोऽत्र भवेद्भेद-भोस्व्यतिरिक्ताच्छब्दात्परस्येति । अथैतद्दोषवारणाय अभोसोऽवे लोपशिति सूत्रणीयम् । तदर्थमात्रालाघवेऽपि वैरूप्यं दोष । भोसोऽवयवोऽवर्णात्पर इति सूत्रभेदे तु नायं दोष इति सूत्रभेद एवाश्रितः । अभेदमश्येयम् । आद्भोसो वे लोपशिति सूत्रणीयम् । तथा च । नञ्समासकल्पने ल्यप्दोषयोरसंभव एव आदित्यस्य पंचम्यंतत्वात् । भोस इत्यस्य षष्ठ्यन्तत्वात् च । भोसोऽवयवोऽवर्णात्तु पर इत्यस्यार्थस्य सुगमत्वात् । एवं च स्वरे यत्वं वेत्यस्याधिक्यक्तिश्चेति महद्लाघवम् ॥

**नामिनो रः ॥ १३२ ॥** नामिनः परस्य विसर्ज्जनीयस्य रेफो भवत्यवे परे ॥ अग्निरत्र । पटुर्वक्ता ॥

**उषसो बुधे ॥ १३३ ॥** उषसो विसर्ज्जनीयस्य रेफो भवति बुधे परे ॥ उषः बुधः, उषर्बुधः ॥

सुबो०–नामिनो रः । नामिन इति किम् । रामो वंद्यः । अवे किम् । अग्निः करोति ॥

तत्त्व०—नामिनो र इति । ननु नामिन इति किमर्थम् । अवर्णाल्लोपशादिविधानेन च तस्यैव परिशेषात् । यत्तु नामिन इति योगविभागे आदवे लोपशित्यतोऽवे लोपशिति चानुवर्तते । क्वचिन्नामिन: परस्य विसर्गस्यावे लोपशि तेन सेमा भूमाददे इत्यादि सिद्धमित्याहु: तन्न । सेमामित्यादेश्छान्दसत्वात् । छन्दसि दृष्टानुविधिरित्यस्योक्तत्वात् । सेमां भूम्याददे इत्यत्रापि भूमिशब्दस्य कृदंतत्वेन कृदिकारादिति ईपि । कृते हसे पः सेर्लोप इति सिलोपे इष्टसिद्धेः । उच्यते । नामिनो र इत्यत्र योगविभागार्थं नामिग्रहणम् । तथा च । वाक्यभेदेन व्याख्यानम् । नामिन इत्येको योग: । तत्र खपे वेति चानुवर्त्य र इति षष्ठ्यन्तं च कृत्वा वाक्यभेदेन व्याख्येयमित्याशयेनाह ॥

**रेफप्रकृतिकस्य खपे वा रेफः ॥१३४॥** गीः पतिः, गीर्पतिः, गीᳲपतिः । अहर्पतिः ॥

सुबो०—रेफप्रकृतिकस्य खपे वा रेफः । रेफः प्रकृतिर्मूलकारणं यस्य स रेफप्रकृतिकस्तस्य रेफप्रकृतिकस्य विसर्गस्य रकारो वा भवति खपे परे । वाग्रहणात् पक्षे विसर्गोपध्मानीयौ ॥

तत्त्व०—रेफप्रकृतिकस्य खपे वेति । रेफ प्रकृतिर्यस्य सः तथा तस्य । वस्तुतस्तु रेफप्रकृतिकस्येति नोचितं वक्तुम् । र इति सूत्रार्थेनैव तद्गतार्थम् । र इति षष्ठ्येषा न तु पञ्चमी ॥

**अहन् ॥ १३५ ॥** अहर्पतिः, अहः पतिः, अहᳲपतिः ॥

सुबो०—अहन् । अहन्शब्दस्य विसर्गस्य रो भवति । रात्रिष्विति रत्वे विसर्गे च कृतेऽयं विधिः प्रवर्तते । अहर्पतिः, अहः पतिः, अहᳲपतिः ॥

**रः ॥१३६॥** रेफसम्बंधिनो विसर्जनीयस्य रेफो भवत्यवे परे ॥ प्रातरत्र । अन्तर्गतः ॥

सुबो०—रः । षष्ठ्यंतमिदम् । रेफस्य स्थाने विहितो यो विसर्जनीयस्तस्य रो भवत्यवे परे । अवे किम् । प्रातःकालः । रेफप्रकृतिकस्येति किम् । रामो नरूयः ॥

**रि लोपो दीर्घश्च ॥ १३७ ॥** रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः ॥ पुना रमते । हरी राजते । भानू रम्यः । शम्भू राजते ॥

सुबो०—रि लोपो दीर्घश्च । र इति षष्ठ्यंतमनुवर्तते । रि इति सप्तम्यंतम् । रो लोपः स्याद्रेफे परे । चकारो विधेययोर्लोपदीर्घयोः समुच्चारणार्थः । तेन पूर्वस्वरस्य दीर्घश्च । रीति किम् । प्रातर्वायुः । र इति किम् । मनोरथः ॥

तत्त्व०—रि लोपो दीर्घश्चेति । रि इति सप्तमी । अत्र र इति षष्ठ्यन्तमनुवर्त्तते इत्यभिप्रेत्याह । रेफस्येति । रीति सप्तमीनिर्देशाल्लोपनिमित्तात् रेफात्पूर्वस्येत्याशयेनाह । पूर्वस्येति । चकारो विधेयलोपदीर्घयोः समुच्चयस्य द्योतकः ॥

**सैषाद्धसे ॥१३८॥** सशब्दादेषशब्दाच्च परस्य विसर्ज्जनीयस्य लोपो भवति हसे परे ॥ स चरति । एष हसति ॥

सुबो०—सैषाद्धसे । सश्च एषश्च तयोः समाहारः सैषं तस्मादनञ्समासेऽककारात्

सैषात् परस्य विसर्गस्य लोपः स्यात् हसे परे । स इति एष इति च कृतात्वसत्वस्य तच्छब्दस्य एतच्छब्दस्य चानुकरणम् । अनुकार्यानुकरणयोरभेदेऽर्थवत्त्वाद्विभक्त्युत्पत्तौ सत्यां द्वंद्वे विभक्तिलोपे च कृते नामत्वात् ङसि परतः स्मटोऽभावः। द्वंद्वे सर्वादीनां न सर्वकार्यमित्युक्तत्वात् । अककारात् किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हसे किम् । एषोऽत्र ॥

तत्त्व०–सैषाद्धसे इति । सश्च एषश्च तयोः समाहारस्सैष तस्मात् । स इति तच्छब्दस्य कृतात्वसत्वस्यानुकरणम् । एष इत्येतच्छब्दस्य अनुकार्यानुकरणयोर्भेदादर्थवत्त्वम् । स्मटोऽभावो द्वंद्वे सर्वादीनां सर्वकार्याभावो ज्ञापितः । स धातुरित्यादिज्ञापकात् तच्छब्दस्यैवानुकरणम् । तत्साहचर्य्यादेषशब्दोऽप्येतच्छब्दस्यैव विकृतनिर्देशात्प्रथमातादन्यत्र न असः शिव इत्यादौ तु सञ्ज्ञापूर्वको विधिरनित्य इत्यानित्यत्वान्न । रि लोपो दीर्घश्चेति सूत्रे लोपशोऽनुवर्त्तनात् ॥

**सशब्दाद्विसर्गस्य लोपः स्वरे लोप एव पादपूरणं चेत् ॥ १३९ ॥ सैष दाशरथी रामः सैष राजा युधिष्ठिरः । सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ इति विसर्गसंधिः ॥**

सुबो०–सशब्दाद्विसर्गस्य लोपः स्वरे लोप एव पादपूरणं चेत् । स इति शब्दस्य विसर्गस्य लोपः स्यात् स्वरे परे । चेद्यदि लोपे सत्येव पादः पूर्येत् । पादः श्लोकचतुर्थांश इति । पादपूरणमिति किम् । स एवमुक्त्वा । लोप एवेत्यधारणात् । अन्यथा पादपूरणे लोपो न । सोऽहमाजन्मशुद्धानामिति । स एष रामोऽस्ति । कीदृशः । दशरथस्यापत्यं दाशरथिः । अत इञनृषेरितीञ् । स एष युधिष्ठिरः । कीदृशः । राजते इति राजा । स एष कर्णः। कीदृशः। महांश्चासौ त्यागश्च महात्यागः महात्यागोऽस्ति यस्य स महात्यागी । मांतोपधाद्वतिवनावितीन् । स एष भीमः । कीदृशः । महांश्चासौ बलश्च महाबलः महाबलोऽस्ति यस्य स महाबलः । अइकौ चेत्यप्रत्ययः ॥ इति विसर्गसंधिः ॥

तत्त्व०–रि लोपो दीर्घश्चेति वक्तव्ये लोपग्रहणमुत्तरार्थमित्याशयेनाह । सशब्दाद्विसर्गस्य लोपः स्वरे लोप एव पादपूरणं चेदिति । तथा च सैष दाशरथी राम इत्यादौ लोपे जाते संधिः सिध्यति लोपशि तु न स्यात् । लोप एवेत्यत्रधारणादन्यत्रापि पादपूरणे लोपो न । तेन सोऽहमाजन्मशुद्धानामित्यादि सिद्धम् ॥

श्रीविद्यानगरस्थायी लोकेशकरसञ्ज्ञकः । विसर्गसंधेः कृतवान् व्याख्यां भाष्यानुसारिणीम् ॥

## इति विसर्गसंधिः ।

---

**अविभक्ति नाम ॥ १४० ॥ विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते ॥**

सुबो०–अविभक्ति नाम । विभक्तेरन्यादित्यविभक्ति । अन्यच्छब्देन शब्दरूपं विशेष्यं गृह्यते । तत् क्लीबांतस्य विशेषणमिदं सूत्रे विभक्तिशब्देन तन्त्रादिना वि-

भक्तिः । विभक्त्यंतं चेत्युभयमुच्यते । विभक्तिशब्देन सह नञ्तत्पुरुषः । नञ् तु द्विधा । तथा हि । "द्वौ नञौ तु समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदासः सदृग्ग्राही, प्रसज्यस्तु निषेधकृत् ॥ प्राधान्यं तु विधेर्यत्र प्रतिषेधे प्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यस्तु स विज्ञेयः क्रियया सह यत्र नञ् ॥" एवं हि विभक्तिभिन्नं विभक्त्यंतभिन्नमर्थवच्छब्दरूपं संज्ञि नाम च संज्ञा । विभक्त्यंतभिन्नमिति कथनेन धातूनां व्यावृत्तिः कृता तेषां तिबादिविभक्त्यंतत्वात् । तच्छब्दरूपं नाम प्रातिपदिकमुच्यते । कीदृशं तत् । अविभक्ति पर्युदासोऽत्र नञ् गृह्यते । विभक्तिसदृशं विभक्तिभिन्नमित्यर्थः । विभक्तिसदृशमिति कथनेनार्थवदेवागतम् । पुनः कीदृशम् । विभक्त्यंतभिन्नमिति कथनेन धातुवर्जितमित्यागतम् । पुनः कीदृशम् । अर्थवत् । अत्रार्थशब्दोऽभिधेयवचनो न तु धनानिवृत्तिप्रयोजनवचनः । यथार्थवान् धनवानित्यर्थः । मशकार्थो धूमः मशकानिवृत्तये इत्यर्थः । कोऽर्थः किं प्रयोजनमित्यर्थः । तत्राभिधेयं तु चतुर्विधं जातिगुणक्रियाद्रव्यभेदात् । जातिशब्दा यथा । गौः अश्व इत्यादयः । गुणशब्दा यथा । शुक्लः कृष्ण इत्यादयः । क्रियाशब्दा यथा । पाचकः गंतेत्यादयः । द्रव्यशब्दा यथा । डित्थं कपित्थमित्यादयः । ननु वंध्यापुत्राभावशशविषाणगगनकुसुमादीनामर्थाभावादेषां नामसंज्ञा न स्यादिति चेदुच्यते । अभावोऽपि पदार्थांतरत्वेनाभिधेयवत्वादभावशब्दस्य सिद्धा संज्ञा । वंध्यादिशब्दार्थः पुत्रादिशब्दार्थश्च प्रसिद्ध एव । तयोः संसर्गमारोप्य शब्दप्रयोगसंभवात्तेषामप्यस्ति । विभक्तिरहितमिति किम् । हरिषु । करोषि । सुप्सिपोर्मा भूत् । पदादित्वात्सस्य षो न स्यात् । विभक्त्यंतरहितमिति किम् । देवौ । भवंति । अत्र द्वित्वाद्यनभिधानेऽप्यव्ययादिवच्चैकवचनं स्यात् । धातुवर्जितमिति किम् । अहनीत्यत्र नाम्नो नो लोपशित्यनेन लोपश्च स्यात् । अहन्नित्यत्राह इत्यनेन सत्वं तु न । तस्य लाक्षणिकत्वात् । अर्थवदिति किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् । अत्र वार्तिकम् । कृत्तद्धितसमासाश्चेति । चकारोऽनुक्तसमुच्चयार्थः । तेन निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति ॥

तत्त्व०—अविभक्ति नामेति । विभक्तेरन्यत् इति । अविभक्तिविशेष्य तु शब्दस्वरूप तत्रादिना विभक्त्यतमपि लब्धम् । ननु सूत्रे अविभक्तीत्येतावन्मात्रमर्थवद्ग्रहण कुतो लब्धमिति चेत् । उच्यते । "द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदास सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ प्राधान्यात्तु विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ अप्राधान्य विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यस्तु स विज्ञेय क्रियया सह यत्र नञ् ॥" इति । तथा च पर्युदासोऽत्र नञ् गृह्यते । ततश्च विभक्तेरर्थत्वात् तत्सदृशमर्थवदेव साज्ञि उपपततीत्यर्थवल्लाभ. । तत्रादिलब्धविभक्त्यन्तपर्युदासाद्धातुपर्युदासोऽपि । अर्थवदिति किम् । धन मनमित्यत्र प्रतिवर्ण सज्ञा मा भूत् । तस्यां सत्यां स्याद्युत्पत्तौ नलोप. प्रसज्येत् । ननु च एकवर्णानामप्यर्थदर्शनादेतीत्यादाविव देवादिष्वपि वर्णा अर्थवन्तः कथ न । तथा च प्रत्याहाराह्निके अर्थ-

थन्तो वर्णा इति भाष्येऽपि श्रीमत्पतंजलिनोक्तम्। उदाहृतं च कूप इति ककारे सति कश्चिदर्थो गम्यते। यूप इति यकारे अर्थान्तरं तेन मन्यामहे। यः कूपे कूपार्थः स ककारस्य यो यूपे यूपार्थः स यकारस्येति। तथा ब्राह्मण इत्युक्ते योऽर्थो गम्यते नासौ वकारादिनामन्यतमापायेति गम्यते। येषां च संघातो यत्कार्यं करोति ते प्रत्येकमपि तत्कुर्वन्ति। यथा तिलानां खारी तैलमुत्पादयति प्रत्येकं च तिलाः ये तु यस्मिन् प्रत्येकमसमर्थास्तेषां समुदायोऽपि तत्रासमर्थः यथा प्रत्येकं सिकतास्तैलं नोत्पादयंति तेषां खार्य्यपि। अतः संघातार्थवत्त्वाच्चार्थवन्तो वर्णाः तत्कथनमर्थवद्ग्रहणे सत्यपि तेषां निवृत्तिरिति चेत् उच्यते। अनर्थका वर्णाः प्रतिवर्णमर्थानुपलब्धेः। नहि ब्राह्मण इत्यत्र ब्रा इत्युक्ते कश्चिदर्थो गम्यते अतो धात्वादीनामेकवर्णानामर्थवत्त्वादन्येऽपि वर्णा अर्थवन्त इत्यनुपलब्धि वादिनमेतत्। किंच कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारयकारयोरर्थवत्त्वादन्येऽपि वर्णानामानर्थक्यमभ्युपगतं स्यात्। अथ तेषामप्यर्थवत्त्वम्। भूयिष्ठः कूपे यूपार्थः स्यात् कूपार्थश्च यूपे। यत्र भूयसामर्थानामन्वयो व्यतिरेकस्तु कस्यचित्। तत्रार्थानामपि भूयसामनुवृत्तिर्व्यतिरेकस्तु कस्यचित्। यथा देवदत्त गामानय शुक्लाम्। देवदत्त गामानय कृष्णामिति। अतः संघाता एव तेनार्थेनार्थवंतः संघातार्थवत्त्वाच्चेति हेतुरनैकान्तिकः इति शंका तैलाभिव्यक्तिसंघातेन दीपो न प्रत्येकम्। स्यान्तर्यस्य ककादिभिः सहितैः प्रतिक्रिया किं चार्थवत्ता विपर्यासे अर्थप्रत्ययस्याविपर्यास आहर पात्रं पात्रमाहरेति। अपाये चाणयः। गामानय शुक्लां शुक्लां गामानयेति उपजने चोपजनः गामानय शुक्लामिति। वर्णेष्वे। हिनस्ति इति सिंहः। हंति हतः घ्नाति। भणिता। अतः संघाता एवार्थवन्तः। विभक्तिरहितमिति किम्। हरिषु। करोषि। सुप्तिङ्पोर्माभूत्। पदादित्वात्सस्य षो न स्यात्। विभक्त्यन्तरहितमिति किम्। देवा भवन्ति। अत्र द्वित्वाद्यभिधानेऽप्यन्वयादिवच्चैकवचनं स्यात्। धातुर्भिन्नमिति किम्। अहन्। नलोपश्च स्यात्। यत्तु प्राक् चोक्तम्। अथ विभक्तिर्विभाव्यते। तत्र व्याख्यानभिन्न व्याकृते प्रविभक्तकरणव्यवहारः, ये विधयो वक्ष्यन्ते तेषां विभक्तिसंज्ञा स्यात्। सा च विभाव्यते प्रस्तूयते तत्प्रकरणमारभ्यत इति विभक्तिशब्दानुवृत्त्या बोध्यम्। स्वमते शब्दार्थयोरभेदोपचारादित्यर्थः। अभेदोपचाराच्च द्वितीयो विभक्तिशब्दः सुबादिवचनः आदिः सङ्घावचनः। महासंज्ञाकरणं तु विभज्यते विभज्यते संख्याकर्मादयो अर्थानेयेति विभक्तिः इत्यन्वर्थसंज्ञाविज्ञानार्थं तेनागमादीनामत्र वक्ष्यमाणानामपि विभक्तिसंज्ञा नेति तत्र। [illegible] प्रवृत्त्ययोगात्। अन्ये तु यौगिकार्थेनैव सिद्धमित्याहुः। विभज्यते प्रकृतिर्निर्णीयते कर्तृकर्मादयोऽनया सा विभक्तिः। अतिप्रसक्तं योगमात्रं कृदादौ यद्यपि तथापि स्यादिषु तिबादिषु च योगरूढिः। [illegible] मासाश्चेति वार्तिकम्। चकारो नामग्रहणानुकर्षणार्थः अत तद्व्याख्यातारः। ननु [illegible] पूर्वेणैव सिद्धा न सिद्ध्यति। तत्र कृत्सु [illegible] चार्थतानां [illegible] अत एव हि सोमपा इति [illegible] स्वार्थतद्धितानामपि गुणीभूतार्थत्वात्। तथाहि। चोर एव चौरः [illegible]। [illegible] चोरशब्दस्य [illegible] नत्वं चोरशब्दस्य चोरशब्दस्यागणद्वारा गौणमुख्यन्यायेन चोरशब्दस्य। पूर्वेण संज्ञा स्यात् [illegible] कृत्तद्धितग्रहणं समासेऽपि सुलपूर्णविभक्तया अविभक्तित्वाभावात्। अत एव पंचारीति [illegible] इत्याहुः। अचेद वक्तव्यम्। [illegible] इत्यादीनामाभिनिवेशेन [illegible] यदि विभक्तिसत्त्वमपि एव प्रवृत्ता पदसंज्ञा [illegible] प्रवृत्ता नामसंज्ञा [illegible] सुलपम्। यदि च लुप्ते प्रत्यये प्रत्ययलक्षणेन पदसंज्ञा [illegible] स्यादि सदपि न गौणत्वात् [illegible] चोरशब्दयोर्यो भिन्नो येनैकोऽप्यत्र [illegible] पर्यायानां पारपरस्परद्वारा स्वार्थबोधकः [illegible] ततो बोधो जायते। अन्यथा [illegible] भूतपूर्वविभक्त्येत्यादि तदपि न [illegible] विधायकं [illegible]

विधानाज्ज्ञापकात्समासे नामसञ्ज्ञा भविष्यति, एवमपि नियमार्थं समासग्रहणम् । अर्थवत्समुदायानां मध्ये समासस्यैव यथा स्यात् । तेन वाक्यस्यार्थवतो न भवतीति । तदपि न । उक्तरीत्या समासस्याविभक्त्यन्तत्वेन ज्ञापकोपन्यासवैयर्थ्यात् । अन्यथा समासवद्वाक्यस्यापि विभक्त्यन्तत्वेन समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावादित्यनेन विध्यर्थतायास्त्वयैवोक्तत्वात् पूर्वापरविरोधः । नियमफलाभावेन समासग्रहणवैयर्थ्यात् । नियमस्तत्र क्रियते यत्र सर्वत्र प्राप्तिर्भवति । अत्र तु तव मते वाक्ये प्राप्तिर्नास्ति वाक्यस्य चेत्प्राप्तिर्भाति तर्हि वार्त्तिके समासपदं व्यर्थम् । तस्मात्पूर्वेणैव सिद्धे वार्त्तिकमिदं न कार्यम् ॥

## तस्मात् ॥ १४१ ॥

सुबो०—तस्मात् । इत्यधिकारोऽयम् । धातोरित्यतः प्राक् स्यादयोऽणादयश्च प्रत्यया नाम्नः पराः स्युः । तस्मादिति पंचमी । इयं न विश्लेषावधौ विश्लेषस्यासंभवात् । किन्तु ऋते आदिषु दिक्शब्दपाठाद्दिग्योगलक्षणा पंचमी । तत्र परः पूर्वो वा इत्यनियमनाऽध्याहारे प्रसक्ते बहुवां उक्तेऽर्थे स च प्रयोगे वेत्यनेन बहोः पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः परः एवेति परशब्दोऽध्याहार्यः ॥

तत्त्व०—तस्मादिति । अधिकारोऽयं प्राग्धातोः । तथा च स्यादयोऽणादयश्च नाम्न एव परे बोध्या इति । ननु धातोरित्यग्रिमाधिकारात्तत प्राक्तनानां प्रत्ययानां नाम्न परत्वमवधेयमेवेति किं तस्मादित्यनेनेति चेन्न । किं परिमाणमिति वक्तव्ये किं दम्नमित्यपि स्यात् । इति निराकरणाय तस्मादित्यस्यावश्यकत्वात् । अथ न केवल. प्रत्यय प्रयोक्तव्य इति नियमेन तद्वारणसंभवादिति चेत् । एतस्यापि तन्मूलकत्वादित्यवधेहि । तस्मादिति पंचमी न विश्लेषावधौ । विश्लेषस्यात्रासंभवात् । किंतु ऋतादिमध्ये दिक्शब्दस्य पाठात्तद्योगे तत्र न पूर्वः परो वेति नियमाभावेऽपि परशब्द एवाध्याहार्यः समानाद्धिस्लोप इति निर्देशात् तच्छब्दस्य पूर्वपरामर्शित्वादाम्नः परामर्शः ॥

## सि औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप् ॥ १४२ ॥

नाम्नः पराः स्वादयः सप्त विभक्तयो भवन्ति ॥

सुबो०—सि औ जस् १ अम् औ शस् २ टा भ्यां भिस् ३ ङे भ्यां भ्यस् ४ ङसि भ्यां भ्यस् ५ ङस् ओस् आम् ६ ङि ओस् सुप् ७ । सिप्रत्ययस्येकारोऽस्वसोः सावित्यादौ विशेषणार्थः । जश्शसोर्जकारशकारौ जसिशसीत्यनयोर्विषयविभागार्थः । टाप्रत्ययस्य टकारः टेन टाना टौसोः टाङ्योरित्यादौ भेदकः । ङेङसिङस्ङीनां ङकारस्तु ङितीत्यादौ विशेषणार्थः । ङसेरिकारो ङसिरदिवि विशेषणार्थः । सुप्प्रत्ययस्य पकारः प्रत्याहारार्थस्तेन सिप्प्रत्याहारो यथा स्यात् । स्वादिभेदतो विभक्तिर्द्विधा । तत्र सिऔजसित्यादीनां सप्तानां त्रिकाणां प्रथमाद्याः सप्तम्यन्ताः प्राच्यां संज्ञास्तामिरिहापि व्यवहारस्तेषु त्रिकेषु त्रीणि त्रीणि वचनानि । एकश एकवचनद्विवचनबहुवचनसंज्ञकानि संति ॥

तत्त्व०—सि औ जस इत्यादि । सेरिकारोऽस्वसोः सावित्यादौ सीत्युक्ते सकारादिलाभसंभवात् । न चेष्टापत्तिः । [illegible] दीर्घश्रवणात् । नच श्रवणार्थः गुण इत्यादिलिंगात् । एतेन सेरिकार उच्चारणार्थः [illegible] । न इत्यनेनान्यवारणसंभवात् ॥

**एकत्वद्वित्वबहुत्वेषु ॥ १४३ ॥ एकवचनद्विवचनबहुवचनानि ॥ स्रोर्विसर्गः । देवः ॥**

सुबो०—एकत्वद्वित्वबहुत्वेषु । एकत्वद्वित्वबहुत्वशब्दा इह संख्यापराः संति । तेन बहुः पर्वत इति वैपुल्यवाचिनो ग्रहणं न । आश्रयद्रव्यगतेषु एकत्वद्वित्वबहुत्वेषु सत्सु एकवचनद्विवचनबहुवचनसंज्ञकाः प्रत्यया भवंति । उच्यतेऽनेनेति वचनम् । एकस्य वचनमेकवचनम् । द्वयोर्वचनमिति द्विवचनम् । बहूनां वचनमिति बहुवचनम् ॥

तत्त्व०—एकवचनादिसंज्ञानामन्वर्थतामाश्रित्याह । एकत्वेत्यादि । तथा च एक वक्ति एकवचनम् । द्वौ वक्ति द्विवचनम् । बहून् वक्ति बहुवचनम् । यद्वा उच्यत इति वचनम् । एकवचनामिति । स्रोर्विसर्ग इति । पदान्ते वर्त्तमानयोः स्रोर्विसर्गः स्याद्धात्वधातुसाधारणमिदम् । तेन अबिभः देव मातरित्यादि सिद्धम् । अव्ययादित्यस्य परत्वात्सिलुकि नात्र रसपरत्वम् । पदान्ते किम् । धुर्यात् । पयसी । नाम्नश्च रसपरयो स्रोर्विसर्गः स्यात् । तेन वेधोभ्यां दोःष्वित्यादि सिद्धम् । सौ तु प्रथमं सिलोपात्परत्वाद्विसर्गे कृते तस्य हसपरत्वाभावेन सिलोपाभावे नित्यं विसर्गद्वयश्रवणप्रसंग । अथ वेधोभ्यां इत्यत्र द्वयोः सकारयोरेको विसर्गो भविष्यति सत्वजातेनाश्रयणादिति चेत् शृणु । प्रियचत्वाः गीरित्यादौ रसपरयोरेकजात्यभावादुक्तदोषतादवस्थ्यमिति केचित् तन्न । प्रायशो दृश्यतामिति वचनात् क्वचित्पूर्वेणापि परबाध इष्टसिध्यर्थम् । रसे किम् । चीवरान् वस्ते । क्वचित्क्विब्विशिष्टस्य नामसंज्ञा भवति लुप्तेऽपि क्विपि एकदेशविकृतन्यायेन नामत्वमस्ति । तेन सुवोभ्यामित्यादौ विसर्गः सिध्यति । स् च र् च स्रौ तयोः । अत्र रेफो निर्दिष्टो न तु रेफभूत ऋकारः । रेफस्थानिकाविसर्गस्य रादेशविधायकस्य र इति सूत्रस्य वैयर्थ्यापत्तेः कर्तृकार्ययोरित्यादि निर्देशाच्च । न ह्यत्र ऋकारस्य विसर्गो निर्दिष्टः । प्रातः पाशामित्यादावुभयथा विसर्गः । नामसंज्ञाप्रवृत्तिकाले सतो रेफस्य सुपि न विसर्गः चतुर्ष्विति ज्ञापकात् । तेन गीर्ष्वित्यादि सिद्ध्यति । नार्यस्य इत्यत्र तु बहिरंगाया वृद्धेरसिद्धत्वान्न विसर्गः । वर्ष्म इत्यादौ न विसर्गः कर्तृसाधनयोरिति निर्देशादिति दिक् । जसो जकारस्य फलमाह । जसो जकार इति । तथा च शसः शकारोऽपि शमीति विशेषणार्थः । वस्तुतस्तु एकतरो न पठितुं योग्यः एकेनैव द्वितीयवारणात् ॥

**सरूपाणामेकशेष एकविभक्तौ ॥ १४४ ॥ देवौ देवाः ॥**

सुबो०—सरूपाणामेकशेष एकविभक्तौ । यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते । रूप्यते बोध्यते इति रूपमर्थः । समानं रूपं येषां ते सरूपाः । सहादित्वात्समानस्य सादेशः । तथा समानं रूपं सरूपं येषां ते सरूपाः सरूपाश्च सरूपाश्चेति सरूपास्तेषामित्येकशेषेण व्याख्यानम् । एकविभक्ताविति विभक्तिसारूप्ये उपलक्षणं न त्वेकशेषे निमित्तम् । एवं च नैमित्तिकत्वेनांतरंगोऽयमेकशेषः स्याद्युत्पत्तेः प्रागेव प्रवर्तते । यद्येतन्नारभ्यते तर्हि प्रत्येकं विभक्तिः स्यात् द्वंद्वश्च प्रवर्तेत । आरब्धे त्वेकशेषो भवति न तु द्वंद्वः अनेकपदाभावात् । ननु स्याद्युत्पत्तेः प्रागेकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थं बोधयतीति द्विवचनाद्युत्पत्तौ देवौ देवा इत्यादि न सिध्येत् । उच्यते । शिष्यमाणो लुप्यमानार्थं कथयति । एकशेषस्य वृत्तिषु पाठात् । परार्थाभिधानं वृत्तिरिति । अत एव लुप्तेऽपि प्रत्यये लिट् धुक्षु इत्यादौ कर्ता प्रतीयते एकस्यां विभक्तौ परतः। सरूपाण्येवेति किम् । मातृश-

न्द्वयोर्जननीपरिच्छेतृवाचिनोर्नैकशेषो भवति । मातृभ्यां मातृभिरित्यादौ सारूप्येऽपि औजसमादिषु वैरूप्यात् । नन्वेवं पयः पयो नयति- देव देव इत्यादावतिप्रसंगः स्यात् । अधातोरिगिति चानुवर्तते । सहविवक्षायामेकशेषः प्रवर्तते । इतरेतरयोगे द्वन्द्वस्य विषये इत्यर्थो नान्यत्र ॥

**अमृशसोरस्य ॥ १४५ ॥** समानादुत्तरयोरम्शसोरस्य लोपो भवति ॥ देवं देवौ । शसश्शकारश्शसीति विशेषणार्थः ॥

सुबो०—अमृशसोरस्य । समानाद्धेर्लोपोऽधातोरित्यतः समानादिति लोप इति अधातोरिति चानुवर्तते । अधातोः समानात्परयोरमृशसोरकारस्य लोपः स्यात् । अधातोरिगिति किम् । श्रियं भुवमित्यादावियुवौ । सेनान्यं खलप्वमित्यादौ य्वौ । सोमपामित्यादौ सवर्णदीर्घः । समानादिति किम् । रायम् । ग्लावम् ॥

तत्त्व०—अमृशसोरस्येति । अत्र समानाद्धेर्लोपो धातोरिति सूत्रात्समानलोपानुवर्तते इत्याशयेनाह । समानादिति । समानादिति किम् । रायम् । अत्र स्याद्यधिकारस्यैवामो ग्रहणादधातोरिति नानुवर्त्यम् । अतो चिनामित्यादौ नातिव्याप्ति । अस्येति किम् । षष्ठीनिर्दिष्टत्वेनान्त्यस्य मा भूत् । न च सो न' पुंस इत्यत्र सकारस्य नत्वविधेर्लिंगादत्रानन्त्यस्य विधिरन्यथा शस सकारस्यान्तत्वेन लोपे तदभावान्नत्वासंभवः स्यादिति वाच्यम् । तत्र सो न' पुंस इत्युक्त्या ज्ञापनासंभवात् । नहि तत्र शसो न इत्युक्तं येन ज्ञापकं स्यात् । नच सो न इत्यत्रापि शस सकारस्यैव ग्रहणमिति वाच्यम् । नहि शस्येव सकारो नान्यत्रेति नियमोऽस्ति येन ज्ञापकमिदं स्यात् । यत्तु लघुभाष्यम् । अत्र आदेर्लोपश्च इत्यत आदित्यस्यानुवृत्तेरस्येति व्यर्थमिति कश्चिन इति । अत्रेदमवधेयम् । आदित्यस्य पञ्चम्यन्तत्वेन षष्ठ्यर्थालाभात् । अथार्थवशाद्विभक्तिविपरिणाम इति विभक्तिविपरिणामेन षष्ठ्यर्थलाभ । विभक्तिविपरिणामे स्वर्थलाभस्यातिक्लिष्टत्वेऽन्त्यस्यैवस्यैवाऽऽपत्तरान् ॥

**सो नः पुंसः ॥ १४६ ॥** पुंल्लिंगात्समानादुत्तरस्य शसंस्सकारस्य नकारादेशो भवति न त्वम्शसीत्यात्वे ॥

सुबो०—सो नः पुंसः । पुंल्लिंगात्समानान्नाम्नः परस्य शसः सस्य नः स्यात् । शस इत्यनुवृत्तम् । लिंगं नानार्थे इति मते पुंस इति पंचमी । पुंल्लिंगात्समानांतान्नाम इति । यदा तु लिंगं प्रत्ययार्थस्तदा पुंस इति षष्ठी । समानांतान्नाम्नः परस्य पुंसो वाचकस्य शसः सस्य नः स्यादिति । उक्तं च । "एकं द्विकं त्रिकं चाथ चतुष्कं पंचकं तथा । नामार्थे इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥" इति स्वार्थद्रव्यलिंगसंख्याकारकात्मकः पंचको नामार्थः । उक्तपंचसु पूर्वस्य पूर्वस्य नामार्थत्वे परः परो विभक्त्यर्थो ज्ञेयः । शब्दप्रवृत्तिनिमित्तः स्वार्थोऽस्ति । स्वार्थश्चानेकविधः स्वरूपजातिगुणक्रियाद्रव्यसंबंधभेदात् । स्वरूपं यथा । डित्थः । यदा शब्दरूपेण विशिष्टा जातिः कथ्यते गौरिति तदा गोशब्दस्य स्वरूपं स्वार्थोऽस्ति विशेषणत्वात् । जातिस्तु द्रव्यं भवति विशेष्यत्वात् । यदा जात्या विशिष्टो गुणः कथ्यते पटस्य शुक्लो गुण इति तदा जातिः स्वार्थो भवति विशेषणत्वात् । शुक्लो गुणो द्रव्यं भवति

विशेष्यत्वात् यदा गुणेन विशिष्टं द्रव्यं कथ्यते शुक्लः पट इति तदा विशेषणभूतो गुणः स्वार्थो भवति । विशेष्यभूतं पटादिकं द्रव्यं भवति । यदा तु द्रव्यमपि द्रव्यांतरस्य विशेषणं भवति यष्टीः प्रवेशयेत्यादौ तदा यष्ट्यादिकं द्रव्यं विशेषणत्वमापन्नं स्वार्थो भवति । पुरुषादिविशेष्यं द्रव्यं भवति । दंडीत्यादौ दंडपुरुषसंबंधः स्वार्थो भवति । दंडीति द्रव्यं विशेषणं भवति । पाचक इत्यादौ क्रिया स्वार्थो भवति । पुरुषो द्रव्यं भवति । किं च " शब्दस्य यत्र विश्रांतिर्वाच्यं द्रव्यं तदिष्यते । " पर्यवसानभूमिरित्यर्थः । तच्चानेकप्रकारम् । जातिगुणक्रियाद्रव्यस्वरूपमिति । गौः शुक्लः पाचकः डित्थः । सिसतासीस्यपामिट् । लिंगं स्त्रीत्वादि । संख्या एकत्वादिः । कर्मादयः कारकविशेषास्तत्र स्वार्थो विशेषणम् । द्रव्यं तु विशेष्यमिति निर्गलितार्थः । आमूशसीति सूत्रेणौकारस्य स्थाने आत्वे कृते सति सो नः पुंस इत्येतत्सूत्रं न प्रवर्तते इत्यर्थः । कुतो न उच्यते । पदविभागात् । यथा स् १ ओ २ न् ३ अः ४ पुंसः ५ पंच पदानि छित्वा पुँल्लिंगात्समानाच्छसः सस्य न् स्यात् ओकारसंबंधिनोऽवर्णात्तु विसर्गः स्यादिति व्याख्येयम् । अतो गाः पश्येत्यादौ नत्वं न । पुँल्लिंगादिति किम् । बुद्धिः । समानादिति किम् । रायः । ग्लावः । लोपविषये एवास्य प्रवृत्तिः । समानादमूशसोरल्लोपस्यानिषेधात् । अत एव बहुश इत्यत्र नत्वं न स्यादधिकाराद्वा । शसि दीर्घश्रुत्योपस्थितस्य स्वरस्येति पदस्य नाम्नो विशेषणत्वात्तदंतविधिः । पूर्वस्य स्वरान्तस्य नाम्नो दीर्घः स्यात् ॥

तत्त्व०—सो नः पुंस इति । पंचमीत्याशयेनाह । पुँल्लिगादिति । तथा च समानान्तान्नाम्न इति बोद्धव्यम् । यद्वा पुँल्लिगात्समानादित्येकं पदं पुँल्लिगमततीति पुँल्लिगात् स चासौ समानश्चेति स तथा । तस्मादित्यर्थः । अत्रामृशसोरित्यतः शस इत्यनुवृत्तम् । यद्यपि समानान्तर्गतं तथापि नापोऽनुवृत्तिस्तत्र सस्यासंभवादित्याह । शस इति । ननु गा इत्यत्र नत्वं कुतो नाम शसीत्यात्वेन समानात्परत्वादिति चेत् । अत्र केचित्सो न इत्यावर्त्य शसो नकारस्य सकार इति व्याख्येयम् । इष्टसिद्ध्यर्थमिदम् । तेन गा इत्यादि सिद्धम् । यद्वा आवृत्त्या लब्ध यरसो न इति सूत्र तत्र शसो नस्येत्यनुवर्तते । स इत्यविभक्तिको निर्देशः । ओरिति षष्ठी ततश्च ओकारसबंधी योऽवर्णः तस्मात्परो य. शसो नकारः तस्य सकार आदेशो भवतीत्यर्थो लभ्यतेऽतो नातिप्रसंगः । यद्वा स् ओ न् अः पुंस इति पंच- पदानि छित्वा पुँल्लिगात्समानात् शसः सस्य नकारः ओकारसबन्धिनो वर्णात्तु विसर्ग इति व्याख्येयम् । अत्रेदं वाक्यम् । गा इत्यत्र नत्ववारणे सन्निपातपरिभाषयैव सिद्धे तदर्थमेतावता वृत्त्याद्यनुसरणक्लेशेन किं नच तानित्यादावपि सन्निपातपरिभाषया निषेध इति वाच्यम् । कानित्यादिलिंगेन त्यदादिषु शसो नत्वविधौ परिभाषानाश्रयणात् । यद्वा त्यदादेष्टेरस्यादावित्यत्रादिपदगृहीतस्य शसो निमित्तत्वे लाक्षणिकत्वेनामृशसीत्यत्र शसः साक्षाच्छ्रवणेन निमित्तत्वे प्रतिपदोक्तत्वात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् । किंच परिभाषाश्रयणस्येष्टसिद्ध्यर्थत्वात् । तानित्यादावनाश्रयणात् यच्च पुंस्त्वादिविचारे " स्तनकेशवती स्त्री स्याल्लोमशः पुरुषो भवेत् । उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥ " इति लक्षणं खट्वा वृक्षादावव्याप्तिवारणाय चेतनेषु स्तनादिमद्व्यवत्यादिस्त्रीत्वादिव्यंजकमचेतनेषु तु सर्वत्रोपदेश एवाभिव्यंजकः । उपदेशस्तु लिंगानुशासनादिष्वित्युक्त तत्रापि चेतनाचेतनविषयविभागो व्यर्थः । अतिप्रसक्तस्य दारशब्दस्य स्त्रीवाचकस्य स्तनकेशवत्त्वस्य व्यंजकस्य सत्त्वेऽपि स्त्रीत्वादर्शनात्सर्वचेतनाचेतने उपदेश एव स्त्रीत्वादिव्यंजक इत्यलमतिविस्तरेण ॥

**शसि ॥ १४७ ॥** शसि परे पूर्वस्य दीर्घो भवति ॥ यदादेशस्तद्वद्भवति न तु वर्णमात्रविधौ । देवान् । टकारष्टेनेति विशेषणार्थः ॥

सुबो०—शसि । शसि परे सो नः पुंस इति नत्वे दीर्घत्वम् । पूर्वं नत्वं ततो दीर्घत्वं पश्चादल्लोपो वैपरीत्यं वा ज्ञेयम् । शसि किम् । हरिभिः । स्वरस्य किम् । लहः। ननु इह शस्परत्वाभावात्कथं दीर्घः उच्यते । यस्य स्थाने आदेशः यदादेशो स तेन स्थानिना तुल्यं तद्वत् । स्थानिवद्भवतीत्यर्थः । स्थानिवर्णाश्रयविधौ कर्तव्ये न भवति । अस्य व्याख्यानं परिभाषाप्रकरणे उक्तम् ॥

तत्त्व०—शसीति । दीर्घश्रुत्योपस्थितेन स्वरेण नाम्नो विशेषणत्वात्तदन्तविधिः । पूर्वं दीर्घः पश्चादल्लोपः वैपरीत्य वा । उभयथा वैलक्षण्यं नास्ति । एवं सो नः पुंस इति नत्वेऽपि ज्ञेयम् ॥

**टेन ॥ १४८ ॥** अकारात्परष्टा इनो भवति ॥ देवेन ॥

सुबो०—टेन । पदद्वयमपि प्रथमांतं सांकेतितम् । अतः परष्टा इनः स्यात् । अतः किम् । कर्त्रा । भवता । तपरः किम् । हाहा । टा किम् । देवैः ॥

तत्त्व०—टेनेति । टा इन इति छेदः । पदद्वयमपि लुप्तप्रथमान्तम् । अत्रात इत्यनुवर्त्तते । टा इति किम् । देवैः । अत. किम् । पित्रा । तपरः किम् । हाहा । ननु टा नेत्येव सूच्यतां किं एकारेण । एकग्रहणं चानुवर्त्यं एवेनेति रूपसिद्धेरिति चेन्न । लाघवे विशेषाभावादित्युक्त केश्चित् तत्र ए इत्यनुवृत्त्या गौरवस्य जागरूकत्वेन विशेषाभावादित्युक्तेरपार्थत्वात् । नच एनेत्येव सूच्यताम् । आ इन इति छेदः स्याद्यधिकाराच्च नातिव्याप्तिः । आमि तु नुटा बाधात् नातिप्रसंग इति वाच्य स्पष्टार्थत्वाट्टकारस्य ॥

**अद्भि ॥ १४९ ॥** अकारस्यात्वं भवति भकारादौ स्यादौ ॥ देवाभ्याम् ॥

सुबो०—अद्भि । अकार आकारो भवति भादौ स्यादौ च । अदिति किम् । हरिभ्याम् । तपरत्वमुत्तरार्थम् । भीति किम् । देवस्य । स्यादौ किम् । देवभवनम् । बहुत्वे तु परत्वादेत्वं भवति । देवेभ्य इति ॥

तत्त्व०—अद्भीति । अत्रादिति प्रथमान्तम् । भीति सप्तम्यन्तम् । तच्च भकारादाविति व्याख्येयम् । अदिति न स्वरूपग्राहकम् आद्यन्ताभ्यामिति लिंगात् । तेन महद्भ्यामित्यत्रात्त्व न । अदिति किम् । हरिभ्याम् । भीति किम् । देवस्य । ननु रेस्भीत्यतो भीति सिद्धे किं भग्रहणेनेति चेन्न । एकयोगनिर्दिष्टत्वेन सकारस्यानुवृत्तिः स्यादिति तन्निरासार्थं भीत्यस्यावश्यकत्वात् । भ्यामो मस्य च नेत्व इदुद्भ्यामिति लिंगात् । स्यादौ किम् । देवभवनम् ॥

**भ्यः ॥ १५० ॥** अकारात्परस्य भिसो भकारस्य अकारादेशो भवति ॥ देवैः । ङकारो ङित्कार्यार्थः ॥

सुबो०—भ्यः । एस्भि बहुत्वे इत्यस्यापवादोऽयम् । भ् भि अ इति पदच्छेदः । भि इत्येकदेशद्वारेण भिस एवानुकरणम् । अत इत्यनुवृत्तम् । अतो भिसो भकारस्याकारः स्यात् । स्यादाधिकारात् स्यादिसंबंधी भिस् गृह्यते तेन ब्राह्मणभिस्सेत्यादौ नातिप्रसंगः ॥

तत्त्व०–भ्य इति । भ भि अः इति छेदः । अत इति पूर्वसूत्रादनुवर्त्तते । भीति भिस एकदेशानुकरणम् । नामैकदेशग्रहणे नामग्रहणम् । यथा भीमो भीमसेन इति । यत्तु भ्य इति चतुर्थीपंचम्योर्बहुवचनस्य ग्रहणम् । अद्भि इत्यस्मादकारात्परत्वात् हसेऽर्हस इति द्वित्वं झबे जबा इति भस्य बः । तथा चातः परस्य भ्यस एवाकारादेश इत्यर्थो लभ्यते । यद्वा भ्र भ्य इति छेदः अकारात्परस्य भ्यसो भकारस्याकार इत्यर्थोऽस्तु । अकारो वास्वितोऽनुवर्त्तते । एवं भिसो ग्रहणे व्याख्यायमाने भिस् इति सूत्रे व्यर्थं स्यात् । ननु तर्हि भि अ इति छित्वा भकारे परे पूर्वस्य अत एव भवति तस्यादेशान्तरं न भवतीति व्याख्यानमस्तु। यद्वा भि इत्येकदेशद्वारेण भिस एवानुकरणं ततश्च भिसि परे अतः एवेत्यर्थोऽस्तु मैवम् । आद्ये पक्षे भीति व्यर्थं स्यात् पूर्वसूत्रादनुवृत्तेः सत्वात् । द्वितीये तु भागैरिति निर्देशो नोपपद्यते इत्याद्युक्तम् । तत्रेदमवधेयम् । भकारस्य द्वितीयसूत्रकारस्य निमित्तत्वे बहुस्थलेऽतिप्रसंगः स्यात् । किंच भागैरिति लिंगस्यैव विद्यमानत्वेनैव भिस् भिस् इति निर्देशपर्यन्तानुधावनस्य क्लिष्टत्वात् अवर्णविधानसामर्थ्यात्सवर्णदीर्घं बाधित्वाप्येत्वमेव । अन्यथा समानाद्वेलोप इत्यतो लोपमनुवर्त्य लोपमेव व्यधास्यत् । ननु भिम इति सूत्रमस्तु अकारो वास्वित्यतोऽनुवर्त्तते तथा च भिसो भकारस्यात्वेऽपि रूपसिद्धेः । यद्वा भ इत्येवास्तु भि इति पूर्वसूत्रादनुवर्त्तनीय तच्च रूपपरम् । इत्थं च भि समुदाये यो भः स आकारो भवतीत्यर्थः । अत्रार्थे भागैरिति लिंगदर्शनम् उच्यते । इमौ यकाराकारौ योगविभागेन स्यादिप्रकरणं भित्वाऽन्यस्माद्विधीयते । अतः प्रौढः स्वैरी वापयतीत्यादि सिद्धम् । पादेर्युक् गवादेरिति न वक्तव्यं भवति ॥

**ङे अक् ॥ १८१ ॥** अकारात्परस्य ङे इत्येतस्यागागमो भवति ॥ देवाय देवाभ्याम् ॥

सुबो०–ङे अक् । ङे इत्यविभक्तिको निर्देशः । अतो ङे इत्यस्याक् स्यात् कित्वादंते । अत इत्यनुवृत्तेर्नेह । वातप्रम्ये । तपरत्वान्नेह । हाहै । अथ अकि कृते एदोतोत इत्यकारस्य लोपश् तु न । विधानसामर्थ्यादपदांतत्वाद्वा । न हि अकि कृते एतः पदांतत्वं संभवतीति ॥

तत्त्व०–ङे अगिति । अत्र ङे इत्यविभक्तिको निर्देशोऽसदेहार्थः । ङेरित्युक्तौ चतुर्थीसप्तम्येकवचनयोः संदेहः स्यात् । वस्तुतस्तु ङेरित्युक्तिरपि न्याय्या । आम्ङेरित्यादौ चतुर्थ्येकवचनसदेहनिराकरणाय व्याख्यानतो विशेषप्रतिपत्तिर्नहि सदेहादलक्षणमित्यस्याश्रयणीयत्वात् ङकारो व्यर्थः स्याद्यधिकारेणैवातिप्रसंगवारणादित्याहुः । वस्तुतस्तु स्पष्टार्थमुपात्तत्वान्न व्यर्थता । अत इत्यनुवृत्तेर्वातप्रम्ये इत्यादौ न । टे इति किम् । देवी । देवे । एदोतोत इत्यनेन लोपस्तु एतो अपदान्तत्वात् । अग्विधानसामर्थ्यादित्युक्तिस्तु निर्मूला भाति । लोपे विधानसामर्थ्यावलंबनस्योचितत्वादिह तु पदान्तत्वाभावे प्राप्तेरेवासभवात् ॥

**ए स्भि बहुत्वे ॥१८२॥** अकारस्यैत्वं भवति सकारभकारादौ विभक्तौ बहुत्वे सति ॥ देवेभ्यः ॥

सुबो०–एस्भि बहुत्वे । अकार एकारो भवति बहुत्वे वर्तमानेषु सकारभकारादिषु स्यादिषु परेषु । अकार इति किम् । हाहाभ्यः । बहुत्वे किम् । देवस्य । स्यादिष्विति किम् । पचध्वम् ॥

तत्त्व०–ए स्भि बहुत्वे इति । स्भीति सप्तम्यन्तम् । स् च भ् च स्भ् तस्मिन् स्भि । अतः किम् । हरिभ्यः । तपर. किम् । हाहाभ्यः । स्भीति, किम् । देवानाम् । ननु स्भीति किं न च देवानामित्यत्रातिप्रसगः तत्र परत्वान्नामीति दीर्घेण बाधात् । देवानित्यादौ तु शसीत्यनेन । अथ देवा इत्यत्रातिप्रसगः स्यादिति

चेन्न । तद्वारणाय रे स्भीति सूत्रात् भीत्यस्यानुवृत्तेस्सत्वात् । अथानन्तरत्वादद्भीत्यतो भीत्यस्यैवानुवृत्तिः स्यादिति तन्न । इच्छार्थेष्विति ज्ञापकात् । अथवा देवा इत्यत्रापि सवर्णदीर्घपूर्वोऽपि जवे झभा इत्यादिनिर्देशेन क्वचित्पूर्वेणापि परबाधस्येष्टसिद्ध्यर्थमभ्युपगमात् तस्माद्दर्थं स्भीति अत्राहुः। देवपूज्या इत्यादौ पूर्वपदस्थस्यैव वारणाय स्भीत्यावश्यकमिति तन्नेति वृद्धाः । विहितविशेषणाश्रयणात् । नाम्नो विहिते बहुत्वे वर्त्तमाने पर एत्वमित्यभ्युपगमात् । अन्ये तु बहुत्वविशेषणार्थं पुनः स्भीत्युक्तं तेन बहुत्वे वाच्ये सति विहितो यः सकारो भकारश्च तस्मिन् परतो नाम्नोऽत एत्वम् । तेन सोम सुनोतीति सोमसुत् तमाचक्षते सोमसयति ते सोमस इत्यत्र नेत्याहु.। तन्नेति नव्याः। स्याद्यनुवृत्त्यैतद्वारणसभवात् अत्रोच्यते । रे स्भीत्यत्र तकारोऽपि द्रष्टव्यानादावपि स्यादावात्त्वमित्यर्थः । तथा च प्रराणामिति सिद्ध्यति । अत्रार्थे इद स्भिग्रहणमेव लिगम् । यदि तस्याप्यत्रानुवृत्तिः स्यात्तदा देवानामित्यत्राप्येत्वं स्यात् । नामीति तु हरीणामित्याद्यर्थं स्यात् ततस्तन्निवृत्त्यर्थं पुनः स्भिग्रहणस्यावश्यकत्वात् ॥

ङसिरत् ॥ १५३ ॥ अकारात्परो ङसिरद्भवति ॥ देवात् देवाभ्यां देवेभ्यः ॥

सुबो०—ङसिरत् । आदंतान्नाम्नः परो ङसिरत् स्यात् । अतः किम् । वातप्रम्यः। ग्लावः । तपरः किम् । हाहाः । ननु ङसेरदादेशे कृते यस्य लोप इत्यतो लोपः स्यात् उच्यते । स्यादौ यस्य लोप इत्यस्याभावो ज्ञापितोऽकारविधानेन । अन्यथा ङसिस्त इत्यवक्ष्यत् । यद्वा तद्धितप्रकरणादीपीति सूत्रारंभाच्च नात्रयस्य लोपः। देवादित्यत्र वावसाने इति जवत्वचपत्वे हसेऽर्हस इति दतयोर्द्वित्वे रूपचतुष्टयं बोध्यम् ॥

तत्त्व०—ङसिरत् । अत्राप्यत इत्यनुवर्त्तते । अतो वातप्रम्य इत्यादौ न तपरत्वात् । हाहा इत्यत्र न । अत्रापि ङकारो व्यर्थ इत्युक्तिः पूर्वोक्तयुक्त्यैव निरसनीया । न चाति कृते यस्य लोप इत्यनेनाकारस्य लोपोऽस्त्विति वाच्यम् । अकारोच्चारणसामर्थ्यात्स्यादौ न यस्य लोप इति प्रवर्त्तते । अत्राहुः । कार्ये सिस्योः शेषा इत्यादिनिर्देशात् । तद्धितप्रकरणाद्वा यस्य लोपो न एव स्थिते लाघवे विशेषाभावात् । ङसिस्त इति सूत्रित तत्रोच्यते । सेस्त इत्येव सुवचम् । नच देव इत्यत्राव्याप्तिस्त्वन्त्यादेरीति लिगेनाप्त्याप्तिवारणात् । नचामर्थं तदिति वाच्यम् । छ इत्यादिलिगात् । अथ देवस्येत्यत्रातिप्रसग. तन्न ङसस्येति विशेषसूत्रेण बाधात् इकारसहितानुकरणसभवात् ॥

ङस्स्य ॥ १५४ ॥ अकारात्परो ङस्स्यो भवति ॥ देवस्य ॥

सुबो०—ङस्स्य । अतो ङस्स्यः स्यात् । अत इति किम् । वातप्रम्यः । तपरः किम् । हाहाः ॥

तत्त्व०—ङस्स्य । पदद्वयमपि प्रथमान्तम् । अत. किम् । वातप्रम्य. । तपर. किम् । हाहाः । अत्राहुः । पूर्वस्य स्वरादित्यादिलिगात्तदतलाभः आदिति लिंगाच्च । तस्यापीतिज्ञापकद्वयबलमाश्रित्य देवस्य अस्येत्यादिसिद्धिरीति । वस्तुतस्तु तदन्तलाभाय तल्लाभाय च ज्ञापकद्वयानुसरणक्लेशोऽपार्थ एव । देवस्येत्यादौ ङसोतः परत्वसभवात् नच विहितविशेषणादातो विहितत्वाभावेन देवस्येत्यादिसिद्धिर्न स्यादिति शकनीयम् । तस्येत्यादिसिद्ध्यर्थविहितविशेषणानाश्रयणात् ॥

ओसि ॥ १५५ ॥ अकारस्यैत्वं भवति ओसि परे ॥ देवयोः ॥

सुबो०—ओसि । अत एकारः स्यादोसि परे । अदिति किम् । हर्योः । तपरः किम् । हाहे । ओसि किम् । देवस्य ॥

तत्त्व०—ओसि । अत्रापि स्याद्यधिकारादेव ओस इत्यादौ नातिप्रसंगः । आ उसः ओसः । अ इति किम् । भान्वो. । तपरः किम । हाहौः । ओसीति किम् । देवस्य ॥

**नुडामः ॥१५६॥ समानादुत्तरस्यामो नुडागमो भवति पुंसि तु ह्रस्वादेव ॥**

सुबो०—नुडामः । आमो नुडिति कर्तव्ये नुटः पूर्वोच्चारणं प्राथम्यार्थम् । यत्र नुडन्यच्च प्राप्नोति तत्र प्रथमं नुडेव भवति । तेन स्त्रीणां वारीणामित्यादावुभयप्रसंगे परावीयन्नुमौ बाधित्वा नुडेव । अत एव प्राक् प्रायशो दृश्यतामित्युक्तेर्बीजम् । तत्र नुटा क्वचित्पूर्वेणापि परस्य बाधः क्रियते इति तदर्थः । किं च मंडूकप्लुत्या ङ्णनो ह्रस्वादिति पदं पुंस इति चात्रानुवर्त्य वाक्यभेदेन संबध्यते । समानादित्यनुवृत्तं समानांतान्नाम्नः आमो नुट् स्यात् । पुँल्लिङ्गे तु ह्रस्वांतान्नाम्न एव परस्यामो नुट् । न दीर्घांतान्नाम्न इत्यर्थः । समानादिति किम् । रायाम् । भवताम् । ह्रस्वांतात् किम् । हाहाम् । पुंस इति किम् । वातप्रम्याम् । नाम्न इति किम् । कारयांचकार पचतितरामित्यत्र तूकारानुबंध आम् ज्ञेयः तेन न नुट् । निरनुबंधकस्येति वचनात् । ङेरादेशस्यामस्तु न नुट् परत्वेनाङ्यङ्भ्यां बाधनात् स्त्रियामित्यादिनिर्देशाच्च ॥

तत्त्व०—नुडामः । नुट् आम इति छेदः । अत्र समानादित्यनुवर्त्तते । तेन रायामित्यादौ ना । अत्राहुः । अत्राधातोरित्यनुवर्त्तनीय श्रियामित्याद्यर्थं तत्र परेणेयाबाधात् । एवं तर्हि कारयांचकारेत्यादावतिप्रसंगवारणायाधातोरित्यनुवर्त्तनात्तदपि न परत्वाद्गुणेन बाधात् । पातयांचकारेत्यादावपि लोपेन बाधः । पचतितरामित्यादावपि यस्य लोपः परः न चैवमपि मालांचकारेत्यत्र नुट् स्यादिति वाच्यम् । स्याद्यधिकारेण तद्बाधात् इति । अत्रेदमवधेयम् । स्याद्यधिकारस्य जागरूकत्वेन गुणाल्लोपादीनां परत्वानुधावनेन बाधनान्वेषणस्य व्यर्थत्वात् । अत्र ङेरामः कुतो न नुडिति चेन्न । स्त्रियामित्यादिलिंगेन विभक्त्युपदेशकाले विद्यमानस्य वामोऽत्र ग्रहणात् । अत एव चतुराम् शौ च । देव आम. देव आमि इत्यादौ नातिप्रसंगः एतेनैतद्वारणायानर्थकत्वेन समानान्तान्नाम्नोऽभावे न वा प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमित्यादि समाधानं परास्तम् । ननु वारीणां स्त्रीणामित्यत्र परत्वान्नुमियौ भविष्यतः न नुट् । अथ नुमि न क्षतिरिति वाच्यम् । नुट्सहित एवामि दीर्घविधानात् दीर्घताभावः प्रसज्येत अत्रोच्यते । प्रायशो दृश्यतामिहेत्यत्र प्रायश इत्यस्य ग्रहणेन क्वचित्पूर्वेणापि परस्य बाधदर्शनात् । आमो मस्येत्त्वं तु गमां स्वर इत्यादि निर्देशान्न । ननु हाहामित्यादौ कुतो न नुट् समानात्परत्वसंभवादित्याह । पुंसि त्वित्यादि । अयमाशयः । अत्र ङ्णि ह्रस्वादिति सूत्रान्मंडूकप्लुत्या ह्रस्वादिति पुंस इति चानुवर्त्य पुंसि तु ह्रस्वादेवेति व्याख्यानात्तत्र ह्रस्वात्परत्वाभावान्न नुट् । अत्रार्थे ज्ञपानादां हौ इत्यादिलिंगम् ॥

**नामि ॥१५७॥ नामि परे पूर्वस्य दीर्घो भवति ॥ देवानाम् । देवे देवयोः ॥**

सुबो०—नामि । पूर्वस्य स्वरांतस्य नाम्नो दीर्घः स्यात् नुट्सहिते आमि परे । नुमसहिते आमि तु न दीर्घो भवति । यदि हि नुम्सहिते आम्यपि दीर्घः स्यात्तर्हि नुमं बाधित्वा नुड्विधानं व्यर्थं स्यात् । नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेनेत्युक्तत्वान्नुट्सहित एव आम् गृह्यते ॥

तत्त्व०—नामीति । नुट्सहित आम् नाम् तस्मिन् नामि परे पूर्वस्य दीर्घो भवति इत्यर्थः । आमीति

नत सूत्रितम् । वर्मणामित्यादावपि दीर्घ. स्यात । तथाहि । अत्र नोपधाया इति सूत्रस्य प्राप्तिसंभवः स्यान्नाप्यामीत्यस्यानुवृत्तेरामः सत्वात् । यत्तु कैश्चिन्नामीत्युक्त्या वारीणामित्यत्र सनुम्यप्यामि दीर्घः सिध्यतीत्युक्तम् । तत्र नुट्सहित आम् नाम् तस्मिन्नामीति व्याख्यान सर्वसमतत्वेन स्वोक्त्यैव तद्विरोधेन चोपेक्षितम् ॥

**किलात्पः सः कृतस्य ॥ १५८ ॥** कंवर्गादिलाच्च प्रत्याहारात्परस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति अन्ते स्थितस्य न भवति ॥ देवेषु ॥

सुबो०—किलात्पः सः कृतस्य । कुश्च इलश्चानयोः समाहारः किलं तस्मात् किलात् । क्रियते स्म विधीयते स्मेति कर्मणि क्तः । कृञो विहितस्य कृतस्य शास्त्रेण विहितस्येत्यर्थः । स इति षष्ठ्यंतं ष इति प्रथमांतं अकार उच्चारणार्थः । किलात्परस्य कृतस्यादेशरूपस्य प्रत्ययावयवस्य च सः स्थाने षः स्यात् । ष्रुनों णोऽनन्ते इत्यनोऽनन्ते इत्यनुवर्तते तेन पदांते स्थितस्य सस्य षत्वं न। किलात् किम् । देवस्य । कृतस्येति किम् । सुपीः । सुपिसौ । पदांते स्थितस्य नेति किम् । हरिस्तत्र ॥

तत्त्व०—किलात्प. स. कृतस्येति । कुश्च इलश्च किल तस्मात् । ष इति प्रथमान्त स इति षष्ठ्यन्तम् । अत ष्रुनों णोऽनन्त इत्यतोऽनन्त इत्यनुवर्त्तते । ततश्चान्ते स्थितस्य सस्य षत्व न हरिस्तत्रेत्यादौ । ननु कृतस्य सस्येति व्याख्यानात् देवेष्वित्यादौ सुप. कृतत्वेन समास्य कृतकत्वाभावात्कथं षत्वमिति चेन्न । अर्थवद्ग्रहणे [illegible]दिलिंगात्क्वचिदवयवग्रहणेनापि समुदायस्य ग्रहणात् । न चैव तिस्र इत्यादौ षत्वप्रसंग इति वाच्यम् । तत्र तिसृ चतसृ इति सत्वनिर्देशेन तद्बाधनसंभवात् । अत्र केचित् । नन्वत्र कु इति कुशब्द इति धातोर्ग्रहणम् । कुत्सितार्थाव्ययस्य वा कवर्गस्य वा । नाद्य । इलादित्येव सिद्धत्वात् । ननु यदा कुधा[illegible] इलोऽपि गत्यर्थो धातुरेव साहचर्यात् भेव अकारोच्चारणसामर्थ्यान्न धातुः । एवं तर्हि कोरेव यथा [illegible]धातोरिति नियमार्थं कुधातुर्नेति चेन्न । इलेन संज्ञाशब्देन साहचर्यात्संज्ञाशब्दस्यैव कोर्ग्रहणात् [illegible] कुरित्यादौ कवर्गार्थस्यैव सिद्धत्वाच्चेत्याहु । सतो हि कार्यिणः कार्येण भवितव्यमिति । सः षः इति [illegible] विपरीतनिर्देश ष स स इति द्विसकारनिर्देशेन षत्ववत्सत्वस्यापि क्वचिद्विध्यर्थः । तेन सिस्वेद[illegible]त्यादि सिद्धम् । यच्च दधिसचा । यजुष्षु । सर्पींषि । अवष्टभ । सुष्ठु इत्यादि सिद्ध्यर्थमनेकक्लेशानु[illegible] रमसोक्तिमात्रमित्युपेक्षितम् । बहुसेचावित्यत्र षत्वनिषेधार्थं शपा निपात्याः करत्यादय इत्यस्य [illegible] सर्वस्यानुक्तस्यानेनैव निर्वाहसत्वात् । किलात्किम् । देवस्य । विश्वपासु । कृतस्येति [illegible] । विसम् ॥

**सिर्द्धिः ॥ १५९ ॥** आमन्त्रणेऽर्थे सिर्द्धिसंज्ञको भवति ॥

सुबो०—सिर्द्धिः । आमंत्र्यते [illegible] क्रियतेऽनेनेत्यामंत्रणं साधने युट् । आमंत्रणे [illegible] । रामः । सत्यः । सिः किम् । रामौ ॥

[illegible]—सिर्द्धिरिति । आमंत्रण इत्यनुवर्त्तते । इत्यभिप्रेत्याह । आमंत्रणेऽर्थे इति आमंत्रण चानुकूलक[illegible] । आमंत्रण किम् । राम । सि किम् । हे रामौ ॥

**समानाद्धेर्लोपोऽधातोः ॥ १६० ॥** ह्रस्वात्समानादेदोतश्चोत्तरस्य धेर्लोपो भवत्यधातोः॥ आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक्प्रयोगः । हे देव हे देवौ हे देवाः । एवं घटपटरामकृष्णमुकुन्दादयः ॥

सुबो०–समानाद्धेर्लोपोऽधातोः। ङ्णनो ह्रस्वादित्यतो मंडूकप्लुत्या ह्रस्वादिति पदम्। एदोतोत इत्यत एदोत इति चानुवर्तते। ह्रस्वसमानान्तादेदोदंताच्च नाम्नः परस्य धेर्लोपः स्यात्। ह्रस्वसमानांतादिति किम्। हे वातप्रमीः। अधातोरित्युत्तरार्थम्। एदोत इति ग्रहणं किम्। हे हरे। हे विष्णो। अत्र हि परत्वान्नित्यत्वाच्च धावित्यनेनैदोतोः कृतयोर्ह्रस्वात्परत्वं नास्ति। अभिमुखस्य भाव आभिमुख्यं संमुखीकरणम्। आभिमुख्यस्याभिव्यक्तिः प्रकटीकरणं आभिमुख्याभिव्यक्तिस्तस्यै नाम्नः प्राक् हेशब्दस्य प्रयोगोऽर्थतः शब्दतो वा योज्यः॥

तत्त्व०–समानाद्धेर्लोपोऽधातोरिति। लोप अधातोरिति छेदः। समानादिति किम्। गौः। धातोरिति किम्। हे श्रीः। ननु हे हाहाः हे हर इत्यादावतिव्याप्त्यव्याप्तीत्यत आह। ह्रस्वादिति। ननु सूत्रे ह्रस्वादित्येव किमिति नोक्तं किं समानादित्यनेनेति चेत् अमृशसोरस्येत्यत्रानुवृत्त्यर्थमेतस्यावश्यकत्वात्। न च समानादित्युक्त्या कथं ह्रस्वलाभ इति वाच्यं लक्षणयेति गृहाण। अथैवमप्येदोतोः कुतो लब्धिरिति चेत् अधातुग्रहणात्। अधातुग्रहणात्कथमिति चेत् शृणु। अधातुग्रहणं तावद्व्यर्थम्। न च हे श्रीरित्यादावतिव्याप्तिः ह्रस्वग्रहणेनैव तद्वारणात्। न चाम्शसोरित्यत्रानुवृत्त्यर्थं श्रियमित्यादौ परत्वादिनैव तद्बाधात्। न चाचिनर्वामित्यादिवारणार्थं स्याद्यधिकारेणैव तद्वारणसंभवात्। तस्माद् धातुग्रहणं व्यर्थत्वादेतज्ज्ञापनार्थमेवोपात्तम्। लोपग्रहण तु व्यर्थमेव। रिलोपो दीर्घ इत्यतोनुवृत्त्यैव तल्लाभात्। न चैकयोगनिर्दिष्टत्वेन दीर्घस्याप्यनुवृत्तिः स्यादिति वाच्यम्। सैपाद्धस इत्यत्र केवलाप्यनुवृत्तिदर्शनात्। यद्वा। लोपग्रहणस्यैवैतज्ज्ञापनमधातुग्रहणं तु ञ्रितो नुमित्यत्रोपयोगार्थमपि न्याय्यम्। जलधिरित्यादौ तु स्याद्यधिकारेण वारणम्। एवं च ग्रामणि कुलमित्यादि एकदेशविकृतन्यायेन धातुत्वेऽनेनाप्राप्तेऽपि नपुंसकात्स्यमोर्लुकैव रूपसिद्धेः॥

**सर्व, विश्व, उभ, उभय, अन्य, अन्यतर, इतर, डतर, डतम, सम, सिम, त्वत्, त्व, भवतु, नेम, एक, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर्, त्यद्, तद्, यद्, एतद्, इदम्, अदस्, द्वि, किम्, युष्मद्, अस्मद्। एते सर्वादयस्त्रिलिङ्गाः॥**

सुबो०–सर्व, विश्व, उभ, उभय, अन्य, अन्यतर, इतर, डतर, डतम, सम, सिम, त्वत्, त्व, भवतु, नेम, एक, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अंतर्, त्यद्, तद्, यद्, एतद्, इदम्, अदस्, द्वि, किम्, युष्मद्, अस्मद्। एते सर्वादयस्त्रिलिंगाः। एते पंचत्रिंशच्छब्दाः त्रीणि लिंगानि येषां ते त्रिलिंगाः सर्वादिसंज्ञका ज्ञेयाः। गणसूत्रमिदम्। आदिशब्दोऽत्रावयववाची। सर्वः आदिराद्यावयवो येषां ते सर्वादयः। तद्गुणसंविज्ञानोऽयं बहुव्रीहिस्तस्यान्यपदार्थस्य गुणानां विशेषणानां वृत्तिपदार्थरूपाणां कार्यान्वयित्वया संविज्ञानं यस्मिन् स तद्गुणसंविज्ञान इत्यक्षरार्थः। आदिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थ इति। बहुवचनं तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदंगेष्विति न्यायेन तदवयवेषु प्रवर्तमाना सर्वादिसंज्ञाऽविशेषात्सर्वशब्देऽपि वर्तते इति युक्तम्। तद्गुणसंविज्ञानत्वं संयोगसमवायान्यतरसंबंधे। लंबकर्णमानयेत्यादौ तद्गुणसंविज्ञानत्वमेव। स्वस्वामिभावसंबंधे तु चित्रगुमानयेत्या-

धीर्यस्याः सा प्रकर्षेण ध्यायतीति वा विग्रहे प्रधीशब्दस्य पुंवद्रूपम् । अयं मतभेदः । प्रकृष्टा धीरिति विग्रहेण तत्पुरुषे तु मतद्वयेऽपि लक्ष्मीवत्प्रधीशब्दस्य स्याद्रूपम् । सुष्ठु धीर्यस्याः सा सुष्ठु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीशब्दस्य श्रीशब्दवद्रूपम् । कैयटमते तु नित्यस्त्रीत्वाऽभावात्पुंवद्रूपम् । सुष्ठु धीरिति विग्रहेण तत्पुरुषे तु मतद्वयेऽपि श्रीवदेव । बुद्धिवाचकधीशब्दस्य नित्यस्त्रीत्वात् । ग्रामणीशब्दः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदांतरं विना स्त्रियामप्रवृत्तेः । एवं खलप्वादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥

तत्त्व०—वेयुव इति । इय् च उव् चानयोः समाहारः इयुव् तस्मात् इयुवः । अत्र य्वोरित्यनुवर्त्तते । तयोरभेदस्य बाधित्वादियुवस्थानिनो योरित्यर्थो लभ्यते विकल्पश्चाय व्यवस्थितः । तेन स्त्रिया नित्य आमो नुड्वा स्त्रिया नित्यामित्येव सर्वं लब्धम् । लक्ष्मीवदिति । पदान्तरं विना स्त्रियां वर्त्तमानत्वं नित्यस्त्रीत्वमिति वदतां वृत्तिकारादीनां मते प्रधीशब्दस्य तथात्वादिति भावः । केषांचिदिति लिंगांतरानभिधायित्वं नित्यस्त्रीत्वमिति वदतां कैयटादीनां मते इत्यर्थः । ग्रामणीरिति । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः । एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥

न्रण ईप् ॥ २४२ ॥ नकारान्ताहकारान्ताच्च स्त्रियामीप्प्रत्ययो भवति ॥ क्रोष्ट्री क्रोष्ट्र्यौ । नदीवत् । वधूजम्ब्वादयो नदीवत् । पुनर्भूः । य्वौ वा । पुनर्भ्वौ । हे पुनर्भु । पुनर्भ्वा । पुनर्भूणाम् । "भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान् ।" हे वर्षाभु । वर्षाभ्वा । स्वयम्भूः पुंवद्वा ॥

सुबो०—न्रण ईप् । न् च आ च अण् च एषां समाहारो न्रण् तस्मान्न्रणः । अणिति प्रत्ययो न तु क्विंतोऽणिति गृह्यते प्रत्ययाप्रत्यययोरिति न्यायात् । अस्य व्याख्यानं स्त्रीप्रत्यये द्रष्टव्यम् । क्रोष्टुशब्दस्य पुंसि पंचस्वघिपु स्त्रियां वेति तृवद्भावः । क्रोष्ट्री । धाविति ह्रस्वः । हे पुनर्भु । स्त्रियां योरिति ङेराम् । पुनर्भ्वाम् । कैयटमते भेकजातौ नित्यस्त्रीत्वाभावात् हे वर्षाभूः । वृत्तिकारमते तु हे वर्षाभु । पुनर्नवायां तु हे वर्षाभु । उक्तं च । "भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान् ।" इति यादवः । भेक्या मंडूक्यां तथा पुनर्नवा औषधी तस्या वाच्याया वर्षाभूशब्दः स्त्रीलिंगः । दर्दुरवाची तु पुँल्लिंगः । ङौ वर्षाभ्वाम् । स्वयंभूशब्दे स्वरे परतो य्वोर्धातोरित्युव् । मतद्वयेऽपि नित्यस्त्रीत्वाभावात् ङितामडित्यादिना ॥

तत्त्व०—न्रण ईप् इति । न् च आ च अण् च एतेषां समाहारः न्रण् तस्मात् न्रणः । अत्र मध्ये रेफभूत ऋकारो गृह्यते न रेफः व्याख्यानात् मध्यपाठस्य लाघवार्थत्वाच्च । अत्राणूप्रत्ययः नतु क्विबन्तो णिति प्रत्ययाप्रत्यययोरिति न्यायात् । तथा च तदन्तनाम गृहीतम् । प्रत्ययग्रहणे यस्मात्स विहित इति परिभाषया तदन्तलब्ध नाम्नो विशेषणात्तदन्तमप्यायातं नकारान्तेत्यादि । एतद्बीजं तु न्रण ईबित्यत्र न संधीत्यतो न इत्यनुवर्त्य लक्ष्यानुरोधात्तस्य व्यवस्थितत्वमाश्रित्य क्वचिन्नेति व्याख्यानात् । तेन क्वचिदणन्तादपि न । क्रामिका । यथा अणन्तांतात् नगरकारी अणन्तादेवात्रेबिति तु न । तथा सतीबन्तादेर्यणि ताद्धि-

तत्प्रकृतिभूतस्यादेः स्वरस्य वृद्धौ नगरकारे, परत्येव स्यात् । ननु परमनगरकार्या अपत्यमित्यर्थेऽणि कस्य वृद्धिरिति चेत्सत्यम् । समुदायादेरेव प्रत्ययग्रहणे रादेरन्तस्य च नियमोऽस्त्विति । यत्र विधौ प्रत्ययो गृह्यते तत्र तदादिनियमो नास्ति । स्त्रीप्रत्ययेऽनुपसर्जने तदादिनियमो नेति वचनात् परमनगरकारेय इति भवति । अनुपसर्जने किम् । अतिनगरकारेरपत्यमित्यर्थे तदादिनियमाभावे एयण् स्यात् स मा भूत् । किं त्वणेवातिनगरकार इति प्रियौपगवेत्यत्र नत्वमाश्रित्य नेप् गौणत्वात् । गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात् ॥

**नकारांतसंख्यायाः स्वसृतिसृचतसृननांदृदुहितृयातृमातृभ्यश्च नेवायौ ॥ २४३ ॥ माता पितृवत् । स्वसा कर्तृवत् । शसि मातॄः । स्वसॄः । राः पुंवत् । गौः पुंवत् । नौर्ग्लौवत् ॥ इति स्वरांताः स्त्रीलिंगाः ॥**

सुबो०—नकारांतसंख्यायाः स्वसृतिसृचतसृननांदृदुहितृयातृमातृभ्यश्च नेवायौ । स्वस्रादीनामीप्प्राप्तौ नकारांतसंख्यायास्तुभौ प्राप्तावनेन निषिध्येते । सावसे ऋ इति ऋप्रत्ययः। स्वसा । स्वुरारित्यार् । स्वसारौ । शसि स्वसॄः। स्त्रीत्वात्सो नः पुंस इति न नत्वम् । "ननांदा तु स्वसा पत्युः" इत्यमरः। "भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् । " इति च । यद्यपि पुँल्लिंग एव रैशब्दः ' अर्थ रैविभवा अपि" इत्यमरे भिन्नलिंगानां न द्वंद्व इति परिभाषितत्वात् तथापि रात्येनामिति राः स्त्रीत्येके । नुदत्तेर्ग्लौनुदिभ्यां डाविति डौप्रत्ययः । डित्वाट्टिलोपः। नौः । "स्त्रियां नौस्तरणिस्तरिः " इत्यमरः ॥

तत्त्व०—श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । कृतायामिह टीकायां स्त्रीलिंगोऽगात्स्वरान्तकः ॥

इति स्वरान्ताः स्त्रीलिंगाः ।

---

**अतोऽम् ॥ २४४ ॥ अकारान्तान्नपुंसकलिंगात्परयोः स्यमोरम् भवत्यधो ॥ कुलम् ॥**

सुबो०—अतोऽम् । अदन्तान्नपुंसकाच्चाम्नः परयोः स्यमोरम् स्यात् । नपुंसकात्स्यमोर्लुगित्यस्यापवादोऽयम् । अतः किम् । पयः। तपरकरणं सुखसुखार्थम् । नपुंसकस्येति ह्रस्वे कृते दीर्घत्वाभावात् । केचित्तु म् इत्येव पदच्छेदं कुर्वंति । लाघवात् तत्र सेर्मे कृते कुलमिति सिद्धम् । द्वितीयैकवचने तु मस्यैव मे कृते अमृशसोरित्यलोपे सिद्धमिष्टम् । यत्त्वाहुः । अतिजरसमिति सिद्ध्यर्थं विधानं तन्न । द्वितीयैकवचने लुकोऽपवादे अतोऽमिति मृभावे कृते अमृशसोरित्यल्लोपं बाधित्वा जरस् ततः सन्निपातपरिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिरिति । हे कुलेत्यत्र धेरमि कृते अल्लोपे च समानाद्धेरिति मलोपः । यद्वाऽतोऽमिति सूत्रे सन्महत इत्यतो मंडूकप्लुत्याऽधावित्यनुवर्त्य षष्ठ्या विपरिणम्यते । अमादेशनिषेधाद्धेर्लोप एव विधेयः ॥

तत्त्व०—अतोऽमिति । अत्र अतः म् इति छेदः । तथा च सेर्मादेशे कुलमिति सिद्धम् । द्वितीयैकवचने मस्यैव मादेशोऽस्याम्शसोरिति लोपे रूपसिद्धेः न चाजरसमिति सिद्ध्यर्थं तदिति वाच्यम् । लुकोपवादम-भाव बाधित्वा जरसि कृते ततः सन्निपातपरिभाषाविरोधादमो लुकि सिद्धत्वादिष्टस्य सौ तु सन्निपातपरि-भाषयैव जरसादेशो नेति मूले एव स्फुटीकारिष्यति । यत्त्वाहुः । अत्राकारविधान सन्निपातपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेनामि जरसादेशेऽतिजरसमिति । अत्रेद वक्तव्यम् । अमि अनित्ये सौ नेत्यत्र विनि-गमनाविरहः । इष्टसिद्धेरेव विनिगमनकत्वमिति चेत् अन्यथापीष्टसिद्धेरव्याहततत्वात् यदपि वमत इति सूत्र-णीये म च अन्चेति समासे मान्ताददन्तात्स्यमोर्लुगित्यर्थः स्यात् क्लीबे पूर्वेण सिद्धेः क्लीबार्थमेतत्स्यात् । तथा च किइदशब्दयोर्दोषशकाव्यावृत्त्यैतत्तज्ज्ञापकानुसरणे लाघवाभावः किन्तु अतिमित्येव वक्तुमुचित-मित्युक्तम् । अत्राप्यनिष्टशंकाया अनिर्वार्यत्वात् अन्च मन्चेति समासे क्लीबाद्यथाक्रमं स्यमोरामौ स्यातामिति तस्मान्म इत्यत्र निष्कारणमुद्देश्य विधेयक्रमबाधस्यैव दुष्टत्वात् ॥

**ईमौ ॥ २४५ ॥ नपुंसकलिंगात्पर औरीकारमापद्यते ॥ कुले ॥**

सुबो०—ईमौ । नपुंसकान्नाम्नः पर औरीत्वं प्राप्नोति । दीर्घोच्चारणं तु मधुनी इत्यादौ श्रवणार्थम् । विपरीतनिर्देशो नित्यादपि नुमः पूर्वमीविधानार्थम् ॥

तत्त्व०—ईमाविति । अत इति नानुवर्त्तते । दीर्घोच्चारणं तु वारिणीत्यादौ श्रवणार्थम् । विपरीतनिर्देशो नित्यादपि नुमः पूर्वमीविधानार्थे । सत्यापि चाश्रयमनुमक्षत्यभावात् ॥

**जश्शसोश्शिः ॥ २४६ ॥ नपुंसकलिंगात्परयोर्जश्शसोश्शिर्भवति ॥**

सुबो०—जश्शसोः शिः । नपुंसकान्नाम्नः परयोर्जश्शसोः शिः स्यात् । नपुंस-कात्किम् । देवाः । जसा सहचरितस्य शसो ग्रहणान्नेह । शतशो ददाति । शकारः सर्वादेशार्थः ॥

तत्त्व०—जश्शसो. शिरिति । जसा सहचरितस्य शसो ग्रहणात् शतशो ददातीत्यादौ नातिप्रसंगः। शकारः सर्वादेशार्थो न तु श्रवणार्थः पणीत्यादिनिर्देशात् । अत्राहुः । अत्रासोरित्येव वक्तुमुचित पराणीत्यादिनिर्दे-शात् स्याद्यधिकाराच्च । जश्शसोः शिरित्येव ग्रहण न तु ङसिङसोः नपुसकात् नपुसकस्येति निर्देशात् । अर्थस्य नियामकत्वाद्वैपरीत्यशकापि नेति अत्रेदमवधेयम् । लाघवार्थं सोरिति सूत्रिते ज्ञापकानुसरण वैपरी-त्यशंकानिवृत्त्यर्थं अर्थनियामकत्वानुसरणस्य चातिगौरवेण ततोऽस्यैव लघुत्वात् ॥

**नुमयमः ॥ २४७ ॥ नपुंसकस्य नुमागमो भवति शौ परे यमप्र-त्याहारान्तस्य न ॥ मिदन्त्यात्स्वरात्परः ॥**

सुबो०—नुमयमः । अयमप्रत्याहारांतस्य नपुंसकस्य नुम् स्यात् शौ परतः । नपुंसकादिति षष्ठ्या विपरिणम्यते शिरिति सप्तम्या च । अयम इति षष्ठी । मका-राऽकारस्योच्चारणार्थत्वात् । मित्वादंत्यात्स्वरो नुम् । अयमः किम् । विमलदिवि । चत्वारि । वारि । फलि । सुगणि । अक्षाणि । प्रशामि ॥

तत्त्व०—नुमयम इति । अत्र नपुंसकादित्यनुवृत्तस्यार्थवशाद्विभक्तिविपरिणाम. । एवं शिरित्यपि सप्तम्या विपरिणम्यते इत्यभिप्रेत्याह । नपुंसकस्य शाविति च । अयम इति षष्ठी अकारस्योच्चारणार्थत्वात् षष्ठ्यर्थे प्रथमा । मिदन्त्यादिति । अत्र च सध्यक्षराणीति ज्ञापकमिति भाव. ॥

**नोपधायाः ॥ २४८ ॥ नान्तस्योपधाया दीर्घो भवति शौ पंचस्व-**

धिषु नामि च ॥ ईति न । कुलानि । हे कुल । शेषं देववत् । एवं मूलफलादयः ॥

सुबो०–नोपधायाः । नेत्यविभक्तिको निर्देशः । नाम्नो विशेषणम् । तेन नांतस्य नाम्न उपधाया दीर्घः स्यात् शौ परे पंचस्वाधिषु । ईमाविति ईकारे तु न । ब्रह्मणी इति । वा दीपोरित्यत ईकारस्य अनुक्तसमुच्चयार्थस्य निषेधार्थस्य वाचकस्य चानुवर्तनात् । नामीत्यस्यापकर्षणान्नाम्यपि नोपधाया दीर्घः । विदो नवानामिति निर्देशात् । भवन्नित्यादौ संयोगांतलोपस्यासिद्धत्वान्न दीर्घः ॥

तत्त्व०–नोपधाया इति । न उपधाया इति छेदः । नेति लुप्तषष्ठीकम् । तदन्तत्वं च बोध्यम् । विशेष्यस्य नाम्न उपस्थितत्वात् इत्यत आह । नान्तस्येति । अत्र वा दीपोरित्यत ईकार इत्यनुवर्त्य नेति वेत्यत आह । ईति नेति तेन ब्रह्माणीत्यादि च सिद्धम् । अत्र नामीत्यस्यापकर्षणमित्याह । नामीति । यदि तु ज्ञापकासिद्धस्यासार्वत्रिकत्वात् पञ्चानामिति निर्देशाद्वा नलोपस्यापि दीर्घस्तदा नाम्नीति नापकर्षणीयम् । हे कुलेति । अकारस्य लोपे मकारस्य समानाद्धेरिति लोपः अधीरित्यनुवृत्तेर्वा ॥

श्त्वन्यादेः॥२४९॥अन्यादेः क्लीबात्परयोः स्यमोः श्तुर्भवति॥अन्यत्॥

सुबो०–श्त्वन्यादेः । क्लीबादन्यादेर्नाम्नः परयोः स्यमोः श्तुः स्यात् । अतोऽमित्यस्यापवादः । अन्य-अन्यतर-इतर-डतर-डतमेति पंचात्मकोऽन्यादिः । सर्वाद्यंतर्गणः । डतरडतमौ प्रत्ययौ । ततस्तदंताः कतरकतमादयो ग्राह्याः । क्लीबादिति किम् । अन्यः, अन्यम् । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः ॥

तत्त्व०–श्त्वन्यादेरिति । श्तु अन्यादेरिति छेदः । शः सर्वादेशार्थः उकार उच्चारणार्थः । सेरेकवर्णत्वादेव सर्वादेश. सिद्धः । द्वितीयैकवचने तु मस्य तादेशे कृते एकदेशविकृतन्यायेनाम्शसोरस्य इत्यलोपे कृते सिद्धमिष्टमिति शकारो व्यर्थ इति चेत्सत्यम् । स्वविषये प्राप्तस्य सर्वस्य स्थाने तुर्यथा स्यात् । सिलोपबाधनार्थः शकार इति फलितं इत्याशयेनाह । अन्यदिति ॥

वावसाने ॥ २५० ॥ अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा ॥ अन्यत्, अन्यद् अन्ये अन्यानि ॥

सुबो०–वावसाने । अवसातिरवसानम् । षोऽन्तकर्मणि अस्माद्भावे युट् । समाप्तिरंत इति यावत् । पदस्यांते वर्तमानानां झसानां जबाश्चपाश्च वा स्युः । पदस्य किम् । मरुतौ । अंते किम् । गतः । झसानां किम् । राजन् ॥

तत्त्व०–वावसान इति । अत्राऽवसातिरवसानम् । षोऽन्तकर्मणि भावे युट् । समाप्तिरन्त इति यावत् । अत्रावसानशब्दस्यान्तावयवार्थस्यावयविनि साकाङ्क्षस्य परस्येत्यवयवी संबध्यते । यदि तु खसे चपा झसानां झबे जबा इति सूत्रद्वये पदान्त इत्यनुवर्त्य वाक्यभेदेन व्याख्यायते । पदान्ते झसानां जबाश्चपा भवन्तीति तदेदं सूत्रं व्यर्थमेव ॥

अन्यादेर्धेर्लोपो न ॥ २५१ ॥ हे अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् ॥

सुबो०—अन्यादेर्द्धेर्लोपो न । अन्यादेः परस्य धेर्लोपो न । समानाद्धेरिति प्राप्ते निषेधः ॥

**एकतरस्य श्तुर्न ॥ २५२ ॥ एकतरम् । शेषं सर्ववत् । सेरमादेशे सन्निपातपरिभाषया न जरस् । अजरं अजरसी, अजरे अजराणि ॥**

सुबो०—एकतरस्य श्तुर्न । एकतरात्परयोः स्यमोः श्तुर्न स्यात् । डतरप्रत्ययांतत्वात्प्राप्ते निषेधः । अविद्यमाना जरा यस्य तत् । अन्यार्थे इति ह्रस्वे कृते अतोऽमित्यम् । अजरमित्यत्राजरशब्दमाश्रित्य सिस्थानेऽम् उत्पन्नः तेनाजरशब्दस्याम् विधिः सन्निपातः । अतः सन्निपातोमुविधिर्जरसादेशविधानेनाजरशब्दस्य विघातको नेति । अजरमित्येकमेव रूपं प्रथमैकवचने । अजर सि इति स्थिते परत्वाज्जरसि कृते नुमयम इति नुम् ॥

तत्त्व०—सेरमादेशे इति । यो यमाश्रित्योत्पद्यते स तं प्राति सन्निपातः । सन्निपातलक्षणो विधिरनिमित्त तद्विघातस्य ॥

**न्सम्महतोऽधौ दीर्घः शौ च ॥ २५३ ॥ न्संतस्याप्शब्दस्य महच्छब्दस्य च दीर्घो भवति पंचस्वधिषु शौ च ॥ अजरांसि । अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् । ततस्सन्निपातपरिभाषया न लुक् । अजरसं अजरसी, अजरे अजरांसि, अजराणि । शेषं निर्जरवत् । हृदयोदकास्यमांसानां हृद्-उदन्-आसन्-मांस्-द्वंदि । हृदा हृद्भ्याम् । उदानि । उद्ना उदभ्याम् । आसानि । आस्ना आसभ्याम् । मांसि । मांसा मान्भ्याम् ॥**

सुबो०—न्सम्महतोऽधौ दीर्घः शौ च । न्स् च अप् च महच्च एषां समाहारो न्सम्महत् तस्य न्सम्महतः । नमे नमा वा इत्यनेन यस्य मादेशं कृत्वा अप्शब्दोऽत्र निर्दिश्यते । अधिकाराल्लब्धस्य नाम्नो विशेषणमिदम् । विशेषणेन च तदंतविधिरिति तदंतस्यापि दीर्घो भवतीत्यर्थः । अधाविति छेदो न तु धाविति । पंचस्वित्यनुवर्तते । तद्विशेषणं चेदम् । अत्र पूर्ववत् ई इत्यनुवर्तते । चकारोऽस्त्येव । तेन स्वपी इत्यादौ इति नेत्यर्थः । अत्रान्महत्साहचर्य्यादधातोरेव न्स् गृह्यते तेन सुहिन् इत्यादौ न दीर्घो धातुत्वात् । न्संतत्वाद्दीर्घे । अजरांसि । नोपधाया इति दीर्घे । अजराणि । अजर अमित्यत्र नपुंसकात्स्यमोर्लुगित्यस्यापवादमतोऽमित्यम्भावं बाधित्वा परत्वाज्जरस् । ततो यो यमाश्रित्योत्पद्यते स तं प्राति सन्निपातः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया नामो लुग् । अजरसम्, अजरम् । पाददंते-

त्यनेन हृद्-उदन्-आसन्-मांस्-आदेशाः । अल्लोपः स्वरे इत्यकारलोपे । उद्ना । नाम्नो नो लोपशिति नलोपे । उद्भ्याम् । संयोगांतस्येति सलोपे । मान्भ्यामिति ॥

तत्त्व॰—न्सम्महतोऽधौ दीर्घः शौ चेति । न्स् च अप् च महच्च एतेषां समाहारः न्सम्महत् तस्य । यस्य अमे अमा चेति मः अत्राधाविति छेदः । तच्च पचास्वित्यनुवृत्तस्य विशेषणं तेन विवर्जितेषु पंचास्वित्यर्थः । केवलस्य न्सोऽसंभवात्तदंतस्य ग्रहः । अत्र नोपधाया इत्यत उपधामात्रमपकृष्य तच्च पूर्वमात्रोपलक्षकम् । पारिभाषकार्यस्येहासभवात् । एवं स्थिते दीर्घग्रहणस्य सामर्थ्यकल्पनादिकमनर्थकमित्युपेक्षितं शसः पचस्वन्तर्भावात् । शाविति । स्वपीत्यत्र तु न दीर्घः । ईमौ इत्यनुवर्त्य वकारस्य निषेधार्थत्व परिकल्पना इति व्याख्यानात् ॥

**नपुंसकस्य ह्रस्वः ॥ २९४ ॥** नपुंसकस्य ह्रस्वो भवति ॥ श्रीपं कुलवत् ॥

सुबो॰—नपुंसकस्य ह्रस्वः । अत्र ह्रस्वश्रुत्या स्वरस्येत्युपस्थितम् । तच्च नपुंसकस्य विशेषणम् । नाम्न इत्यनुवृत्तमधिकारात् । तत्र स्वरांतस्य नपुंसकस्य नाम्न इति सामानाधिकरण्येन व्याख्यातम् । लिंगस्य नामार्थत्वाभ्युपगमात् । तस्य ह्रस्वः स्यादित्यर्थः । श्रियं पाति यत् कुलं तत् श्रीपम् । अत्र ह्रस्वे कृतेऽतोऽमित्यम् ॥

तत्त्व॰—नपुंसकस्येति । इह ह्रस्वश्रुत्या स्वर इत्युपस्थितम् । तच्च नाम्नो विशेषणम् । तेन स्वरान्तस्य नाम्नो नपुंसकस्येत्यर्थः । न तु नपुंसकस्य स्वरस्य ह्रस्व इत्यर्थः । सुवाक् कुलमित्यादावतिव्याप्तेः ॥

**नपुंसकात्स्यमोर्लुक् ॥ २९५ ॥** अस्थि ॥

सुबो॰—नपुंसकात् स्यमोर्लुक् । नपुंसकान्नाम्नः परयोः स्यमोर्लुक् स्यात् । त्यदित्यादौ लुका त्यदाद्यत्वं बाध्यते । क्वचित्पूर्वेणापि परस्य बाधस्वीकारात् नित्यत्वाद्वा । कृताकृतप्रसंगित्वाल्लुङ् नित्यः । त्यदाद्यत्वं विभक्तावुच्यमानं कृते लुकि विभक्त्यभावान्न ॥

तत्त्व॰—नपुंसकात्स्यमोर्लुगिति । तत्कुलमित्यत्र तु त्यदाद्यत्वमेतेन बाध्यते । नित्यत्वाद्वा । कृताकृतप्रसंगित्वात् न च कृते त्यदाद्यत्वे लुकोऽपि प्राप्तिः । अतोऽमित्यनेन बाधात् इति चेत् । लुको निमित्तस्य लक्षणांतरेण बाधात् । न पुनस्त्यदाद्यत्वेनैव । यस्य लक्षणांतरेण निमित्तं विहन्यते न तदनिमित्त भवति ॥

**य्वृणां नपुंसके धौ गुणो वा ॥ २९६ ॥** हे अस्थे, हे अस्थि ॥

सुबो॰—य्वृणां नपुंसके धौ गुणो वा । इश्च उश्च आ च ते य्वरस्तेषां य्वृणामिकारोकारऋकारांतानां नपुंसकानां गुणो वा स्यात् धौ ॥

तत्त्व॰—य्वृणामिति । इश्च उश्च आ च य्वरस्तेषां य्वृणाम् ॥

**नामिनः स्वरे ॥ २९७ ॥** नाम्यन्तस्य नपुंसकस्य नुमागमो भवति स्यादौ स्वरे ॥ अस्थिनी ॥

सुबो॰—नामिनः स्वरे । नाम्यंतस्य नपुंसकस्य नाम्नो नुम् स्यात् स्वरादौ स्यादौ । नाम्यंतस्य किम् । जगते । नपुंसकस्य किम् । वातप्रम्ये । स्वरादौ किम् । वारिभ्याम् । स्यादौ किम् । दध्यत्र ॥

तत्त्व०—नामिनः स्वर इति । नाम्यन्तस्य किम् । जगता । नपुंसकस्य किम् । वातप्रम्या । स्वरादौ किम् । वारिभ्याम् । स्यादौ किम् । दध्यत्र । ननु स्वरग्रहण किमर्थकम् । वारिभ्यामित्यादौ वारणार्थमिति चेन्न । तत्र लोपशा रूपासिद्धेः । अथ सुराभ्यामित्यत्र नुमा जातेन व्यवधानादात्वं न स्यात् । नलोपेऽपि कृते विभक्तिविधौ तस्यासिद्धत्वादव्यवधानमेव सुरेत्यस्य व्यवधायकत्वाद्रैशब्दस्य व्यवधायकत्वं भवत्येव । अथ तस्माद्रैशब्दान्तनाम्नो नुमा व्यवधानमेवेति वाच्यम् । तथा सति पूर्वस्य पतेङ्क्ऽतिर्याभ्यामिति स्यात । नैवम् । राय आत्व नुमा व्यवधान प्राप्यापि भवति विभक्तिविधानदशायामानन्तर्याश्रयणात् । अथ नुडबाधनार्थं स्वरग्रहणम् । अथ नित्यत्वान्नुमेव स्यादिति चेन्न । नुडर्थं यत्नोतरस्यावश्यकत्वात् अथ नुटि कृति नुम्बाधनार्थमिति चेन्न किन्ततो लोपेनेष्टसिद्धे । अथ लोपशि नामीत्यस्याप्रसग इति वाच्यम् । नोपधाया इत्यनेनैव निर्वाहसत्वात् । अथ शुचीनामित्यादौ इनां शौ सावित्यनेन नियमः स्यादिति वाच्यं न प्रतिपदोक्तस्यैवेनोग्रहणात् । उत्तरार्थमित्यपि न तथा सति तत्रैव कृत स्यात् तेन इहकरणं ज्ञापयति । आगमजस्य लोपइनेति तेन भवानित्यादि सिद्धम् ॥

अच्यास्थ्नां शसादौ ॥ २९८ ॥ शसादौ स्वरेऽस्थ्यादीनां नुमागम इकारस्य चाकारः ॥ अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ । अस्थ्ना । अस्थ्ने । अस्थ्नः । अस्थ्नोः अस्थ्नाम् । वेङ्योः । अस्थ्नि, अस्थनि । एवं दधिसक्थ्यक्षिशब्दास्तदंतस्यापीष्टाः । प्रियास्थ्ना । अतिदध्ना । वारि वारिणी वारीणि । आमि नुट् । वारीणाम् । नपुंसकस्य ह्रस्वः । ग्रामणि ॥

सुबो०—अच्यास्थ्नां शसादौ । अत्राधिकृतस्य नाम्नोऽस्थ्यादिभिर्विशेषणात्तदंतविधिस्तेनाऽनपुंसकस्याप्यस्थ्याद्यंतस्य नाम्नो नुम् स्यादेषामितोऽकारश्च । शस् आदिर्यस्येत्यतद्गुणसंविज्ञानो बहुव्रीहिस्तेन शसि न । अस्थीनीति । अस्थ्नामिति बहुवचनमाद्यर्थम् । तेनास्थिदधिसक्थ्यक्षिशब्दा ग्राह्याः । अल्लोप इत्यनेनोपधाकारलोपे । अस्थ्ना । वेङ्योरित्युपधाया वा लोपे । अस्थ्नि, अस्थनि । तदंते तु प्रियमस्थि यस्य सः प्रियास्थिः । तेन प्रियास्थ्ना शुना । दधि अतिक्रांतमतिदधि । तेनातिदध्ना व्यंजनेन । स्त्रियामप्यतिदध्नेत्येव । संनिपातपरिभाषया बहिरंगपरिभाषया चैषोऽप्रवृत्तेः । स्वृणामिति वा गुणे । हे वारि, हे वारे । टा नास्त्रियामिति नाभावे । वारिणा । ङयि ङितीत्येत्वे प्राप्ते एत्वौत्वतृवद्भावित्वात् बाधित्वा नामिनः स्वरे इति नुम् । परेण पूर्वबाधो वेत्याद्युक्तत्वात् । अतिसखिनीत्यत्र ऐ सख्युरित्येत्वे प्राप्ते नुम् । वारिणीत्यत्र ङेरौ ङिदित्यौत्वे प्राप्ते नुम् । प्रियक्रोष्टूनि इत्यत्र क्रोष्टुशब्दस्येति तृवद्भावे प्राप्ते नुम् । वारिणे । एत्वे प्राप्ते नुम् । आमि प्रायश इत्युक्तत्वात्पूर्वेण परस्य बाधनात् नुडेव । ननु नुमनुटोः को विशेषः । उच्यते । नामीति दीर्घत्वामिति । वारीणाम् । हसादौ हरिवत् । ग्रामं नयति यत् कुलमिति नपुंसकस्येति ह्रस्वे । ग्रामणि ॥

तत्त्व०–अत्रास्थां शसादाविति । शस आदिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीह्याश्रयणात् टादिर्गृह्यते । अथैवं टादावित्येव कथं नोक्तमुत्तरसूत्रेऽपि तदनुवृत्त्यैव सिद्धेः । टादावित्यस्यैव वक्तुमुचितत्वादिति चेत्सत्यम् । वसोर्व उरित्युत्तरसूत्रे शसादावित्यस्योपयोगित्वात् । बहुवचनादेव स्थ्यादिग्रहः अत्वं चेकारस्यैव नाप्यनुवृत्तेः । तपरत्वविपरीतनिर्देशयोस्तु वैयर्थ्यमेव तदन्तेति । तस्मादित्याधिकाराच्चामलाभः । तच्चास्थ्यादीनां विशेषणम् । विशेषणेन च तदंताविधिरित्यतस्तदन्तत्वलाभः । यत्तु उत्तरार्थमनुवृत्त नपुंसकग्रहणमस्थ्यादीनां विशेषणं तेन यदृच्छाशब्दानां पुँल्लिंगानां वारणार्थम् । दधि नाम कश्चित्तदनुकरणस्य दधिनेत्येव यथा स्यादित्युक्तं तन्न । " अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥ " इत्युक्तेरेव तद्वारणसंभवात् । टादावुक्तपुंस्कं पुंवद्वेति । पुंशब्देन तुल्यं पुंवत् । तेन नुम्ह्रस्वयोरभावे आतिदिश्यते अति-देशसामर्थ्याद्ध्रस्वोऽपि । अन्यथा प्रकृतत्वान्नुम एव ग्रहणं स्यात् । तथा च स्वाश्रयनाभावादि स्यात् ॥

**टादावुक्तपुंस्कं पुंवद्वा ॥ २८९ ॥** उक्तपुंस्कं नाम्यंतं नपुंसकलिंगं टादौ स्वरे परे पुंवद्वा भवति ॥ ग्रामण्या, ग्रामणिना । ग्रामणीनां ग्रामण्याम् । ग्रामणिनि, ग्रामण्याम् । प्रधि । प्रध्या, प्रधिना । सुधि । सुधिया, सुधिना । मधु । हे मधो, हे मधु । एवमंस्वादयः । सानु सानुनी स्नूनि, सानूनि । स्नुना, सानुना स्नुभ्याम् । प्रियक्रोष्टु प्रि-यक्रोष्टुनी प्रियक्रोष्टूनि । प्रियक्रोष्ट्रा, प्रियक्रोष्टुना । प्रियक्रोष्ट्रे, प्रिय-क्रोष्टवे, प्रियक्रोष्टुने । प्रियक्रोष्टुः, प्रियक्रोष्ट्रोः, प्रियक्रोष्टुनः । सुलु सुलुनी सुलूनि । सुल्वा, सुलुना । एवं खलप्वादयः । धातृ धातृणी धातॄणि । हे धातः, हे धातृ । एवं ज्ञातृकर्त्रादयः ॥

सुबो०–टादावुक्तपुंस्कं पुंवद्वा । प्रवृत्तिनिमित्तैक्ये उक्तपुंस्कं नाम्यंतं नपुंसकं पुंवद्वा भवति टादौ स्वरे । नपुंसकादित्युक्तपुंस्कमित्यनेन सह प्रथमांतं संबध्यते । पुंवदिति पुंशब्देन तुल्यमित्यर्थः । केन प्रकारेण पुंशब्देन तुल्यं नुम्ह्रस्वयोरभावाद्वारेणेति । तेन नुम्ह्रस्वयोरभावोऽतिदिश्यते । पुंनपुंसके वर्तमानस्य यस्य शब्दस्य प्रवृत्तिनिमित्तं भिद्यते तस्य टादौ स्वरे न पुंवत् । यथा मधुशब्दो मद्ये नपुंसकः । चैत्रदैत्ययोः पुँल्लिंगः । नात्र पुंवत् । प्रवृत्तिनिमित्तभेदात् । उक्तः पुमान् यस्मिन्नर्थे तद्भाषित-पुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीति उक्तपुंस्कम् । अइकौ चेत्यप्रत्ययः । उक्तं हि । " शब्दप्रवृत्तेर्निमित्तं यत् क्लीबे तच्च पुंसिवत् । तदा भाषितपुंस्कत्वं पटुने पटवे यथा ॥" पुँल्लिंगपक्षे ग्रामणीशब्दो दीर्घांत एव । ततो य्वौ वेति यः । निय इत्याम् । ग्राम-ण्याम् । नपुंसकपक्षे ह्रस्वः । ततो नामिनः स्वरे इति नुम् । पुनरुक्तं च एक एवे-त्यादि । तत्राम्र उक्तपुंस्कमाचार्येणोच्यते । तात्किम् । एक एव यः शब्दः हीति निश्चयेन त्रिषु लिंगेषु वर्तते यः शब्दः त्रिषु लिंगेषु एकमेवार्थमाख्याति कथयति अर्थशब्देन प्रवृत्तिनिमित्तमुच्यते । प्रकृष्टा धीर्यस्य तत्प्रधि प्रधिनी इत्यत्र पूर्वेणा-

नुमानपरमपि यत्वं बाध्यते । प्रायश इत्युक्तत्वात् । अत्रापि प्रकृष्टज्ञानवत्त्वं पुंनपुंसकयोरेकमेवेति । उक्तपुंस्कत्वात्पुंवत्पक्षे य्वौ वेति यः । नपुंसकपक्षे नुम् । सुष्ठु धीर्यस्य तत् सुधि सुधिनी इत्यत्र इयं बाधित्वा प्राग्वन्नुम् । शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुंनपुंसकयोरेकमेव । उक्तपुंस्कत्वात् । पुंवत्पक्षे सुधीशब्दस्य च नेति निषेधादिय् । सुधिया । "मधु मद्ये पुष्परसे । मधुर्वसंते चैत्रे च" इति पुंनपुंसकयोरेकप्रवृत्तिनिमित्तं नास्त्यत्र । किं तु मद्यत्ववसंतत्वादिरूपं भिन्नं भिन्नमेव उक्तपुंस्कत्वाऽभावान्मधुने । मधुन इत्येव न तु मधवे । मधोरित्यादि । य्वृणामिति वा गुणे । हे मधु, हे मधो । सानुशब्दस्य शसादौ पाददंतेत्यनेन वा स्नुरादेशः । "स्नुः प्रस्थः सानुरस्त्रियाम्" इत्युभयलिंगः सानुशब्दः । स्नूनि सानूनीत्यादि । प्रियः क्रोष्टा यस्य तत् प्रियक्रोष्टु । टादौ स्वरे पुंवत्पक्षे रत्वम् । प्रियक्रोष्ट्रा । टा नास्त्रियामिति नाभावे प्रियक्रोष्टुना इति रूपद्वयम् । क्लीबे तु नुमेव । प्रियक्रोष्टुने । एवमन्यत्रापि । आमि नुडेव नित्यत्वात् । सुष्ठु लुनाति तत्सुलु । नपुंसकस्येति ह्रस्वः । शोभनलवनकर्तृत्वं पुंनपुंसकयोरेकमेव । पुंवत्पक्षे य्वौ वेति वः । क्लीबे नुम् । सुल्वा, सुलुना । दधाति तत् धातृ धारणकर्तृत्वं पुंनपुंसकयोरेकमेव । पुंवत्पक्षे रत्वं क्लीबे नुम् । ङसिङसोर्ङितो ङ ङौरित्युत्वम् । धातुः । आमि नुट् । धातृणाम् । ङाविति गुणे । धातरि । य्वृणामिति वा गुणे । हे धातः ॥

तत्त्व०—उक्तपुंस्कमिति । उक्तः पुमान्यस्मिन्नर्थे प्रवृत्तिनिमित्तरूपे तदुक्तपुंस्कं प्रवृत्तिनिमित्त तदस्यास्तीति मत्वर्थीयाकारेण क्लीब नामोच्यते तेन पीलुर्वृक्षस्तत्फल पीलु । पीलुने न तु पीलवे प्रवृत्तिनिमित्तभेदात् । वृक्षे वृक्षत्वव्याप्यजातिः फले तु फलत्वव्याप्यजातिरिति भेदः । उक्त च । "शब्दप्रवृत्तौ निमित्तं यत् क्लीबे तच्च पुंसि चेत् । तत्तद् भाषितपुंस्कत्व पटुने पटवे यथा ॥" इति । उक्तः पुमान् येन शब्देनेति शब्दे तु स्वप्रवृत्तिनिमित्तभेदेऽपि स्यात् । मध्येऽपि पुंस्त्वे य्वौ वेति यत्वम् । बहुयः श्रेयस्यो यस्येति तद्बहुश्रेयसि कुलम् । अत्र नपुंसकह्रस्वत्वं न इयसोर्नेति ह्रस्वमात्रनिषेधादिति श्रीपत्यादयः । अन्ये तु उपसर्जनह्रस्व एव निषिद्ध्यते नपुंसकह्रस्वत्वं स्यादेव । बहुश्रेयसि बहुश्रेयसिनीत्याहुः । मधुनेति माधवमते । मतान्तरे पुनस्त्व । मधवेत्यपि ॥

ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ ॥ २६० ॥ अतिरि । अतिराया, अतिरिणा । अतिराये, अतिरिणे । अतिराभ्याम् । अतिरिणि अतिरासु । प्रद्यु । प्रद्युना, प्रद्यवा । उपगुना, उपगवा । अतिनु । अतिनुना, अतिनावा ॥ इति स्वरान्ता नपुंसकलिङ्गाः ॥

सुबो०—ह्रस्वादेशे संध्यक्षराणामिकारोकारौ । आदिश्यते इत्यादेशः ह्रस्वश्चासावादेशश्च ह्रस्वादेशः । निर्धारणे सप्तमी । जातावेकवचनम् । आदिश्यमानेषु ह्रस्वेषु मध्ये संध्यक्षराणामिकारोकारौ भवतः । एकारांतस्योदाहरणम् । इः कामः स्मृतो येन स स्मृतेः । शोभनः स्मृतेर्यस्य, तत् सुस्मृति । रायमतिक्रांतं यत् कुलं तदतिरि

अत्यादयः क्रांताद्यर्थे इति तत्पुरुषः । अतिरिणा । इह न पुंवत् उक्तपुंस्कत्वाऽभावात् । पुंसि त्वैदंतोऽस्तीति । एवमग्रेऽपि । एकदेशविकृतस्याऽनन्यत्वादेस्मीत्यात्वम् । अतिराभ्याम् । आमि नुट् नामीति दीर्घः । अतिरीणाम् । प्रकृष्टा द्यौर्यस्मिन् तत् । प्रद्यु । प्रकृष्टस्वर्गवत्त्वादिप्रवृत्तिनिमित्तैक्यात् प्रद्योशब्द उक्तपुंस्कः । स एवेदानीं ह्रस्वत्वे प्रद्युशब्दोऽपि उक्तपुंस्क एव । एकदेशविकृतस्यानन्यत्वात् । अतः पुंवद्भावो भवतीत्येके वदंति । माधवमते तु संध्यक्षरांतेषु क्लीबेषु पुंवद्भावो नास्तीति बोध्यम् । नावमतिक्रांतं यत्तदतिनु ॥ इति स्वरांता नपुंसकलिंगाः ॥

तत्त्व०–लोकेशकरसञ्ज्ञेन श्रीक्षेमकरसूनुना । विहितायां हि टीकायां क्लीबलिंगोऽगमच्छुभः ॥

इति स्वरान्तनपुंसकलिंगाः ।

---

**अनडुहश्च ॥ २६१ ॥ पुंसि पञ्चसु शौ चानडुह आमागमः ईपि वा ॥**

सुबो०–अनडुहश्च । अनडुहशब्दस्यामागमः स्यात् । अत्र चतुराम् शौ चेत्यत आम् शाविति पदद्वयमनुवृत्तं पंचास्विति च । अत्र हि चाकारोऽनुक्तसमुच्चयार्थस्तेन ईकारे नाम् । ईप्याम् । वा ईकारे बह्वनडुही । ईपि अनड्वाहि । अनड्वाही । पत्न्यादित्वान्नदादित्वादीप् । तदंतविधिरत्र । प्रियानड्वान् ॥

तत्त्व०–अनडुहश्चेति । अत्र चतुराम् शौ चेत्यत आम् शौ इति पदद्वयमनुवर्त्तते । अत्राहुः । अनडुहश्चेत्यत्रादेरनुवृत्त्यैव लाभात्तदर्थो न चकारः किन्तु योगविभागार्थः । तथा चेति सूत्रेऽनडुह इति साविति नुमिति च पदद्वयमनुवर्त्यानडुहः सौ नुमिति व्याख्येयम् । अत्रार्थे चतुराम् शौ चेत्यतः पृथग्योगकरण लिंगम् । एवं चानडुह इति सूत्रेऽनुक्तसमुच्चयार्थो भिन्नश्चकारोऽनुवर्त्य इति । तत्रेदमवधेयम् । योगविभागानुवृत्तिक्लेशगौरवतः सूत्रस्यैव लघुत्वात् । पुनस्तत्र चकारान्तरस्याश्रयणे आश्रितत्यागे वातिगौरवमित्यालोच्योपेक्षितम् । यदप्युक्तं नन्वल्पविषयेन नुमा बहुविषय आम् बाध्यतां तथा नुमेवेति चेत्सत्यम् । अप्ययोरादित्यतो मण्डूकप्लुत्या आदित्यनुवृत्तेरवर्णात्परतो नुम्विधानात् कथमनुवृत्तावप्याममोः कृतयोरेव नुम् प्रथमाकारादेव किमिति स्यादिति चेच्छृणु । एव सति मिदन्त्यादिति परिभाषा बाध्येत । यथा न बाध्येतानुवृत्तिश्च सार्थिका भवति तथा कर्त्तव्यम् । यदि वाऽऽममोरकृतयोर्नुम् स्यात् नेदमुभयमनुगृहीते स्यादिति कृतयोरेव तयोर्नुम् भविष्यतीति । अत्रापीदं विचार्यम् । प्रथमतो नुम्यपि कृते न कापि क्षतिः, आमकरण उकारोकारस्यैवान्त्यस्वरत्वात्ततः परस्यैवामो विधानात् असम्भवत्वाबाधाच्च बाध्यबाधकभावाभावः ॥

**सावनडुहः ॥ २६२ ॥ अनडुहः सौ नुम् ॥**

सुबो०–सावनडुहः । अस्य नुम् स्यात् सौ परे । नुमयम इत्यतो नुमित्यनुवृत्तमप्ययोरां नित्यमिति सूत्रान्मंडूकप्लुत्या आदित्यनुवर्तते तेनाऽवर्णात्परोऽयं नुम् । अतो विशेषविहितेनापि नुमाम् न बाध्यते अमा च नुम् न बाध्यते ॥

**संयोगान्तस्य लोपः ॥ २६३ ॥ स्यादौ रसे पदांते च ॥**

सुबो०–संयोगान्तस्य लोपः । संयोगेति अंतस्येति च च्छेदः । अनुकरणाद्विभक्तेर्वैकल्पिकत्वादविभक्तिको निर्देशः । नाम्न इति विशेष्यम् । संयोगेति विशे-

षणं विशेषणेन च तदंतविधिः । तेन संयोगांतस्य नाम्नांतस्य लोपो भवति स्यादौ रसे च । पुनः पदांते वर्तमानो नाम्नो धातोश्च यः संयोगस्तस्यांतस्य लोप इति पदांते यथायमर्थः । अचोस्कुन् । संयोगांतस्येति किम् । रुत् । संयोगस्य नाम्नो विशेषणत्वादादेर्न त्वट् । अनः शकटं वहतीति विग्रहे अनसि वहेः क्विप् । अनसो दश्चेति क्विप् यजामिति संप्रसारणम् । अनडुह् सि इति स्थिते । आमूनुमौ । परत्वात् संयोगांतलोपे कृते सिलोपः । अनड्वान् । वसां रसे इत्यनेन नुमो दत्वं न । नुम्विधिसामर्थ्यात् ॥

तत्त्व०—संयोगान्तस्य लोप इति । संयोग अतस्येति छेदः । अनुकरणाद्विभक्तेर्वैकल्पिकत्वादविभक्तिको निर्देशः । तच्च नाम्नो विशेषण तस्मात्तदन्तलाभ । तेन संयोगांतस्य नाम्नोऽन्त्यस्य लोपो रसे पदान्ते वर्त्तमानो य. संयोग इत्येव न तु नाम्नस्तेन धातो. संयोगांतस्यापि पदान्ते भवति नाम्नो विशेषणत्वादादेर्न रतः । संयोगान्ते यस्येति विग्रहलाभार्थमन्तग्रहणमन्यथा सोमसुत्स्थानेत्यत्रापि लोपः प्रसज्जेत इति तु प्रत्येकं संयोगसंज्ञेति पक्षे । समुदायसंज्ञापक्षे तु संयोगोऽन्तो यस्येति विग्रहेऽपि व्यर्थम् । विशेषणत्वेनैव तदन्तलाभात् । लोपशोऽनुवृत्तावपि लोपग्रहण सन्नच्युत इत्यादौ द्वित्वार्थम् । अन्यथा लोपाशी न संधिरिति निषेधः प्रसज्येत ॥

## सभिन्नस्य रान्न ॥ २६४ ॥ अनड्वान् अनड्वाहौ अनड्वाहः ॥

सुबो०—सभिन्नस्य रान्न । रात्परस्य सस्यैव लोपः स्यान्नान्यस्य वर्णस्य । चतुरो वारान् इति चतुः । सुप्रत्ययस्य लोपोऽत्र । सस्येति उर्क् । अमार्ट् ॥

तत्त्व०—सभिन्नस्येति । रात्परस्य सकारमात्रस्य लोपो न तु सभिन्नवर्णान्तरस्येत्यर्थः । तेन ऊर्क् इत्यादि सिद्धम् ॥

## धावम् ॥ २६५ ॥ चतुरनडुहोर्धावमागमो भवति ॥ आम् न । हे अनड्वन् ॥

सुबो०—धावम् । चतुरनडुहोरामागमः स्याद्धौ परे । आमोऽपवादः । चतुरशब्दात्तु गौणे । हे प्रियचत्वः ॥

तत्त्व०—धावमिति । चतुरनडुहोरनुवृत्तेराह । चतुरामित्यादि । चतुरस्तु गौणत्वे । हे प्रियचत्वः । नुम्विधिसामर्थ्यादत्र न ॥

## वसां रसे ॥ २६६ ॥ वसुस्रंसुध्वंसुभ्रंसुअनडुहां दत्वं भवति रसे पदान्ते च ॥ अनडुद्भ्याम् । अनडुत्सु ॥

सुबो०—वसां रसे । बहुवचनमाद्यर्थम् । वसु चात्र प्रत्ययो गृह्यते न धातुर्व्याख्यानात् । उकारानुबंधत्वेन वसुक्वसोः सामान्यग्रहणम् । सौ स इत्यतः स इत्यनुवर्त्य सान्तं व्याख्येयम् । तच्च वसोर्विशेषणं न स्रंसादेर्व्यभिचारात् । नाप्यनडुहोऽसंभवात् । सान्तवस्वंतस्य स्रंसादेश्च नाम्नो अनडुहशब्दस्य दः स्यात् । सांतेति किम् । विद्वान् । नाम्न इति किम् । स्रस्तम् । ध्वस्तम् । खसे चपा इति तः । अनडुत् ॥

तत्त्व०—वसां रस इति । बहुवचनमाद्यर्थं लक्ष्यदर्शनात् ग्रंथान्तरसंवादाच्च । वसुरत्र प्रत्यय एव न धातुः साहचर्यस्य सर्वत्र अनियामकत्वात् । सौ स इत्यतः स इत्यनुवर्त्य तच्च वसोर्विशेषणं कार्यं नान्येषामभिधारासंभवात् । तेन सान्तवस्वन्तस्येति व्याख्येयमतो विद्वानित्यत्र न दत्वं नाम्नोऽधिकारात् । ध्वस्तमित्यादौ न । रभीत्यधिकारेऽपि स्यादिनिरासार्थं रसग्रहणम् । तेन विद्वद्रूप इत्यादि सिद्धिः । रत्वबाधनार्थमनडुहो रस इत्येव न सूत्रितम् । विद्वद्भ्यामित्यत्र झबे जबा इत्यनेन स्थानसाम्याद्दत्वम् । विद्वात्स्वित्यत्र खसे चपा इति तः । स्रदित्यत्र वावसाने इति तदौ । एवं स्थितेऽपि सकारे रूपासिद्धेर्वसादिग्रहणम् । तत्र परत्वात्प्रतिपदोक्तत्वाच्च स्रोर्विसर्ग इत्यनेन बाधनात् । अन्यथा विसर्जनीयस्य स इति सूत्रवैयर्थ्यप्रसंगात् । वसां किम् । हरिभ्याम् । रसे किम् । स्रसौ । पदांते किम् । विदुष्मान् ॥

दादेर्घः ॥ २६७ ॥ आद्योच्चारणे दादेर्हकारस्य घत्वं भवति धातोर्झसे नाम्नश्च रसे पदान्ते च ॥

सुबो०—दादेर्घः । द् आदिर्यस्य स दादिस्तस्य दादेः । अत्र धातुग्रहणद्वयमनुवर्त्य तत्रैकमाद्योच्चारणप्रतिपत्त्यर्थम् । आद्योच्चारणे दादेर्धातोर्हस्य घः स्यात् झसे पदांते च । दादेर्नाम्नश्च हस्य घो रसे पदांते च । ढस्याऽपवादोऽयम् । धातोर्यथा । दोग्धि । अधोक् । आद्योच्चारणे किम् । अधोगित्यत्र यथा स्यात् । दामलिहमात्मानमिच्छतीति दामलिह्यति । नाम्नो य इति यप्रत्ययः । ततः क्विपि दामलिट् । अत्र मा भूदिति ॥

तत्त्व०—दादेर्घ इति । द् आदिर्यस्य स दादिस्तस्य धातोर्झसे इति तेन द्रुह्यादित्यत्र न । ननु अधोक् दामलिहमिच्छन् दामालिडित्यत्राव्याप्त्यतिव्याप्ती इति चेत्सत्यम् । धातुग्रहणद्वयमत्रानुवर्त्तते । एकमाद्युच्चारणलाभार्थं तेनाद्युच्चारणे दादित्वादधोगित्यत्र घत्वम् । तत्र स्वभावान्न घत्वम् । कखगानामन्यतमस्तु दोग्धीत्यसिद्धेर्न कृतः ॥

आदिजबानां झभान्तस्य झभाश्च स्ध्वोः ॥ २६८ ॥ धातोर्झभांतस्यावयवस्यादौ वर्तमानानां जबानां झभा भवंति सकारे ध्वशब्दे नाम्नश्च रसे पदांते च ॥ धुक्, धुग् दुहौ दुहः । धुग्भ्याम् । धुक्षु । आद्योच्चारणे किम् । दाम लिह्यतीति दामलिट्, दामलिड् । दामलिड्भ्याम् । दामलिट्त्सु, दामलिट्सु । अवयवस्य किम् । गर्दभमाचष्टे गर्दभयतीति गर्धप् गर्दभौ । गर्दब्भ्याम् । गर्धप्सु ॥

सुबो०—आदिजबानां झभांतस्य झभाश्च स्ध्वोः । मंडूकप्लुत्या भिदपामित्यतो भि इत्यनुवर्तते पदांते इति च । आदिशब्दस्यावयववाचित्वादवयव्याकांक्षायां धातोर्नाम्नश्चेत्याक्षिप्यते । झभांतस्येति न धातोर्विशेषणं किंत्ववयवस्य । झभांतस्य धातोरवयवस्यादौ स्थिता जबा झभाः स्युः सादौ भादौ पदांते च । ध्वेति ध्वेध्वमोः सामान्यग्रहणम् । धातोर्यथा । धक्ष्यते । धुग्ध्वे । अधुग्ध्वम् । अधोक् । जबानामिति किम् । योत्स्यते । झभांतस्येति किम् । दास्यति । जबानामित्यत्र

दवानां झभा इत्यत्र धभा इत्यपेक्षितमाद्ययोरदर्शनात् । अवयवस्येति किम् । गर्दभमाचष्टे इति गर्दभयति । नाम्नो ञिर्डिदिति ञिप्रत्ययः ततः क्विप्ञिलोपौ । गर्द्धप् । अवयवग्रहणाभावे गकारस्थानेऽत्र घः स्यादित्यर्थः । दुह प्रपूरणे क्विप् । दादेर्घः इति घत्वे झभांतत्वाद्धः । वावसाने इति जबूचपौ । घुग्, घुक् । झबे जबा इति जबूत्वम् । घुग्भ्याम् । धत्वचपूत्वे । घुक्षु ॥

तत्त्व०—आदिजबानां झभान्तस्य झभाश्च स्ध्वोरिति । अत्र धातोर्झस इति निवृत्तं स्ध्वोर्ग्रहणसामर्थ्यात् । झभान्तस्येति न धातोर्विशेषणं किं त्ववयवस्य । तेन गर्दभमाचक्षाणः गर्धाबिति सिद्धम् । आदिजबानामिति । आदयो जबा आदेः परा आदावुपदेशावस्थायां जबा इति पक्षत्रयमपि न । गर्द्धबित्यत्र गकारेऽतिव्याप्तेर्न प्रथमः । धुगित्यत्राव्याप्तेर्न द्वितीय. । पुनर्गर्द्धबित्यत्राव्याप्तेर्न तृतीय । किन्तु आदौ धातुसंज्ञाप्रवृत्तिकाले इति स्थिते दामलिडित्यत्र दकारे गर्द्धबित्यत्र गकारे चातिव्याप्तिरिति चेन्न । अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषाश्रयणात् । भिदपामित्यतो मडूकप्लुत्या भीत्यनुवृत्तेराह । भकारे चेति ॥

हो ढः ॥ २६९ ॥ हकारस्य ढत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदांते च ॥ लिट्, लिड् लिहौ लिहः । लिट्सु, लिट्त्सु ॥

सुबो०—हो ढः । धातोर्हस्य ढः स्यात् झसे पदांते च । नाम्नो हस्य ढः स्याद्रसे पदांते च । धातोर्यथा । लेक्ष्यति । अलेट् । लिह आस्वादने क्विप् । सौ परत्वात् ढत्वे सिलोपः जबत्वचपत्वे । लिट्, लिड् । सुपि ढस्य चपत्वे कृते टनात्सस्य वेति धुट् । धुटः चपत्वेन ततः शसे चपस्य द्वितीयो वेति तस्य थो न । कुक्टुक्वर्जितस्येत्युक्तत्वात् ष्टुत्वं तु तकारस्य न शंक्यमेव । स्यादीनां सुपित्सस्य नेति निषेधात् । लिट्त्सु । धुडभावेऽपि शसे चपस्येति टस्य ठो न पूर्ववत् । ष्टुत्वं तु स्यादीनामिति निषिद्धमेव ॥

तत्त्व०—हो ढ इति । टठडामन्यतमस्तु लेढीत्याद्यसिद्धेन कृत. । तथा सति झभान्तत्वाभावात्तयोर्द्वयस्याप्रवृत्तेः ॥

द्रुहादेर्वा ॥२७० ॥ द्रुहमुहस्नुहस्निहां वा घत्वम् ॥ ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड् द्रुहौ द्रुहः । ध्रुग्भ्याम्, ध्रुड्भ्याम् । ध्रुक्षु, ध्रुट्सु, ध्रुट्त्सु । एवं । मुहस्नुहस्निहः । विश्ववाट्, विश्ववाड् ॥

सुबो०—द्रुहादेर्वा । द्रुहमुहस्नुहस्निहां घत्वं वा । द्रुह जिघांसायाम् । मुह वैचित्ये । ष्णुह उद्गिरणे । ष्णिह प्रीतौ । द्रुहेर्दादित्वान्नित्यं प्राप्ते अन्येषामप्राप्ते विभाषेयम् । द्रुहादीनां हस्य घः स्यात् धातोर्झसे पदांते च । नाम्नो रसे पदांते च । पक्षे ढः । धातोर्यथा । द्रोढा, द्रोग्धा । अदोध्रोट्, अदोध्रोक् । विश्वं वहतीति विग्रहे भजां विणिति विण्प्रत्ययः । विश्वं वाहयतीति ण्यंतात् वा विण्प्रत्ययो बोध्यः ॥

तत्त्व०—द्रुहादेर्वेति । ननु द्रुहादेर्गणनिर्दिष्टत्वादस्य श्तिपेति निषेधाद्यङ्लुकि दोध्रुगित्यत्र न प्रवृत्तिरिति चेन्न । तस्यानित्यत्वाभ्युपगमात् ॥

वाहौ शसादौ स्वरे ॥ २७१ ॥ वाहो वकारस्यौ भवति शसादौ स्वरे परे तद्धितयस्वरयोरीपीकारे च ॥ विश्वौहः । विश्वौहा विश्ववाड्भ्याम् । विश्ववाट्सु, विश्ववाट्त्सु ॥

सुबो०—वाहौ शसादौ स्वरे । वकाराकारविशिष्टस्य वाशब्दस्येत्यर्थः । तनादिति धुट्चपत्वे । विश्ववाट्त्सु ॥

तत्त्व०—वाहौ शसादौ स्वरे । वाहो वा हौ इति छेदः । वाहो वा गृहीतोऽत्र न तु निपातो व्याख्यानात् इत्यभिमेत्याह । वाशब्दस्येति वार्य्यूह इत्यादिप्रयोगास्तूहतेः क्विपि वहतस्त्वकारान्ते उपपदे विणोऽसंभवः फणीन्द्रेणांगीकृतत्वात् ॥

सहेः साढि ॥ २७२ ॥ साढि रूपे सति सहेः सस्य षो भवति ॥ तुराषाट्, तुराषाड् तुरासाहौ तुरासाहः । तुराषाड्भ्याम् । तुराषाट्सु ॥ इति हांताः ॥

सुबो०—सहेः साढि । षत्वमनुवर्तते । तुरं वेत्यवेगं सहते इति विग्रहे विण् । तुरं त्वरितं साहयत्यभिभवत्यरीनिति विग्रहे तु ण्यंतात् क्विप् । सहादित्वात् पूर्वपदस्य दीर्घः । तुराषाट् ॥

तत्त्व०—सहेः साढीति । सहेरिति किम् । सह ढेन वर्त्तत इति सढः यस्य नाम्नि ढशब्दोऽस्ति । यथा षण्ढ इति सढस्यापत्य साढिरित्यत्र मा भूत् ॥

दिव औ ॥ २७३ ॥ दिवो नाम्न औकारादेशो भवति सौ परे ॥ सुद्यौः सुदिवौ ॥

सुबो०—दिव औ । समानाद्धेर्लोप इत्यतो मंडूकप्लुत्या अधातोरित्यनुवर्तते तेन धातोर्न भवति । अक्षैर्दीव्यतीति अक्षद्युरिति क्विबंतादिवेर्डिवित्ति डिवुप्रत्ययः । वर्णमात्रविधित्वेन स्थानिवत्त्वाभावाद्धसेप इति सिलोपो न । सुष्ठु द्यौर्यस्मिन् स सुद्यौः ॥

तत्त्व०—दिव औ । निरनुबंधकग्रहणे सानुबंधकस्य ग्रहण नेति परिभाषया दिवु क्रीडादावित्यस्य धातोर्न ग्रहणम् । तेनाक्षद्यूरित्यादौ परत्वाद्वस्यौत्वे एकदेशविकृतन्यायेन प्राप्तमप्यौत्वं न ॥

उ रसे ॥ २७४ ॥ दिव उदादेशो भवति रसे पदान्ते च ॥ सुद्युभ्याम् । सुद्युषु । इति वांताः । चतुर्शब्दो नित्यं बहुवचनांतः ॥

सुबो०—उ रसे । अधिकृतस्य नाम्नो दिवशब्देन विशेषणात्तदंतविधिः । दिवो नाम्नः उः स्यात् रसे पदांते च । तदंते विमलद्यु ॥ इति वांताः ॥

तत्त्व०—उ रसे । उः रसे इति छेदः । पदान्ते चेति पूर्णो ण इति सूत्रादन्त इत्यनुवृत्तमत्र पदान्तपरतया व्याख्येयमित्याशयः । विपरीतनिर्देशस्तु प्रयोजनान्तरार्थः । तत्त्वाग्रे स्फुटीकरिष्यते । वार्या इति सूत्रं तु व्यर्थमेव द्योशब्दादेव द्यामिति सिद्धेः ॥

**चतुराम् शौ च ॥ २७५ ॥** चतुर्शब्दस्यामागमो भवति पंचसु शौ च नत्वीति ॥ चत्वारः । चतुरः । चतुर्भिः ॥

सुबो०—चतुराम् शौ च । नाम्नश्चतुर्शब्देन विशेषणात्तदंतविधिः । चकारेण पंचस्विति संबध्यते । चतुरित्यविभक्तिको निर्देशः । तदंते प्रियचत्वाः । चतेरूरित्युर्प्रत्यये चतुर्शब्दः ईमावितीकारे तु न ॥

तत्त्व०—चतुराम् शौ चेति । चतुः आम् शौ चेति छेदः । चतुरिति लुप्तषष्ठीक पदम् । चकारेण पंचस्विति लब्धम् । नाम्नश्चतुरो विशेषणात्तदन्तलाभः ॥

**रः संख्यायाः ॥२७६॥** रेफांतसंख्यायाः परस्यामो भवति ॥ णत्वं द्वित्वं च । चतुर्णाम् । चतुर्षु । प्रियाश्चत्वारः प्रियाणि वा चत्वारि यस्यासौ प्रियचत्वाः । हे प्रियचत्वः । प्रियचत्वारौ प्रियचत्वारः । प्रियचतुरः। गौणत्वे नुट् न । स्वार्थावच्छिन्नपरार्थावलम्बनं गौणत्वम् । प्रियचतुराम् । कमलं कमलां वाऽऽचक्षाणः कमल् कमलौ कमलः। फल् फलौ । फल्भ्याम् ॥ इति लांताः ॥

सुबो०—रः संख्यायाः । नाम्नो रकारेण विशेषणात्तदंतविधिस्तेन नांतग्रहणम् । णत्वं रहाद्यपो द्विरिति द्वित्वम् । चतुर्णाम् । यकुष्विति सूत्रे रकारपठनान्न विसर्गः। प्रियाश्चत्वारः पुरुषाः प्रियाणि चत्वारि कुलानि वा यस्याः सा स्त्री प्रियचत्वाः । तदंतत्वादाम् । हे प्रियचत्व इत्यत्र धावमित्यम् । गौणत्वे तु नुद् न । गुणत्वे रेफांतसंख्याया आमो नुड् न । अन्यपदार्थवृत्तित्वेन संख्याभिधायित्वाभावात् । प्राधान्ये भवत्येव । परमचतुर्णाम् । इति रान्ताः । "कमलं जलपद्मयोः" इति विश्वः। "कमला श्रीर्हरिप्रिया" इत्यमरः । कमलं कमलां वाऽऽचक्षाण इति नाम्नो णिर्डिदिति ञिप्रत्ययः । ञ्यंतात् क्विपि ञेरिति ञिलोपः । कमल् । षत्वम् । कमल्षु । फलमाचक्षाण इति फल् । तोयमाचक्षाण इत्यादौ तु यवयोर्वसे इति यलोपे तो इति स्यादतो यांते नोक्तः । इति लांताः ॥

तत्त्व०—रः संख्याया इति । र इति किम् । त्रिंशतम् । विंशत्याद्याः सदैकत्वे इति नियमेऽपि संख्यार्थे द्विबहुत्वे स्त इत्यनेन संख्याया द्विबहुत्वयोरपि संभवात् । संख्याया इति किम् । वाराम् । रेफान्तसंख्याया विहितस्यामो नुडिति व्याख्यानमित्याशयेनाह । गौणत्व इति । गौणत्वे वान्यपदार्थवृत्तित्वेन संख्याभिधायित्वाभावात् ष्णः संख्याया इत्येकयोगस्तु न । कुतो रेफान्ततोऽपि जश्शसोर्लुक् स्यात् । यदि स्वेकदेशोऽप्यनुवर्त्तते इत्याश्रीयते तदैकयोगोऽपि साधुरेव । कमला लक्ष्मीः ॥

**मो नो धातोः ॥ २७७ ॥** मांतस्य धातोर्मस्य नो भवति झसे पदांते च ॥

सुबो०-मो नो धातोः । मांतस्य धातोर्नः स्यात् झसे पदांते च ॥

तत्त्व०-मो नो धातोरिति । नस्य लोपो नेति । नाम्नो नो लोपश् धावित्यत्र नाम्न इत्यस्यानुवृत्तावपि पुनर्नामग्रहणान्नामसंज्ञाप्रवृत्तिकालेनान्तार्थमित्याशयः ॥

वमयोश्च ॥२७८॥ प्रशान् प्रशामौ प्रशामः । प्रशान्भ्याम् । प्रशान्सु । कः कौ के । शेषं सर्ववत् ॥

सुबो०-वमयोश्च । मांतस्य धातोर्नकारादेशः स्यात् वकारे मकारे च परे । षष्ठ्या निर्दिष्टत्वादंत्यस्यादेशः । सिप्रत्यये परत्वान्नकारे कृते सिलोपः । प्रशानित्यत्र नाम्नो नो लोपशिति नलोपो न । नत्वस्यासिद्धत्वात् । यद्वा नाम्नो न इति सूत्रे पूर्वमेवोपपादितत्वात् । शमु उपशमे क्विप् । अमांतस्येति दीर्घः । प्रशाम्यतीति प्रशान् । वमयोस्तु, चक्षण्वहे । चक्षणमहे । पदांते च । अशंशन् । अचस्कन् । पदांते किम् । प्रशामौ । धात्वधिकारादेव धातोरिति लभ्यमाने पुनर्धातुग्रहणान्नामधातोर्न । अयमिवाचरन् इदाम् । प्रशान्भ्यामित्यादौ नश्चेति नकारस्यानुस्वारे विशेषाभावात्सामर्थ्याच्च नानुस्वारः । कायतेर्डिमिति डिमप्रत्यये निष्पन्नः किम्शब्दः । त्यदादेरित्यत्वे कृते सर्वशब्दवद्रूपम् ॥

इदमोऽयं पुंसि ॥ २७९ ॥ इदमः पुंसि सावयं भवति ॥ अयम् ॥

सुबो०-इदमोऽयं पुंसि । सावित्यनुवर्तते । सौ स इत्यतः सिलोपे । अयम् । पुंसि किम् । इदम् । नन्वत्र लुकि न तन्निमित्तमिति परिभाषया न भविष्यति । सत्यम् । तस्या अनित्यत्वज्ञापनार्थं पुंसीति । तेन प्रियतिसृ इत्यादि सिद्ध्यति । इंदेः कमिर्नलोपश्चेति कम्प्रत्यये इदम्शब्दः ॥

तत्त्व०-इदमोऽयं पुसीति । इदमः किम् । यः । पुसीति किम् । इदम् । न चात्र लुकि न तन्निमित्तमित्येव भविष्यतीति चेत्सत्यम् । तस्य अनित्यत्वज्ञापनार्थम् । तेन हे प्रियतिसृ इत्यादि सिद्धम् । अयमिति हसेप इति सेर्लोपः ॥

दस्य मः ॥ २८० ॥ त्यदादेर्दकारस्य मत्वं भवति स्यादौ ॥ इमौ इमे । त्यदादेः संबोधनाभावः । इमं इमौ इमान् ॥

सुबो०-दस्य मः । त्यदादेर्दस्य मः स्यात्स्यादौ विभक्तौ । स्यादौ किम् । अस्यापत्यमैदमः । अमुमिच्छतीत्यदस्यति । ननु द्वावित्यत्र कस्मान्मत्वं न । शृणु । स्यादाविति दस्य विशेषणम् । अर्थवशाद्विभक्तिविपरिणाम इत्युक्तत्वात् स्यादिपरस्य दस्येत्यर्थः । येन नाव्यवधानं तेन व्यवहितेऽपि उक्तत्वादकारव्यवधाने सति न त्र द्विव्यवधाने । क्वचित् द्वयोरिति निर्देशाद्वा न । त्यदाद्यत्वे मत्वे औत्वे च । इमौ । त्यदादेः संबोधनं नास्तीत्युत्सर्गः । अप्रचुरप्रयोगादर्शनमेवात्र मूलं भाष्ये तु हे स इत्युक्तम् ॥

तत्त्व०—दस्य म इति । ननु द्वावित्यत्र किमु न मत्वमिति चेन्न । दो म इति वक्तव्ये अकारोच्चारणमकारपरस्यैव दस्य मत्वार्थं । अत्राहुः । अत एव त्यदिति त्यदादेर्न चात्र त्यदाद्यत्वं बाधकं परत्वान्मत्वप्रसङ्गात् । अत्वावकाशो द्वौ मत्वान् इमौ स इत्यत्रोभयप्रसङ्गे परत्वान्मत्वं न । चात्वविधौ त्यदादिग्रहणं व्यर्थं इदमादेरीति वक्तुं युक्तं उत्तरत्र चरितार्थत्वादिति । अत्रेद वक्तव्यम् । स इत्यादौ कृतेऽपि मत्वे पश्चात्त्यदाद्यत्वेन रूपसिद्धेरनिवार्यत्वात् । नच मत्वविधिसामर्थ्यादेवात्वं नेति वाच्यं मत्वविधेरीमावित्यादौ चरितार्थत्वेन ज्ञापनायोगात् पर्जन्यवल्लक्षणप्रवृत्तेरिष्टत्वाच्च स नपुंसकमित्यादिनिर्देशाच्चेति । त्यदादेः संबोधनाभाव इति औत्सर्गिकश्चायम् । हे स इति भाष्यप्रयोगात् । अभावस्तु प्रचुरप्रयोगे संबोधनाभाव इत्येव परतया व्याख्येयः । यत्त्वाहुः । " इदमस्तु संनिकृष्टे समीपतरवर्त्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥ " इति वचनादेवंविधस्यार्थस्याभिमुखीकरणानर्हत्वादिति तदापाततः संनिकृष्टादिशब्दानामिव इदमादीनामपि संबोध्यसमर्प्यकत्वे बाधकाभावात् । विप्रकृष्टस्यापि बुद्ध्या संनिधापितस्य बहुशः संबोधनदर्शनाच्च । तथा भट्टिः । " हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः ॥ "

**अन टौसोः ॥ २८१ ॥** इदमोऽनादेशो भवति टौसोः परयोः ॥ अनेन ॥

सुबो०—अन टौसोः । इदमोऽयमित्यत इदम इत्यनुवर्तते । टेनेतीनादेशे । अनेन ॥

तत्त्व०—अन टौसोरिति । अनपीति तु लाघवेऽपि प्रतिपत्तिगौरवादुपेक्षितम् । तथा हि । टा इत्याकारमारभ्य सुपः पकारेण प्रत्याहाराश्रयणे इतरेतरविभक्तावन्यविधानात्परिशेषाट्टौसोरेव लाभः आपोऽपि स्यादाविति विशेषणेन वारणम् । इत्यादि प्रतिपत्तिगौरवम् । तस्माद्यथान्यासमेव ॥

**स्भ्यः ॥ २८२ ॥** सकारे भकारे च परे इदमोऽकारो भवति कृत्स्नस्य ॥ अद्भिः । आभ्याम् ॥

सुबो०—स्भ्यः । स् च भ् च अनयोः समाहारः स्भ् तस्मिन् स्भि सकारभकारादौ स्यादौ इदंशब्दस्य अः स्यात् । स्भाशिति सुवचं यतः सर्वस्य स्यात् । अद्भीत्यात्वे । आभ्याम् ॥

तत्त्व०—स्भ्य इति । स् च भ् चानयोः समाहारः स्भ् तस्मिन् स्भि अ इति छेदः । यस्मिन्विधिस्तदादौ वर्णग्रहणे इति स्यादिभादिग्रहः । ननु अः षष्ठीनिर्दिष्टस्येत्यन्तस्य भविष्यति । तस्यानित्यत्वात् स्भाशित्यस्यैव सुवचत्वात् ॥

**भिस् भिस् ॥ २८३ ॥** इदमदसोर्भिस् भिसेव भवति न मकारस्याकारः ॥ एभिः । अस्मै । अस्मात् । अस्य अनयोः एषाम् । अस्मिन् एषु ॥

सुबो०—भिस् भिस् । इदमोऽदसश्च भिसेव भवति । भिसो भिस्विधानं भ्य इत्यबाधनार्थम् । ऐस्भीत्येत्वे । एभिः । अदसस्तु । अमीभिः ॥

तत्त्व०—भिस् भिसिति । फलं किमित्याह । नमस्कारस्येति । ह्रस्वो वेत्यनुवर्त्य तस्य व्यवस्थितत्वादिह न । इमकेन इमकाभ्यां इमकैः ॥

**इदमेतदोरन्वादेशे द्वितीयाटौस्स्वेनद्वा ॥ २८४ ॥** एनं एनौ एना-

न्। एनेन। एनयोः। किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। यथाऽनेन व्याकरणमधीतं एनं छंदोऽध्यापय। नोपधायाः। नाम्नो नो लोपशु धौ। राजा राजानौ राजानः। हे राजन्। अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ श्चुत्वम्॥

सुबो०—इदमेतदोरन्वादेशे द्वितीयाटौस्स्वेनद्वा वक्तव्यः। द्वितीयायां टौसोश्च परतोऽन्वादेशे इदमेतदोरेनदादेशो वा स्यात्। अन्वादेशमाह। किंचित्कार्यं विधातुमुपात्तस्य गृहीतस्य शब्दस्य कार्यांतरं विधातुं बोधयितुं पुनरुपादानं ग्रहणं सोऽन्वादेश उच्यते। "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्यात्" इत्यत्र तु ईषदर्थादयो न विधीयंते किंत्वनूद्यंते इति नात्रैनदादेशः। एवं "नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं मापय।" इत्यत्रापि भीरुत्वस्यानुवाद्यत्वं बोध्यम्। यथा अनेन पुरुषेण व्याकरणमधीतं पठितं एनं पुरुषं त्वं छंदोऽध्यापय पाठय। इति मांताः। राजते इति राजा। कन्युवृषितक्षिराजिधन्विद्युप्रतिदिव इति कन्प्रत्ययः। परत्वान्नोपधाया इत्युपधादीर्घः हसेपः इति सिलोपः। ततो नाम्नो नो लोपशिति नलोपः। शसि तु अल्लोपः स्वरे इत्यल्लोपे कृते श्चुत्वम्॥

तत्त्व०—व्यवस्थितत्वादपरमिह फलमित्याह। इदमेतदोरिति। किंचित्कार्यं विधातुमिति कर्तुं अपूर्वं बोधयितुमित्यर्थः। उपात्तस्य गृहीतस्येत्यर्थः। कार्यान्तर अन्यत्कार्यमित्यर्थः। पुनरुपादानं ग्रहणमित्यर्थः। ईषदर्थे क्रियायोगे इति श्लोके तु ईषदर्थादयो न विधीयन्ते किन्तु अनूद्यंते। तेन एनादेशो न। एतेन नक्तं भीरुरयं त्वमेव तदिमं राधे गृह प्रापयेत्यपि व्याख्यातम्। भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वात्। ननु विधेयत्वेन यज्वन इति वान्तसंयोगत्वान्नलोपः। आत्मन इति मान्तसंयोगोऽत्र य्वोर्विहस इति॥

जञोर्ज्ञः॥२८५॥ जकारञकारयोर्योगे ज्ञो भवति॥ राज्ञः। राज्ञा। राजभ्याम्। नलोपाशि न विभक्तिकार्यम्। पञ्चस्विति ज्ञापकात्। राजभिः। वेङ्योः। राज्ञि, राजनि राज्ञोः राजसु। एवं वृषादयः। यज्वनः। यज्वना। आत्मनः। आत्मना। प्रतिदिवानौ। अल्लोपे कृते॥

सुबो०—जञोर्ज्ञः। उभयोर्योगे ज्ञ इत्यक्षरं भवति। राज्ञः। नस्य लोपशि न विभक्तिकार्यम्। पंचस्विति ज्ञापकात्। अतो राजभ्यामित्यत्राद्धीत्यात्वं राजभिरित्यत्र भ्स्य इत्यत्वं राजभ्य इत्यत्रैस्भीत्यैत्वं च न वेङ्योरिति चोपधालोपे। राज्ञि, राजनि। वृषा इन्द्रः कन्नंतः। इष्टवानिति यज्वा। क्विप्वनिप्ड्डा इति वनिप्प्रत्ययः अम्वयुक्तादित्युक्तत्वान्नोपधालोपः। यज्वनः। अततीत्यात्मा। अततेर्मनिण् इति मनिण्प्रत्ययः। अम्वयुक्तादित्युक्तत्वान्नोपधालोपः। आत्मनः सुष्ठु धर्मो यस्यासौ सुधर्मा। धर्मादित्यन् अम्वयुक्तादित्युक्तत्वान्नोपधालोपः। सुधर्मणः। प्रतिदीव्यतीति प्रतिदिवा। कन्नंतः शसि अल्लोपः स्वरे इत्यल्लोपे कृते॥

**र्व्वोर्वि हसे ॥ २८६ ॥** धातोरिदुतो दीर्घो भवति रेफवकारयोर्हस्परयोः ॥ प्रतिदीव्नः । प्रतिदीव्ना । प्रतिदिव्भ्याम् ॥

सुबो०—र्व्वोर्वि हसे । र् च व् च अनयोः समाहारो र्व् तस्मिन् र्वि । रेफवकारयोः परतः पदांते च धातोरिकारोकारयोर्दीर्घः स्यात् । कीदृशयोः हसः परो ययोस्तौ हस्परौ तयोर्हस्परयोः । प्रतिदीव्नः । नाम्नो न इति नलोपे प्रतिदिव्भ्याम् ॥

तत्त्व०—र्व्वोः र्वि हस इति छेदः । इश्च उश्च य् तयोः र्व्वोः । र् च व् च - एतयोः समाहारः र्व् तस्मिन् र्वि । हस इति रेफवकारयोर्विशेषणमित्याशयेनाह । हसपरयोरिति ॥

**श्वादेः ॥ २८७॥** श्वादेर्व उत्वं प्राप्नोति शसादौ स्वरे ईपीकारे च ॥ शुनः । शुना श्वभ्याम् । युनः । युना युवभ्याम् । मघवा मघवानौ मघवानः । मघोनः । मघोना ॥

सुबो०—श्वादेः । श्वयुवमघोनां व उः स्यात् शसादौ स्वरे ईपि प्रत्यये ईमाविनीकारे च । प्रातिपदिकग्रहणे लिंगाभिधायिस्त्रीप्रत्ययविशिष्टस्यापि ग्रहणमिति परिभाषा विभक्तिनिमित्ते कार्ये न प्रवर्त्तते । अतो युवतीः पश्येत्यादौ नोत्वम् । अकारसहितस्य वस्योत्वम् । श्वा कुक्कुरः । युवा तरुणः । युवन्शब्दे वस्योत्वे कृते दीर्घत्वम् । यूनः । मघवा इन्द्रः । वस्योत्वे ओत्वे च कृते । मघोनः ॥

तत्त्व०—श्वादेरिति । ननु युवतीः पश्येत्यत्र कथं नोत्वं नामग्रहणे लिंगाभिधायकप्रत्ययाविशिष्टस्य ग्रहणमिति परिभाषाश्रयणादिति चेत्सत्यम् । विभक्तिनिमित्ते कार्ये लिंगविशिष्टग्रहणं नेति निषेधात् । सस्वरस्य वस्योत्वं अल्लोपेऽपि सिद्धे ङौ विकल्पात् ॥

**अर्वणस्त्रसावनञः ॥ २८८ ॥** नञा रहितस्यार्वन्नंतस्य तृ इत्यन्तादेशः स्यान्न तु सौ ॥

सुबो०—अर्वणस्त्रसावनञः । ननु ऋधातोर्विंप्रत्यये गुणे च अरिति रूपं तस्माद्वतुप्रत्यये अर्वतावित्यादि सेत्स्यति । ऋधातोरेव वनिप्प्रत्यये त्वनर्वेति सेत्स्यति । रूढिशब्दश्चायम् । "वाजिवाहार्वगंधर्वहयसैंधवसप्तयः ।" इत्यमरोक्तत्वात्ततश्चार्थोऽपि न भिद्यते । किमनेन सूत्रेणेति चेत् उच्यते । नांततांतयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञ्युपपदे च नांतस्य प्रयोगोऽन्यत्र तु तांतस्य प्रयोगो भवतीति व्यवस्थार्थं सूत्रम् ॥

तत्त्व०—अर्वणस्त्रसावनञ इति । ऋधातोर्विंचि गुणे च अरिति रूपं तस्मान्मतौ अर्वन्ताविति । रूढिशब्दश्चायम् । "वाजिवाहार्वगंधर्वहयसैंधवसप्तयः ।" इत्यमरकोशात् । तथा च श्रीहर्षः । "वाहैरलुप्यत सहस्वदगर्वगर्व" इति प्रायुङ्क्त ॥

**न्रितो नुम् ॥ २८९ ॥** उकारानुबन्धस्य ऋकारानुबन्धस्य च नु-

मागमो भवति पुंसि पंचसु ॥ अर्वंतौ अर्वन्तः । अर्वंतं अर्वन्तौ अर्वतः । अर्वता अर्वद्भ्याम् । अनञः किम् । अनर्वाणौ । असौ किम् । अर्वा ॥

सुबो०—त्रितो नुम् । उश्च आ च वरौ वराविंतौ यस्य स त्रित् तस्य त्रितः । उदितः ऋदितश्च नुम् स्यात् । सो नः पुंस इत्यतो मंडूकप्लुत्या पुंस इत्यनुवर्तते । तेन पुंसि पंचस्वित्यर्थः । धातोर्नलोपिनोऽञ्चतेरेव अंचेर्दीर्घश्चेत्यतोऽञ्चेरित्यपकृष्यते । तत्रैव वांचेरिति विभज्य पंचस्विति नुमिति चानुवर्तते । अंचेरिति निर्देशात् नलोपिनो ग्रहणम् । धातोश्चेद् त्रित्कार्यं तर्हि अंचतेरेवेति नियमार्थमिदम् । तेन स्रंसादीनामीप्नुमौ न । ऋदित्वान्नुम् । अर्वंती । नञ्तत्पुरुषे तु न अर्वा अनर्वा यज्ववत् ॥

तत्त्व०—त्रितो नुमिति । उश्च आ च वरौ तौ इतौ यस्य स त्रित् तस्य त्रितः । अत्राधातोरेव अंचतेर्नुम्विधानात् । अन्यथा त्रित्त्वादेवाचतेरसिद्धे नुम्विधानं व्यर्थम् । अतः सिद्धे सति पुनर्नुम्विधानं व्यर्थम् । धातोश्चेद् त्रित्कार्यं तर्ह्यंचेतेरेव तेन स्रदित्यादौ न ॥

इतोऽत्पंचसु ॥ २९० ॥ पथिन् मथिन् ऋभुक्षिन् शब्दानामिकारस्याकारादेशो भवति पुंसि पंचसु शौ च ॥

सुबो०—इतोऽत्पंचसु । पथां टेरित्यतः पथामित्यनुवृत्तम् । पथ्यादेरितोऽत् स्यात् पुंसि पंचसु शौ च । शौ सुपंथानि । पुंसि किम् । सुपथी । पतस्थश्चेति चादिन्प्रत्ययः । पथिन् । संमन्थतेः किन्प्रत्यये मथिन्शब्दः । "ऋभुक्षः स्वर्गवज्रयोः" ततोऽस्त्यर्थे इन्प्रत्यये । ऋभुक्षिन् ॥

तत्त्व०—इतोऽत्पचस्विति । पथां टेरित्यतः पथामित्यनुवृत्तेर्बहुवचननिर्देशात्तत्रैव पथ्यादिलाभः । अत्राद्वचनं तु चिंत्यम् । इत आ पंचस्वित्येव सुवचम् । तथा च आ साविति सूत्रमपि न कर्त्तव्यं भवति । तपरकरणं तु दीर्घनिवृत्त्यर्थम् । तथा च पंथानमिच्छतीति वाक्ये पथीनतीति । ततः क्विपि पद इत्याकारलोपः । एकदेशविकृतस्यानन्यत्वादा साविस्यत्र नुट् । पंथाः । इतोऽत्पंचास्वित्यत्वं न भवति । इत्परत्वात् य्वौ वेति बाधित्वा नित्यत्वात्थो नुट् तत संयोगपूर्वत्वादियू । पथियौ । शसादौ पथा टेः । पथः । पथा । भ्यामादौ पथिभ्यामित्यादि । एवं चाद्वचनमा साविति सूत्र च सार्थक भवति । अन्ये तु पथी पथ्यौ ऋभुक्षीः ऋभुक्षियावित्यादि उदाजह्रुः । गौणत्वादात्वादि नेति एकदेशविकृतन्यायोऽपि मुख्ये चारितार्थत्वान्न । अन्यथा सर्वमिच्छन्सर्वे इत्यत्राप्यकः स्यात् । तपरत्वं तु मुखसुखार्थमित्याहुः । तत्र केचित् पदकार्ये गौणमुख्यन्यायो न नामकार्ये । अन्यथा गां वाहीकं पश्येत्यादावात्वं न स्यात् । अकस्तु सर्वादिपाठाभावान्न । तपरस्यापि सार्थक्यमेव अन्यथा इरिदित्येवावक्ष्यत् । तपरे तु पथामिति निर्देशेन नान्तप्रकृत्यनुकरणान्नान्तानामेव पथ्यादीनामात्वादिप्रकृतेनान्तत्वाभावान्नेति । न चैकदेशविकृतन्याय एवमपि दुर्वार इति वाच्यम् । नान्तत्वविवक्षासामर्थ्यादेव प्रथमं नुटि तद्बाधनात् । एवं च पथा इत्यत्रापि नांतत्वविवक्षासामर्थ्यादेव नुट् तस आत्वम् । अन्यथा नित्यत्वाद्विशेषविहितत्वाच्च पूर्वमात्वेऽनान्तत्वाद्य्यादेशो न स्यात् ॥

थो नुट् ॥ २९१ ॥ पथिमथोस्थस्य नुट् स्यात् पुंसि पंचसु शौ च ॥

सुबो०—थो नुट् । पथ्यादेस्थस्य नुट् स्यात् पुंसि पंचसु शौ च । थस्येति किम् । ऋभुक्षाः । पुंसि किम् । सुपथि ॥

तत्त्व०—थो नुडिति । अत्र द्वयोरेवानुवृत्तिः । तृतीयेऽप्यस्यासम्भवात् । ननु थस्य नुडिति सूत्र्यता थस्येति निर्देशादकारोऽपि तथा च किमिति सूत्रेणेति चेत्सत्यम् । ऋभुक्षा इति न सिध्येत् ॥

आ सौ ॥ २९२॥ पथिमथिऋभुक्षां टेरात्वं भवति सौ ॥ पंथाः पंथानौ पंथानः । हे पंथाः । पंथानम् ॥

सुबो०—आ सौ । पथां टेरिति पदद्वयमनुवर्तते । पथ्यादेष्टेरात्स्यात् सिप्रत्यये । सौ किम् । पथिभ्याम् ॥

तत्त्व०—आ साविति । अत्र पथां टेरिति पदद्वयमप्यनुवर्तते इत्यत आह । टेरात्वमिति । अत्राहुः । पथ्यादीनामन्तस्यात्व भवति । अन्त्यस्येति षष्ठीनिर्दिष्टस्येति परिभाषया लभ्यते इति । अत्र साक्षादनुवृत्तं टेरित्युक्त्वा परिभाषालब्धस्यांतस्येत्यस्यानुकरणे गौरवात् । आ आ इति प्रश्लेषादनुनासिकस्यापि स्थाने विहितानुनासिक. । ननु किमर्थमात्व इतोऽदित्यत्वेनोपधाया इति दीर्घत्वे सौ रसेन लोपशि पथ्याद्विसर्गे पंथा इति रूपसिद्धेरिति चेन्न । धौ नलोपशोऽभावे हे पथा इति न सिद्ध्येत् । राजेत्यत्रानिष्टापत्तेश्च असावित्येव तु न कृतं नकारमात्रस्यात्वे सवर्णदीर्घत्वेन सिद्धेऽपि लि ? इति चेन्न । अपथिशब्दस्य पथा इत्यसिद्धेः । टेरनुवृत्तौ तु मुख्येऽपि रूपासिद्धेश्च । स्त्रियामिति सुपथीति आ सावित्यात्व थो नुडिति लिङ्गविशिष्टपरिभाषया प्राप्तमपि विभक्तौ लिंगविशिष्टाग्रहणमिति निषेधान्न भवति ॥

पथां टेः ॥ २९३ ॥ पथिमथिऋभुक्षां टेर्लोपो भवति शसादौ स्वरे ईपिकारे च ॥ पथः । पथा । पथिषु । एवं मंथाः। ऋभुक्षाः । स्त्रियां नांतत्वादीप् । सुपथी । सुमथी । अनृभुक्षी सेना । क्लीबे शोभनः पंथाः यस्मिन् वने तत्सुपथि वनम् ॥

सुबो०—पथां टेः । पथ्यादेष्टेर्लोपः स्यात् शसादौ स्वरे ईपीकारे च । पथामिति बहुवचनमाद्यर्थम् । स्त्रियां त्रण इतीप् ततष्टिलोपः । सुष्ठु पंथाः यस्याः सा सुपथी रथ्या । ऋक्पूरित्यप्रत्ययो न । न पूजने इति निषेधात् । कप्रत्ययस्तु समासांतविधेरनित्यत्वान्न । सुष्ठु मंथाः यस्यां सा सुमथी नगरी । न विद्यते ऋभुक्षाः इंद्रो यस्यां सा अनृभुक्षी सेना । क्लीबे सुष्ठु पंथाः यस्मिन् तत् सुपथि । आत्वं त्वत्र न लुकि न तन्निमित्तमिति निषेधात् ॥

धौ नपुंसकानान्नस्य लोपो वा ॥ २९४ ॥ हे सुपथिन्, हे सुपथि सुपथी सुपंथानि ॥

सुबो०—धौ नपुंसकानां नस्य लोपो वा । हे सुपथि इत्यत्र नलोपस्यासिद्धत्वाद्द्ग्वृणामिति गुणो न । द्विवचने पथामिति टिलोपः । सुपथी । शौ त्वत्वे नुटि च दीर्घत्वम् । सुपंथानि । किंच पंथानमात्मन इच्छतीति पथीयति । ततः क्विप् । यत इत्यल्लोपः । यवयोरिति यलोपः । एकदेशविकृतस्यानन्यत्वादा सावित्यात्वं

थो नुडिति नुट् । पंथाः । अत्वं तु न । इत इति तपरकरणात् । य्वोर्धातोरितीयू । पथियौ । एवं ऋभुक्षियौ ॥

**इनां शौ सौ ॥ २९५ ॥ इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति नान्यत्र ॥ दंडी । हे दंडिन् । दंडिनौ दंडिनः । एवं कालिन्-हलिन्-यशस्विन्-वाग्मिन्-प्रभृतयः । वृत्रहा वृत्रहणौ वृत्रहणः ॥**

सुबो०—इनां शौ सौ । बहुवचनसाद्यर्थम् । अर्थवत्परिभाषया अनित्यत्वादर्थवतो अनर्थकस्यापीनोऽत्र ग्रहणम् । उपधाया इत्यनुवर्तते । अधाविति च नोपधाया इत्यनेनैव सिद्धे नियमार्थमिदम् । तदाह । इनादीनामुपधायाः शावेव दीर्घः स्यान्नान्यत्रेति । उपधादीर्घस्यैवायं नियमः तेन वृत्रहेवाचरतीति वृत्रहायते । कर्तुर्यङ् इत्यत्र ये इति दीर्घो भवत्येव । वृत्रहणीत्यत्र नमस्य क्विति झसे इति यो दीर्घः सोऽपि नियमेन व्यावर्त्यते । उपधादीर्घमात्रापेक्षया नियमविधानादिति । साविति तु विध्यर्थं पूर्वेण नियमात् । सावमासेर्योगविभागाभिप्रायेणैव शौ साविति निर्देशोऽस्ति । अन्यथा शिस्योरित्येवावक्ष्यत् । ननु पंथा इवाचरतीति पथीनति । क्विप् । इत्यादौ नमांतस्येत्युपधादीर्घो न प्राप्नोति । पथ्यादीनामिन्नंतत्वात् । इनादीनां शौ सावेवेत्युपधादीर्घस्य नियमादिति चेत् उच्यते । यत्र इनामिति सूत्रं प्रवर्तते तत्रेवायं नियमः । यथा दंडीवाचरतीति दंडीनति । क्विप् । वृत्रहणति । पूषणति । अर्यमणति इति । दंडोऽस्यास्तीति दंडी । मांतोपधादितीन् । शौ बहवो दंडिनः संति येषां तानि बहुदंडीनि । मुसलमस्यास्तीति मुसली । हलमस्यास्तीति हली । " रेवतीरमणो रामः कामपालो हलायुधः । " इत्यमरः । यशोऽस्यास्तीति यशस्वी । विन् । वागस्यास्तीति वाग्मी । ग्मिन् । वृत्रं हतवानिति वृत्रहा । क्विंतः । " वासवो वृत्रहा वृषा " इत्यमरः । अवकुप्वंतरेऽपीति णत्वम् । वृत्रहणौ ॥

तत्त्व०—इनां शौ साविति । बहुवचनादिनादिलाभः इनानिन्समुदायेऽनिनोऽपि इनमारोप्यते छत्रिणो यांतीतिवत् । अर्थवत्परिभाषाया अनित्यत्वादनर्थकस्यापीनो ग्रहण साविति ग्रहणात्तदंत गृह्यते । पूषार्यम्णोः केवलयोः पुंस्त्वात् शेरभावात् नोपधाया इति सिद्धेः विधिरारभ्यमाणो नियमाय तेन इन्नादीनां उपधाया दीर्घः शावेव नान्यत्रेति नियमः । नियमश्चोपधादीर्घस्यैव नान्यस्य । तेन दंडीयति दंडीभूत इत्यादौ भवत्येव दीर्घः । येन्वावित्यत्रोपधाग्रहणाभावात् । ननु पंथा इवाचरन् पथीनतीत्यत्रापि नमान्तस्येत्युपधादीर्घोऽपि कथं पथ्यादीनामिन्नतत्वादिति चेत्सत्यम् । यत्र इनां शौ साविति सूत्रप्रवृत्तिस्तत्रैवाय निमयः । पथ्यादिषु तु इतोऽदित्यादेः प्रवृत्तिसंभवान्न नियमः ॥

**हनो घ्ने ॥ २९६ ॥ हनो हकारस्य घो भवत्यव्यवधाने नकारे ञिति णिति च परे ॥**

सुबो०—हनो घ्ने । हनः घ्ने इति च्छेदः । आदिस्वरस्येत्यतो ञ्णितीत्यनुवृत्तम् । ञिति णिति प्रत्यये नकारे च परे हंतेर्हस्य घः स्यात् ॥

तत्त्व०—हनो घ्ने इति । हनः घ्ने इति छेदः । आदिस्वरस्येत्यतो ञ्णितीत्यनुवर्त्तते ॥

**घसंयोगे णत्वं न ॥ २९७ ॥** वृत्रघ्नः । वृत्रघ्ना वृत्रहभ्याम् । एवं पूषन् अर्यमन् । संख्याशब्दाः पंचन् प्रभृतयो बहुवचनांतास्त्रिषु सरूपाः ॥

सुबो०—अल्लोपः स्वरे इत्यल्लोपे घत्वे च कृते अवकुप्वंतरे इति णत्वे प्राप्ते आह । घसंयोगे णत्वं न । घकारात्परस्य णत्वं न भवति । वृत्रघ्नः । वृत्रघ्ना । पूषा सूर्यः । अर्यमा रविः ॥

तत्त्व०—घ्ने इत्यत्र तंत्रादिना घ्न इत्यत्र नस्यादेशो नेति व्याख्यानमपीत्याशयेनाह । घसंयोगे णत्वं नेति ॥

**जश्शसोर्लुक् ॥ २९८ ॥** षकारनकारांतसंख्यायाः परयोर्जश्शसोर्लुक् ॥ पंच । पंचभिः । पंचभ्यः २ ॥

सुबो०—जश्शसोर्लुक् । संख्याया इति ष्ण इति चानुवर्तेते । संख्यायाः किम् । विप्रुषः । पामानः । ष्ण इति किम् । चत्वारः शतानि सहस्राणीत्यत्र संनिपातपरिभाषया जश्शसोर्लुग् न । तथा हि सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य । संनिपतनं संनिपातः आनंतर्यं सन्निपातो लक्षणं कारणं यस्य स संनिपातलक्षणो विधिस्तद्विघातस्य कारणविघातस्यानिमित्तं न प्रयोजकः । यमुपजीव्य यो विधिः प्रवृत्तः स तस्योपजीव्यस्य विरोधं न करोतीति परिभाषार्थः । शिमाश्रित्य प्रवृत्तो नुम् शेर्विघातको न ॥

तत्त्व०—जश्शसोर्लुगिति । सख्याया इति चानुवर्त्तते । ननु शतानि सहस्राणीत्यादौ कथ न लुगिति चेत्सत्यम् । सन्निपातलक्षणो विधिरनिमित्त तद्विघातस्येति परिभाषया तन्निषेधात् । सन्निपतन सन्निपात. आनन्तर्य्यं लक्षण कारणं यस्य सः सन्निपातलक्षणो विधिः तद्विघातस्य अनिमित्तं न प्रयोजकः । यमुपजीव्य यो विधिः प्रवृत्तः स तस्योपजीव्यस्य विरोध न करोतीत्यर्थः । शिमाश्रित्य प्रवृत्तो नुम् शेर्विघातको न भवति । लोप इत्यनुवृत्तावपि लुग्ग्रहण षष्ठीनिर्दिष्टस्येति परिभाषा ज्ञापयति । लुकस्तु प्रत्ययादर्शनत्वेन सर्वलोपाभावे दर्शनासभवात्सर्वलोप एव नान्त्यस्य लोपापवादो लुक्शब्दादेशस्तु न भवति । नव पमित्यादिनिर्देशात् । नहि लुक्शब्दोऽत्र श्रूयते क्विपः किल्त्वेन प्रत्ययादर्शनेऽपि प्रत्ययाश्रितं कार्य्यं भवतीति । पंचेत्यत्र लुक्यपि नोपधाया इति दीर्घो न । नव पमिति लिंगेनैव लुकि सति तन्निमित्तं कार्य्यं न भवतीति ज्ञायते । एतदर्थमेव भेदेन व्यवहारः अन्यथा लुक्लोपयोरन्यतरेणैव सर्वत्र व्यवहरेत् । अथ लुग्ग्रहण विनैव रूपसिद्धौ ज्ञापक स्यात् । असति तस्मिन्ननन्तरस्येति न्यायेनायडादिरिव प्रसज्येतेति चेत्सत्यम् । नव पमिति निर्देशेन तद्वारणसंभवात् ॥

**ष्णः ॥ २९९ ॥** षकारनकारांतसंख्यायाः परस्यामो नुडागमो भवति ॥ पंचानाम् । परमपंचानाम् । गौणत्वे न लुङ्नुटौ । प्रियपंचा प्रियपंचानौ प्रियपंचानः । प्रियपंचः । प्रियपंचा । एवं सप्तन् नवन् दशन् प्रभृतयः ॥

सुबो०—ष्णः। ष् च न् चानयोः समाहारः ष्ण् तस्मात् ष्णः। संख्याया इत्यनुवर्तते। ष्ण इति तस्या विशेषणं विशेषणेन तदंतविधिः। संख्याया इति किम्। त्विषाम्। यज्वनाम्। ष्ण इति किम्। त्रिंशताम्। पंचाशताम्। नलोपे नोपधाया इति दीर्घे च। पंचानाम्। प्राधान्ये परमाश्च ते पंच च परमपंच तेषाम्। गौणत्वे न लुग्नुटौ। गौणे ष्णांतसंख्यायाः जश्शसोर्लुक् नामि तु नुट् न। संख्यावाचित्वाभावात्। प्रियाः पंच यस्य स प्रियपंचा। आमि प्रियपञ्च्नाम्। नकारद्वयमध्यश्चकारः॥

तत्त्व०—ष्ण इति। ष् च न् च अनयोः समाहारः ष्ण् तस्मात् ष्णः। अत्र संख्याया इत्यनुवर्त्तते। ष्ण इति तद्विशेषणं ततस्तदंतलाभः इत्याशयेनाह। षकारान्तेत्यादि। नस्य षुत्वानिर्दिष्टे विशेषणं तस्य संख्यावाचिनो भावान्नान्तमेव गृह्यते। संख्याया इति किम्। त्विषाम्। ष्ण इति किम्। त्रिंशताम्। गौणत्वेनेति संख्यावाचित्वाभावादित्यर्थः॥

**अष्टनो डौ ॥ ३०० ॥ अष्टन्शब्दात्परयोर्जश्शसोर्वा डौ भवति ॥ अष्टौ। अष्ट। अष्ट॥**

सुबो०—अष्टनो डौ। अष्टन इत्येकवचनं तु त्रेरितिवत्। अल्लोपः स्वरे इत्यस्याप्रवृत्तिश्चिन्त्या। जश्शसोरित्यनुवर्तते। वास्विति वाशब्द उभयत्र संबध्यते काकाक्षिगोलकन्यायेनेति। ननु षष्ठीनिर्दिष्टत्वादंतस्य डौ भवति न चानेकवर्णत्वात्सर्वादेशः स्यात्। नानुबंधकृतमनेकवर्णत्वमित्युक्तत्वात्। उच्यते। डित्वसामर्थ्यान्नोक्तदोषः। तथाहि। अंत्यादेशे सति जासि अष्टनाविति शसि अष्टाविति प्राप्नोति तच्चांतरेण डित्वं सिद्धं अतो डित्करणसामर्थ्यात् सर्वादेशः। लुकोऽपवादोऽयमिति सर्वादेशः इति वा। डौ शिति सुवचम्। डौत्वं हि लुग्नुटाविव प्राधान्ये एव भवति नतु गौणत्वे। सप्तञ्ञ्भ्यां तुट् चेत्यनेन सप्तन्अष्टन्शब्दौ निष्पन्नौ॥

तत्त्व०—अष्टनो डाविति। एकवचनं तु त्रेरितिवत्। सौत्रत्वादल्लोपोऽपि न। अल्लोपः स्वरे इत्यस्याप्रवृत्तिश्चिन्त्येति कैश्चिदुक्तम्। अत्र अष्टाभ्य औशिति सूत्रव्याख्यावसरे अन्यथा अष्टन इत्येव ब्रूयात् इति भाष्यकारोक्त्यापि चिन्तया अपसारणीयत्वात्। वास्विति वाशब्दः काकाक्षिन्यायेनोभयत्रान्वेति। संख्याया इत्यनुवृत्तेर्नेह। प्रियाष्ट्नः। अनुबंधैरनेकवर्णत्वस्यासंभवादन्त्यस्यादेशोऽस्तीति न शंकनीयम्। षष्ठीनिर्दिष्टस्येति परिभाषाया अनित्यत्वात्॥

**वा सु ॥ ३०१ ॥ अष्टनः सकारभकारादिषु विभक्तिषु वात्वं भवति ॥ अष्टाभिः, अष्टभिः। अष्टाभ्यः, अष्टभ्यः२। अष्टानाम्। प्रिया अष्टौ यस्यासौ प्रियाष्टा प्रियाष्टानौ प्रियाष्टानः, प्रियाष्ट्नः। प्रियाष्ट्ना प्रियाष्टाभ्याम्। "प्रियाष्ट्नो राजवत्सर्वं हाहावच्चापरं हसे।" सुगण् सुगणौ सुगणः। सुगणं सुगणौ सुगणः। सुगणट्सु। भुत्, भुद् बु-**

धो बुधः । भुद्भ्याम् । भुत्सु । राक्, राग् राघौ राघः । राग्भ्याम् । राक्षु । सुकुकुप्, सुककुब् सुककुभौ सुककुभः । सुककुभम् । सुककुप्सु ॥

सुबो०–वा सु । भीत्यपकृष्यते तेन स्यादयो विशेष्यंते । वा आ आसु इति छेदः । सकारभकारादौ स्यादौ परे अष्टन आत्वं वा भवतीति फलितोऽर्थः । इत आरभ्य संख्याया इति निवृत्तं व्याख्यानात् । तेन गौणत्वेऽपि स्यादात्वम् । स्यादाविति किम् । अष्टभार्यः । अष्टसेवकः । भीति किम् । प्रियाष्टानौ । प्राधान्ये परमाष्टौ । गौणत्वे प्रिया अष्टौ यस्य स प्रियाष्टा । आत्वाभावे राजवत् । शसि अल्लोपः स्वरे इत्यकारलोपे कृते ष्टुभिः ष्टुरिति णत्वं प्राप्तमसिद्धं बहिरंगमंतरंगे इति परिभाषया न । शसनिमित्तकत्वेन बहिरंगस्याल्लोपस्यासिद्धत्वात् । पूर्वं पूर्वमंतरंगमिति स्वीकारात् । आत्वपक्षे प्रथमैकवचने प्रियाष्टाः हाहाशब्दवत् । प्रियाष्टन्शब्दस्याऽऽत्वाभावपक्षे सर्वं रूपं राजवत् । आत्वपक्षे तु हसादावपरं रूपं हाहावत् । इति नांताः । सुष्ठु गणयतीति सुगण् । गणयतेर्विण्प्रत्ययः । शसे ङ्णोरिति टुकि । सुगण्ट्सु । शसे चपस्येति द्वितीये । सुगणठ्सु । टनादिति धुटि । सुगणट्त्सु । क्विप्प्रत्यये तु सुगाण् । ञमस्य क्ङिति इति दीर्घे कर्तव्ये अल्लोपञिलोपयोः स्थानिवद्भावो न शंक्यः । दीर्घविधौ तन्निषेधात् । इति णान्ताः । बुध्यतेः क्विप् । आदिजबानामिति भः । जबत्वचपत्वे । भुत्, भुद् । जबत्वे । भुद्भ्याम् । चपत्वे । भुत्सु । इति धांताः । राघृ सामर्थ्ये । राघते इति राक् क्विबंतः । इति घांताः । सुष्ठु ककुप् यस्मिन् स सुककुप् । "दिशस्तु ककुभः काष्ठाः" इत्यमरः । इति भांताः ॥

तत्त्व०–वा स्विति । वा आ आ सु इति छेद इत आरभ्य सख्याया इति निवृत्त व्याख्यानात् । तेन गौणत्वेऽप्यात्वम् । अत्र स्भीत्युत्तरसूत्रात् स्भीत्यपकृष्यते इत्यभिप्रेत्याह । सकारेत्यादि । प्रियाष्ण इति ष्टुत्वं न । असिद्ध बहिरंगमन्तरंग इति परिभाषया अल्लोपस्यासिद्धत्वात् ॥

युजेः पंचसु नुम् न समासे इति च ॥ ३०२ ॥

सुबो०–युजेः पंचसु नुम् न समासे इति च । युजिर् योगे इत्यस्य धातोः पंचसु स्यादिषु नुम् स्यान्न तु समासे । युजेरिति धातुपाठपठितेकारविशिष्टस्य ग्रहणं न तु निर्देशे य इक् तस्य । तेनेह नुम् न । युज्यते समाधत्ते इति युक् । युज समाधौ दैवादिक आत्मनेपदी ॥

तत्त्व०–युजेः पंचस्विति । समासे इति न संबंधः । युंजो कुले इह न ॥

दिशाम् ॥ ३०३ ॥ दिश्दृश्स्पृश्दधृष्क्रत्विज्कुंचूयुंचूस्रज्अंचूउष्णिहादीनां कुत्वं स्यादौ रसे पदान्ते च ॥ संयोगान्तस्य लोपः । युङ् युञ्जौ युञ्जः । युञ्जं युञ्जौ युजः । युजा युग्भ्याम् । समासे तु । सुयुक् ॥

सुबो०–दिशाम् । बहुवचनमाद्यर्थं तेन दिश् १ दृग् २ स्पृग् ३ दधृष् ४ ऋत्विज् ५ क्रुंच् ६ युंज् ७ स्रज् ८ अंचु ९ उष्णिहो १० गृह्यंते । दिश्-दृश्-स्पृश्-दधृष्-ऋत्विज्-स्रजां षत्वे प्राप्ते क्रुंच-युज्-अंचामप्राप्ते उष्णिहो ढत्वे प्राप्ते अयं कुत्वविधिः । कुरित्यनुवर्तते । चोः कुरित्यतः युनक्तीति सिलोपे संयोगांतलोपे च नस्य कुत्वेनानुनासिको ङकारः । युङ् । नश्चापदांते इति नुमोऽनुस्वारे परसवर्णः । तस्यासिद्धत्वाचोः कुरिति कुत्वं न । युञ्जौ । समासे तु सुष्ठु युनक्तीति क्विप् । अत्र न नुम् ॥

तत्त्व०–दिशामिति । बहुवचनमाद्यर्थम् । अत्र रसग्रहणाद्विपाशेत्यादावपि । युजाविति । नकारस्य कुत्वं तु न यमस्यासिद्धत्वात् ॥

**चोः कुः ॥ ३०४ ॥** चवर्गस्य कवर्गो भवति धातोर्झसे नाम्नश्च रसे पदान्ते च ॥ समाध्यर्थस्य नुम्न । युक् । खन् खंजौ । खन्भ्याम् । खन्सु । छशषराजादेः षः । सम्राट्, सम्राड् सम्राजौ सम्राजः । देवेट्, देवेड् देवेजौ देवेजः । परिमृट्, परिमृड् परिमृजौ परिमृजः । विश्वसृट्, विश्वसृड् विश्वसृजौ ॥

सुबो०–चोः कुः । रसे किम् । त्वचौ । नाम्नः किम् । वच्मि । पदांते किम् । वाचि । धातोर्झसे यथा । वक्ता । झसे किम् । वच्मि । कुत्वे । सुयुक् । समाध्यर्थस्य युजेर्नुम्न । युक् । खंजतीति । खजि गतिवैकल्ये क्विबंतः । संयोगांतलोपे खन् । संराजते इति षत्वे जवत्वचपत्वे च । सम्राट् । देवान् यजतीति क्विपि यजादित्वात्संप्रसारणे एत्वे च । देवेट् । विश्वं सृजतीति विश्वसृट् क्विबन्तः । दिशामिति कुत्वं न सृजिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात् । यद्वा सृजियज्योः कुत्वापवादः षत्वविधिरेव । सक्कृदृत्विक्शब्दयोस्तु दिशामित्यनेन कुत्वमेव । परिमार्ष्टीति परिमृट् ॥

तत्त्व०–चोः कुरिति । अत्र तदन्तग्रहण तेन चवर्गान्तस्येति व्याख्येयम् । एवं चासिद्धत्वानुसरणेन युञ्जावित्यादौ कुत्वाभाव इति समानमपि नाश्रयणीयम् । जकारस्यान्तेऽभावात् । जकारसत्वेऽपि तस्य रसपरत्वाभावात् । समाध्यर्थस्येति । युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं न श्तिका निर्देश इत्याशयः । युगिति युज्यत समाधत्ते इति युक् । युज समाधौ दैवादिकः आत्मनेपदी । खन् इति । खजतीति खन् । खजि गतिवैकल्ये संयोगांतस्येति यलोपः । देवेडिति । देव यजतीति क्विपि सप्रसारणे रूपम् ॥

**विश्वस्य वसुराटोर्दीर्घः ॥ ३०५ ॥** विश्वावसुः । विश्वाराट् विश्वराजौ । विश्वाराड्भ्याम् । विश्वाराट्सु, विश्वाराट्त्सु ॥

सुबो०–विश्वस्य वसुराटोर्दीर्घः । विश्वशब्दस्य दीर्घः स्यात् वसुशब्दे राट्शब्दे च परे । विश्वं वसु द्रव्यं यस्य स विश्वावसुः । राडिति डशब्दस्य स्वरूपोपलक्षणमविवक्षितम् । षत्वम् । विश्वस्मिन् राजते इति विश्वाराट् ॥

तत्त्व०–वसुराटोरिति । पदत्वमविवक्षितं पदत्वविषयोपलक्षकम् । विश्वावसुरिति । विश्वं वसु यस्येति विग्रहः ॥

स्कोराद्योश्च ॥ ३०६ ॥ संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे नाम्नश्च रसे पदांते च ॥ भृट्, भृड् भृज्जौ भृज्जः। वृक्षवृट्, वृक्षवृड् वृक्षवृश्चौ । विभ्राट्, विभ्राड् विभ्राजौ । विभ्राड्भ्याम् । विभ्राट्सु । ऋत्विक्, ऋत्विग् ऋत्विजौ । ऋत्विक्षु । ऊर्क्, ऊर्ग् ऊर्जौ । ऊर्क्षु ॥

सुबो०—स्कोराद्योश्च । आदिशब्दस्याऽवयववाचित्वेन संबंधित्वादवयव्याकांक्षायां संयोगेति संबध्यते । संयोगशब्दस्यापीह समुदायवाचित्वादवयवार्थकत्वेनाऽवयव्याकांक्षायां नाम्नो धातोश्चेति संबध्यते । संयोगांतलोपापवादः । झसे त्वपूर्वो विधिः। झसे । भ्रष्टा । पदांते । अवाभ्रट् । आद्योः किम् । धक्ष्यति । नंक्ष्यति । भृज्जतीति क्विप् । ग्रहामिति संप्रसारणम् । सौपरत्वात् षत्वे स्कोरिति सलोपे च सिलोपः । भृट् । सस्य चुत्वेन शः । शस्य झबे जबा इति जः । भृज्जौ । वृक्षं वृश्चतीति क्विपि ग्रहामिति संप्रसारणं छशषेति षत्वं स्कोरिति सलोपः जबत्वचपत्वे । वृक्षवृट्, वृक्षवृड् । सुपि टनादिति धुट् ततश्च षत्वम् । वृक्षवृट्त्सु । चांतेषु वक्तुमुचितः । विशेषेण भ्राजते इति विभ्राट् । षत्वविधौ राजिसाहचर्यात् भ्राजृ दीप्ताविति फणादिरेव गृह्यते । यस्तु राजृ भ्राजृ दीप्ताविति तस्य कुत्वमेव । विभ्राक्, विभ्राग् । विभ्राग्भ्यामित्यादि । ऋतौ यजतीति ऋतावुपपदे यजेः क्विप् । यजादित्वात्संप्रसारणं कुत्वम् । ऋत्विक् । ऊर्ज बलप्राणनयोः । अस्माच्चुरादिर्ण्यंतात् क्विपि ञिलोपः । ऊर्जयतीति । सभिन्नस्येति नियमात् न संयोगांतलोपः । ऊर्क् ॥ इति जांताः ॥

तत्त्व०—स्कोराद्योश्चेति । स् च क् चेति स्कौ तयोः स्कोः । आदिशब्दस्यावयविनि साकाङ्क्षितत्वेन संयोगेन संबधः । संयोगशब्दोऽपि नामधातुभ्यां संबध्यते । अत्र रसे झसे पदांते, इति पदत्रयमपि संयोगस्यैव विशेषणं न तु नामधातोः । स्कोरिति द्विर्वचननिर्देशात्स्कुञ्धातोः स्वरूपस्य वा न ग्रहणम् । ऋत्विगिति । ऋतौ यजते इति वा वाक्ये ऋतावुपपदे यजतेः क्विपि संप्रसारणे च रूपं ऊर्क् इति । ऊर्ज बलप्राणनयोः । चुरादिर्ण्यन्तात्क्विपि ञलोपे च रूपम् ॥

तः ॥ ३०७ ॥ त्यदादेस्तस्य सत्वं भवति सौ परे ॥ स्यः त्यौ त्ये । सः तौ ते । परमसः । संज्ञायां गौणत्वे चात्वसत्वे न । त्यत्, त्यद् त्यदौ । अतित्यत्, अतित्यद् अतित्यदौ । यः यौ ये । एषः एतौ एते । अन्वादेशे एनं एनौ एनान् । एनयोः । अग्निमत्, अग्निमद् अग्निमथौ । अग्निमद्भ्याम् । अग्निमत्सु । प्रत्यञ्चतीति क्विपि कृते ॥

सुबो०—तः । त्यदादेरित्यतः त्यदादेरिति सौ स इत्यतः स इति साविति चानु-

वृत्तम् । त्यदादेः किम् । तातः । प्राधान्ये परमसः । संज्ञायां गौणत्वे चात्वसत्वे न । अत्वसत्वयोः सर्वाद्यंतर्गणकार्यत्वादत्वं च संज्ञायां गौणे च न प्रवर्तते । संज्ञायां त्यत् त्यदौ । गौणे त्यमतिक्रांतोऽतित्यद् । इदमेतदोरित्यन्वादेशे एनदादेशः । एनमित्यादि । इति दांताः । अग्निं मंथतीति क्विपि नो लोप इति नलोपः । अग्निमत् । इति थांताः । प्रत्यंचतीत्यत्रांचेः क्विपि कृते ॥

तत्त्व०-स इति । त्यदादेष्टेरित्यतस्त्यदादेरिति सौ स इत्यतः स इति च पदद्वयमनुवर्तत इत्याशयेनाह । त्यदादेरित्यादि । त्यदादेः किम् । तातः । स इति किम् । यः सौ इति किम् । तौ । ननु त्वमित्यत्र सस्यात्वे कुतो नेति चेत्सत्यम् । तकारोच्चारणसामर्थ्यात् । अयातित्वमित्यत्र गौणत्वे तयोश्चरितार्थत्वमिति चेदामृशसिपरत्वाभावात् । साविति वक्तव्ये सिनेति गुरुकरणं वत्वसोरिव विभागसंमोहार्थम् ॥

**नो लोपः ॥ ३०८ ॥** धातोर्हसान्तस्योपधाभूतस्य नकारस्य लोपः क्ङिति परे ॥

सुबो०-नो लोपः। हसांतस्येति किम् । नीयते । उपधाभूतस्येति किम् । इन्यते ॥

**पूजार्थाचतेर्न ॥३०९॥** निरुपपदात् क्रुंचेः क्विपि । क्रुङ् क्रुंचौ । क्रुङ्भ्याम् । क्रुङ्क्षु, क्रुङ्षु, क्रुङ्खषु ॥

सुबो०-पूजार्थाचतेर्न । पूजार्थवाचिनोऽचतेरुपधाभूतस्य नस्य लोपो न भवति किति ङिति च । निरुपपदात् क्रुंचेः क्विपि न । निर्गत उपपदेभ्यः निरुपपदस्तस्मात् । उपपदरहितस्य क्रुंचेरुपधाभूतस्य नस्य लोपो न भवति। क्विपि क्रुंच कौटिल्याल्पीभावयोः ॥

तत्त्व०-अत एव मिनावागमौ न निरुपपदादिति । निर्गत उपपदेभ्यः निरुपपदं तस्मात् । क्रुंचेः क्विपि परे तस्यैव नलोपो नेत्यर्थः ॥

**अंचेः पुंसि पंचसु नुम् ॥ ३१० ॥** दिशाम् । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चं प्रत्यञ्चौ ॥

सुबो०-अंचेः पुंसि पंचसु नुम् । गत्यर्थस्यांचतेर्नुमागमः स्यात् पुंसि पंचसु । नलोपे पुनर्नुमि कृते प्रत्यन् च् सि इति स्थिते संयोगांतलोपे च नुमो नकारस्य दिशामिति कुत्वेन ङकारः । प्रत्यङ् । अनुस्वारसवर्णौ । प्रत्यञ्चौ ॥

तत्त्व०-अंचेरिति । इकारनिर्देशस्तथा सति क्वित्वान्नलोपे अंचेरित्येव स्यात् किंतूच्चारणार्थ इकारः । प्रत्यङ्ङिति । प्रत्यंचतीति । क्विपि नो लोप इति नलोपे सौ नुमि कृते प्रथमं संयोगांतलोपः न तु श्चुत्वम् । अकृतव्यूहपरिभाषया श्चुत्वाप्रवृत्तेर्नित्यत्वात्संयोगांत एव । तथा च लोपे नस्यैव ङकारपंचमत्वेन साम्यात्प्रथमं चुत्वे स्यान्नित्यसिद्धापत्तेश्च ॥

**अंचेर्दीर्घश्च ॥३११॥** नलोप्यंचतेरकारस्य लोपः पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धितयस्वरयोरीकारे च ॥ प्रतीचः । प्रतीचा प्रत्यग्भ्याम् । प्रत्यक्षु । तिर्यङ् तिर्यञ्चौ तिर्यञ्चः ॥

सुबो०—अंचेर्दीर्घश्च । लुप्तनकारस्यांचतेरतो लोपो भवति ईपि ईकारे च । प्रतीचि । ताद्धितयस्वरयोः । प्रतीच्यः । प्रतीचीनः । अचेरिति नायमिक्प्रत्ययः । किंतूच्चारणार्थोऽयमिकारः । नलोपिनिर्देशो ज्ञापकः । इकः कित्वान्नलोपे कृतेऽचेरित्यस्योक्तार्थे ज्ञापनात् । ननु पूर्वस्येति कस्माल्लब्धम् । उच्यते । दीर्घश्रुत्योपस्थितः स्वर एवात्र स्थानी शसादौ स्वरे इति लोपदीर्घयोर्निमित्तम् । सप्तमीनिर्देशात् पूर्वस्याऽव्यवहितस्य स्वरस्य दीर्घे प्राप्ते येन नाव्यवधानं तेन व्यवहितेऽपीति वचनप्रामाण्यात् चकारेण व्यवहितस्याप्यत्र दीर्घः । अचेरिति । लोपस्य विषयेऽन्तरंगोऽपीयमिति यकारो न । अकृतव्यूहा इति परिभाषया । प्रतीचः । तिरोऽञ्चतीति सहादेरिति तिरसस्तिरिः । तिर्यङ् ॥

तत्त्व०—अंचेर्दीर्घश्चेति । लुप्तनकारनिर्देशोऽारपूजार्थसंग्रह इत्याशयेनाह । नलोपिन इत्यादि । अचेरिति पाठे तु ज्ञापनासंभवः इकः कित्वेन सर्वथैव नलोपात् । उच्चारणार्थ इकार इत्याद्याश्रयणे तु भवत्यपि पूर्वस्य चेति शब्दाविति परसप्तम्या निमित्तत्वेन पूर्वलाभः । न च चकारे व्यवधानेनेति वाच्यम् । येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । चकारैकवर्णव्यवधानेऽपि भवत्येव । अकृतव्यूहपरिभाषया पूर्वं न यत्वम् ॥

तिरश्चादयः ॥३१२॥ तिरश्चादयो निपात्यन्ते शसादौ स्वरे तद्धितयस्वरयोरीपीकारे च ॥ तिरश्चा तिर्यग्भ्याम् । तिर्यक्षु । उदीचः । उदग्भ्याम् । उदक्षु । पितरमञ्चतीति । पित्रङ् पित्रञ्चौ ॥

सुबो०—तिरश्चादयः । सिद्धरूपनिर्देशो निपातनं एते निपात्यंते ईपि ईकारे च । तिरश्ची । तद्धितस्य स्वरे यकारे च । तिरश्चीनः । उदीच्यः । तिरश्चादिरिति सूत्रणीयम् । आदिशब्दादुदीच इति । बहुवचनं तु व्यर्थम् । तृतीयस्याभावात् । पदादयः षोडशादेशाः न तु पृथक् शब्दा इति पक्षाश्रयणे तु वचनस्य सार्थक्यं बोध्यम् । उदंचतीति उदङ् ॥

तत्त्व०—तिरश्चादय इति । ननु मास्तु निपातनं अचतौ सहादेः सादेरिति सूत्रेण तिर्यादेशः स तु अल्लोपे निमित्ताभावे नैमित्तिकाभावादेव रूपसिद्धेरिति चेत्सत्यम् । अञ्चतेर्निमित्तत्वेन अलोपेऽप्येकदेशविकृतन्यायेन तत्सत्त्वान्निमित्ताभावत्वाभावात् । तिरश्चादिरिति तु युक्तम् । तिरश्च उ च इति शब्दद्वये प्रवृत्तिदर्शनात् तृतीयस्यादर्शनात् बहुवचनं व्यर्थमिति वृद्धाः ॥

ऋतो दीर्घो न ॥३१३॥ पितृचः । पित्रग्भ्यां पित्रग्भिः। पित्रक्षु । सध्र्यङ् । सध्रीचः । सम्यङ् । समीचः । प्राङ् । प्राचः । पूजायां तु । प्रत्यञ्चः । प्रत्यञ्चा प्रत्यङ्भ्याम् । प्रत्यंक्षु, प्रत्यङ्षु, प्रत्यङ्क्षु । उदञ्चः । उदङ्भ्याम् । तिर्यञ्चः । तिर्यङ्भ्याम् । सम्यञ्चः । सध्र्यञ्चः । प्राञ्चः । प्राञ्चा । सहादेः सादिः । अमुमंचतीति अमुमुयङ् ।

असुमुईचः । असुमुयग्भ्याम् । अदमुयङ् । अदद्र्यङ् । पूजायां तु । असुमुयंचः । असुमुयङ्भ्याम् । अदमुयंचः । अदद्र्यंचः । मरुत् मरुद्भ्याम् । उगितो नुम् । न्सम्महतोऽधौ दीर्घश्शौ च । महान् महान्तौ महान्तः । हे महन् ॥

सुबो०-ऋतौ दीर्घो न । ऋकारस्य दीर्घो न भवति लुप्ताकारनकारेऽचतौ परेऽपि । ऋचः । सहांचतीति सहादेरिति सहस्य सध्रिः । सध्र्यङ् । समंचतीति सहादेरिति समः समिः । सम्यङ् । प्रकर्षेणांचतीति प्राङ् । पूजार्थस्यांचतेस्तु प्रत्यंचति पूजयतीति क्विपि पूजार्थांचतेरिति नलोपाभावः । अत एव नुम् न । प्रत्यङ् । शसि नलोपाभावादकारलोपो न । प्रत्यंचः । सुपि प्रत्यंच् सु इति स्थिते दिशामिति कुत्वात् प्राक् संयोगांतस्येति च लोपे नस्य कुत्वेन ङकारे च कृते शसे ङ्णोरिति कुक् षत्वम् । प्रत्यङ्क्षु । शसे चपस्येति पक्षे खकारः । प्रत्यङ्ख्षु । कुगभावे । प्रत्यङ्षु । एवं पूजार्थे तिर्यङादयः । विष्वग्देवयोश्च टेरद्र्यंचतावप्रत्यये चाददसो ग्रहणम् । अनयोरदसश्च टेरद्र्यादेशः स्यात् वप्रत्ययांतेऽचतौ परे । अमुमंचतीति विग्रहे अदस अंच इति स्थिते अदद्र्यादेशे अदद्रिअच इति । यत्वम् अदसोऽसेर्दादुदोमः असेरिति इकार उच्चारणार्थः । असकारांतस्यादसो दात्परस्य उदूतौ भवतः दस्य मश्च । उ इति ह्रस्वदीर्घयोः समाहारः ह्रस्वव्यंजनयोर्ह्रस्वो दीर्घस्य च दीर्घो भवति । असांतस्येति किम् । अमुमात्मन इच्छति अदस्यति । दात्परस्येति किम् । अमुया इत्यत्रांतस्य यस्य मा भूत् । दकाराकारयोर्दकाररकारयोश्च मुत्वे । अमुमुयङ् । शसि अचेरित्यतो लोपे दीर्घे च । अमुमुईचः । मुत्वस्यासिद्धत्वान्न यत्वम् । अंत्यबाधेऽन्त्यसदेशस्येति परिभाषां वदतां मते परस्य दकाररकारस्यैव मुत्वम् । अदस इति स्थाने षष्ठी । एवं हि षष्ठीनिर्दिष्टस्येति परिभाषोपतिष्ठते । अदसो योऽन्त्यः स दात्परो यः सोऽदसोऽन्त्यः एवमंत्यबाधेऽन्त्यसमीपस्य भवतीति दकाररकारयोर्मुत्वे । अदमुयङ् । अः अकारः सेः सकारस्य स्थाने यस्य स असिरिति व्याख्याने त्यदाद्यत्वविषये एव मुत्वं नान्यत्रेति । पक्षे उभयत्र मुत्वं न । अदद्र्यङ् । वार्तिककृतोक्तं च । "अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छंति लत्ववत् । केचिदंत्यसदेशस्य नेत्येके सेर्हि दृश्यते ॥" अदसो दकाराकारयोरद्र्यादेर्दकाररकारयोश्च पृथङ् मुत्वं केचिदाचार्या इच्छंति लत्ववत् । यद्वं तस्य चलीक्लृप्यते इत्यस्योभयोः कृपो रो ल इत्यनेन यथा लत्वं तथेत्यर्थः । अंत्यसदेशस्य दकाररकारस्य मुत्वं केचिदिच्छंति । अः अकारः सेः सकारस्य स्थाने यस्य सोऽसिस्तस्यासेस्त्यदाद्यत्वविशिष्टस्यादसो हि मुत्वं दृश्यते इति केचिद्वदन्ति तन्मते उभयोर्मुत्वं न त्यदाद्यत्वाभावात् । एवं चामुद्र्यङ् इति केषांचिद्-

दाहरणं तद्ग्राह्येऽनुक्तत्वादुपेक्ष्यमिति भावः । इति चांताः । " मरुतौ पवनाऽमरौ " इत्यमरः । मह पूजायाम् । मह्यते पूज्यते इति महान्-कर्मणि. तृप्रत्ययः । ऋदित्वान्नुम् न्सम्महत इति दीर्घः । सिलोपे संयोगांतलोपे च । महान् ॥

तत्त्व०—ऋत इति । एतद्बीजं तु दीर्घग्रहणात् संज्ञापूर्वको विधिरनित्य इति ऋतो न दीर्घः । अमुमुयङिति अमुमंचतीति वाक्ये क्विपि अदस् अम् अच क्विप् इति स्थिते कपोरित्यालोपे वेरिति वलोपे समासप्रत्यययोरिति अमलोपे नामसंज्ञायां स्यादौ अदस अंच सि इति स्थिते अद्र्यादेशमुत्वे नलोपे नुमागमे सिलोपे नस्य ङत्वेन रूपसिद्धिः । अदमुयङ् अदद्र्यङ् इति विकल्पास्त्वित्य उभयत्र मुत्वलत्ववत् । तथा चलीकॢप्यते इत्यत्र लत्वादस्य म इत्यत्र अंत्यस्य दस्येति व्याख्यानेऽत्यबाधेऽन्त्यसदेशस्येति परिभाषामाश्रित्य परस्यैव मत्वम् । तत्रैवोक्तम् । केचित्तु दोम इति वक्तव्ये दस्येति सस्वरदकारोक्तिर्ज्ञापयति । त्यदाद्यत्वविषय एव मत्वं प्रकृते तदभावान्नेति । उक्त च । " अदसोऽद्रेः पृथक् मुत्वं केचिदिच्छंति लत्ववत् । केचिदन्त्यसदेशस्य नेत्येके सेऽर्हि दृश्यते ॥ " अमुमुईंच इति । संज्ञापूर्वस्य विधेरानित्यत्वान्न वत्वम् । यद्वा मुत्वस्यासिद्धत्वात् ॥

द्विरुक्तानां जक्षादीनां च शतुर्नुम् न शौ वा ॥ ३१४॥ ददत् । एवं जक्षत् । जाग्रत् । दरिद्रत् । चकासत् । शासत् ॥

सुबो०—द्विरुक्तानां जक्षादीनां च शतुर्नुम् न शौ वा । द्विरुक्तधातुभ्यो जक्षादिभ्यश्च परस्य शतुर्नुम् न स्यात् शौ परे तु वा । ददातीति दाञः शतृप्रत्यये, अपूह्वादेरित्यपो लुक् द्वित्वं च ह्रस्व इति पूर्वस्य ह्रस्वः। दादेरित्यालोपः।ददत् । एवं जक्षतीति जक्षत् । जागर्तीति जाग्रत् । दरिद्रतीति दरिद्रत् । दरिद्रातेरित्यालोपः । चकास्तीति चकासत् । शास्तीति शासत् ॥

तत्त्व०—द्विरुक्तानामिति । आगमशास्त्रस्यानित्यत्वादिति भावः ॥

अत्वसोः सौ ॥ ३१५ ॥ अत्वन्तस्य धातुभिन्नासंतस्य चोपधाया दीर्घो भवति सावधौ ॥ भवान् भवन्तौ भवन्तः । हे भवन् । चन्द्रमाः चन्द्रमसौ । अधात्वसन्तस्य किम् । चीवराणि वस्तेऽसौ चीवरवः । शत्रन्तस्य तु अत्वन्ताभावान्न दीर्घः । भवन् भवन्तौ । पचन् । दीव्यन् । धीमान् । हे धीमन् । धीमन्तौ । मघवान् मघवन्तौ । मघवद्भ्याम् । गुप्, गुब् गुपौ गुपः । गुब्भ्याम् । तादृक् तादृशौ तादृशः । तादृक्षु । एवं यादृगादयः ॥

सुबो०—अत्वसोः सौ । अतुश्च अस् च तौ अत्वसौ तयोः । नोपधाया इत्यत उपधाया इत्यनुवर्तते । अतुरिति मतुवतुक्तवत्वादीनामवयवो गृह्यते । केवलस्य प्रत्ययस्याभावात् । अस् त्वर्थवानन‍र्थकोऽपि । अतु इत्युकारानुबन्धस्यानुकरणाच्छत्रंतस्य दीर्घो न । अत्वंतस्य धातोर्दीर्घः । गोमंतमिच्छति गोमानिवाचरति

वा इति इच्छार्थयंतात् आचारक्विबंताद्वा कर्तरि क्विप् ततो अल्लोपयलोपौ । गोमान् अधातोरित्यनुवर्त्य असंत योज्यं तेनासंतस्य नाम्न उपधाया दीर्घोऽधौ सौ । अत एव चानर्थकस्याप्यसो ग्रहणम् । भातेर्डवतुरिति डवतुप्रत्ययांतो भवच्छब्दः । नित्यमपि नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः ततो नुम् । भवान् । शसादौ महद्वत् । असंतस्तु चंद्रमस्शब्दः । धात्वसंतस्योपधाया दीर्घो न । यथा । वस् आच्छादने क्विप् । चीवरवः । भवतीति शतृप्रत्ययांतस्याऽतु इत्युकारानुबंधत्वाभावाद्दीर्घो न । ऋितो नुमिति नुम् । भवन् । एवं पचतीति पचन् । दीव्यतीति दीव्यन् । अत्वंतस्याधातोर्यथा । धीरस्त्यस्येति धीमान् । अस्त्यर्थे मतुरिति मतुः । मघशब्दाद्वतुप्रत्यये मघवच्छब्दः । उपधादीर्घादि प्राग्वत् । "हविर्जक्षिति निःशंको मखेषु मघवानसौ ।" इति भट्टिः । वत्वंतत्वाभावे महेहस्य घो युगागमः कन्प्रत्ययश्चेत्येतात्रितये निपातनात्कृते मघवन्शब्दः । श्वादेरित्यत्रोक्त एव । इति तांताः । गोपायतीति गुप् । क्विबंतः । अयादयोऽनपीति वैकल्पिकत्वादिहायप्रत्ययाभावः । आयप्रत्ययपक्षे तु यत इत्यल्लोपे यलोपे च गोपा इति रूपं बोध्यम् । इति पांताः। तमिव पश्यतीति दृशेष्टक्सकाविति चकारात् क्विप् । आ सर्वादेरित्यात्वम् । दिशामिति कुत्वम् । तादृक् ॥

तत्त्व॰–अत्वसोः साविति । अतुश्च अस् च अत्वसौ तयोः । अतुरत्र प्रत्ययावयवः केवलस्यासंभवात् असत्तुत्वन्निरर्थकोऽपि । अतुग्रहणसामर्थ्यात्प्रथमं दीर्घः पश्चान्नुम् । अन्यथा तुमंहण व्यर्थं स्यात् अत्वंतस्य धातोरपि । गोमन्तमिच्छन् गोमानित्यत्र यथा अधातोरित्यनुवृत्तं तु अनंतरत्वादम् इत्यनेनान्वेति इत्यभिप्रेत्याह । अवात्वसन्तस्येति । धातुभिन्नासन्तस्येत्यर्थः ॥

**नशेः ॥३१६॥ को वा पदान्ते स्यादौ झसे च ॥ नक्, नट्, नड् नशौ नशः । नग्भ्याम्, नड्भ्याम् । नक्षु, नट्सु । विट्, विड् विशौ विशः । स्पृक्, स्पृग् स्पृशौ स्पृशः । घृतस्पृक् । उदकपूर्वस्य न कुत्वम् । उदकस्पृट्, उदकस्पृड् उदकस्पृशौ । दधृक्, दधृग् दधृषौ । दधृक्षु । रत्नमुट्, रत्नमुड् रत्नमुषौ । रत्नमुड्भ्याम् । षष्शब्दो नित्यं बहुवचनांतस्त्रिषु सरूपः । जश्शसोर्लुक् । षट्, षड् ॥**

सुबो॰–नशेः । नशेः कवर्गांतादेशो वा स्यात् स्यादौ झसे पदांते च । नश अदर्शने । क्विप् षत्वम् । जबत्वचपत्वे । नट्, नड् । कत्वे तु । नक्, नग् । विश् प्रवेशने क्विप् । षत्वं जबत्वचपत्वे । विट्, विड् । घृतं घृतेन वा स्पृशतीति घृतस्पृक् । उदकपूर्वस्य न कुत्वं उदकपूर्वस्य स्पृशेस्तु दिशामिति कुत्वं न । उदकं स्पृशतीति षत्वं न । उदकस्पृट् । इति शांताः । ञिधृषा प्रागल्भ्ये । अस्मात् क्विप् द्वित्वम् । निपातनात् दिशामिति कुत्वम् । धृष्णोतीति दधृक् । मुष स्तेये । रत्नानि

मुष्णातीति रत्नमुट् । जश्शसोरिति जश्शसोर्लुक् । डत्वं जवत्वचपत्वे । षट्, षड् । डत्वे । षड्भिः । आमि ष्ण इति नुटि कृते षस्य डत्वं नस्य च ष्टुत्वम् ॥

**ड्णः ॥३१७॥ डकारस्य णो भवति नामि परे ॥ षण्णाम् । षट्सु, षट्त्सु । परमषट्, परमषड् । परमषण्णाम् । गौणत्वे तु प्रियषट् । प्रियषषः । प्रियषषाम् ॥**

सुबो०—ड्णः । डकारस्य चपेष्वंतर्भूतत्वादपदांतत्वाच्च ञमे ञमा वेत्यस्याऽप्राप्तौ सत्यामारंभः । आगमा यद्गुणीभूता इति परिभाषया नुटः प्रत्ययावयवत्वात् प्रत्ययञमे इत्यनेन ञमत्वस्वीकारे व्यर्थमिदम् । नादिति धुटि । षट्त्सु । तदंतेऽप्ययं विधिर्वांछितः । परमाश्च ते षट् च परमषट् तेषां परमषण्णाम् । षडर्थप्राधान्ये एव लुग्नुटौ न तु गौणत्वे । प्रियाः प्रियाणि वा षट् येषां ते प्रियषषः तेषां प्रियषपाम् ॥

तत्त्व०—ड्ण इति । ड्ण इति छेदः । षशब्दस्य डत्वे प्रथमैकवचनमित्याशयेनाह । ष इति । संख्याया इत्यनुवृत्तेः षष्ठीनिर्दिष्टत्वादन्त्यस्यैव नाद्यस्येति भावः । सख्यायाः किम् । सजुषाम् ॥

**दोषां रः ॥ ३१८ ॥ दोषादीनां रो भवति रसे पदान्ते च ॥ दोषौ शसादौ वा । दोषन् । दोष्णः । दोर्भ्याम्, दोषभ्याम् ॥**

सुबो०—दोषां रः । जवचपविसर्गाणामपवादः । बहुवचनमाद्यर्थम् । दाम्यतीति दोः दमेर्डोसिति डोस्प्रत्यये डित्वाट्टिलोपः । "भुजबाहू प्रवेष्टो दोः" इत्यमरः । पाद्दंतेति वा दोषन्नादेशः शसादौ अल्लोप इत्युपधालोपः णत्वम् । दोष्णः ॥

तत्त्व०—दोषामिति । बहुवचनमाद्यर्थम् । व्युत्पत्तिपक्षे ओक्षि सुप्रत्ययांतानां स्रोर्विसर्ग इति विसर्गेणैव सिद्धिस्तथापि सजुष्शब्दस्य परत्नदीर्घार्थम् । तुसामिसोस्तु रत्वे दीर्घार्थं सूत्रकरणम् ॥

**विसर्गनुम्स्थानिकानुस्वारव्यवधानेऽपि ॥ ३१९ ॥ क्रिलात्परस्य सस्य षः ॥ दोःषु, दोष्षु, दोष्सु । ग्वोर्विहसे । पिपठीः पिपठिषौ । पिपठीर्भ्याम् । पिपठीःषु । विविट्, विविड् विविक्षौ विविक्षः । तट्, तड् तक्षौ तक्षः । गोरट्, गोरड् गोरक्षौ गोरक्षः । तक्षिरक्ष्योस्संयोगान्तलोप इत्येके । तक्, तग् । गोरक्, गोरग् २ ॥**

सुबो०—विसर्गनुम्स्थानिकानुस्वारव्यवधानेऽपि । क्रिलात्परस्य सस्य षः । क्रिलादिति पंचमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनम् । एतद्व्यवधानेऽपि आभ्यां परस्य षः स्यात् । सुपिरत्वविसर्गयोः कृतयोः शसे वेति विकल्पात् पक्षे सकारस्तस्य षत्वम् । सुपः सस्य तु ष्टुत्वम् । दोष्षु । विसर्गपक्षे विसर्गनुमिति षत्वम् । दोःषु । नाम्नो न इति नलोपे । दोष्सु । नुम्स्थानिकाऽनुस्वारेति व्याख्यानान्नेह । सुहिन्सु । पुंसु ।

पिपठिषतेः क्विपि यत इत्यल्लोपे कृत्तद्धितेति स्याद्युत्पत्तौ पिपठिष् सि इति स्थिते परत्वाद्रेफे कृते सिलोपे च दीर्घः । पिपठीः । विश् प्रवेशने । अस्मात्सः नानिटि स इति गुणाभावः द्वित्वादि विवक्षिते क्विप् स्कोरिति कलोपः जवत्वचपत्वे । विविट्, विविड् । तक्षू तनूकरणे । अस्मात् क्विप् स्कोरिति कलोपे । तट्, तड् । गां रक्षतीति क्विप् स्कोरिति कलोपे । गोरट् । तक्षिरक्ष्योः संयोगान्तलोप इत्येके । स्कोरिति कलोपो न किंतु संयोगांतलोप इत्यर्थः ॥

तत्त्व०—पिपठीरिति । पठितुमिच्छति पिपठिषति पिपठिषतीति क्विपि रत्वे दीर्घे च पिपठीरिति ॥

**कलोपे कुत्वमसिद्धम् ॥ ३२० ॥ पिपग्, पिपक् पिपक्षौ पिपक्षः । पिपक्षु । एवं विवक् । दिधक् । सुपीः सुपिसौ । सुपीःषु । एवं तुसूः । विद्वान् विद्वांसौ विद्वांसः । हे विद्वन् ॥**

सुबो०—कलोपे कुत्वमसिद्धम् । स्कोरिति कलोपे कर्तव्ये चोः कुरिति कुत्वस्यासिद्धत्वं वक्तव्यम् । अन्यथा स्कोरिति कलोपः स्यादित्यर्थः । पक्तुमिच्छतीति पिपक् । संयोगांतलोपः । वक्तुमिच्छतीति विवक् । दह भस्मीकरणे । दादेरिति घः । आदिजबानामिति धः । दग्धुमिच्छतीति दिधक् । इति शांताः । पिस गतौ । सुष्ठु पेसतीति सुपीः । तुस खंडने । सुष्ठु तोसतीति तुसूः । क्विबंतः । वेत्तीति विदेर्वा वसुरिति शतृस्थाने वसुः । अदादित्वादपो लुक् । अपित्सादिर्ङिदिति ङित्वान्नोपधागुणः । उदित्वान्नुम् । न्सम्महत इति दीर्घः । संयोगांतलोपस्यासिद्धत्वान्नलोपो न । विद्वान् ॥

**वसोर्व उः ॥ ३२१ ॥ वसोर्वकारस्य उत्वं भवति शसादौ स्वरे तद्धितयस्वरमतुष्वापीकारे च ॥ विदुषः । विद्वद्भ्याम् । विद्वत्सु । सेदिवान् । वस्योत्वे इडभावः । सेदुषः । सेदिवद्भ्याम् । ऊषिवान् । ऊषुषः । ऊषिवद्भ्याम् । शुश्रुवान् । नुधातोः । शुश्रुवुषः । शुश्रुवद्भ्याम् । महच्छब्दसाहचर्यादधातोर्न्स गृह्यते । नेह । सुहिन् सुहिन्सौ । सुहिन्भ्याम् । सुहिन्सु । ध्वत् ध्वसौ । वसां रसे । ध्वद्भ्याम् । एवं स्रत् ॥**

सुबो०—वसोर्व उः । अच्चास्थ्नामित्यतः शसादाविति वा दीपोरित्यतः ई ईपोरिति चानुवर्तेते । तद्धितयस्वरमतुष्विति च व्याख्यानात् । वसुक्तसोर्वकार उकारः स्यात् । तद्धिते । वैदुषः । अण् । वैदुष्यम् । यण्मतौ । विदुष्मान् । ईईपोर्विदुषी । सस्वरस्य वस्योत्वम् । यवराणामिति पृथङ्निर्देशात् । वसामिति दत्वम् । विद्वद्भ्याम् । ससादेति सदः कद्युः हिश्चेति द्वित्वं पूर्वस्येति हसादिः शेषः लोपः

पचामित्येत्वपूर्वलोपौ । क्वित्वे सत्येकस्वरादितीट् । उदित्त्वान्नुम् । न्सम्महत इति दीर्घः । सेदिवान् । वस्योत्वे इडभावः । निमित्ताभावे नैमित्तिकस्याप्यभाव इत्युक्तत्वात् । वकाराभावे इडभावः । एवमुवासेति । यजामिति संप्रसारणं णवादौ पूर्वस्येति पूर्वस्य संप्रसारणं दीर्घत्वं घसादेरिति षः । ऊषिवान् । शुश्रावेति शुश्रुवान् । नुधातोरित्युव् । शुश्रुवुषः । सुष्ठु हिनस्तीति न्सम्महत इति सूत्रे महत्साहचर्याद्धातोर्न्संतस्य न दीर्घः अधातोरित्यनुवृत्तेर्वा । ततश्च संयोगांतलोपस्यासिद्धत्वान्नोपधादीर्घः । सुहिन् । टनादिति वा धुट् । सुहिन्त्सु । ध्वंसते इति ध्वत् । स्रंसु ध्वंसु अवस्रंसने । ध्वंसु गतौ च । आभ्यां क्विप् नोलोप इति नलोपः वसामिति दत्वम् । ध्वद्भ्याम् ॥

तत्त्व०—वसोर्व उरिति । अत्र वसुक्वसोः सामान्यग्रहणम् । एकानुबंधग्रहणे द्व्यनुबंधकस्य ग्रहणं नेति परिभाषा तु नेहाश्रियते । उकारसहितस्य विधानात् । तथाहि विदेर्वसुरिति सूत्रेण शतुर्वसुरादेशो विधीयते तत्र स्थानिनः शतुः ऋत्वादेव ऋित्कार्ये सिद्धे पुनरादेशे उदित्करणं व्यर्थमिति ज्ञापयति । वसुग्रहणेन क्वसोरपि ग्रहणं यथा स्यादिति । अल्लोप इति सूत्राच्छसादाविति लभ्यते । तत्रादिशब्दः प्रकारे तेन णादिष्वपि हेऽपीत्याह । तद्धितेत्यादि ॥

पुंसोऽसुङ् ॥२२२॥ पुंसोऽसुङादेशः पुंसि पंचसु शौ च ॥ पुमान् पुमांसौ पुमांसः। हे पुमन् । पुंसः। पुंभ्याम् । पुंसु । वेधाः वेधसौ । हे वेधः । वेधोभ्याम् ॥

सुबो०—पुंसोऽसुङ् । सो नः पुंस इत्यतो मंडूकप्लुत्या पुंस इत्यनुवर्त्तते । न्सम्महत इत्यतः सिंहावलोकितन्यायेन शावित्यपकृष्यते । पुँल्लिंगस्य पुम्शब्दस्याऽसुङ् स्यात् पंचसु । ङित्वादंतादेशः । पतेर्डुम्सुरित्यौणादिकडुम्सुप्रत्ययस्योदित्त्वात् । तेनैव नुम्सिद्धेः असुङ उकार उच्चारणार्थः । शौ । प्रियपुमांसि । अधावित्युक्तत्वात् न्सम्महत इति न दीर्घः । हे पुमन् । सुपि संयोगांतलोपे मोऽनुस्वारः नुम्स्थानिकाऽनुस्वारव्यवधानेऽपीत्युक्तत्वान्न षत्वम् । पुंसु । विधाञो वेध चेत्यसुप्रत्ययः अत्वसोरिति दीर्घः । वेधाः । विश्वसृट् ॥

तत्त्व०—पुंसोऽसुङिति । अत्र न्सम्महत इति सूत्रात्सिंहावलोकितेन शौ चेत्यपकृष्यते । सो नः पुंस इत्यतो मण्डूकप्लुत्या पुंस इत्यनुवर्त्तते उकारस्तूच्चारणार्थः । पुंसो डुम्सुरिति प्रत्यये ङित्वेन नुम् सिद्धेः । पुनः पुमांसि सिद्धेऽसुङ्करणमन्यतोऽपि विधानार्थम् । तेन जराशब्दे सिद्धम् । पुंस्विति संयोगांतलोपे मोऽनुस्वारः नुम्विसर्गेति न षत्वम् । नुम्स्थानिकानुस्वारस्यैव ग्रहणात् ॥

उशनसाम् ॥ २२३ ॥ उसनसपुरुदंशसअनेहसां सेरधेर्डा । उशनाः उशनसौ । उशनसः। उशनसो धौ नान्तता अदन्तता वा वाच्या । हे उशनन्, हे उशन, हे उशनः । उशनोभ्याम् । उशनस्सु ॥

सुबो०—उशनसाम् । बहुवचनमार्थम् । सेरधेरित्यनुवर्तते । "उशना भार्गवः

कविः " इत्यमरः । धौ नांतत्वेऽदंतत्वे सांतत्वे च रूपत्रयं भवति । उक्तं च । सं-बोधन इत्यादि । सांतम् । सस्य नकारादेशे नांतं सस्य लोपेऽदंतं इगंते इदंतं उदंते ऋदंते च क्लीबे धौ गुणमिति । पुरु बहु दंशतीति पुरुदंशा इंद्रः । नञि हन एह चेत्यसुप्रत्यये । अनेहाः कालः ॥

तत्त्व०–उशनसामिति । बहुवचनमाद्यर्थम् । अत्राहुः। उशनेत्यत्र संज्ञापूर्वकत्वान्नोपधाया इति दीर्घो नेति । अत्रेदमवधेयम् । इयं शंका टिलोपे कृतेऽकृते वा । नाद्यः । तत्र नान्तत्वाभावात्सांतस्यैव दर्शनात् । द्वितीयेऽपि नान्तस्य नाम्नि इति व्याख्यानात् । तत्र नित्यमिति सवंघात् नित्यं नाम्न इति लाभात् । प्रकृते तदभावादेव नेति विचारः ॥

सौ सः ॥ ३२४ ॥ अदसो दस्य सः सौ ॥

सुबो०–सौ सः । मत्वापवादः ॥

तत्त्व०–सौ स इति । अत्र त्यदादेष्टेरिति सूत्रात्त्यदादेरित्यस्यानुवृत्तेर्विवरणे त्यदादेर्दस्येत्येवोचितं न त्वदस इति । यदि तु त्यदादेरदस इति व्याख्यायते तदा न दोषः । त्यदादेः किम् । वन्दः । नन्दः । दस्य किम् । यः । सौ किम् । अमूनि । स इत्यकारसहितत्वान्नाभ्यासस्य ॥

सेरौः ॥ ३२५ ॥ अदसस्सेरौर्भवति ॥ असौ । दस्य मः ॥

सुबो०–सेरौः । अदसः परस्य सेरौः स्यात् । असौ । अत्र वाशब्दमनुवर्त्य व्यवस्थितविकल्प आश्रयणीयस्तेन अकसहितस्यादसः सेरौत्वमौत्वाभावे सात्परस्य उत्वं च वक्तव्यम् । असुकौ असुकः इति स्त्रियां असुकौ औत्वाभावे असुका अमुक इति अमुकी इति च प्रयोगो असाधुरेव । अथ कथममुकगोत्रस्याऽमुकशर्मण इति । अपभ्रंश एवायमिति प्रांचः । अमुकशब्दोऽव्युत्पन्नं नाम वृत्तिविषये एव प्रयुज्यते इत्यन्ये ॥

तत्त्व०–सेराविति । ननु स्त्रियामकारान्तस्यासकाविति कथम् । काप्यत इतीत्वेन भवितव्यमिति चेत्सत्यम् । टेरौ डिदित्यतो डिदित्यनुवृत्तेर्डित्वाट्टिलोपे रूपसिद्धेः । अथ वेत्यनुवृत्तेस्तस्य व्यवस्थितस्याश्रयणात् साकाददसः सेरौत्वं वा । औत्वाभावे सादुत्वं च । असुकः । तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् साकस्यापि त्यदादिकार्यम् । कथममुकगोत्रस्य अमुकगोत्र इति चेत् अपभ्रंश एवायमिति दीक्षिताः । रामाश्रमास्तु । अमुकशब्दोऽव्युत्पन्नं नाम वृत्तिविषये प्रयुज्यते केवलस्य तु अदकसुशब्दस्यैव प्रयोगः । अमुक इत्येकवचने तु यदि शिष्टप्रयोगस्तदा साधु नो चेत् असाधुरेवामुकशब्दस्य तु वृत्तिविषये प्रयोगाभ्युपगमो युक्त एवेति । यद्यपि सामान्येऽकः स्यादित्यकच्चेति व्युत्पादितस्तथा तत्तस्य प्रयोगः समास एव न स्वतन्त्रस्येत्याहुः । तत्रेदमवधेयम् । इत्थं हि महानिबन्धानामृषिवाक्यानां च गतौ सत्यां नामामाण्यमापादनीयामिति स्वीकृत्यैव शिष्टप्रयोगानिश्चये पुनर्यदि विशिष्टप्रयोग इत्यादिसंशयोक्तिर्विघटेति ॥

मादू ॥ ३२६ ॥ अदसो मात्परस्य उश्च ऊश्च भवति ॥ अमू । जासि ॥

सुबो०–मादू । उश्च ऊश्चानयोः समाहार ऊ । संज्ञापूर्वकत्वान्न ह्रस्वः ॥

तत्त्व०–मादू इति । मात् उ ऊ इति छेदः । समाहारे ह्रस्वत्वापत्तेः यद्यस्तु समाहारः ह्रस्वत्वस्यां तु संज्ञापूर्वकत्वात् अनित्यत्वात् अत्राहुः । मादिति पंचमीनिर्देशात्परः स्थानी लभ्यते स च हसः स्वरश्च मात्परस्य हसस्यासंभवात्स्वर एव गृह्यत इति । अत्रेदमवधेयम् । अमुमुयङित्यत्र मात्परस्य रेफरूपहसस्योत्वदर्शनात् । हसस्यासभवात्स्वर एव गृह्यत इत्युक्तिर्निर्मूला । तथा चोक्तं दीक्षितैः । ह्रस्वव्यंजनयोर्ह्रस्वः दीर्घस्य तु दीर्घ इति व्यंजनस्यासंभवे कथमिदं संगच्छते इति ॥

एरी बहुत्वे ॥ ३२७ ॥ अदस एकारस्येर्भवति बहुत्वे सति ॥ अमी । असुं अमू अमून् । असुना अमूभ्यां अमीभिः । अमुष्मै । अमुष्मात् । अमुष्य अमुयोः अमीषाम् । अमुष्मिन् अमुयोः अमीषु ॥ इति हसांताः पुँल्लिंगाः ॥

सुबो०--एरी बहुत्वे । अदसः किम् । ते । ए किम् । अमून् । बहुत्वे किम् । अमुयोः ॥ इति हसांताः पुँल्लिंगाः ॥

तत्त्व०--एरी बहुत्व इति । बहुत्वे किम् । अमुयोः ॥

श्रीरामकरपौत्रेण लोकेशकरशर्म्मणा । कृतायामिह टीकायां पुँल्लिंगोऽगाद्धसांतकः ॥

इति हसान्ताः पुँल्लिंगाः ।

---

नहो धः ॥३२८॥ नहो हस्य धो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ उपानत्, उपानद् । उपानद्भ्याम् । उपानत्सु । उष्णिक्, उष्णिग् उष्णिहौ उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु । द्यौः दिवौ । द्युभ्याम् । द्युषु । गीः गिरौ । गीर्भ्याम् गीर्षु । एवं पुर्धुरादयः । चतस्रः । प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । हे प्रियचत्वाः ॥

सुबो०--नहो धः । ढस्यापवादः । हो ढ इत्यतो हस्येत्यनुवर्तते । उपपूर्वान्नहः क्विप् । न हि वृतीति पूर्वपदस्य दीर्घः । उपनह्यते इति उपानत् । उत्पूर्वात् ष्णिह प्रीतावित्यस्मात् क्विप् । निपातनादलोपषत्वे दिशामिति हस्य घः । जबत्वचपत्वे । उष्णिक्, उष्णिग् । दिव औ इत्यौत्वे । द्यौः । उरसे इत्युत्वे । द्युभ्याम् । गॄ निगरणेऽस्मात् गॄशब्दे इत्यस्माद्वा क्विप् ऋत इतीर् । य्वोर्विहसे इति दीर्घः । गीः । एवं पॄ पालनपूरणयोः । पोरुरित्युर् । पूः । धुर्वी हिंसायाम् । क्विपि वयोरिति वलोपः । धूः । त्रिचतुरोरिति चतस्रादेशः । न तिसृचतस्रोरिति न दीर्घः । चतसृणाम् । प्रियाश्चत्वारो यस्याः सेति यदा स्त्रियां मुख्यावित्युक्तत्वान्न चतस्रादेशः । चतुरामित्याम् । प्रियचत्वाः । धावमित्यम् । हे प्रियचत्वः ॥

तत्त्व०--नहो घ इति । तथदानामन्यतमस्तु नोक्तः नद्ध इत्यसिद्धेः । उपानादिति उपपूर्वान्नहेः क्विपि नहिवृतीत्यादिना पूर्वस्यात्वम् । अत्रेदं विभाव्यम् । सुष्ठु अनड्वानस्यामिति बहुव्रीहौ स्वनड्वानित्येव न तु नदादिरत्रादीपि स्वनड्वाहीति । अनुपसर्जनादिति तन्निषेधात् । उष्णिगिति उत्पूर्वात्ष्णिह प्रीतावित्यस्मात्क्विपि निपातनादलोपषत्वे । गीरिति । गॄ निगरणे शब्दे च । क्विपि ऋत इरिति इत्वे य्वोर्वि हस इति दीर्घः । पूरिति । पॄ पालनपूरणयोरित्युत्वम् ॥

इयं स्त्रियाम् ॥ ३२९ ॥ इदमः स्त्रियामियं सौ ॥ इयं इमे इमाः ।

अनया आभ्यां आभिः। अस्यै। अस्याः। अनयोः आसाम्। अस्यां आसु। अन्वादेशे। एनां एने एनाः। एनया। एनयोः। स्रक्, स्रग् स्रजौ। स्रग्भ्याम्। स्रक्षु। समित्, समिद् समिधौ समिधः। समिद्भ्याम्। समित्सु। स्या त्ये त्याः। एवं तद् यद् एतद् किम्। वाक् वाचौ। वाग्भ्याम्। वाक्षु। ककुप्, ककुब् ककुभौ। ककुब्भ्याम्। ककुप्सु। त्वक्, त्वग् त्वचौ त्वचः। त्वचम्। त्वग्भ्याम्। ऋक्, ऋग् ऋचौ ऋचः। ऋचम्। ऋग्भ्याम्। ऋक्षु। अप्शब्दो नित्यं बहुवचनान्तः। आपः। अपः॥

सुबो०–इयं स्त्रियाम्। इदमोऽयमित्यतः इदं इत्यनुवर्तते। सौ स इत्यतः साविति च। त्यदाद्यत्वे आप् मत्वं औरितीत्वम्। इमे। अनटौ सोरित्यनादेशः। टौसोरित्येत्वम्। अनया। स्भ्य इत्यत्वम्। आभ्याम्। अन्वादेशे इदमेतदोरित्येनत्। शेषं सर्ववत्। स्रजेः क्विप् अमागमश्च निपातितः। दिशामिति कुत्वम्। स्रक्, स्रग्। "इध्ममेधः समित् स्त्रियाम्" इत्यमरः। त्यदाद्यत्वे आप्। त इति। सः। स्या। वचेः क्विपि वचीति क्विपि परे दीर्घो संप्रसारणं च। चोः कुरिति कः। वाक्। आप्नोतेर्ह्रस्वश्चेति ह्रस्वश्चात् क्विप् न्सम्महत इति दीर्घः। आपः॥

तत्त्व०–इयं स्त्रियामिति। अत्रापि स्त्रियामिति ग्रहणं लुकि न तन्निमित्तस्यानित्यत्वे लिंगम्। अन्यथा इदमित्यत्र सेरभावादेवाप्रासौ स्त्रियां ग्रहणमनर्थकं स्यात्॥

भिदपाम्॥२३०॥ अप्शब्दस्य दत्वं भवति भकारादौ विभक्तौ॥ अद्भिः। अद्भ्यः। अपाम्। अप्सु। दिक्, दिग् दिशौ दिशः। दिग्भ्याम्। दिक्षु। त्विट्, त्विड् त्विषौ त्विषः। दृक्, दृग् दृशौ दृशः। सह जुषत इति सजूः सजुषौ सजुषः। सजूर्भ्याम्। सजूःषु। आशीः आशिषौ। आशीर्भ्याम्। आशीःषु। असौ अमू अमूः। अमूम् अमू अमूः। अमुया अमूभ्याम् अमूभिः। अमुष्यै। अमुष्याः। अमूषाम्। अमुष्यां अमूषु॥ इति हसान्ताः स्त्रीलिंगाः॥

सुबो०–भिदपाम्। अपामिति बहुवचनं चिंत्यम्। अप्नः त्रेरितिवदेकवचनमेव युक्तम्। दिशेः क्विप्। दिशामिति कुत्वम्। दिक्, दिग्। त्विष् दीप्तावित्यस्मात् क्विप्। षो ड इति डत्वम्। त्विट्। दृशेः क्विप् दिशामिति कुत्वम्। दृक्। जुषी प्रीतिसेवनयोरित्यस्मात् क्विप् दोषामिति गः य्वोरिति दीर्घः। सजूर्मित्रम्। शसे वेति

वा सः विसर्गेनुस्स्थानिकेति षत्वम् । सजूःषु । छुत्वम् । सजूष्षु । आशासः क्वावित्युपधाइत्वं घसादेरिति षः । आशीः । त्यदाद्यत्वे आप् सौ स इति दस्य सः सेरा इत्यौत्वम् । असौ । दस्य म इति मत्वम् । औ इतीत्वं एत्वं मादू इत्यूत्वम् । अमू ॥ इति हसान्ताः स्त्रीलिंगाः ॥

तत्त्व०–भिदपामिति । भिद् अपां इति च्छेदः । बहुवचनं चिंत्यम् । सुष्ठु आपो यस्मिन्स स्वाप् स्वब्भ्यामित्यत्रेष्टत्वात् । प्राधान्यद्योतनायेत्यपि न स्ववसस्वतवसमासां वैदिकानां संग्रहार्थमाद्ययं बहुवचनमिति माधवः । तन्नेति रामाश्रमः अत्र लौकिकानामेव प्रतिपाद्यत्वेन वैदिकप्रतिपादनस्यायुक्तत्वात् । अन्यथा अन्येषामपि व्युत्पाद्यत्वमिति न । नहि वैदिकव्युत्पादने यवनभाषायामिवापराधः । यदपि अन्यथेत्यादि तत्रापि देवासः देवेभिः गोनामित्यादीनां व्युत्पादनदर्शनात् कथं न व्युत्पाद्यत्वम् । यदपि लौकिकप्रयोगनिष्पत्तये इति मूलविरोधाच्चेति । तत्रापि न मात्रपदं नवा एवपदं वैदिकव्यवच्छेदकं दृष्टमस्ति नच लौकिकपदाद्वैदिकनिरास इति वाच्यम् । लौकिकानां बहूनां व्युत्पादनेन तद्ग्रहणस्योचितत्वात् छत्रिणो गच्छतीतिवत् । यदि माधवमतखण्डने आग्रह एव तदा इत्थम् । संज्ञिनिर्देशे प्रथमस्योचिते विपरीतनिर्देशादन्यत्रापीति वैदिकानां सिद्धिः । वस्तुतस्तु भ्यमोऽदिति सूत्रणीयं लाघवात् वैदिकानां तु छंदसि दृष्टानुविधिरित्येव सिद्धिरिति दिक् । व इत्यनुवृत्तावपि विभक्तिविपरिणामक्लेशनिवृत्त्यर्थंग्रहणम् । आशिषाविति । आशासः क्वावुपधाया इतीत्वे घसादेरिति षत्वम् ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्म्मणा । विहितायां हि टीकायां स्त्रीलिंगोऽगाद्धसांतकः ॥

## इति हसांताः स्त्रीलिंगाः ।

स्वनडुत् स्वनडुद् स्वनडुही स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । ः वारी वारि । वार्भ्याम् । वार्षु । ऊरसे । विमलद्यु विमलदिवी विमलदिवि । किं के कानि । इदं इमे इमानि । अन्वादेशे । एनत् एने एनानि । ब्रह्म ब्रह्मणी ब्रह्माणि । हे ब्रह्मन्, हे ब्रह्म ॥

अह्नः ॥ ३३१ ॥ अहन्शब्दस्य सो भवति रसे पदांते च ॥ अहः अह्नी, अहनी अहानि । अह्ना अहोभ्याम् । कर्म कर्मणी कर्माणि । एवं चर्मन्-वर्मन्-धन्वनादयः। दण्डि दण्डिनी दण्डीनि । स्रग्वि स्रग्विणी स्रग्वीणि । वाग्मि वाग्मिनी वाग्मीनि । बहुवृत्रह बहुवृत्रघ्नी, बहुवृत्रहणी बहुवृत्रहाणि । बहुपूष बहुपूष्णी, बहुपूषणी बहुपूषाणि । बह्वर्यम बह्वर्यम्णी, बह्वर्यमणी बह्वर्यमाणि । असृक् असृजी असृंजि । शसादौ वाऽसन् । असानि । अस्ना असभ्याम् । ऊर्क् ऊर्जी ऊर्जि ॥

सुबो०–सुष्ठु अनड्वान् यस्मिन् तत् । वसामिति दत्वम् । स्वनडुत् । शौ अनडुह्स्त्रेत्याम् । नुमयम इति नुम् । स्वनड्वांहि । टादौ पुंवद्रूपं यमांतत्वाच्च नुम् । वारि ।

विमला द्यौर्यस्मिन् तद्विमलद्यु । औ परतोऽन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखंडस्यापि पदसंज्ञायां प्राप्तायामाह । उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणं नेति । उत्तरशब्देनोत्तरपदमुच्यते । उत्तरपदस्य पदत्वव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः । पदादिविधौ तु प्रत्ययलक्षणं भवति पदत्वाभावादुत्वं न । विमलदिवी । लुकि नेति त्यदाद्यत्वं न । किम् । एवमिदम् । इदमेतदोरित्येनदादेशे । एनत् । वेङ्च्योरित्यलोपो न । वकारमकारांतसंयोगादुत्तरस्य नेति निषेधात् । ब्रह्मणी । धौ नपुंसकानामिति वा नस्य लोपः । हे ब्रह्मन्, हे ब्रह्म । अह्नः । नस्य विसर्गविधानं युक्तम् । सस्यापि विसर्गविधानावश्यकत्वात् । तदंतेऽपीष्टं सत्वम् । दीर्घाणि अहानि यस्मिन् स दीर्घाहाः निदाघः । दीर्घाहन् सि इत्यत्र हसेप इति सिलोपः । नोपधाया इति दीर्घे च कृते ततः सकारः वेङ्च्योरिति वाऽल्लोपः । अह्नी, अहनी । अलोपः स्वरे इत्यलोपः । अह्ना । भ्यामि सत्वे कृते विसर्गः । हवे इत्युत्वं ओत्वं च । अहोभ्याम् । दंडोऽस्यास्तीति मातोपधादितीन् । नाम्नो न इति नलोपः । दंडि । इनामिति दीर्घः । दंडिनी । स्रगस्यास्तीति विन् । स्रग्वि । वागस्यास्तीति ग्मिम् । वाग्मि । बहवो वृत्रहणो यस्मिन् तत् नाम्नो न इति नलोपः । बहुवृत्रह । वेङ्च्योरित्युपधालोपे इनो घ्न इति घः । बहुवृत्रघ्नी । अल्लोपाभावे । बहुवृत्रहणी । इनामिति दीर्घः । बहुवृत्रहाणि । बहवः पूषाणो यस्मिन् तत् । बहुपूष । बहवोऽर्यमणो यस्मिन् तत् । बह्वर्यम । अस्यतेरौणादिके ऋज्प्रत्यये । असृज् । चोः कुरिति कुत्वम् । असृक् । पाददंतेत्यसन् अल्लोपः स्वरे इत्यल्लोपे । अस्ना । ऊर्जतीति ऊर्क् । शौ । उन्र्जि । नरजानां संयोगः । बहव ऊर्जो यस्मिन् तत् । बहूर्क् ॥

तत्त्व०–अह्न इति । घोर्विसर्गे इत्यतो विसर्ग इत्यनुवर्त्तते । कश्चित्तु सस्ताविरयत समनुवर्त्य तमेव व्याधित । तत्रेति रामाश्रमः । सस्यापि विसर्गविधानावश्यकत्वेन विसर्गविधानस्यौचित्यात् । वस्तुतस्तु सस्येवाव्यवहितत्वेन तदनुवृत्तेरेवौचित्यं युक्तम् । क्षत्यभावात् । दीर्घाण्यहानि यस्मिन्निदाघे इति विग्रहे दीर्घाहन् सि इति स्थिते हसेप इति सिलोपे नोपधाया इति दीर्घे पश्चादह्न इति विसर्गः । दीर्घाहाः । धै स्वधाविति निषेधाद्दीर्घाभावे विसर्ग एव । हे दीर्घाहः ॥

**बहुर्जौ नुम्प्रतिषेधः ॥ ३३२ ॥ अन्त्यात्पूर्वो वा नुम् ॥ बहूर्जि, बहूर्ञ्जि । त्यत् त्ये त्यानि । तत् ते तानि । यत् ये यानि । एतत् एते एतानि । अन्वादेशे । एनत् एने एनानि । बेभित् बेभिदी बेभिंदि ॥**

सुबो०–बहुर्जौ नुम्प्रतिषेधः । अन्त्यात्पूर्वो वा नुम् । बहूर्ज्शब्दस्य भाष्यमते नुम् । केतदोरित्यनदादेशः । एनत् । बेभिद्यते इति बेभित् । यङंतात् क्विप् ॥

तत्त्व०–बहूर्ञ्जि इति । नरजाणां संयोगः । सौ न नुमिति । वाननुवृत्तेर्व्यवस्थितत्वादिति भाव. ॥

**सयङन्तस्य शौ नुम् ॥ ३३३ ॥ चेच्छित् चेच्छिदी चेच्छिंदि ।**

"गवाक्शब्दस्य रूपाणि क्लिबेऽर्चागतिभेदतः। असन्ध्यगागमाल्लोपैर्नवाधिकशतं मतम् ॥ स्यंसुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः । चत्वारि शेषे दशके रूपाणीति विभावय ॥ " गवाक्, गवाग्, गोअक्, गोअग्, गोक्, गोग्, गवाङ्, गोअङ्, गोङ् । गोची, गवाञ्ची, गोअञ्ची, गोञ्ची । गवाञ्चि, गोअञ्चि, गोञ्चि । गवाक्षु, गोअक्षु, गोक्षु, गवाङ्क्षु, गोअङ्क्षु गोङ्क्षु, गवाङ्खुषु, गोङ्खुषु । तिर्यक् तिरश्ची तिर्यञ्ची। तिर्य्यङ् तिर्यञ्ची तिर्यञ्चि । यकृत् यकृती यकृंति, यकानि । यक्ना, यकृता । यकभ्याम्, यकृद्भ्याम् । एवं शकृत् । ददत् ददती ददति, ददन्ति । एवं जाग्रदादयः । तुदत् ॥

सुबो०–सयङंतस्य शौ नुम् न । सश्च यङ् च सयङौ सयङावंते यस्य स सयङंतस्तस्य सयङंतस्य नाम्नो नुम् न शौ परे । बेभिदि । चेच्छिद्यते इति चेच्छित् । शौ । चेच्छिदि । सप्रत्ययांतस्य शौ पिपठिषि । " जायंते नव सौ तथाऽमि च नव भ्यामुभिसभ्यसां संगमे षट्संख्यानि नवैव सुप्यथ च सि त्रीण्येव तद्वच्छसि । चत्वार्यत्यवचत् सु कस्य विबुधाः शब्दस्य रूपाणि तज्जानंतु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥ " राजसभायामिति श्लोकः केनचित् कविनोक्तस्तदा कश्चित्पंडितः श्लोकद्वयेन तमुत्तरमाह । " गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः । असंध्यगागमाल्लोपैर्नवाधिकशतं मतम् ॥ " व्याख्या । गवाक्शब्दस्य रूपाणि अर्चागतिभेदतः पूजागत्यर्थभेदेन नवाधिकशतं बोध्यानि । " विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः । " इत्युक्तत्वादेकत्वं शते । अंचेर्गतौ नस्य लोपः पूजायां तु नेत्याशयः । कीदृशम् । असंध्यगागमाल्लोपैर्मतं गो एवेत्यगागमेन गोर्वेति प्रकृतिभावाल्लोपाभ्यां वाचार्याणां मननविषयीभूतम् । उक्तसंख्यामाह । प्रत्येकं स्यमुसुप्सु नव रूपाणि स्युः । भादौ षट्के षट् । जश्शसोस्त्रीणि । शेषे दशके प्रत्येकं चत्वारि । इति नवाधिकशतं रूपाणि त्वं विभावय जानीहि । शसे चपस्येति वार्तिकमनाश्रित्योक्तमन्यथा त्रीणि रूपाणि वर्द्धते इत्यर्थः । गामंचतीति विग्रहे क्विप् । गतौ नलोप इति नलोपः । गोअच् सि इति स्थिते अगागमे चोः कुरिति कुत्वम् । गवाक् १ । गवाग् २ । प्रकृतिभावे गोअक् ३ गोअग् ४ । अल्लोपे गोक् ५ गोग् ६ । पूजायां नस्य कुत्वेन ङः । गवाङ् ७ । प्रकृतिभावे गोअङ् ८ । लोपे गोङ् ९ । अस्यप्येतानि रूपाणि । औ परतः अचेरित्यल्लोपे गोची १ । पूजायां तु गवांची २ गो-

अर्ची ३ गोंची ४। शौ नुमयम इति नुम्। गतिपूजनयोस्त्रीण्येव सादृश्यात्। गवांचि १ गोअंचि २ गोंचि ३। टापरतः अचेरित्यल्लोपः। गोचा १। पूजायाम्। गवांचा २ गोअंचा ३ गोंचा ४। भ्यामि गवाग्भ्याम् १ गोअग्भ्याम् २ गोग्भ्याम् ३। पूजायां गवाङ्भ्याम् ४ गोअङ्भ्याम् ५ गोङ्भ्याम् ६। भिसि परे गवाग्भिः १ गोअग्भिः २ गोग्भिः ३। पूजायां गवाङ्भिः ४ गोअङ्भिः ५ गोङ्भिः ६। ङे परतः अचेरित्यलोपः। गोचे १। पूजायाम् गवांचे २ गोअञ्चे ३ गोञ्चे ४। भ्यामि प्राग्वत्। भ्यसि गवाग्भ्यः १ गोअग्भ्यः २ गोग्भ्यः ३। पूजायां गवाङ्भ्यः ४ गोअङ्भ्यः ५ गोङ्भ्यः ६। ङसौ गोचः १। पूजायां गवांचः २ गोअंचः ३ गोंचः ४। भ्यामि भ्यसि च प्राग्वत्। ङस्परतो ङसिवत्। ओसि गोचोः १। पूजायां गवांचोः २ गोअंचोः ३ गोंचोः ४। आमि गोचाम् १। पूजायाम् गवांचाम् २ गोअंचाम् ३ गोंचाम् ४। ङौ गोचि १। पूजायां गवांचि २ गोअंचि ३ गोंचि ४। ओसि च गोचोः १। पूजायाम् गवांचोः २ गोअंचोः ३ गोंचोः ४। सुपि गवाक्षु १ गोअक्षु २ गोक्षु ३। पूजायाम् ङसे ङ्णोरिति ङाताना कुक्पक्षे। गवाङ्क्षु ४ गोअङ्क्षु ५ गोङ्क्षु ६। कुगभावे गवाङ्षु ७ गोऽङ्षु ८ गोअङ्षु ९। एवं नवाधिकशतं रूपाणि कुक्पक्षे शसे चपस्येति ककारस्य खकारेण त्रयाणामाधिक्यं ज्ञेयम्। अन्यत्र तु कुत्वस्यासिद्धत्वान्न खकारः। एवं द्वादशाधिकम्। तिरोऽचतीति नोलोप इति नलोपः चोः कुरिति कुः। तिर्यक्। सहादित्त्वात्तिरिः। औ परतः तिरश्चादय इति। तिरश्चः। तिरश्ची। शौ नुमयम इति नुम्। तिर्यंचि। पूजायां तिर्यङ्। यकृत् कालखंडम्। शकृत् पुरीषम्। शसादौ पाददंतेति यकन्शकन्नादेशौ वा। ददादिति पुंल्लिंगे उक्त एव। विद्युक्तानां जक्षादीनां चेति वा नुम्। ददंति, ददति वा॥

तत्त्व०—गवागूशब्दस्येत्यादि। अर्चागतीत्यादी। अर्चा पूजा गतिगमनं तयोर्भेदस्तस्मात्। असंध्यगागमालोपैरिति। गोर्वा गोरग्वेति विकल्पद्वयेन रूपत्रयमिति भावः। स्यम्सुप्स्विति प्रत्येक नव नवेत्यर्थः। भादाविति। भकारादौ इत्यर्थः। तथाहि सौ गत्यर्थतायामनलोपे असंधौ अगागमे च पर्यायेण रूपत्रयम्। तत्रैव वावसान इति कगयोर्विकल्पाद्रूपषट्कम्। पूजायां त्वसंध्यादिविकल्पे रूपत्रयमिति संकलनया नव। एवमभ्यपि औद्वये तु गत्यर्थतायां अंचेर्दीर्घ इत्यकारलोपे तन्निमित्तासंध्यादिरूपद्वयाभावादेकमेव। पूजार्थतायां तु नलोपाभावादलोपस्याभावेऽसंध्यादिविकल्पेन रूपत्रयम्। संकलनया प्रत्येकं रूपचतुष्टयम्। एवं टाप्रभृतौ स्वरादौ सर्वत्र प्रत्येकरूपचतुष्टयं बोध्यम्। जश्शसोस्तु गत्यर्थायां नलोपेऽपि पुनर्नुमा विशेषाभावात् प्रत्येकं त्रीण्येव। भ्यामादौ तु त्रीणि। गतौ त्रीण्यर्चायामिति षट् षट्। सुपि तु पूजार्थतायां ङसे ङ्णोः कुक्टुकाविति कुग्विकल्पेन षट्। गतौ तु त्रयमेवेति नव। कुक्पक्षे शस्ये च यस्येति विकल्पेन यदि खकारस्तदा रूपत्रयाधिक्यं भवत्येव वा॥

**वा दीपोः शतुः॥३३४॥** अवर्णांतात्परस्य शतुर्वा नुमीकारे ईपि च॥ तुदती, तुदन्ती तुदन्ति। भात् भाती, भान्ती भांति॥

सुबो०—वा दीपोः शतुः । आत् ईपोरिति पदच्छेदः । आदिति पंचमी न तु तपरत्वम् । ईश्च ईप् च ईपौ तयोरीपोः । शतुरित्यवयवषष्ठी । ननु तुदती इत्यत्र शिति चतुर्वदित्यनेन कृतस्य तुदादेरित्यप्रत्ययस्यादित्यनेनांतरंगत्वाल्लोपे कृतेऽव-र्णात्परत्वाभावान्नुम् न स्यात् । उच्यते । प्रत्ययलक्षणेन तत्परत्वमस्त्येव । न चैवं घ्नंती-न्त्यादावपि प्रसंगः । लुकि न तन्निमित्तमित्यनेन प्रत्ययलक्षणप्रतिषेधात् । भा-तीति भात् । भा दीप्तौ । शतृप्रत्यये शित्वादप् । अदादित्वादपो लुक् ॥

तत्त्व०—वा दीपोः शतुरिति । वा आत् ईपोः शतुरिति छेदः। आदिति पचमी न तपरत्वम् । ईश्च ईप् च ईपौ तयोः ईपोरित्यत्र जवाभावे उत्तरपदस्यान्तर्वर्तिविभक्त्या पदत्वं नेति ज्ञापितम् । तेन परमवाचामित्यत्र कुत्वाद्यभावः । अदीपोरादीपोरिति तु न छेदः । उत्तरसूत्रेतिग्रहणसामर्थ्यात् । तुदन्तीत्यत्रावर्णस्यादेरित्यनेन लोपे कथमात्परत्वमिति चेत्सत्यम् । प्रत्ययलक्षणत्वेनेति गृहाण । अथ घ्नन्तीत्यत्रातिव्याप्तिरिति चेत् न। लुकि न तन्निमित्तमिति निषेधात् । अथ कथमग्रहणेन सानुबधकप्रकृत्या यवर्णसामान्यस्य ग्रहण निरनुबंधक-ग्रहणे न सानुबधकस्य । अर्थवद्ग्रहणे नानर्थकस्य । प्रत्ययाप्रत्ययोः प्रत्ययस्यैवेति परिभाषात्रयेण निषेधादिति वाच्यम् । अप्याभ्यां नित्यविधानेन परिभाषात्रयस्यात्राप्रवृत्तिज्ञापनात् । न ह्यन्यथाप्याभ्यामनेन विकल्पः प्राप्तो येन नित्यमित्यर्थवद्भवेत् । ईप्ग्रहण तु सानुबन्धकस्य ग्रहणे निरनुबंधकस्य ग्रहण नेति ज्ञापनार्थम् ॥

**अप्ययोरान्नित्यम् ॥ ३३८ ॥** अप्प्रत्ययप्रत्ययसंबन्धिनोऽवर्णा-त्परस्य शतुर्नुम् नित्यमीकारे ईपि च ॥ पचत् पचन्ती पचंति । दीव्यत् दीव्यन्ती दीव्यन्ति । स्वप्, स्वब् स्वपी । न्सम्महत इति दीर्घः। स्वांपि । दीर्घो नेत्येके । स्वंपि । स्वपा । भिदपाम् । स्वब्द्भ्यां स्वाब्भिः । जगत् जगती जगन्ति । महत् महती महन्ति । धनुः धनुषी ॥

सुबो०—अप्ययोरान्नित्यम् । वा दीपोरित्यत ईपोरित्यनुवृत्तम् । विकल्पे प्राप्ते नित्यविधानार्थमिदम् । अप् च यश्चाप्यौ तयोरात्परस्य शतुर्नित्यं नुम् भवति । ई-ईपोः ननु अप्ययोरित्यत्र चपा अबे इति जबत्वं वक्तुं युक्तम् । उच्यते । ज्ञापना-र्थमेवं निर्देशः । प्रत्यये परतः क्वचित्पदत्वं नेति । तेन ताडित्वानित्यादि सिद्धम् । पचतीति पचत् । अप् कर्तरीत्यप् । अदे इत्यल्लोपः। दीव्यतीति दीव्यत् । दिवादे-रिति यः । सुष्ठु आपो यस्मिन् सरसि तत् स्वप् । ऋक्पूरित्यप्रत्ययो न । न पूजने इति निषेधात् । शौ नित्यत्वात् नुमः प्राक् दीर्घः । स्वांपि । तदंते दीर्घोऽस्य ने-त्येके । स्वंपि । अर्तिपृवपियजितनिधनितपिभ्य उसित्यौणादिकः धनेरुस् । धनुः । शौ न्सम्महत इति दीर्घः । विसर्गनुमिति षत्वम् ॥

तत्त्व०—अप्ययोरान्नित्यमिति । अप् च यश्च अप्यौ तयोः । अबेरिति वक्तव्ये झेनाकरण ज्ञापक पकारे क्वचिदपदांतर्वर्तिविभक्त्या पदान्त नेत्यस्य तेन वैदुष्यमित्यत्र वसा रस इति दत्व न आप्यौ नित्यमिति सुब-न्तम् । आदित्यस्यानुवृत्ते आरम्भसामर्थ्यान्नित्यत्वे लब्धेऽपि । अदीपोरादीपोरिति सन्देहनिरासार्थं नित्यग्रहणम् ॥

**न्सपूर्वस्य शौ दीर्घः ॥ ३३९ ॥** धनूंषि । हविः हविषी हवींषि ।

पादयः किम् । भार्यामीर्ष्यति । मैनामन्योऽद्राक्षीदिति हेतोः चतुर्थी बलिहितसुखरक्षितैः । एभिर्योगे चतुर्थी स्यात् । बलिः पूजोपहारकः । ब्राह्मणाय बलिः हितं सुखं रक्षितं वा । चशब्दादन्येऽप्यनुक्तप्रयोगा ज्ञेयाः ॥ इति चतुर्थी ॥

तत्त्व०—क्रुधद्रुह इति । क्रुध क्रोधे । द्रुह द्रोहे । ईर्ष्य ईर्ष्यायाम् । असूयेति कण्ड्वादियगतः । एषामर्थ इवार्थो येषां धातूनामित्यर्थः तत्र क्रोधोऽमर्षः । ईर्ष्या असहनम् । असूया तु गुणेषु दोषारोपः । क्रुधद्रुहोरकर्मकत्वात्तद्योगे पचमीति ॥

**ऋतेआदियोगे पञ्चमी ॥ ४६७ ॥** ऋते ज्ञानान्न मुक्तिः । अन्यो गृहाद्विहारः । आराद्वनात् । इतरो ग्रामात् । भिन्नः कृष्णात् । पूर्वो ग्रामात् । प्राग्ग्रामात् । दक्षिणा ग्रामात् ॥

सुबो०—ऋतेआदियोगे पंचमी । ज्ञानादृते विना मुक्तिर्न । ऋते योगे द्वितीयापि । ऋते द्वितीया चेति चांद्रसूत्रोक्तत्वात् । गृहादन्यो विहारो वनं वनादारात् । "आराद्दूरसमीपयोः" इत्यमरः। दूरांतिकयोगे षष्ठ्यपीति प्राप्ते पंचमी । ग्रामादितरः । "इतरस्त्वन्यनीचयोः" इत्यमरः । नीचार्थस्येतरस्य ग्रहणं न । कृष्णाद्भिन्नोऽन्य इत्यर्थः । एवं पूर्व-दक्षिणा-दक्षिणाहियोगे । अंचूत्तरपदयोगे च पंचमी ॥

तत्त्व०—ऋते ज्ञानादिति । कथ तर्हि पुरुषाराधनमृते इति प्रमादोऽयमित्येके । ऋते द्वितीया चेति वा चान्द्रसूत्रात् द्वितीयापि ॥

**विनापृथक्नाना वा ॥ ४६८ ॥** विना कृष्णात् ॥

सुबो०—विनापृथक्नाना वा । विनापृथक्नानाभिर्योगे द्वितीयातृतीयापंचम्यो भवंति । "हिरुक् नाना च वर्ज्जने इत्यमरः ॥

**विद्यास्वीकारे पञ्चमी ॥ ४६९ ॥** उपाध्यायादधीते ॥

सुबो०—विद्यास्वीकारे पंचमी। विद्यास्वीकारे वक्तुः पंचमी भवति । यथा उपेत्यस्मादधीयते इत्यपादाने घञ् । उपाध्यायादधीते शिष्यः । निःसरंतं शब्दं ततो गृह्णातीत्यर्थः ॥

**जनिकर्तुः प्रकृतिः ॥ ४७० ॥** जायमानस्य कार्यस्योपादानमपादानसंज्ञं स्यात् ॥ ब्रह्मणः प्रजाः प्रजायन्ते ॥

सुबो०—जनिकर्तुः प्रकृतिः । उत्पद्यमानस्य कार्यस्य हेतोः पंचमी । यथा । ब्रह्मणो धातुः प्रजाः प्रजायंते । उत्पद्यंते इत्यर्थः। तत उपक्रामंति निर्गच्छंतीत्यर्थो वा । ब्रह्मा हिरण्यगर्भः । स च हेतुरेव न पुनरुपादानम् । "प्रजा स्यात्संततौ जने" इत्यमरः ॥

**यतश्चाध्वकालयोर्निर्माणं तत्र पञ्चमी ॥ ४७१ ॥** पञ्चमीयुक्ताद-

ध्वनः प्रथमासप्तम्यौ कालात्सप्तमी ॥ वनाद्ग्रामो योजनं योजने वा । कार्त्तिक्या आग्रहायणी मासे ॥

सुबो०—यतश्चाध्वकालयोर्निर्माणं तत्र पंचमी । यतश्चाध्वकालयोः परिच्छेदः क्रियते तस्मात्पंचमी भवति । अध्ववाचकशब्दात्तु प्रथमासप्तम्यौ । कालवाचकात्तु सप्तम्येव । वनात् ग्रामो योजनं योजने वा । अग्रे हायनं यस्याः सा अग्रहायणी । स्वार्थेऽण् । कार्तिक्याः पूर्णमास्या आग्रहायणी मासेऽस्ति ॥

वर्जनेऽपपरिभ्यां पञ्चमी ॥४७२॥ अप हरेः संसारः । परि हरेः संसारः । आमुक्तेः संसारः ॥

सुबो०—वर्जनेऽपपरिभ्यां पंचमी । वर्जनार्थयोरपपर्योर्योगे पंचमी । यथा । अप हरेः परि हरेः संसारः । हरिं वर्जयित्वेत्यर्थः । मर्यादार्थकाङ्योगे पंचमी । यथा । आ मुक्तेः संसारः । मुक्तिं मर्यादीकृत्येत्यर्थः । एवमभिविध्यर्थकाङ्योगेऽपि पंचमी । यथा । आ बालेभ्यो हरिभक्तिः बालानभिव्याप्येत्यर्थः ॥

प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ४७३ ॥ यतः प्रतिनिधिः प्रतिदानं तत्र प्रतियोगे पंचमी ॥ प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् ॥

सुबो०—प्रतिः प्रतिनिधिप्रतिदानयोः । एतयोरर्थयोर्यः प्रतिस्तस्य योगे पंचमी स्यात् । मुख्यस्याभावे तत्सदृशो य उपादीयते स प्रतिनिधिः । दत्तस्य प्रतिनिधिर्यातनं प्रतिदानम् । षष्ठीबाधिका पंचमीयम् । कृष्णात् प्रति । कृष्णस्य सदृश इत्यर्थः । तिलेभ्यः प्रति । तिलानामादानेन मैत्रो माषान् यच्छति ददातीत्यर्थः । भयहेतौ पंचमी । भयार्थानां त्राणार्थानां च प्रयोगे भयहेतोः पंचमी स्यात् । षष्ठीबाधिकेयम् । मैत्रश्चौराद्बिभेति । चोरात् त्रायते ॥

हेतौ तृतीयापंचम्यौ ॥ ४७४ ॥ जाड्याज्जाड्येन वा बद्धः । स्तोकात्स्तोकेन वा मुक्तः ॥

सुबो०—हेतौ तृतीयापंचम्यौ । गुणे वर्तमानात् हेतुवाचकशब्दादस्त्रीलिंगात्तृतीयापंचम्यौ स्तः । जडस्य भावो जाड्यं तेन तस्माद्वा बद्धः स्तोकेन स्तोकाद्वा । अनायासेन मुक्त इत्यर्थः । गुणवाचकात् किम् । धनेन कुलम् । अस्त्रीलिंगात्किम् । बुद्ध्या मुक्तः । तृतीयाप्राप्तौ पक्षे पंचमी विधीयते ॥

दूरान्तिकयोर्योगे षष्ठ्यपि॥४७५॥ ग्रामस्य दूरादन्तिकाद्वा इत्यादि॥

सुबो०—दूरांतिकयोगे षष्ठ्यपि । अनयोर्योगे षष्ठी भवति । अपिशब्दाद्दूरांति-

कार्थकेभ्यो नामार्थमात्रे द्वितीयातृतीयापंचमीसप्तम्यो भवंतीत्यर्थः । ग्रामस्य दूरं दूरेण दूरात् दूरे वा । अंतिकं अंतिकेन अंतिकात् अंतिके वा ॥ इति पंचमी ॥

निर्द्धारणे षष्ठीसप्तम्यौ ॥ ४७६ ॥ क्रियागुणजातिसंज्ञाभिः समुदायात्पृथक्करणं निर्द्धारणं यतस्ततः षष्ठीसप्तम्यौ ॥ क्रियापराणां क्रियापरेषु वा भगवदाराधकः श्रेष्ठः। गवां गोषु वा कृष्णा सम्पन्नक्षीरा। नृणां नृषु वा ब्राह्मणः श्रेष्ठः । छात्राणां छात्रेषु वा मैत्रः पटुः ॥

सुबो०—निर्धारणे षष्ठीसप्तम्यौ । निर्द्धारणादियोगे षष्ठीसप्तम्यौ । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणं तदस्ति साध्यत्वेनास्येति स निर्द्धारणः । अइकावित्यप्रत्ययः । श्रेष्ठत्वादिहेतुरित्यर्थः । तथा च निर्द्धारणादियोगे निर्द्धारणाश्रयान्नाम्नः षष्ठीसप्तम्यौ स्तः। यतो निर्धार्यते तत एवेत्यर्थः॥ इति षष्ठी ॥

तत्त्व०—क्रियागुणेत्यादि । निर्द्धारणमस्यास्तीति निर्द्धारणः । अइकावित्यतः निर्द्धारणे हेतुरिति यावत् । तथा च निर्द्धारणादियोगे षष्ठीति सम्यगेव नतु निर्द्धारणार्थे इति अर्थपरो निर्द्धारणशब्द. । आदिशब्दस्य द्वंद्वात्परत्वेन प्रत्येक योगस्यानिवार्यत्वात् किं च निर्द्धारणार्थे षष्ठीत्युक्ते कस्मात्षष्ठीनिर्द्धारणाश्रयान्निर्द्धारणहेतौ निर्द्धार्यमाणादितीति विनिगमनाभावः । योगे षष्ठीति मते, तु हेतुयोगे विधानाद्धेतौ न निर्द्धार्यमाणादपि । स्वनिष्ठत्वेनाभिधानान्न परिशेषान्निर्द्धारणाश्रयादेव । नन्वत्र समूहसमूहिलक्षणे सबंधे एव षष्ठी किमनेनेति चेत्सत्यम् । स्वाम्यादित्वान्निर्द्धारणयोगे सप्तमी विधास्यते । तया बाधा मा भूदित्यतोऽपि षष्ठीविधानम् ॥

स्वाम्यादियोगे षष्ठीसप्तम्यौ ॥ ४७७ ॥ गवां गोषु वा स्वामी अधिपतिः ईश्वरः दायादः प्रसूतः प्रतिभूर्वा ॥

सुबो०—स्वाम्यादियोगे षष्ठीसप्तम्यौ । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैर्योगे षष्ठीसप्तम्यौ स्तः । षष्ठीप्राप्तौ पाक्षिकसप्तम्यर्थं वचनम् । "दायादौ सुतबांधवौ" इत्यमरः । गोषु प्रसूतः । गा एवानुभवितुं जात इत्यर्थः । प्रतिभूः साक्षी ॥

तत्त्व०—प्रसूत इति । गा एवानुभवितु जात इत्यर्थः ॥

अनादराधिक्ये क्रियालक्षणे षष्ठीसप्तम्यौ ॥ ४७८ ॥ रुदति रुदतो वा प्राव्राजीत् ॥

सुबो०—अनादराधिक्ये क्रियालक्षणे षष्ठीसप्तम्यौ । केवलभावलक्षणे सप्तम्येव । अनादराधिक्ये तु षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा मैत्रः प्राव्राजीत् । रुदंतं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ॥

तत्त्व०—रुदतीति । रुदत पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ॥

आयुक्तकुशलाभ्यां योगे षष्ठीसप्तम्यौ तात्पर्ये ॥ ४७९ ॥ आयुक्तः कुशलो वा हरिपूजनस्य हरिपूजने वा ॥

सुबो०—आयुक्तकुशलाभ्यां योगे षष्ठीसप्तम्यौ तात्पर्ये । तत्परस्य भावः तात्पर्यं

तस्मिन् तात्पर्येऽर्थे आभ्यां योगे षष्ठीसप्तम्यौ स्तः । हरिपूजने हरिपूजनस्य वा आयुक्तो व्यापारित इत्यर्थः । तात्पर्ये किम् । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ॥

**साधुनिपुणाभ्यां पूजायां सप्तमी ॥४८०॥ मातरि साधुर्निपुणो वा ॥**

सुबो०-साधुनिपुणाभ्यां पूजायां सप्तमी । निपुणे शुभे कर्मणि अस्मान्नाम्युपधादिति कः । निपुणः । साधुशब्दप्रयोगे तु पूजां विना साध्वसाधुप्रयोगे सप्तमी भवत्येव । पूजायामाभ्यां योगे सप्तमी स्यात् । पूजायां किम् । निपुणो राज्ञो भृत्यः । इह तत्वकथने तात्पर्यम् । प्रतिपर्यनुयोगे न सप्तमी । साधुर्निपुणो वा मातरं प्रति पर्यनु वा ॥

**प्रसितोत्सुकाभ्यां योगे तृतीयासप्तम्यौ ॥ ४८१ ॥ प्रसित उत्सुको वा हरिणा हरौ वा ॥**

सुबो०-प्रसितोत्सुकाभ्यां योगे तृतीयासप्तम्यौ । "तत्परे प्रसितासक्तौ" इत्यमरः । उत्सुकसाहचर्यात्प्रसितस्तत्परार्थक एव गृह्यते तेन प्रकर्षेण सितः शुक्ल इत्यर्थे न ॥

तत्त्व०-प्रसित इति । " तत्परे प्रसितासक्तौ " इत्यमरः ॥

**साध्वसाधुप्रयोगे सप्तमी ॥४८२॥ साधुः कृष्णो मातर्यसाधुर्मातुले ॥**

सुबो०-साध्वसाधुप्रयोगे सप्तमी । यत्र पूजा न विवक्षिता किंतु तत्वकथनं तत्रापि सप्तमी भवति एतदर्थं साधुग्रहणम् । साधुनिपुणाभ्यामिति सूत्रे साधुग्रहणं तु पूजायां विवक्षितायां प्रत्यादियोगे सप्तमीनिवृत्त्यर्थमिति ॥

**निमित्तात्कर्मयोगे सप्तमी ॥ ४८३ ॥ " चर्मणि द्वीपिनं हंति दन्तयोर्हंति कुंजरम् । केशेषु चमरीं हंति सीम्नि पुष्कलको हतः ॥ "**

सुबो०-निमित्तात्कर्मयोगे सप्तमी । कर्मणो योगे संबंधः कर्मयोगस्तस्मिन् कर्मयोगे निमित्तात्फलात्सप्तमी स्यात् । निमित्तशब्देन कारणग्रहणे तु जाड्येन बद्ध इत्यादावप्यतिप्रसंगः स्यादित्यर्थः । अत्र हेतुतृतीया तादर्थ्यचतुर्थी च प्राप्ता तन्निवारणार्थमिदम् । मैत्रो द्वीपिनं चित्रकं हंति चर्मणि चर्मफलार्थम् । चर्मद्वीपिनोः समवायः संबंधः । कुंजरं हंति दंतयोर्दंतफलाय । दंतकुंजरयोः समवायः संबंधः । चमरीं गां हंति केशेषु केशफलार्थम् । केशचर्मयोः समवायः संबंधः । मैत्रेण पुष्कलको गंधमृगो हतः सीम्नि अंडकोशफलार्थम् । अथवा पुष्कलकः शंकुर्हतो निहितो निखात इत्यर्थः । सीम्नि सीमज्ञापनार्थम् । सीमपुष्कलकयोः संयोगः संबंधः । " अथ पुष्कलको गंधमृगे क्षपणकीलयोः । " इति मेदिनी । " सीमा घाटस्थितिक्षेत्रेष्वंडकोशेषु च स्त्रियाम् । " इति मेदिनी ॥

तत्त्व०-निमित्तमिह फलम् । योगः संयोगः समवायात्मकः । सीम्नीति । सीमाण्डकोशः । पुष्कलको गंधमृगः । योगविशेषे किम् । वेतनेन धान्यं लुनाति ॥

न् चक्राण चक्रिर्वा । सुखं हरिः । हरिं दिदृक्षुः । अलंकरिष्णुर्वा । दैत्यान् घातुको हरिः । जगत्सृष्ट्वा । सुखं कर्तुम् । विष्णुना हता दैत्याः । दैत्यान् हतवान् हरिः । ईषत्करः प्रपंचो हरिणा । सोमं पवमानः । आत्मानं मंडयमानः । वेदमधीयन् । कर्ता लोकान् ॥

सुबो०–वर्तमानाधारार्थक्तस्य योगे षष्ठी । वर्तमानार्थस्याधिकरणवाचिनश्च क्तस्य योगे कर्तरि षष्ठी स्यात् । अक्तादाविति निषेधस्यापवादोऽयं विधिः । राज्ञां मतः । ञिताभिति मतिबुद्धिपूजार्थेभ्यो वर्तमाने कर्मणि क्तः । "पूजितो यः सुरासुरैः" इत्यादौ तु भूते क्तो बोध्यः । इदमेषां शयितमासितं भुक्तं वा । स्थैर्यगतिभक्षणार्थेभ्यः इत्याधिकरणे क्तः । क्तादय उच्यंते । कर्तृकर्मणोः षष्ठीबाधकाः । हरिः सुखं कुर्वन् कुर्वाणः । शतृशानौ तिप्तेवदिति शतृशानौ । चक्रवान् चक्राणः । क्वसुकानौ णवेवदिति क्वसुकानौ । आदृतः किर्द्विश्च । भूते इति किः । मैत्रो हरिं दिदृक्षुः । सांता आशंसभिक्षिभ्य उरित्युः । अलंकरिष्णुः । इष्णुस्नुक्नु इति शीले इष्णुः । हरिर्दैत्यान् घातुकः । षाकोकण इत्युकण् । कृत्कर्तरि कर्त्तरीति प्रत्यया एते । जगत् सृष्ट्वा । पूर्वकाले क्त्वेति क्त्वा । सुखं कर्तुम् । तुम् तदर्थायां भविष्यतीति तुम् । विष्णुना दैत्या हताः । हरिर्दैत्यान् हतवान् । क्तक्तवतू इति क्तक्तवतू प्रत्ययौ । हरिणा प्रपंचं ईषत्करः । ईषद्दुःसुषु खल्पू इति खल् । मैत्रः सोमं पवमानः । आत्मानं मण्डयमानः । मडि भूषायाम् । ताच्छील्यवयोवचनशक्तिष्वानशित्यानश् । मैत्रो वेदमधीयन् । इङ्धार्योरकृच्छ्रिणि कर्तरि शतृ इति शतृप्रत्ययः । हरिर्लोकान् कर्त्ता । शीले तृन्निति तृन् ॥

द्विषश्शतुर्वा ॥ ४९३ ॥ मुरस्य मुरं वा द्विषन् ॥

सुबो०–द्विषः शतुर्वा । द्विष अप्रीतौ इत्यस्मात् द्विषः शताविति सूत्रेण विहितो यः शतृप्रत्ययस्तस्य योगे कर्मणि वा षष्ठी स्यात् । क्तादित्वान्नित्ये निषेधे प्राप्ते विकल्पार्थमिदम् । अक्तादावित्ययं निषेधस्तु कारकषष्ठ्या एवानंतरस्य विधिर्वा प्रतिषेधो वेति न्यायात् । संबंधे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन्नरकस्य जिष्णुरित्यादि । एवं च आश्चर्यो गवां दोहो अगोपेनेत्यत्र संबंधविवक्षायां कर्तर्यपि षष्ठी भवतीति बोध्यम् ॥

भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थस्येनश्च योगे षष्ठी न ॥ ४९४ ॥ सतः पालकोऽवतरति । व्रजं गामी । शतंदायी ॥

सुबो०–भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थस्येनश्च योगे षष्ठी न । तुमर्थे वुण् इति भविष्यत्यर्थेऽपि वुण्प्रत्ययो भवति । युवोरनाकावित्यकादेशः । तस्य भवि-

ण्यदर्थकस्याकस्य योगे कर्मणि षष्ठी न स्यात् । यस्तु कालसामान्ये तृवुणाविति वुणुक्तस्तत्र न निषेधः । यथा । ओदनस्य पाचकः । देशानां दर्शकः । आवश्यकाधमर्ण्ययोर्णिनिरित्यादिना इनिप्रत्ययो भविष्यत्यर्थे आधमर्ण्येऽर्थे च भवति तस्य योगे च कर्मणि षष्ठी न सत इति शतृप्रत्ययांतम् । सज्जनान्पालयिष्यतीति पालकः । भविष्यत्यर्थे वुण् । गमिष्यतीति गमी । भविष्यत्यर्थे णिनिः । ददातीति दायी । अधमर्णो ग्राहकः अधमर्णस्य भाव आधमर्ण्यं तस्मिन्नाधमर्ण्ये णिनिः ॥

**कृत्यानां कर्त्तरि वा षष्ठी ॥ ४९५ ॥ मया मम सेव्यो हरिः ॥**

सुबो०—कृत्यानां कर्तरि वा षष्ठी । कृत्यसंज्ञकप्रत्ययानां योगे कर्तरि षष्ठी वा स्यात् । कर्तृकार्ययोरिति नित्यं प्राप्ते विकल्पार्थमिदम् । हरिर्मया मम वा सेव्यः । षेवृ सेवायामस्मात् ऋहलाद् ण्यणिति कर्मणि ण्यण् । कर्तरि किम् । माणवकः साम्नां वेदानां गेयः । स्वगाद्य इति कर्त्तरि यप्रत्ययविधानादनुक्तं कर्म । तव्याऽनीयण्यण्य क्यप् एते पंच कृत्यप्रत्ययाः ॥

**उभयप्राप्तौ कृत्ये षष्ठी न ॥ ४९६ ॥ नेतव्या व्रजं गावः कृष्णेन ॥**

सुबो०—उभयप्राप्तौ कृत्ये षष्ठी न । कर्तरि कर्मणि च प्राप्तौ सत्यां कृत्यप्रत्यययोगे उभयत्र षष्ठी न स्यात् । उभयप्राप्तौ कृतीति सूत्रेण कर्तरि षष्ठीनिषेधे सिद्धे कर्मणि षष्ठीनिषेधार्थमिदम् । गुणकर्मणि वेति सूत्रं उभयप्राप्तिरहितस्थले । नेता ग्रामं ग्रामस्य वाश्वस्येत्यादौ चारितार्थं बोध्यम् ॥

**दूरनिकटार्थयोगे षष्ठीपञ्चम्यौ ॥ ४९७ ॥ दूरं निकटं वा ग्रामस्य ग्रामाद्वा ॥**

**दूरनिकटार्थेभ्यो नामार्थमात्रेभ्यो द्वितीया तृतीया पंचमी सप्तमी ॥४९८ ॥ ग्रामस्य ग्रामाद्वा । दूरं दूरेण दूरात् दूरे निकटं वा ॥**

सुबो०—दूरनिकटार्थयोगे षष्ठीपंचम्यौ । षष्ठ्यां प्राप्तायां पक्षे पंचम्यर्थं वचनम् ॥

**द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी ॥ ॥ ४९९ ॥ शतस्य दीव्यति ॥**

सुबो०—द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी । द्यूतमर्थो यस्य स द्यूतार्थस्तस्य द्यूतार्थस्य । क्रयश्च विक्रयश्च क्रयविक्रयौ क्रयविक्रयौ रूपं यस्य सः क्रयविक्रयरूपः क्रयविक्रयरूपश्चासौ व्यवहारश्च क्रयविक्रयरूपव्यवहारः क्रयविक्रयरूपव्यवहारोऽर्थो यस्य सः क्रयविक्रयरूपव्यवहारार्थस्तस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवधातोः कर्मणि षष्ठी स्यात् । द्यूतार्थस्य[illegible] दीव्यति । स्तौतीत्यर्थः ॥

**वोपसर्गस्य ॥ ५०० ॥** शतस्य शतं वा प्रतिदीव्यति ॥

सुबो०–वोपसर्गस्य । उपसर्गपूर्वकस्य दिवः कर्मणि वा षष्ठी स्यात् । पूर्वसूत्रापवादः ॥

**षष्ठी हेतुप्रयोगे ॥ ५०१ ॥** अन्नस्य हेतोर्वसति ॥

सुबो०–षष्ठी हेतुप्रयोगे । हेतुशब्दप्रयोगे षष्ठी स्यात् । हेतुशब्दे च हेतौ तृतीयायां प्राप्तायामनेन षष्ठी ॥

**सर्वादेर्हेतुप्रयोगे हेतौ द्योत्ये च तृतीयाषष्ठ्यौ ॥ ५०२ ॥** केन हेतुना वसति । कस्य हेतोः ॥

सुबो०–सर्वादेर्हेतुप्रयोगे हेतौ द्योत्ये च तृतीयाषष्ठ्यौ । सर्वादिगणात्तृतीयाषष्ठ्यौ । तेन हेतुशब्दप्रयोगे तु तृतीयाषष्ठ्यौ च ॥

**निमित्तपर्यायप्रयोगे सर्वादेः सर्वा विभक्तयोऽसर्वादेस्तृतीयादयः ॥ ५०३॥** को हेतुः । किं प्रयोजनम् । कं हेतुम् । केन हेतुना । ज्ञानेन निमित्तेन हरि सेव्यः । ज्ञानाय निमित्ताय ॥

सुबो०–निमित्तपर्यायप्रयोगे सर्वादेः सर्वा विभक्तयोऽसर्वादेस्तृतीयादयः । सर्वादेर्निमित्तपर्यायप्रयोगे सर्वा विभक्तयः स्युः । असर्वादेस्तु प्रथमाद्वितीये न स्तः अन्याः स्युः । षष्ठी हेतुप्रयोगे सर्वादेर्हेतुप्रयोगे इति च सूत्रद्वयं गतार्थं बोध्यम् ॥

तत्त्व०–चकारस्यानुक्तसमुच्चयार्थस्यानुवर्तमानात् एतत्सर्वार्थलाभः । सर्वा विभक्तय इति सर्वादेरित्यर्थः ॥

**अन्योक्ते प्रथमा ॥ ५०४ ॥** आख्यातकृत्समासतद्धितनिपातोक्ते कारके सम्बंधे च प्रथमा स्यात् ॥ घटः क्रियते । हरिः करोति । कृष्णः कंसं हतवान् । कृष्णेन कंसो हतः । पचनोऽग्निः। दानीयो विप्रः । उपाध्यायः । पचनी स्थाली । प्राप्तानन्दः । ऊढरथः । उपहृतपशुः । उद्धृतौदना । पीताम्बरः। वीरपुरुषः । कौंकुमम् । माथुरः। धनवान् । दृषद्वती । " विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् । " इति । " क्रमादमुन्नारद इत्यबोधि सः " ॥ इति विभक्त्यर्थाः ॥

सुबो०–अन्योक्ते प्रथमा । कार्ये द्वितीया स्यात् । अन्योक्ते कार्ये तु प्रथमा । कर्तरि तृतीया । अन्योक्ते कर्तरि प्रथमा । करणे तृतीया । अन्योक्ते करणे प्रथमा । संप्रदाने चतुर्थी । अन्योक्ते संप्रदाने प्रथमा । अपादाने पंचमी । अन्योक्ते अपादाने प्रथमा । संबन्धे षष्ठी । अन्योक्ते संबन्धे प्रथमा । अधिकरणे सप्तमी । अ-

न्योक्ते अधिकरणे प्रथमा । आख्यातोक्ते यथा । घटः क्रियते मैत्रेण । आङ्कुवीति कर्मण्यात् । यक् चतुर्ष्विति यक् । हरिः सुखं करोति । कर्त्तरि पं चेति कर्तरि परस्मैपदं तनादेरुवित्युप् । कृदुक्ते यथा । कृष्णः कंसं हतवान् । क्तक्तवतू इति कर्तरि क्तवतुः । कृष्णेन कंसो हतः । कर्मणि क्तः । पच्यतेऽनेनेति पचनोऽग्निः । साधनाधारयोर्युडिति करणे युट् । दीयतेऽस्मा इति दानीयः । तव्यानीयाविति संप्रदानेऽनीयः । उप समीपे गत्वाऽधीयतेऽस्मादित्युपाध्यायः । संज्ञायामकर्तरि चेत्यपादाने घञ् । पच्यतेऽस्यामिति पचनी । साधनाधारयोरित्याधिकरणे युट् । स्थाली हंडिका । समासोक्ते यथा । प्राप्त आनंदो यं स प्राप्तानंदः । ऊढो रथो येन स ऊढरथोऽनड्वान् वृषभः । उपहृतः पशुर्यस्मै स उपहृतपशू रुद्रः । उद्धृतमन्नं यस्मात्स उद्धृतान्नः कटाहः । पीतमंबरं यस्य स पीतांबरो हरिः । वीराः पुरुषा यस्मिन् स वीरपुरुषो ग्रामः । तद्धितोक्ते यथा । कुंकुमेन रक्तं वस्त्रं कौंकुमम् । तद्धितेनोक्तं कर्म अण्प्रत्ययः । मथुराया आगतः माथुरः अण् । धनमस्यास्तीति धनवान् । मांतोपधाद्वत्विनौ इति वतुः । दृषद उपलाः संत्यस्यामिति दृषद्वती भूमिः । निपातोक्ते यथा । " विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसांप्रतम् । " इत्यत्र संवर्द्ध्येति भावे क्यप् । क्यबंतस्य क्रियापदस्य विषवृक्षमिति द्वितीयांतं कर्म तत्रासाम्प्रतमित्यनेन निपातेनोक्तत्वात् प्रथमा । स्वयमात्मना छेत्तुमसांप्रतं न युज्यते इत्यर्थः । " क्रमादमुं नारद इत्यबोधि सः । " अबोधीत्यत्र दीपजनबुधेति कर्तरीण् तस्य नारदमिति द्वितीयांतं कर्म तत्र इति निपातयोगात्प्रथमा । उक्तं च । " यस्मिन्नर्थे विधीयंते लकारास्तद्धिताः कृतः । समासो वा भवेद्यत्र स उक्तः प्रथमा ततः ॥ " इति कारकप्रक्रिया ॥

तत्त्व०–अन्योक्ते प्रथमेति । अन्येन उक्तं अन्योक्तं तस्मिन्कार्ये इत्यादौ प्रत्येकं संबध्यते । प्रत्येकाभिप्रायादेकवचननिर्देशः । कार्ये द्वितीया । अन्योक्ते प्रथमा । कर्त्तरि तृतीया । अन्योक्ते प्रथमेत्यादि । पचनोऽग्निरिति । पच्यतेऽनेनेति करणे युट् । दानीय इति दीयतेऽस्मै इति विग्रहः । उपाध्यायादिति । उप समीपे गत्वाऽधीयतेऽस्मादित्युपाध्यायः । पच्यतेऽस्यामिति पचनी । प्राप्त आनंदो य स प्राप्तानंदः । ऊढः रथो येन सः । उपहृतः पशुर्यस्मै सः । उद्धृतः ओदनो यस्याः सा । पीतमंबर यस्य । वीराः पुरुषा यस्मिन् । कुंकुमेन रक्तम् । मथुराया आगतः । धनं विद्यते यस्य । दृषद्विद्यते यस्याः सा । असांप्रतमिति । असांप्रतमित्यस्यायुज्यत इत्यर्थः । इदानीं द्विकर्मकोदाहरणमुच्यते । " दुह्याच्पच्दंड्रुधिप्रच्छीचिब्रूशासुजिमथमुषाम् । कर्म युक् स्यादकथितं तथा स्यान्नीहृक्ष्वहाम् ॥ " दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां यद्युज्यते तदेव गौणं कर्मेति परिगणनं कर्तव्यमित्यर्थः । एतदर्थका अन्येऽपि ग्राह्याः । गां दोग्धि पय इत्यादि । अत्र गोर्गौणत्वं पश्चादपेक्षणात् पय आदिकं तु मुख्यमादावेवापेक्षणात् । कर्मणि प्रत्ययेन तु दुहादीनां गौण न्यादीनां तु मुख्य कर्मोक्तं भवति । गौर्दुह्यते पयः । ग्राममजा नीयते इत्यादि । ण्यन्तानां कर्त्तरि गां दोहयति पयो गोपेन चैत्रः । ण्यंतात्कर्मणि गौर्दोह्यते पयो गोपेन चैत्रेणेत्यादि ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । कृतायामिह टीकायां विभक्त्यर्थनिरूपणम् ॥

इति विभक्त्यर्थनिरूपणम् ।

**समासश्चान्वये नाम्नाम् ॥ ८०८ ॥** नाम्नामन्वये सति समासो भवति ॥ चकारात्कृत्तद्धितधातुसंज्ञाप्रयोजकप्रत्यया अपि ॥

सुबो०–समासश्चान्वये नाम्नाम् । नाम्नि च नामानि च नामानि तेषां नाम्नाम् । यद्यप्यविभक्ति नामेति संकेतितं तथाप्यत्र नाम्नामिति विभक्त्यंतानामेव ग्रहणम् । समासप्रत्यययोरलुक् क्वचिदित्यादिज्ञापकात् । अत्र विधिरिति शेषः प्रथमाद्यंतानां पदानां पदयोर्वाऽन्वये सति यो विधिः स समाससंज्ञो भवति । चकारस्त्वनुक्तसमुच्चयार्थः । तेन पदानामन्वये सत्येव कृत्तद्धितधातुसंज्ञाप्रयोजकप्रत्यया अपि भवंति । समानि एकभूतानि पदानि अर्था वाऽऽसते यस्मिन्स समासः । आस उपवेशने अस्मादाधारे घञ् । सममेकमर्थमासयंति दीपयंत्यस्मिन् समुदाये इति वा समासः । अस् दीप्तौ । ण्यंतादस्मात्स्वराद इत्याधारेऽप्रत्ययः। संश्लिष्टानि एकीभूतानि पदानि अस्यंते उच्चार्यंतेऽस्मिन्निति वा समासः । आधारे घञ् । समानं संश्लिष्टानां पदानामेकत्तामापन्नानामासनमुच्चारणमिति वा समासः । भावे घञ् । समसनं समासो वा । संपूर्वादस्यतेर्भावे घञ् । अनेकपदस्य एकपदीभवनमित्यर्थः । समस्यते इति वा समासः । संज्ञायामकर्तरि चेति कर्मणि घञ् । अनु अंतर्मध्ये यंति पदार्था यस्मिन्नर्थे इत्यन्वयः । इण् गतावस्मात् स्वराद इत्यप्रत्ययः । अनु अंतः पदार्थानामयनं गमनमिति वाऽन्वयः एकार्थीभावः । अनु सहान्येन यंति संबंधं लभंते पदानि यस्मिन्निति वान्वयः । स्वराद इत्याधारेऽप्रत्ययः । अनु सहान्येन ईयंते संबंधं प्राप्यंते पदान्यस्मिन्निति वान्वयः । व्यपेक्षालक्षण इति । सोऽन्वयो द्विधा । व्यपेक्षालक्षणः एकार्थीभावलक्षणश्चेति । तत्र व्यपेक्षालक्षणे विग्रहवाक्यमेव । एकार्थीभावलक्षणे तु वृत्तिरेव । तत्र स्वार्थपर्यवसायिनां पदानामाकांक्षासंनिधियोग्यत्वेषु सत्सु यः परस्परसंबंधः स व्यपेक्षालक्षणः । विशिष्टैकार्थरूपः एकार्थीभावलक्षणः । विशेषेण गृह्यते ज्ञायते वृत्त्यर्थोऽनेनेति विग्रहः । विग्रहस्य वाक्यं विग्रहवाक्यम् । विग्रहवाक्यमपि द्विधा । लौकिकमलौकिकं चेति । प्रयोगार्हं परिनिष्ठितं साधु लौकिकम् । यथा राज्ञः पुरुष इति । व्यपेक्षालक्षणः संबंधो ह्यत्रैव । अपरिनिष्ठितं प्रयोगानर्हमसाधु अलौकिकम् । यथा राजन् ङस् पुरुष सु इति । समाससंज्ञादिकं चास्मिन्नेव प्रवर्तते इति । परार्थाभिधानं वृत्तिः । परः स्वार्थादन्यो योऽर्थः स परार्थः अथवा स्वस्मात् परस्य शब्दस्य योऽर्थः स परार्थः तस्याभिधानं प्रतिपादनं परार्थाभिधानं सा वृत्तिः । कृत्तद्धितसमासैकशेषयङाद्यंतधातुरूपा इति पंच वृत्तयः । वृत्तिरपि द्विधा । जहत्स्वार्थाऽजहत्स्वार्था चेति । जहाति स्वार्थं पदानि यस्यां सा जहत्स्वार्था । उक्तं च । वृत्तौ वर्तिपदानामानर्थक्यं पदे वर्णवदिति । यथा । वृषभ इत्यत्र वृषशब्दः सुकृताद्देर्वाचकः भशब्दस्तु नक्षत्राणां वाचकः वृषभपदं तु बलीवर्दे शक्तम् । शक्ताव-

वयवानामानर्थक्यम् । एवं कवलशब्दे । को वायकादेर्वाचकः वो वरुणवाचकः लः पृथिवीवाचकः कवलपदं ग्रासे शक्तं शक्तौ तेषामानर्थक्यम् । तथा राजपुरुषशब्दयोः पृथक्शक्तयोरपि राजसंबंधिनि पुरुषे शक्तिः । तत्र राजपुरुषशब्दयोरानर्थक्यं तदन्याजहत्स्वार्था ॥

तत्त्व०–श्रीचंडिकायै नमः । समासश्चान्वये नाम्नामिति । समानि एकीभूतानि पदानि अर्थानि वा आसतेऽस्मिन्समासः । आधारे घञ् । अनु अंतर्यति पदार्था यस्मिन्नर्थे स अन्वयः आधारे स्वरादः । नाम्नामिति बहुवचनाद्द्वयोर्बहूनां च समासः । अन्वये व्यपेक्षा परस्परापेक्षेति यावत् । चकारस्यानुक्तसमुच्चयार्थत्वादन्यवृत्तिलाभोऽपीत्याह । चकारादिति धातुसंज्ञाप्रयोजकेति । धातुसंज्ञां प्रयोजयन्तीति तेषु सत्सु संज्ञा भवतीति भावः । ते च यङादयः तेऽप्यन्वये सत्येव भवतीति बोध्यम् । यद्यपि नामसंज्ञाविभक्तिरहितस्यैव तथाप्यत्र सविभक्तिकानामेव समासः । समासप्रत्यययोरिति लुग्विधानात् ज्ञापकात् । अत्राहुः । स्पष्टार्थपदानामिति तु नोक्तम् । पचति भवति पश्यति धावतीत्यादावन्वयसत्त्वेन समासप्रसंगात् । सति च तस्मिन् यथेष्टं प्रयोगो न स्यात् इति । अत्रेदं वक्तव्यम् । नाम्नामित्युपादानात् आख्यातनिराकरणमिति त्वदभिमतम् । एवं च पर्यभूषत् पचतभृज्जतेत्यादौ कथं समासः । अथ नाम्नां इति योग विभज्य कतिपयतिङ्न्तोत्तरपदः समासः स च छंदस्येव । आख्यातस्याख्यातेन क्रियासातत्यादौ च समास इति चेत्तदा तत्र तत्र तेनैव नियमेन विधानात् अन्यत्र प्राप्तिर्वारितैवेति किं तन्निराकरणाय यत्नांतरेणेति । यत्तु अयार्थवद्विभक्तिविशिष्टानां पदानां समासो निरूप्यते इत्युक्तं प्राचा तत्रार्थवदिति व्यर्थम् । विभक्तिविशिष्टत्वेनैव तल्लाभात् । किंच विभक्तिविशिष्टानामित्यपि व्यर्थं पदग्रहणेनैव तदर्थप्रतीतेः । विभक्त्यन्तं पदमित्यन्येन हि विभक्तिविशिष्टस्यैव पदसंज्ञाविधानात् ॥

**पूर्वेऽव्ययेऽव्ययीभावः ॥ ५०६ ॥** अव्ययपूर्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकसमासो भवति ॥

सुबो०–पूर्वेऽव्ययेऽव्ययीभावः । अव्यये पूर्वपदे सति पदयोर्योऽन्वय एकार्थीभावलक्षणः सोऽव्ययीभावसंज्ञकः समासोऽस्ति । पूर्वग्रहणादेवाव्ययस्य पूर्वनिपातोऽव्ययीभावे । अन्यथाऽव्यये इत्येव सिद्धे किं तेन ॥

तत्त्व०–पूर्वेऽव्ययेऽव्ययीभाव इति । पूर्वे इत्यस्य ग्रहणसामर्थ्यादव्ययस्यापूर्वनिपातः । विभक्त्याद्यर्थेषु वर्तमाने एवाव्यये पूर्वे सतीति बोध्यम् । अन्यथास्तिधन इत्यादावतिव्याप्त्यापत्तेः ॥

**समासप्रत्यययोः ॥ ५०७ ॥** समासे वर्तमानाया विभक्तेः प्रत्यये परे लुग्भवति ॥ नामत्वात्स्यादिः ॥

सुबो०–समासप्रत्यययोः । प्रतीयते कर्तृकर्माद्यर्थोऽनेनेति प्रत्ययः । इण् गतावस्मात् स्वराद इत्यप्रत्ययः । अथवा अय गतावस्मात्पचाद्यप्रत्यये प्रत्ययते प्रत्याययत्यर्थमिति प्रत्ययः । अन्तर्भावितण्यर्थः । समासश्च प्रत्ययश्च समासप्रत्ययौ तयोः भावे सप्तमीयम् । समासे सति प्रत्यये च सति वर्तमानायाः स्यादिरूपाया विभक्तेर्लुक् स्यात् । ततः कृत्तद्धितसमासाश्चेति नामसंज्ञायां स्याद्युत्पत्तिर्भवतीत्यर्थः ॥

तत्त्व०–समासप्रत्यययोरिति । अत्रान्यथाभावेऽपि निपातानां द्वंद्वः समासः । यद्वा भावे सप्तमीयम् । तथा च समासे सति प्रत्यये च सतीति बोध्यम् । प्रतीयते कर्त्राद्यनेनेति प्रत्ययः । इण् गतौ स्वरादः । ननूक्ता-

र्थानामप्रयोग इति न्यायेनैव विभक्तेरप्रयोगो भाविष्यति चशब्दादेरिव वृत्तौ तदर्थस्यान्तर्भावात् परार्थाभिधानस्यैव वृत्तिपदार्थत्वात्समासस्य च वृत्त्यतर्भावात् इति किमनेनेति चेत्सत्यम् । राजाश्व इत्यादौ प्रत्ययलक्षणेन पदकार्यार्थं स्वाभाविक्या अपि निवृत्तेः सूत्रेण विधानात् ॥

**स नपुंसकम् ॥५०८॥ अव्ययीभावो नपुंसकलिङ्गो भवति ॥ नपुंसकस्येति ह्रस्वः ॥**

सुबो०—स नपुंसकम् । तच्छब्देन संनिहितोऽव्ययीभावः परामृश्यते । स्त्री च पुमांश्च स्त्रीपुंसौ न स्त्रीपुंसाविति नपुंसकम् । स्त्रीपुंसशब्दस्य पुंसकभावः सहादित्वान्निपात्यते । नपुंसकत्वान्नपुंसकस्येति ह्रस्वविधानम् ॥

तत्त्व०—स नपुंसकमिति । तच्छब्दस्य पूर्वपरामर्शित्वादव्ययीभावो गृह्यते । न स्त्री न पुमानिति नपुसकं स्त्रीपुसशब्दस्य पुसकभावो निपातनात्सहादित्वाद्वा । अत्राहुः । सन्निधानाच्छब्दानुवृत्तिलाभे सिद्धे स्पष्टार्थं सग्रहमिति । अत्रेदमवधेयम् । कार्यिणः पूर्वकथनमग्रिमस्यैव कार्यत्वविज्ञानार्थमव्ययीभावानुवृत्तावपि विपरीतार्थप्रसग. स्यात् । नपुंसकलिंगमव्ययीभावसज्ञं स्यात् इति तन्निराकरणाय तच्छब्दस्यावश्यकत्वात् ॥

**अव्ययीभावात् ॥ ५०९ ॥ विभक्तेर्लुक् ॥ अधिस्त्रि ॥**

सुबो०—अव्ययीभावात् । ननु अनव्ययमव्ययं भवतीत्यव्ययमिति भावः । अभूततद्भावे इति च्विः । ज्वलादेर्ण इति भवतेर्णप्रत्ययः । अथवा अनव्ययस्य अव्ययत्वेन भवनमस्मिन्नेकार्थीभावे इति अव्ययीभावः । भावे आधारे वा घञ् । एवमन्वर्थे संज्ञाविज्ञानात् अव्ययादिति लुक्प्राप्तिरस्त्येव किमर्थमेतत् । मैवम् । तत्पुरुषादिसंज्ञावदस्या अन्वर्थत्वाभावात् । तत्त्वे तु योगविभागो मास्तु । अव्ययीभावादतोऽमनत इत्येकयोग एवास्तु । लुक् तु अव्ययादित्यनेन सिद्ध एव अतो योगविभाग एव ज्ञापयत्यत्रान्वर्थसंज्ञा नास्तीति । अस्माद्विभक्तेर्लुक् स्यात् । अथ पाणिनिसूत्रम् । अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यांतवचनेषु । विभक्त्यादिष्वर्थेषु विद्यमानमव्ययमन्वये सति सिवंतेन नाम्ना सह समस्यते । विभक्त्यर्थेऽव्यये यथा । स्त्रियामित्यधिस्त्रि । लौकिकविग्रहवाक्यमिदम् । सप्तम्यर्थस्य द्योतकोऽधिः । स्त्री ङि अधि इत्यलौकिकं विग्रहवाक्यम् । अत्र निपातेनोक्तेऽप्याधिकरणे समासविधानसामर्थ्यात् सप्तमी । अन्यैस्तु स्त्रियमधिकृत्येति व्याख्यातं तदसत् । अधिहरीत्यत्राधिकृत्येत्यर्थस्याप्रतीतेः । " क्रमादमुं नारद इत्यबोधि सः " इत्यादौ समासो न । इतिशब्दस्य प्रकृतपरामर्शकत्वेन कर्मत्वमात्राऽनभिधायकत्वात् । एवं च विभक्तिशब्दः सप्तम्यां पर्यवस्यति । समीपार्थेऽव्यये यथा । कुम्भस्य समीपमिति उपकुम्भम् । समया ग्रामम् । निकषा लंकाम् । आराद्वनादित्यत्र तु नाव्ययीभावः । विनादियोगे द्वितीयेति ऋते आदियोगे पंचमीति च विधानसामर्थ्यात् ॥

तत्त्व०—अव्ययीभावादिति । विभज्यते विनिच्य बोध्यते कर्तृकर्माद्यर्थोऽनयेति विभक्तिः योगरूढत्वात्क्र-

ष्णादिषु नातिव्याप्तिः। स्यादेः सिप इति वा वक्तुमुचितम्। कुंभकार इत्यत्र तु धातोरेव प्रत्ययविधानान्न स्यादेर्लुक्। आधाश्च इति। स्त्रियां इतीति विग्रहः। नित्यसमासोऽयम्। अस्वपदविग्रहत्वात्। तथा चोक्तम्। अविग्रहो नित्यसमासोऽस्वपदविग्रहो वेति। विग्रहश्च द्विविधः लौकिकोऽलौकिकश्च। परनिष्ठत्वात्साधुर्लौकिकः। प्रयोगानर्होऽसाधुरलौकिकः॥

**अतोऽमनतः॥ ५१०॥** अदन्तादव्ययीभावाद्विभक्तेरलुक्। तं वर्जयित्वाऽमादेशः। कुंभस्य समीपमुपकुम्भम्॥

सुबो०—अतोऽमनतः। विशेषणत्वात्तदंतविधिः अदन्तादव्ययीभावात् अनत इति षष्ठी। न अत् अनत् तस्या अनतो विभक्तेरमादेशः स्यात्॥

तत्व०—अतोऽमनत इति। अत इत्यस्य विशेषणत्वात्तदन्तलाभ इत्याशयेनादन्तादित्युक्तम्। अलुक् क्वचिदित्यतोऽलुगित्यनुवर्तते। तथाच वाक्यभेदेन व्याख्यानम्। ननु किं वाक्यभेदेनोभयविधानम्। अमादेशस्यैव लुग्बाधकतास्तु इति चेन्न। टादावमादेशाभावे लुक्। प्रवृत्तेरनिवार्यत्वापत्तेः। अम्विधानं तु सर्वादेशार्थम्। अनत इत्येकवचनं त्वव्ययीभावस्यैकवचनांतत्वाभिप्रायेण। सर्ववचनांतत्वपक्षे तु अनत इत्याद्युपलक्षणं वचनत्रयस्यापि॥

**वा टाङ्योः॥ ५११॥** अदंतादव्ययीभावाट्टाङ्योरम्वा॥ उपकुम्भेन वा कृतं उपकुम्भं उपकुम्भे वा निधेहि। अनतः किम्। उपकुम्भात्। मद्राणां समृद्धिः सुमद्रम्। यवनानां व्यृद्धिर्दुर्यवनम्। मक्षिकाणामभावो निर्मक्षिकम्। हिमस्यात्ययोऽतिहिमम्। निद्रा सम्प्रति न युज्यते इत्यतिनिद्रम्। हरिशब्दस्य प्रकाश इतिहरि। विष्णोः पश्चादनुविष्णु। रूपस्य योग्यमनुरूपम्। अर्थमर्थं प्रति प्रत्यर्थम्। शक्तिमनतिक्रम्य करोति यथाशक्ति। हरेः सादृश्यं सहरि। सहादेः सादिरिति सहस्य सः। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्। चक्रेण युगपत्सचक्रम्। सदृशः सख्या ससखि। क्षत्राणां संपत्तिः सक्षत्रम्। तृणमप्यपरित्यज्य सतृणमत्ति। अग्निग्रन्थपर्यन्तमधीते साग्नि॥

सुबो०—वा टाङ्योः। कुत्रचिद्भवति कुत्रचिन्न भवतीयं व्यवस्थितविभाषा। तस्या आश्रयणात् सुमद्रं उन्मत्तगंगमित्यादौ सप्तम्या नित्यमेवाऽम्। समृद्ध्यर्थे यथा। ऋद्धेराधिक्यं समृद्धि। मद्राणां देशविशेषाणां समृद्धिः सुमद्रम्। उत्तरपदार्थप्राधान्ये तु तत्पुरुषोऽपि भवति। समृद्धा मद्रा इति सुमद्राः। वृद्ध्यर्थे यथा। विगता ऋद्धिर्व्यृद्धिः। यवनानां व्यृद्धिरिति दुर्यवनं इह तेषामृद्ध्यभावे समासः। अर्थाभावे यथा। मक्षिकाणामभाव इति निर्मक्षिकम्। संसर्गाऽभावेऽयं समासः।

अत्यये यथा । हिमस्यात्ययो ध्वंस इति अतिहिमम् । असंप्रत्यर्थे यथा । संप्रतीत्यव्ययमिदानीमित्यर्थे युजिक्रियांतर्भावेण नञ्समासः सौत्रो बोध्यः । निद्रा संप्रति न युज्यते इत्यतिनिद्रम् । शब्दप्रादुर्भावे यथा । हरिशब्दस्य प्रकाश इति इतिहरि । षष्ठ्यंतेन हरिशब्देन सहप्रकाशार्थस्येतिशब्दस्य समासः । विष्णोः पश्चादिति अनुविष्णु । पश्चाच्छब्दस्य तु नायमव्ययीभावो भवति । ततः पश्चात् स्रंसते इति भाष्यप्रयोगात् । सति चात्राव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपातः स्यादित्यर्थः । यथार्थे यथा । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । तत्रानुरूपता योग्यता । रूपस्य योग्यमिति अनुरूपम् । पदार्थानां व्याप्तुमिच्छा वीप्सा । अर्थमर्थं प्रतीति प्रत्यर्थम् । समासे वीप्साया अंतर्भावान्न द्विः । वीप्सार्थकगतियोगे द्वितीयाविधानात् वाक्यमपि । पदार्थाऽनतिक्रमः पदार्थानतिवृत्तिः । शक्तिमनतिक्रम्येति यथाशक्ति । हरेः सादृश्यमिति वक्ष्यमाणेन सहादेः सादिरित्यनेन सहस्य सादेशः। सहरि। अनुपूर्व्यार्थे यथा। अनुपूर्वस्य भाव इत्यानुपूर्व्यम्। भावे तत्वयण इति यण् । ज्येष्ठस्यानुपूर्व्येणेति अनुज्येष्ठम्। यौगपद्ये यथा। चक्रेण युगपत्समकालमिति सहादेरित्यनेन सहस्य सः सचक्रम् । सादृश्ये यथा । यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येतदर्थम् । सदृशः सख्या इति सहादेरित्यनेन सहस्य सः। ससखि । संपत्तौ यथा । अनुरूप आत्मभावः संपत्तिः । क्षत्राणां संपत्तिरिति सहादेरित्यनेन सहस्य सः । सक्षत्रम् । साकल्ये यथा । तृणमप्यपरित्यज्येति सहादेरिति सहस्य सः सतृणं साकल्येनात्ति इत्यर्थः । अन्तवचने यथा । उच्यते तद्वचनं अंतस्य वचनं अंतवचनं तस्मिन् । अग्निशब्दो अग्निप्रतिपादकग्रंथे वर्तते अस्वपदविग्रहो नित्यसमासोऽयं अग्निग्रंथपर्यंतमिति साग्नि अधीते ॥

सर०—ना टाङ्योरिति । अव्ययीभावादिति किम् । कृष्णाश्रितेन । अदन्तात्किम् । अधिस्त्रि । वेश्यस्य [illegible]सुमद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमम्भावः। उपकुंभमिति । कुंभस्य समीपेनेत्यर्थः। [illegible] । [illegible] । अत्यय इति । अत्ययो ध्वंसः । निद्रेत्यादि । असंप्रत्यर्थेनातिशब्देनाव्ययीभावः । तत्र [illegible] संप्रत्यभाव इत्यर्थः । भुक्तवतोपभोग्यवस्तुनो यो वर्तमानः कालस्तस्यैव निषेधः [illegible] । नहि भूतले घटो नास्तीत्यनेन हि भूतलनिषेधः केनाचिद्दूरीक्रियते ॥

**यथाऽसादृश्ये ॥ ५१२ ॥** यथाशब्दः सादृश्ये न समस्यते ॥ यथा हरिस्तथा हरः ॥

सुबो०—यथाऽसादृश्ये । असादृश्ये एव यथाशब्दः समस्यते । सादृश्ये इति यथार्थ इति या प्राप्तं निषिध्यते । यथा हरिस्तथा हरः । यथाशब्दो हरेरुपमानत्वं द्योतयति ॥

[illegible] । [illegible] । यथा[illegible]सिद्धे सूत्रारंभसामर्थ्यात् यो-

ग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । योग्यता अनुरूपता वीप्सा पदार्थानां व्याप्तुमिच्छा पदार्थान-तिवृत्तिः पदार्थानतिक्रमः । उदाहरणानि तु पूर्वमेवोक्तानि ॥

**अवधारणार्थे यावति च ॥ ५१३ ॥** अवधारणार्थे यावच्छब्दे प्रयुज्यमाने योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति ॥ यावन्तः श्लोकास्तावंतोऽच्युतप्रणामा यावच्छ्लोकम् ॥

सुबो०–अवधारणार्थे यावति च । यावच्छब्दस्याव्ययत्वादेव सिद्धे नियमार्थमिदम् । अवधारणे एव यावदव्ययं समस्यते । नाऽन्यस्मिन्नर्थे । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ।" इत्यमरः । यत्परिमाणं येषां ते यावंतः । एतत्-कियत्तद्भ्य इति वतुः । यत्तदेतदामित्यात्वं तत्परिमाणं येषां ते तावंतः । तद्धितांतेन विग्रहः । समासस्त्वव्ययेनैवाऽस्वपदविग्रहोऽयम् । अवधारणे किम् । यावद्दत्तं तावद् भुक्तं नावधारयामि कियन्मया भुक्तमिति ॥

तत्त्व०–अवधारणार्थे यावति चेति । निश्चयार्थे यावच्छब्दे इत्यर्थः । यावच्छ्लोकमिति । तद्धितान्तेन विग्रहः समासस्त्वव्ययेनेत्यस्वपदविग्रहोऽयम् । तथा च । यावच्छब्दस्याऽव्ययत्वादेव सिद्धे नियमार्थमिदमवधारणे एव यावदव्ययम् । समस्यते नान्यस्मिन्निति । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ।" इत्यनेकार्थत्वान्नियम उपपद्यते । अवधारणे किम् । यावद्दत्तं तावद्भुक्तम् । नावधारयामि कियन्मया भुक्तमिति ॥

**क्वचिदनव्ययपूर्वपदेऽप्यव्ययीभावः ॥ ५१४ ॥** उन्मत्ता गङ्गा यस्मिन् देशे इत्युन्मत्तगङ्गम् । शाकस्य लेशः शाकप्रति । अक्षेण विपरीतं वृत्तमक्षपरि । शलाकया विपरीतं वृत्तं शलाकापरि । एकपरि ॥

सुबो०–क्वचिदनव्ययपूर्वपदेऽप्यव्ययीभावः । अन्यपदार्थे स्याद्यंतं नदीवाचिभिः सह नित्यं समस्यते संज्ञायाम् । उन्मत्ता गंगा यस्मिन् पुंवद्भावः तत् उन्मत्तगंगं देशः । बहुव्रीह्यर्थेऽव्ययीभावो नित्यसमासोऽयम् । लेशार्थे प्रतिना सह स्याद्यंतं नित्यं समस्यते । "लवलेशकणाणवः" इत्यमरः । शाकस्य लेश इति शाकप्रति । अक्षशलाकासंख्याः परिणा नित्यं समस्यंते । द्यूतव्यवहारे पराजये एवार्थे । अक्षेण विपरीतं वृत्तमिति अक्षपरि । पूर्वं यथा वृत्तं तथा न वृत्तमित्यर्थः । शलाकया विपरीतवृत्तमिति शलाकापरि । एकेन विपरीतं वृत्तमिति एकपरि । एते नित्यसमासाः ॥

**क्वचिद्वा ॥ ५१५ ॥** अपविष्णोः, अपविष्णु । परिविष्णोः, परिविष्णु । बहिर्वनात्, बहिर्वनम् । प्राग्वनात्, प्राग्वनम् । आमुक्तेः, आमुक्ति । अभ्यग्निम्, अभ्यग्नि । प्रत्यग्निम्, प्रत्यग्नि । वनस्य समीपमुपवनम् । गङ्गामनु अनुगङ्गम् । तिष्ठन्ति गावो यस्मिन्काले स

तिष्ठद्गु । आयतिगवम् । पारेगङ्गायाः पारेगङ्गम् । मध्ये गङ्गायाः मध्येगङ्गम् । इत्यादयो निपात्याः । खले यवा यस्मिन् काले खलेयवम् । द्वौ मुनिवंश्यौ द्विमुनि । त्रिमुनि व्याकरणस्य । सप्त गङ्गाः समाहृताः सप्तगङ्गम् । द्वियमुनम् ॥

सुबो०--अथ वैकल्पिकाः समासाः । क्वचिद्वा । अपपरिबहिरंचूत्तरपदाः पंचम्या सह समस्यंते वा । अपपरी वर्जनार्थकौ ग्राह्यौ । बहिर्योगे तु ऋतेआदित्वात् पंचमी सा सर्वत्र न । " करस्य करभो बहिः " इत्यमरोक्तेः । अञ्चुधातुरुत्तरपदं यस्य सोऽचूत्तरपदो यथा । प्राग्वनमिति । मर्यादाभिविध्यर्थकाङ्पञ्चम्यंतेन वा समस्यते । आमुक्ति संसारः । आबालं हरिभक्तिः । अभिप्रती आभिमुख्यार्थकौ चिह्नवाचिना सह वा समस्येते । अभ्यग्नि शलभाः पतंति । लक्ष्यलक्षणभावे विनादित्वात् द्वितीया । दैर्घ्यसमीपार्थकोऽनुचिह्नवाचिना षष्ठ्यंतेन सह वा समस्यते । वनस्य समीपमिति अनुवनं अशनिर्गतः । लक्षणभूतस्य वनस्य समीपं गत इत्यर्थः । गंगाया अनु इति अनुगंगं सेना । गंगादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः । समासाऽभावे गंगामनु । विनादित्वात् द्वितीयैव । समासे तु विध्यर्थत्वात्षष्ठी । तिष्ठंति गावो यस्मिन्काले स तिष्ठद्गु दोहनकालः । गोरिति ह्रस्वः । निपातनाच्छत्रृप्रत्ययः । आयंत्या गावो यस्मिन्काले स आयतीगवं संध्या । निपातनाट्टप्रत्ययः वोऽवित्यवू पुंवद्भावाभावश्च । खले यवा यस्मिन् काले स खलेयवम् । सप्तम्या अलुग् निपातनात् । इह बहुव्रीहिविषये अव्ययीभावः । पारमध्यशब्दौ षष्ठ्यंतेन वा समस्येते । एदन्तत्वं चानयोर्निपात्यते । गंगायाः पारमिति पारेगंगम् । गंगाया मध्यमिति मध्येगङ्गम् । पक्षे षष्ठीतत्पुरुषोऽपि । गंगायाः पारमिति गंगापारं एवं गंगामध्यम् । वाक्यमपि गंगायाः पारम् । गंगाया मध्यमिति वंश्यवाचिना सह संख्या वा समस्यते । वंशः संतानः स द्विविधो विद्यया जन्मना च । तत्र भवो वंश्यः । द्वौ मुनी वंश्यौ पाणिनिकात्यायनाविति द्विमुनि । त्रयो मुनयो वंश्या इति त्रिमुनि । व्याकरणस्येति संबंधे षष्ठी । अन्यपदार्थप्राधान्यविवक्षायां तु त्रयो मुनयो वंश्या यस्मिन् त्रिमुनि । बहुव्रीहिरेवायम् । जन्मना वंश्यो यथा । एकविंशतिर्भारद्वाजवंश्या इति एकविंशति भारद्वाजम् । नदीवाचिना सह संख्या समस्यते । समाहारार्थे । सप्त गंगाः समाहृताः सप्तगंगा इति सप्तगंगम् । द्वे यमुने समाहृते इति पुंवद्भेति पुंवद्भावः । द्वियमुनम् । द्विगोरपवादोऽयमव्ययीभावः ॥

त० १०--प्रायादयो निपात्या इति । सहादित्वादिति भाव. ॥

टाड्काः ॥ ५१६ ॥ समासे प्रति ट अ ड क इत्येते प्रत्यया भवन्ति ॥ शरदः समीपमुपशरदम् । प्रतिविपाशम् ॥

सुबो०—अथ समासांतप्रत्ययानाह। समासस्य समासोत्तरपदस्य वा चरमाऽवयवाः समासान्ता इत्यर्थः। टाडकाः। टश्च अश्च डश्च कश्च ते टाडकाः। समासे इत्यनुवर्तते। टकार ईबर्थः अकारोऽदंतत्वफलकः डष्टिलोपार्थः। कः श्रवणार्थः न त्वित्संज्ञकः प्रयोजनाऽभावात्। अव्ययीभावे शरदादिभ्यष्टप्रत्यय एव। शरद् विपाश् अनस् मनस् उपानह् दिव् हिमवत् अनडुह् दिश् दृश् विश् चेतस् चतुर् त्यद् तद् यद् किम् एते शरदादयः। शरदः समीपमिति उपशरदं ठः। विपाशं प्रतीति प्रतिविपाशम्। विनादित्वात् प्रतियोगे द्वितीया। "विपाशा तु विपाट् स्त्रियाम्" इत्यमरः॥

तत्त्व०—टाडका इति। टश्च अश्च डश्च कश्च ते टाडकाः। समासश्चान्वय इत्यतोऽनुवृत्तं समास इति सप्तम्या विपरिणम्यत इत्याह। समासे चिकीर्षिते नाम्नष्टादयो भवतीति बोध्यम्। ततो विभक्ति विधाय टाद्यन्तेन समासः। तेन समासस्यांतावयवाष्टादयः ततश्चोपशरदमित्यादावव्ययीभावस्यादन्तत्वाद्विभक्तेरम् सिध्यति। अन्यथा। अव्ययीभावात् परत्वेनाकारस्यादन्तत्वाभावान्नाम् सिध्येदिति भावः। टस्त्वीबर्थः। राजगवीत्यादौ॥

**जराया जरस् ॥ ५१७॥** उपजरसम्। अक्षि प्रति प्रत्यक्षम्। अक्ष्णः परं परोक्षम्। परशब्दस्य परस् परोक्ष इति ज्ञापकात्। अन्वक्षम्। उपराजम्। क्लीबे वाऽन्लोपश्च। उपचर्मम्, उपचर्म। झसान्ताद्वा। उपसमिधम्, उपसमित्। नद्यादिभ्यो वा। उपनदम्, उपनदि॥ इत्यव्ययीभावः॥

सुबो०—जराया जरस्। अव्ययीभावे जराशब्दस्य जरसादेशष्टप्रत्ययश्च। जरायाः समीपमिति उपजरसं टः। प्रतिपरसमनुभ्योऽक्षिशब्दादव्ययीभावे टः। अक्षि प्रतीति प्रत्यक्षम्। यस्येति कारलोपः। अक्ष्णः परविषय इति परोक्षम्। परस्य परसादेशे सस्य विसर्गे च कृतेऽतोऽत्युरित्युत्वं ओत्वे एदोतोऽत इत्यल्लोपः। परोक्षम्। अक्ष्णो योग्यं इति समक्षम्। अक्ष्णः पश्चादिति अन्वक्षम्। अन्नंतादव्ययीभावाट्टः। राज्ञः समीपमिति उपराजम्। नो वेति टिलोपः। आत्मनि इति अध्यात्मम्। वैकल्पिकं टप्रत्ययमाह। अव्ययीभावे नांतनपुंसकाद्गिरिशब्दात् झभप्रत्याहारांतात् नदीपौर्णमास्याग्रहायणीभ्यश्च वा टः। चर्मणः समीपमिति उपचर्मं, उपचर्म। गिरेः समीपमिति उपगिरं, उपगिरि। समिधः समीपमिति उपसमिधं, उपसमित्। नद्याः समीपमिति उपनदम्। नपुंसकस्येति ह्रस्वे उपनदि। पौर्णमास्याः समीपमिति उपपौर्णमासं, उपपौर्णमासि। आग्रहायण्याः समीपमिति उपाग्रहायणं, उपाग्रहायणि॥ इत्यऽव्ययीभावः॥

**अमादौ तत्पुरुषः ॥५१८॥** द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञः समासो भवति॥ ग्रामं प्राप्तो ग्रामप्राप्तः। कृष्णा-

श्रितः । कूपपतितः । ग्रामगतः । खट्वारूढः । मुहूर्तसुखम् । दुःखातीतः । ग्रामगमी । अन्नबुभुक्षुः । दात्रेण छिन्नं दात्रछिन्नम् । मासेन पूर्वो मासपूर्वः । मातृसदृशः । पितृसदृशः । माषोणम् । वाक्कलहः । आचारनिपुणः । गुडमिश्रः । मासावरः । हरित्रातः । नखभिन्नः । दध्योदनः । गुडधानाः । यूपाय दारु यूपदारु । अर्थस्य विशेष्यालिंगता । द्विजायायं द्विजार्थः सूपः । द्विजार्था शाटी । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् । चौराद्भयं चौरभयम् । सुखापेतः । दुःखापोढः । व्याघ्रभीतिः । राज्ञः पुरुषः राजपुरुषः । द्विजयाजकः । देवपूजकः ॥

सुबो०–अमादौ तत्पुरुषः । अम् आदिर्यस्य सोऽमादिस्तस्मिन्नमादौ प्रत्यये सुप्पर्य्यंते । प्रत्ययग्रहणे तदंतग्रहणमिति परिभाषायामाद्यंते द्वितीयाद्यंते पूर्वं इत्यनुवर्तते । पूर्वपदे सति यो नाम्नोऽन्वयः स तत्पुरुषसंज्ञः स्यात् । पूर्वे इत्युक्तत्वात् द्वितीयाद्यंतस्य पूर्वनिपातश्च । श्रितातीतपतितगतात्यस्तप्राप्तापन्नगामिन्बुभुक्षुभिः सह द्वितीयांतं समस्यते । श्रितादिष्वापन्नांतेषु गत्यर्थादकर्मकादिति कर्तरि क्तः । श्र्यादीनां गतिविशेषवाचित्वात् । कृष्णं श्रित इति कृष्णश्रितः । अक्ताविति षष्ठीनिषेधः । कर्मणि क्तप्रत्यये तु कृष्णः श्रितो येनेति बहुव्रीहौ विशेषणसप्तम्यंतक्तान्तानामिति श्रितस्य पूर्वनिपाते समासांतकप्रत्यये च श्रितकृष्णक इति । दुःखमतीत इति दुःखातीतः । अतिपूर्वकादिणेः कर्तरि क्तः । पत गतौ चुरादिरदंतोऽस्मात्कर्तरि क्ते कूपपतितः । ग्रामगतः । तुहिनमत्यस्त इति तुहिनात्यस्तः । अत्यासो व्यतिक्रमः । सोऽपि गतिविशेष एवेति कर्तरि क्तः । सुखप्राप्तः । दुःखापन्नः । ग्रामं गमीति ग्रामगमी । गमेरिनिरित्यौणादिको भविष्यत्यकस्येति सूत्रेण षष्ठीनिषेधात्कर्मणि द्वितीया । अन्नं बुभुक्षुरिति । सांताशंसाभिक्षिभ्य इत्युप्रत्ययः । द्वितीयांतः खट्वाशब्दः कालवाची च क्तांतेन समस्यते । खट्वारूढो जाल्मः । नित्यसमासोऽयम् । " जाल्मोऽसमीक्ष्यकारी स्यात् " इत्यमरः । मासं प्रमित इति मासप्रमितः । माङ् माने कर्तरि क्तः । अत्यंतसंयोगे द्वितीयांतः कालवाची स्याद्यंतेन समस्यते । मुहूर्तं सुखमिति मुहूर्तसुखम् । कालाध्वनोरिति द्वितीया । तृतीयांतं तदर्थकृतगुणवचनेन सह समस्यते । गुणमुक्त्वा यो द्रव्यमुक्तवान् स गुणवचनः कर्तरि कृत् । गुणश्चात्र सत्त्वे निविशते इत्यादिलक्षणलक्षितो गृह्यते । छिन्नमस्त्यस्मिन्निति छिन्नं दात्रेण छिन्नमिति दात्रछिन्नम् । करणे तृतीया । छिदिर् द्वैधीकरणे अस्मा-

द्भावे क्तः । छिन्नशब्दः क्रियारूपापन्ने गुणे वर्तित्वा पश्चात् छिन्नमस्त्यस्मिन्निति छिन्नमित्यस्त्यर्थे लक्षणया तद्वति द्रव्ये वर्तत इति गुणवचनः । तृतीयांतं पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णावरैः सह समस्यते । तुल्यार्थयोगे इति समसदृशयोगे तृतीया । अन्यैर्योगे तु समासविधानसामर्थ्यात् तृतीया । हेतौ तृतीया वा । माषेण ऊनं इति माषोनम् । माषेण विकल इति माषविकलः । वाचा कलह इति वाक्कलहः । आचारेण निपुण इति आचारनिपुणः । गुडेन मिश्र इति गुडमिश्रः । आचारेण श्लक्ष्ण इत्याचारश्लक्ष्णः । मासेन अवरोऽर्वागिति मासावरः । तृतीयांते कर्तृकरणकृदंतेन सह बहुलं समस्यते । हरिणा त्रात इति हरित्रातः । कर्मणि क्तः कर्तरि तृतीया । नखैर्भिन्न इति नखभिन्नः । कर्मणि क्तः । करणे तृतीया । वातेन छेद्यं इति वातच्छेद्यं तृणम् । शक्यार्थे यः । काकेन पेयेति काकपेया नदी । शक्यार्थे यः । बहुलग्रहणात् क्वचिन्न । दात्रेण लूनवान् । हस्तेन कुर्वन् । संस्कारकद्रव्यवाचकं तृतीयांतमन्नेन सह समस्यते । दध्ना उपसिक्त ओदन इति दध्योदनः । उपसेकक्रियाद्वाराऽन्वयः । " भिस्सा स्त्री भक्तमंधोऽन्नमोदनोऽस्त्री " इत्यमरः। गुडेन मिश्रा धानाः गुडधानाः । मिश्रणक्रियाद्वाराऽन्वयः । " धाना भ्रष्टयवे स्त्रियाम् " इत्यमरः । तदर्थार्थबलिहितसुखरक्षितैः सह चतुर्थ्यंतं समस्यते । यूपाय दारु इति यूपदारु । तादर्थ्ये चतुर्थी । अर्थेन नित्यसमासो विशेष्यलिंगता च एतद्वार्तिकाभावे तु विकल्पाधिकारात् पक्षे द्विजायार्थ इत्यपि स्यात् । द्वंद्वतत्पुरुषयोः परपदस्यैवेति वक्ष्यमाणेन सर्वत्र पुंल्लिंगप्रयोगश्च स्यादर्थशब्दस्य पुंल्लिंगत्वादत इदमुक्तम् । भूतेभ्यो बलिरिति भूतबलिः । गोभ्यो हितमिति गोहितम् । गोभ्यः सुखमिति गोसुखम् । गोभ्यो रक्षितमिति गोरक्षितम् । भयभीतभीतिभीभिरपेतापोढमुक्तपतितापत्रस्तैश्च सह पंचम्यंतं समस्यते । चौराद्भयमिति चौरभयम् । एवं वृकभीतः। सिंहभीतिः । राजभीः । सुखादपेत इति सुखापेतः । एवं कल्पनापोढः । चक्रमुक्तः । स्वर्गपतितः । तरंगापत्रस्त इति । राज्ञः पुरुष इति राजपुरुषः । संबंधे षष्ठी । राजन् अस् पुरुष सि इत्यलौकिकविग्रहे समासे कृते समासप्रत्यययोरिति विभक्तेर्लुकि अंतर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नाम्नो नोलोपशिति नलोपः । याजकादिभिः सह षष्ठ्यंतं समस्यते । याजकपूजकपरिचारकपरिवेषकस्नातकअध्यापकउत्पादकहोतृपोतृभर्तृनमृगणकायाजकादयः ॥

तत्त्व०—अमादौ तत्पुरुष इति । अम् आदिर्यस्य स अमादिप्रत्ययः सुपर्यंतः । पूर्वेऽव्यये इत्यतः पूर्वे इत्यनुवर्त्तते । अम् द्वितीयैकवचनमेव गृह्यते । न त्वमो गत्यादिकर्तृवाची व्याख्यानात् तस्य च प्रत्ययत्वात्प्रत्ययग्रहणे च तदंतलाभ इत्याशयेनाह । द्वितीयाद्यंत इति । यत्तु वासुदेवेन अम आदिर्येषां ते अमादय इत्युक्त्वा द्वितीयाद्या सप्तम्यंता विभक्तयस्तासां चेत्याद्युक्तं तदविचारैः पुंल्लिंगस्य समासार्थत्वेन स्त्रीलिंगस्य विशेष्यत्वानुचितत्वात् बहुवचनांतविग्रहस्याद्युक्तत्वाच्च ॥

**क्वचित्षष्ठी न समस्यते ॥ ५१९ ॥** नृणां द्विजः । सतां षष्ठः । काकस्य कार्ष्ण्यम् । फलानां सुहितः । इदमेषां शयितम् । अपां स्रष्टा । ओदनस्य पाचकः । भवतः शायिका ॥

सुबो०-क्वचित्षष्ठी न समस्यते । निर्द्धारणे या षष्ठी सा न समस्यते । नृणां द्विज इत्यत्र क्रियागुणजातिसंज्ञाभिरिति षष्ठी । पूरणगुणतृप्त्यर्थैः सह षष्ठ्यंतं न समस्यते । पूरणार्थे सतां षष्ठः । षण्णां संख्यापूरणः षष्ठः । षट्कतिकतिपय-चतुर्भ्यो इति थट् । गुणार्थे । काकस्य कार्ष्ण्यम् । कृष्णस्य भावः कार्ष्ण्यम् । अनित्योऽयं गणेन निषेधः । संज्ञाप्रमाणमर्थगौरवं बुद्धिमांद्यमित्यादिनिर्देशात् । फलानां सुहितस्तृप्तः । करणे षष्ठी । तृतीयासमासस्तु स्यादेव । अधिकरणवाचिना क्तेन षष्ठी न समस्यते । इदमेषामासितं गतं भुक्तं वा । स्थैर्यगतिभक्षणार्थेभ्य इत्य-धिकरणे क्तः । एषामिति कर्तरि षष्ठी । वर्तमानाधारार्थक्तस्येत्यनेन कर्त्रर्थकाभ्यां त्रकाभ्यां सह षष्ठी न समस्यते । अपां स्रष्टा । ओदनस्य पाचकः । तृवुणाविति कर्त्तरि तृवुण्प्रत्ययौ । अपामिति ओदनस्येति कर्तृकार्ययोरित्यनेन कर्मणि षष्ठी । कर्तृषष्ठ्यन्तमकेन सह न समस्यते । भवतः शायिका । आधारे वुण्प्रत्ययो भवती-ति । कर्त्तरि षष्ठी वर्तमानार्थक्तेन सह षष्ठी न समस्यते । राज्ञां मतो बुद्धः पूजितो वा । राज्ञामिति कर्तरि षष्ठी ॥

**क्वचिदमाद्यन्तस्य परत्वम् ॥ ५२० ॥** रायमतिक्रान्तोऽतिराः । नावमतिक्रान्तोऽतिनौः । पूर्वं भूतो भूतपूर्वः । कायस्य पूर्वः पूर्व-कायः । अपरकायः । अधरकायः । उत्तरकायः । अह्नो मध्यं मध्याह्नः । सायाह्नः । मध्यरात्रः । पश्चिमरात्रः । अर्द्धपीप्पली ॥

सुबो०-क्वचिदमाद्यंतस्य परत्वम् । तत्पुरुषे क्वचिदमाद्यंतस्य परस्य परनिपातो भवति । रायमतिक्रान्त इति अतिराः । अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समा-सः । रैस्भिरित्यनेनाकारः । पूर्वं भूत इति भूतपूर्वः । पूर्वाऽपराधरोत्तरावयवा एकसं-ख्याऽवयविना समस्यंते । कायस्य पूर्वं इति पूर्वकायः । कायस्यापरो देशः अपर-कायः । कायस्याधरो देश इति अधरकायः । कायस्योत्तरो देश इति उत्तरकायः । एकदेशः कालवाचिना समस्यते । अह्नो मध्यमिति मध्याह्नः । राजाहःसखिभ्य इति टः । नो वेत्युपधालोपः । अह्नः पूर्वं इति पूर्वाह्णः । अहः साय इति सायाह्नः । स्यतेर्घञि अवसानवचनः सायशब्दः । रात्रेर्मध्यमिति मध्यरात्रः । रात्रेः पश्चिम-मिति पश्चिमरात्रः । टाडका इत्यनेनाऽप्रत्ययः । नपुंसकोर्द्धशब्दोऽवयविना सह समस्यते । "पुंस्यर्द्धोऽर्द्धं समेंऽशके" इत्यमरः । अर्द्धं पिपल्या इति अर्द्धपिप्पली ।

द्वंद्वतत्पुरुषयोरिति–परवल्लिंगत्वात् स्त्रीत्वम् । भाष्ये तु अर्द्धपिप्पलीति कर्मधारये उक्तम् । समुदाये दृष्टा शब्दा अवयवेष्वपि वर्तंते इति न्यायात् ॥

तत्त्व०—क्वचिदमाद्यंतस्येति। अंते भवोऽन्त्यः स्वरेषु अंत्यः स्वरः स आदिर्यस्य सः अंत्यस्वरादिष्टिरिति ज्ञापकादिति भावः ॥

क्वचिद्वा ॥ ५२१ ॥ द्वितीयं भिक्षायाः द्वितीयभिक्षा, भिक्षाद्वितीयम् । तृतीयभिक्षा, भिक्षातृतीयम् । चतुर्थभिक्षा, भिक्षाचतुर्थम् । तुरीयभिक्षा, भिक्षातुरीयम् । जीविकाप्राप्तः, प्राप्तजीविकः । आपन्नजीविकः, जीविकापन्नः ॥

सुबो०—क्वचिद्वा। द्वितीयतृतीयचतुर्थतुर्याण्येकदेशिना सह समस्यंते अमाद्यंतस्य परनिपातश्च वा । द्वितीयं भिक्षाया इति द्वितीयभिक्षा, भिक्षाद्वितीयम् । तृतीयं भिक्षाया इति तृतीयभिक्षा, भिक्षातृतीयम् । चतुर्थं भिक्षाया इति चतुर्थभिक्षा, भिक्षाचतुर्थम् । तुरीयं भिक्षाया इति तुरीयभिक्षा, भिक्षातुरीयम् । द्वितीयांतस्य प्राप्तापन्नयोः परयोर्वा परनिपातः । जीविकां प्राप्त इति जीविकाप्राप्तः, प्राप्तजीविकः । अन्यार्थे इति ह्रस्वः । द्विगुप्राप्तापन्नेति वक्ष्यमाणेन परवल्लिंगं न कालवाचकस्य ॥

तत्त्व०—प्राप्तजीविक इति । तत्पुरुषसंज्ञाविधिसामर्थ्यात्तया व्यवहारोऽनुमातव्यः स च द्वंद्वतत्पुरुषयोः परपदस्यैव लिंगमित्यादि । तस्य च ज्ञापकसिद्धत्वाज्ज्ञापकसिद्धं न सर्वत्रेति वचनादत्र न परस्य लिंगम् ॥

परिमाणवता सह समस्यते अमाद्यंतस्य परनिपातश्च तत्पुरुषे ॥ ५२२ ॥

सुबो०—परिमाणवता सह समस्यतेऽमाद्यंतस्य परनिपातश्च तत्पुरुषे । परिमीयते परिछिद्यते येन तत्परिमाणं परिमाणमस्यास्तीति परिमाणवान् तेन । यस्य हि जननादूर्ध्वं मासो जातः स मासजात उच्यते । इह विग्रहे षष्ठीनिर्दिष्टस्य प्राधान्यं द्योतयितुं वरयेत्युक्तम् । यद्यपि मासो जातो यस्येति बहुव्रीहिणापि सिद्ध्यति बहुव्रीहौ क्वचिन्नेति क्तांतस्य पूर्वनिपातनिषेधात् तथापि जातवतो मासो यस्येति स मासजातवानित्याद्यर्थमिदम् ॥

समासे क्वचिदैकपद्यं णत्वहेतुः ॥५२३॥ शराणां वनं शरवनम् । आम्राणां वनमाम्रवणम् । प्लक्षवणम् । शूर्पणखा ॥

सुबो०—समासे क्वचिदैकपद्यं णत्वहेतुः । एकपदस्य भाव ऐकपद्यम् । समासे क्वचित् णत्वस्य हेतुरस्ति । शराणां वनमिति शरवणम् । प्लक्षाणां वनमिति प्लक्षवणम् । आम्राणां वनमिति आम्रवणम् । शूर्पणखा । अत्र संज्ञायां णत्वम् ॥

क्वचिद्वा ॥ ५२४ ॥ माषवापिणौ, माषवापिनौ । व्रीहिवापाणि,

व्रीहिवापानि । व्रीहिवापेण, व्रीहिवापेन । सुरापाणम्, सुरापानम् । अक्षेषु शौण्डोऽक्षशौण्डः ॥

सुबो०—क्वचिद्वा । क्वचित्समासे णत्वं वा भवति । माषान् वारंवारं वपति माषवापी । बहुलमाभीक्ष्ण्ये इति णिनिः। व्रीहीन्वपतीति कार्येऽणित्यण् व्रीहिवापं तानि व्रीहिवापाणि । णत्वाभावे व्रीहिवापानीति । व्रीहीन् वारंवारं वपतीति व्रीहिवापी तस्मै व्रीहिवापिणे । शौंडधूर्तकितवव्याडप्रवीणसंवीतअधिअन्तरपटुपण्डितकुशलनिपुणसिद्धशुष्कपक्वबंधैः सह सप्तम्यंतं समस्यते। अक्षेषु शौंडः प्रवीण इति अक्षशौंडः॥

पात्रे समितादयो निपात्याः ॥ ५२५ ॥ पात्रे समितः । गेहेनर्दी ॥

सुबो०—पात्रे समितादयो निपात्याः । पात्रे समितादयः शब्दा निंदार्थे निपात्यंते भोजनसमये एव संगता भवंति नतु कार्ये । पात्रेसमिताः। सम्पूर्वादिणः क्तः। गेहेनर्दी । नर्द शब्दे अस्माण्णिनिः सप्तम्या अलुगत्र । एषां समासांतरे प्रवेशो न भवतीत्यर्थः ॥

तत्त्व०—पात्रेसमित इति भोजनसमय एव सगतो नतु कार्यकाल इत्यर्थः । अत्र सप्तम्या अलुक् ॥

नञ् ॥ ५२६ ॥ नञि पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञः समासो भवति ॥

सुबो०—नञ् । द्वौ नञौ प्रसज्यपर्युदासार्थकौ । पर्युदासार्थकस्य नञ एकार्थीभावे समासः । व्यपेक्षायां तु वाक्यमेव भवति । प्रसज्यप्रतिषेधार्थस्य तु क्रिययैवान्वयो न नाम्ना । अनन्वयेऽपि क्वापि नाम्ना समासः । इणू तन्यकर्तरीति ज्ञापकात् । कर्तरि न भवतीति तदर्थः । तेनासूर्य्यपश्या राजदारा इत्यादि सिद्धम् । तदन्यतद्विरुद्धतदभावा इति त्रयो नञोऽर्थाः । "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥" इति केचित् । यथा । अब्राह्मणः । अपापम् । अनश्वः । अनुदरा कन्या । अपशवः। अधर्मः। नञ्समासो हि अर्थाभावेऽव्ययीभावेन सह विकल्पते । अद्धतायामसंहितमिति वार्तिकप्रयोगात् ॥

तत्त्व०—नञीति । पर्युदासप्रसज्यार्थत्वेन नञो द्विविधत्वात्पर्युदासार्थस्योत्तरपदेनान्वयात्समासः व्यपेक्षाया वाक्यम् । प्रसज्यार्थस्य तु क्रिययैवान्वयादुत्तरपदेनान्वयाभावान्न समास. । नन्वेवमसूर्यपश्यानि मुखानीत्यादौ कथ समास इति चेत्सत्यम् । इणू तन्यकर्त्तरीत्यत्र हि कर्त्तरीत्यर्थाऽप्रसज्यार्थस्य समासदर्शनादनन्वयेऽपि क्वचित्समास ॥

नासमासे ॥ ५२७॥ नञो नस्यादेशः । धर्मविरुद्धोऽधर्मः । ज्ञानविरुद्धमज्ञानम् ॥

सुबो०—नासमासे । ना न अ इति छेदः । आख्यातांते परेऽपि नञोऽद्रादेशो भवति । निंदार्थे । अपचासि त्वं जाल्म । कुत्सितं पचसीत्यर्थः ॥

तत्त्व०—ना इति । न् अ इति छेदः । अत्र नञीत्यनुवर्तते इत्याह । नञ इति ञकारस्यानुबंधत्वादकारस्याकारादेशे प्रयोजनाभावात्सर्वादेशः । नञ्समासस्तु प्रतिपदोक्तोऽपि नानुवर्तते । अविघ्नमित्याद्यव्ययीभावेऽविद्य इत्यादि बहुव्रीहौ चाव्याप्तेः परिभाषायास्त्वनित्यत्वात् ॥

अन्स्वरे ॥ ५२८ ॥ समासे नञो नस्याऽन् स्यात्स्वरे ॥ अश्वादन्योऽनश्वः । संशयस्याऽसम्भवोऽसंशयः ॥

सुबो०—अन्स्वरे । अनश्व इत्यत्र ङ्णनो ह्रस्वादिति द्वित्वं तु न अनपीति निर्देशात् ॥

तत्त्व०—अनश्व इति । अनपीत्यादिलिंगात् ङ्णनो ह्रस्वादिति द्वित्वं न ॥

निरनुबन्धकस्य तु नानौ ॥ ५२९ ॥ नाकः । नक्षत्रम् । नक्रः । नासत्यौ । नैकधा ॥

सुबो०—निरनुबंधकस्य तु नानौ । निरनुबंधस्य अश्च अन् च आनौ तौ न भवतः । सानुबंधकस्य तु भवत इत्यर्थः । नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकनैकधाशब्देषु नशब्देन समासः । न भ्राजते इति नभ्राट् क्विबंतः । न पातीति नपात् शत्रंतः । न वेत्तीति नवेदाः असुप्रत्ययांतः । सत्सु साधव इति सत्याः ण्यप्रत्ययः न सत्या असत्याः न असत्याः नासत्याः । न मुंचतीति नमुचिः । नाम्युपधात्किरिति किः । न कुलमस्येति नकुलः । न खं छिद्रमस्येति नखः । न स्त्रीपुंसौ इति नपुंसकः । स्त्रीपुंसयोः पुंसकभावो निपातनात् । न क्षरतीति नक्षत्रम् । क्षर संचलने भ्वादिः । निवासगत्योस्तुदादिरनयोः क्षत्रमिति निपात्यते । न क्रामतीति नक्रः । डप्रत्ययः । न अकमस्मिन्निति नाकः । न एकधा नैकधा ॥ इति तत्पुरुषः ॥

तत्त्व०—निरनुबंधकस्येति । निर्गतोऽनुबंधो यस्येति निरनुबधकः स चासौ नश्चेति स तस्येत्यर्थः लक्ष्यानुसाराच्च व्यवस्था तस्य समासो नित्यः ॥ इति तत्पुरुषः ॥

चार्थे द्वन्द्वः ॥ ५३० ॥ समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्रेश्वरं गुरुं च भजस्वेति । प्रत्येकमेकक्रियाभिसम्बन्धः समुच्चयः । बटो भिक्षामट गां चानयेति । क्रमेण क्रियाद्वयसम्बन्धोऽन्वाचयः । मिलितयोरेकत्रान्वय इतरेतरयोगः । संहितस्य समाहारः । तत्राद्ययोर्न समासोऽस्त्यनन्वयात् ॥

सुबो०—चार्थे द्वंद्वः । चस्यार्थश्चार्थः । जातावेकवचनं चार्थाश्चत्वारः प्रत्येकमेकक्रियाभिसंबंधः समुच्चयः । एकमेकं प्रतीति प्रत्येकम् । परस्य निरपेक्षस्याऽनेकस्यैकक्रियायामन्वय इत्यर्थः । त्वमीश्वरं गुरुं च भजस्वेत्यत्र भजनक्रियायां ईश्वरगुरुभ्यां प्रत्येकं संबंधात्समुच्चयः । एकक्रियायामित्युपलक्षणं तेन परस्परनिरपेक्ष-

संशब्दस्य समिरादेशः क्विबंतेऽञ्चतौ परे। सम्यङ्। तिरोऽञ्चतीति तिरःशब्दस्य तिरिरादेशः क्विबंतेऽञ्चतौ। तिर्यङ्। विष्वगंचतीति विष्वग्देवयोरदसोश्च टेरद्रिरादेशः क्विबंतेऽञ्चतौ। विष्वद्र्यङ्। देवानंचतीति देवद्र्यङ्। एते तत्पुरुषा बोध्याः। लक्ष्मीर्जायाऽस्येति जायाया जानिरादेशो बहुव्रीहौ। लक्ष्मीजानिः। कुत्सितमन्नमिति। कुशब्दस्य कत् स्वराद्युत्तरपदे तत्पुरुषे। कदन्नम्। त्रिवदरथतृणेषु कुशब्दस्य कत्। कुत्सितास्त्रय इति कत्रयः, कत्त्रयः। कद्वदः। कत्तृणम्। ईषदर्थे कुशब्दस्य कादादेशः। ईषज्जलं काजलम्। कुत्सितः पंथ इति ऋक्पूरित्यप्रत्ययः। संख्याव्ययाभ्यामिति क्लीबता। कापथम्। काक्षः। अक्षशब्देन तत्पुरुषोऽक्षिशब्देन बहुव्रीहिर्वा समासः। उष्णे परे कुशब्दस्य कोः कवकदादेशा ईषदर्थे। कोष्णम्। कवोष्णम्। कदुष्णम्। द्यौश्च भूमिश्चेति देवताद्वंद्वे दिवःशब्दस्य द्यावा। भूमीपृथिवीशब्दे। दिवूशब्दस्य द्यावा दिवश्च। द्यावापृथिव्यौ दिवस्पृथिव्यौ। जाया च पतिश्चेति जायाया जं दं वा द्वंद्वे। जंपती। दंपती। जंदंशब्दावव्ययौ दारवचनौ। तयोः पत्या सह द्वंद्वे। जंपती दंपती इति चांद्राः। "दासः पुंसि बहुत्वे च दं कलत्रे नपुंसकम्।" इत्यमरमाला। "पत्न्यां जं दमलिंगत्वे" इति नामप्रपंचः। माता च पिता चेति मातुररङ् द्वंद्वे। मातरपितरौ। पुरुषे कुशब्दस्य वाचकाः कुपुरुषः। कापुरुषः॥

तत्त्व०-सहादेः सादिरिति। आदिशब्द उभयत्र प्रकारे। प्रकारश्च सादृश्यं स आदिः सदृशो यस्य सादृश्यं च अविहितादेशाश्चाश्रयत्वेन ग्राह्यम्। सः आदिः सदृशो यस्य सादृश्य चाविहितादिश्यमानत्वरूपेण ग्राह्यम्। अत्र सहादयः सादयश्चानंताः प्रयोगवशात् ज्ञातव्याः। सम्यङिति सहस्य सध्रिरादेशः। समः समिः तिरसस्तिरिरित्यादि सर्वमूह्यम्॥

षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वम्॥ ५७३॥ षट् च दश च षोडश। षट् दन्ता यस्य षोडन्। संख्यायाः प्रकारे धा। षट् प्रकाराः षोढा, षड्धा। महान् ईश्वरो महेश्वरः। महादेवः। खरा नासिका यस्य स खरणसः। खरणाः। खुरणसः। खुरणाः। उन्नता नासिका यस्य स उन्नसः। प्रणसः। विगता नासिका यस्य स विग्रः। विख्यः। चतस्रोऽश्रयो यस्य स चतुरस्रः। प्रोष्ठो गौस्तस्येव पादा यस्य स प्रोष्ठपदः। प्रगते जानुनी अस्य प्रज्ञुः। संज्ञुः॥

सुबो०-षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वम्। षट् च दश चेति दतृदशधापरस्य षष उत्वं परस्य ष्टुत्वं च धाप्रत्यये वा। षोडश। षोढा। षड्धा। षट् प्रकारा अस्येति प्रकारे धेति धाप्रत्ययः। षट् दंता अस्येति संख्यासुपूर्वस्य दन्तस्य दतृ वयोऽर्थे। त्रितो नुमिति नुम्। षोडन्। सुदन्। स्त्रियां ङ्रित इतीप्। सुदती।

महांश्चासौ ईश्वरश्चेति महत आकारोऽन्तादेशः सामानाधिकरणे उत्तरपदे जातीये च । महेश्वरः । महादेवः । समानाधिकरणे किम् । महतः सेवा महत्सेवा । महान् प्रकारो महाजातीयः । खरा नासिका यस्येति खुरवन्नासिका यस्येति च नासिकाया नस् बहुव्रीहावप्रत्यये । खुरखराभ्यां नासिकाया नस् अप्रत्ययश्च वा । खरणसः । अप्रत्ययः पुंवद्वेति पुंवत् । अत्वसोः साविति दीर्घे खरणाः । खुरणसः । अप्रत्ययः । खुरणाः । उन्नता नासिकाऽस्येति उन्नसः । अप्रत्ययः । प्रगता नासिका यस्येति प्रणसः । अप्रत्ययः वेर्नासिकायाः ग्रख्यौ । विगता नासिकास्येति विग्रः । विख्यः । वेः खुखग्रा इति शाकटायनसूत्राद्विखुर्विख्यो विग्र इति रूपत्रयं च । " खुरणाः स्यात् खरणसो विग्रो विखुर्विनासिकः । " इति रभसः । चतस्रोऽश्रयोऽस्येति तालव्यस्थाने दंत्यः सो निपात्यते । चतुरस्रः । अप्रत्ययः । प्रोष्ठो गौस्तस्येव पादावस्येति पादस्य पद् निपात्यते । अप्रत्ययः । प्रोष्ठपदः । प्रसमूभ्यां जानुशब्दस्य ज्ञुरुच वा बहुव्रीहौ । प्रगते जानुनी यस्य प्रज्ञुः । संज्ञुः ॥

**ऊर्ध्वाद्वा ज्ञुः ॥ ५७४ ॥ ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ॥**

सुबो०—ऊर्ध्वाद्वा ज्ञुः । ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ॥

**बहुव्रीहौ धनुषोऽनङ् ॥ ५७५ ॥ अधिज्यधन्वा । शार्ङ्गं धनुरस्य शार्ङ्गधन्वा । उदगन्धिः । सुगन्धिः । पूतिगंधिः । सुरभिगंधिः । द्विदन् । चतुर्दन् । असुमञ्चतीति असुमुयङ् । अदमुयङ् । अदद्र्यङ् । कौमुदगंध्यायाः पुत्रः कौमुदगंधीपुत्रः । कौमुदगंधीपतिः । समानं ज्योतिरस्य सज्योतिः । सनाभिः । सनामा । सवयाः । सब्रह्मचारी । सतीर्थ्यः । क्षीरोदः । सुरोदः । लवणोदः । शुद्धोदः । पृषोदरः । वारिवाहको बलाहकः । गूढोत्मा । दक्षिणतीरम् । दक्षिणतारम् । इत्यादि ॥**

सुबो०—बहुव्रीहौ धनुषोऽनङ् । धनुरंतस्य बहुव्रीहेरनङ् संज्ञायां च वा । शृंगस्य विकारः शार्ङ्गम् । अण् । शार्ङ्गं धनुरस्येति शार्ङ्गधन्वा । संज्ञायां तु शतधनुः । उत्पूतिसुसुरभिभ्यो गुणवाचिनो गंधस्येकारांतादेशो बहुव्रीहौ । उद्गंधिः । पूतिगंधिः । सुगंधिः । सुरभिगंधिः । गुणवाचिन इति किम् । शोभना गंधा द्रव्याण्यस्य सुगंध आपणिकः । अल्पवाचिनो गंधस्येत्वं बहुव्रीहौ । सूपस्य गंधो लेशो यस्मिन् तत् सूपगंधि भोजनम् । घृतगंधि । उपमानाद्गंधस्येकारांतादेशः । पद्मस्येव गंधोऽस्य पद्मगंधिः । " गंधस्तु सौरभे नृत्ये गंधके गर्वलेशयोः । स एव द्रव्यवचनो

बहुत्वे पुंसि च स्मृतः ॥" इति । द्वौ दंतावस्येति संख्यासुपूर्वस्येति दत्रु । द्विदन् । चतुर्दन् । अमुमंचतीति अदस् अच् इति स्थिते विष्वगिति टेरद्रिः । अदद्रि अच् इत्यत्र यत्वम् अदसोऽसेर्दादुदोम इत्यनेन दाभ्यां परयोरकाराकारयोरुकारौ दकारयोश्च मकारौ । अमुमुयङ् । अन्त्यबाधेऽन्त्यसदेशस्यादेश इति वदतां मते परदकाररकारस्यैव मुत्वम् । अदमुयङ् । त्यदाद्यत्वे एवमुत्वं नान्यत्रेति पक्षे । अदद्र्यङ् । कुमुदस्येव गंधो यस्येति उपमानाद्गंधस्येतीकारादेश इति कुमुदगंधिः । कुमुदगंधेरपत्यं स्त्री कौमुदगंध्या । अपत्ये ण्यः । कौमुदगंध्यायाः पुत्र इति । कौमुदगंध्यायाः पतिरिति । या इत्यस्य स्थाने ईत्वं निपात्यते । कौमुदगंधीपतिः । समानं ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबंधुतीर्थ्यब्रह्मचारिषु । समानस्य सः सज्योतिः । सनाभिः । सनामा । सवयाः । ब्रह्म वेदः तदध्ययनार्थं व्रतमपि ब्रह्म ब्रह्म चरतीति ब्रह्मचारी । व्रते इति णिनिः । समानः ब्रह्मचारीति सब्रह्मचारी । समाने तीर्थे वसतीति सतीर्थ्यः । वसत्यर्थे ण्यप्रत्ययः । उत्तरपदोदकस्योदः । क्षीरोदः । सुरोदः । लवणोदः । शुद्धोदः । पृषतः उदरमिति तलोपः । पृषोदरम् । वारिणो वाहक इति पूर्वपदस्य वः उत्तरपदादेश्च लत्वम् । वलाहकः । गूढोत्मा । अत्राकारस्य स्थाने उत्वम् । " भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥" हंतेः पचादित्वादच्प्रत्यये सगागमात् हंस इति हिंसेः पचादित्वादच्प्रत्यये हकारसकारयोर्व्यत्ययात् सिंह इति । दिक्शब्देभ्यस्तीरस्य तारो वा । सर्वादेः समासादाविति पुंवत् । दक्षिणतारम् । दक्षिणतीरमित्यादि ॥

**अलुक् क्वचित् ॥ ५७६ ॥** क्वचित्समासे तद्धिते च विभक्तेरलुक् ॥ कृच्छ्रान्मुक्तः । स्तोकान्मुक्तः । दूरान्मुक्तः । निकटान्मुक्तः । अप्सुयोनिः । सरसिजम् । उरसिलोमा । हृदिस्पृक् । कण्ठेकालः । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । खेशयः । ग्रामेवासः । ग्रामेवासी । चोरस्यकुलम् । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । पुंसानुजः । जनुषान्धः । आत्मनापञ्चमः । त्वचिसारः । गविष्ठिरः । युधिष्ठिरः । आत्मनेपदम् । आत्मनेभाषा । मध्येगुरुः । स्तम्बेरमः । कर्णेजपः । पूर्वाह्णेतरे । पूर्वाह्णेतमे । आमुष्यायणः । आमुष्यकुलिका । आमुष्यपुत्रिका । मातृपितृभ्यां स्वसुः सस्य षः । मातृष्वसा । पितृष्वसा । मातृपितृभ्यां वा । मातुःस्वसा, मातुःष्वसा ।

पितुःस्वसा, पितुःष्वसा । होतुरन्तेवासी होतुःपुत्रः । पितुरन्तेवासी पितुःपुत्रः । देवानांप्रिय इति च मूर्खे । दिवोदासः । शुनश्शेफः । शुनःपुच्छः इत्यादि ॥

सुबो०—अलुक् क्वचित् । समासप्रत्यययोरित्यस्यापवादः । कृच्छ्रस्तोकदूरार्थनिकटार्थेभ्यः पंचम्या अलुक् उत्तरपदे । कृच्छ्रान्मुक्तः । "स्यात्कष्टं कृच्छ्रमाभीलम्" इत्यमरः । उत्तरपदे किम् । निष्क्रांतः स्तोकादिति निःस्तोकः । द्विवचनबहुवचनांतानां तु समासो नेष्यतेऽनभिधानात् । तेन स्तोकाभ्यां मुक्त इत्यादौ वाक्यमेव । अप्सु योनिरुत्पत्तिर्यस्येति अपः सप्तम्या अलुक् । योनिजचरमतिषु । अप्सुयोनिः । अप्सुजः । अप्सुचरः । अप्सुमतिः । हसांताददंताच्च सप्तम्या अलुक् संज्ञायाम् । सरसिजम् । अदंतात्तु अरण्ये तिलक इत्यादि । स्वांगात् सप्तम्या अलुक् अकामे परे । मूर्द्धमस्तकाभ्यां तु न । उरसिलोमा । अकामेति किम् । मुखे कामोऽस्य मुखकामः । मूर्द्धमस्तकाभ्यां नेति किम् । मूर्द्धशिखः । मस्तकशिखः । हृदयं स्पृशतीति दिवूहृद्भ्यां सप्तम्या अलुक् । हृदिस्पृक् । कर्मणोऽधिकरणत्वविवक्षायां सप्तमी । एवं दिविस्पृक् । कण्ठेकालः । स्वांगात् सप्तम्याऽलुगित्यलुक् । वाग्दिक्पश्यद्भ्यः षष्ठ्या अलुग् युक्तिदण्डहरेषु । वाचोयुक्तिः । दिशोदंडः । पश्यतोहरः । पश्यंतमनादृत्य हरतीत्यर्थः । अनादराधिक्ये इति षष्ठी । अकालकात्सप्तम्या अलुग्वा शयवासवासिषु । खेशयः, खशयः । ग्रामेवासः, ग्रामवासः । ग्रामेवासी, ग्रामवासी । षष्ठ्या अलुगाक्रोशेऽर्थे । चौरस्यकुलम् । आक्रोशे किम् । ब्राह्मणकुलम् । ओजसंभसत्सहस्तमसंजोभ्यस्तृतीयाया अलुक् । ओजसाकृतम् । अंभसाकृतम् । तमसाकृतम् । अंजसाकृतम् । आर्जवेन कृतमित्यर्थः । पुंसोऽनुजे जनुषोऽधे च तृतीयाया अलुक् । यस्याऽग्रजः पुमान् स पुंसानुजः । जनुषांधः । जात्यंध इत्यर्थः । "जनुर्जननजन्मानि" इत्यमरः । आत्मनस्तृतीयाया अलुक् पूरणार्थप्रत्ययांते परे । आत्मनापंचमः । पूरणार्थे किम् । आत्मकृतम् । त्वचिसारः । हसांताददंताच्च सप्तम्या अलुक् संज्ञायामित्यलुक् । गोः सप्तम्या अलुक् स्थिरे । गविष्ठिरः । युधिष्ठिरः । हसांतादिति सप्तम्या अलुक् । परशब्दादात्मशब्दाच्च चतुर्थ्या अलुक् वैयाकरणाख्यायाम् । परस्मैपदम् । परस्मैभाषा । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थी अलुगत्र । मध्यांताभ्यां सप्तम्या अलुग्गुरौ परे । मध्येगुरुः । अन्तेगुरुः । तत्पुरुषे सप्तम्या अलुक् कृत्प्रत्ययांते बहुलम् । स्तंबेरमः । स्तंबे तीरे रमते इति स्तंबेरमो हस्ती । कर्णेजपः । कर्णेजपः सूचकः । कालवाचकात्सप्तम्या अलुग् वा तरतमकालतनेषु । पूर्वाह्णेतरे, पूर्वाह्णतरे । पूर्वाह्णेतमे, पूर्वाह्णतमे । पूर्वाह्णेकाले, पूर्वाह्णकाले । पूर्वाह्णेतने, पूर्वाह्णतने । अदसः षष्ठ्या अलुगायनपुत्रिकाकुलिकासु । अमुष्याऽऽपत्यं नडादित्वादायनण् ।

आमुष्यायणः। अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका। अमुष्य कुलस्य भावः आमुष्यकुलिका। भावार्थे कः। ऋदंतात्षष्ठ्या अलुक् वा स्वसृपत्योः। मातृपितृभ्यां स्वसुः सस्य षः स्यात्समासे। मातृष्वसा। पितृष्वसा। मातृपितृभ्यां वा। आभ्यां स्वसुः सस्य षो वा स्यात् समासे। मातुःष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा। विद्यासंबंधयोनिसंबंधवाचिन ऋदंतात्षष्ठ्या अलुक्। होतुरंतेवासी होतुःपुत्रः। पितुरंतेवासी पितुःपुत्रः। देवानांप्रिय इति मूर्खेऽर्थे षष्ठ्या अलुक्। अन्यत्र देवप्रियः। दिवो दासे परे षष्ठ्या अलुक्। दिवोदासः। शुनः षष्ठ्या अलुक् शेफपुच्छलांगूलेषु। शेफः सकारांतः। "स्याल्लिंगं चिह्नशेफसोः" इत्यमरोक्तेः। शीङ् औणादिकेऽप्रत्यये पकारांतोऽपि शुन इव शेफमस्य स शुनःशेफः। शुन इव पुच्छमस्य स शुनःपुच्छः। शुन इव लांगूलमस्य स शुनोलांगूलः। बहुव्रीहयस्त्रयोऽप्यमी ऋषिविशेषाणां संज्ञा॥ इत्यलुक्समासः॥

तत्त्व०–अलुक् क्वचिदिति। समासप्रत्यययोरित्यस्यापवादः। कृच्छ्रान्मुक्त इत्यस्य पक्षे सिद्धत्वेऽपि कृच्छ्रमुक्तमित्यनिष्टापत्तिवारणायेदमावश्यकम्। हृदिस्पृगिति। हृदयं स्पृशतीति विग्रहः। कर्मणोऽधिकरणत्वविवक्षायां सप्तमी। आमुष्यकुलिकेति। अमुष्य कुलस्य भावः एवममुष्य पुत्रस्य भाव-इत्यपि। देवानांप्रिय इति मूर्खा हि देवानां प्रीतिं जनयन्ति देवपशुत्वात्। शुनःशेफ इति। शुन इव शेफमस्येति विग्रहः। एवं पुच्छलांगूलाभ्यामपि बहुव्रीहिः। ऋषिविशेषाणामेताः संज्ञाः॥

**तरतमरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ईबन्तस्यानेकस्वरस्य ह्रस्वो भाषितपुंस्कस्य॥ ८७७॥** ब्राह्मणितरा। ब्राह्मणितमा। ब्राह्मणिरूपा। ब्राह्मणिकल्पा। ब्राह्मणिचेली॥

सुबो०–तरतमरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ईबंतस्यानेकस्वरस्य ह्रस्वो भाषितपुंस्कस्य। अतिशयेन ब्राह्मणीति ब्राह्मणितरा। ब्राह्मणितमा। तरतमचराडिति पुंवद्भावो न। जातिवाचिनः स्त्रीप्रत्ययांतस्येति निषेधात्। तरतमेयस्विष्ठाः प्रकर्षे इति तरतमौ। प्रशस्ता ब्राह्मणीति ब्राह्मणिरूपा। प्रशंसायामिति रूपः। ईषन्न्यूना ब्राह्मणीति ब्राह्मणिकल्पा। ईषदसमाप्तौ कल्पेति कल्पप्रत्ययः। चेलडादीनि वृत्तिविषये समासादौ कुत्सनवाचीनि सन्ति। कुत्सिता ब्राह्मणी प्रित इतीप्। ब्राह्मणिचेली। उक्तपुंस्कस्येति किम्। आमलकीतरा। कुवलीतरा। आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिंगौ॥

**अनीबन्तस्य स्त्रीप्रत्ययान्तस्यैकस्वरस्य वा ह्रस्वस्तरादौ॥ ॥ ८७८॥** ब्रह्मबन्धूतरा, ब्रह्मबंधुतरा। स्त्रीतरा, स्त्रितरा॥

सुबो०–अनीबंतस्य स्त्रीप्रत्ययांतस्य ईबंतस्यैकस्वरस्य वा ह्रस्वस्तरादौ। अनीबंतस्य स्त्रीप्रत्ययांतस्य वा ह्रस्वः। एकस्वरस्य ईबंतस्य च वा ह्रस्वो भवति। तरत-

मरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु परेषु । उत ऊरित्यूप्रत्ययः । अतिशयेन ब्रह्मबंधूरिति तरतमेयर्थस्त्विष्ठा इति तरप्रत्ययः । ब्रह्मबंधूतरा ॥

**व्रितः परस्य वा ॥ ५७९ ॥** विदुषितरा, विद्वत्तरा । भवतितरा, भवत्तरा । पचतितरा, पचत्तरा ॥

सुबो०—व्रितः परस्य वा । उश्च आ च तयोः समाहारः वृ वृ इत् यस्य स व्रित् तस्मात् व्रितः । उकारेत ऋकारेतश्च परस्य ईप्प्रत्ययस्य ह्रस्वो वा भवति तरादौ । विदुषितरा । ब्रित इतीप् । वसोर्वे उरित्युत्वम् । ह्रस्वाभावे तरतमचराडिति पुंवद्भावः । विद्वत्तरा । विदुषीतरेत्यपि केश्चिदुदाहृतं तन्निर्मूलम् ॥

तत्त्व०—व्रितः परस्येति । उश्च आ च वरौ ताविती यस्य स तथा तस्मात् ॥

**इष्टकेषीकामालानां चिततूलभारिषु ह्रस्वः ॥ ५८० ॥** इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी ॥

सुबो०—इष्टकेषीकामालानां चिततूलभारिषु ह्रस्वः । इष्टकादीनां तदंतानां च ह्रस्वो भवति चितादिषु । इष्टकाभिश्चितमितीष्टकचितम् । तदंते पक्वेष्टकचितम् । इषीकानां तूलमिषीकतूलम् । मालां बिभर्ति इति मालभारी । कर्तरि णिनिः। हारिष्विति पाठांतरम् ॥

तत्त्व०—मालभारीति । मालां बिभर्तीति विग्रहः । ताच्छील्ये णिनिः । सत्यकार इति समर्थकरणम् । अगदंकारो वैद्यः । अस्तुकारोऽभ्युपगमः । अस्त्विति तिवन्तप्रतिरूपकमव्ययम् ॥

**कारे सत्यागदस्य मुम् ॥ ५८१ ॥** सत्यंकारः । अगदंकारः ॥

सुबो०—कारे सत्यागदस्य मुम् । सत्यागदयोर्मुम् स्यात् कारे । सत्यंकारः । शपथकरणमित्यर्थः । अगदंकारो वैद्यः ॥

**अस्तोश्च ॥ ५८२ ॥** अस्तुंकारः ॥

सुबो०—अस्तोश्च । अस्तु इत्यस्य मुम् स्यात् कारे । अस्तु इत्याख्यातप्रतिरूपकमव्ययम् । अस्तुंकारः । अभ्युपगम इत्यर्थः ॥

**धेनोर्भव्यायाम् ॥ ५८३ ॥** धेनुम्भव्या ॥

सुबो०—धेनोर्भव्यायाम् । धेनुशब्दस्य मुम् स्यात् भव्यायां परस्याम् । धेनुश्चासौ भव्या चेति विग्रहः । धेनुंभव्या । भविष्यती धेनुरित्यर्थः । निपातनाद्भविष्यति कर्तरि कृत्प्रत्ययः ॥

तत्त्व०—धेनुभव्येति । धेनुश्चासौ भव्येति विग्रहः । भविष्यती धेनुरित्यर्थः ॥

**लोकस्य पृणे ॥ ५८४ ॥** लोकंपृणः ॥

सुबो०—लोकस्य पृणे। लोकस्य मुम् स्यात् पृणे परे। पृणधातुः प्रीणनार्थः। लोकंपृणः सूर्यः॥

## इत्येऽनभ्यासस्य ॥ ५८५ ॥ मुम् ॥ अनभ्यासमित्यः ॥

सुबो०—इत्येऽनभ्यासस्य। अनभ्यासस्य मुम् स्यात् इत्ये परे। अभ्यासं समीपं अभ्यासभिन्नमनभ्यासम्। एतिस्तु शासिति इणः क्यप्। अनभ्यासमित्यः। दूरतः परिहर्तव्य इत्यर्थः॥

तत्त्व०—अनभ्यासमित्य इति। दूरतः परिहर्त्तव्यः॥

## भ्राष्ट्राग्न्योरिन्धे ॥ ५८६ ॥ भ्राष्ट्रमिन्धः। अग्निमिन्धः ॥

सुबो०—भ्राष्ट्राग्न्योरिंधे। अनयोर्मुम् स्यादिंधे परे। इंधी दीप्तौ कार्येऽणित्यण्। भ्राष्ट्रमिंधः। अग्निमिंधः। नाम्नश्च कृतेति समासः॥

## गिलेऽगिलस्य ॥ ५८७ ॥ मुम् ॥ तिमिङ्गिलः ॥

सुबो०—गिलेऽगिलस्य। अगिलस्य गिलभिन्नस्य मुम् भवति गिले परे। तिमिंगिलो मत्स्यविशेषः। गिरतेर्मूलविभुजादित्वात्कप्रत्ययः। गिरते रेफस्य वा लत्वमिति लत्वम्॥

तत्त्व०—तिमिंगिल इति मत्स्यविशेषः॥

## गिलगिले च ॥ ५८८ ॥ तिमिंगिलगिलः ॥

सुबो०—गिलगिले च। अगिलस्य मुम् भवति गिलगिले परे। गिलगिलः। तिमीनां गिलगिल इति तिमिंगिलगिलः॥

तत्त्व०—गिलगिले चेति। गिलं गिलतीति गिलगिलः। तिमीनां गिलगिलस्तिमिंगिलगिल इति विग्रहः॥

## उष्णभद्रयोः करणे ॥ ५८९ ॥ उष्णंकरणम्। भद्रंकरणम् ॥

सुबो०—उष्णभद्रयोः करणे। उष्णभद्रयोर्मुम् स्यात् करणे परे॥

## रात्रेः कृति वा ॥५९०॥ रात्रिंचरः, रात्रिचरः। रात्रिमटः, रात्र्यटः॥

सुबो०—रात्रेः कृति वा। रात्रेर्मुम् वा स्यात् कृत्प्रत्ययांते परे। अखिदर्थमिदं सूत्रम्। खिति प्रत्यये खिति परस्येति नित्यमेव मुम् स्यात्। अटाविति टप्रत्ययः। रात्रिंचरः॥

## नहिवृतिवृषिव्यधिरुचिसहितनिषु ॥ ५९१ ॥ क्विबन्तेषु पूर्वस्य दीर्घः ॥ उपानत्। नीवृत्। प्रावृट्। मर्मावित्। नीरुक्। अभीरुक्। ऋतीषट्। परीतत् ॥

सुबो०—नहिवृतिवृषिव्यधिरुचिसहितनिषु। क्विंतेषु पूर्वस्य दीर्घः क्विंतेषु परेषु पूर्वस्योपसर्गकारकस्य दीर्घः स्यात्। णह बंधने। वृतु वर्तने। वृषु सेचने।

व्यध ताडने । रुच दीप्तौ । षह मर्षणे । तनु विस्तारे । उप समीपे नह्यते इति उपानत् । कर्मणि क्विप् । निवृते इति नीवृत् । "नीवृज्जनपदो देशः" इत्यमरः । प्रवर्षतीति प्रावृट् । मर्माणि विध्यतीति मर्मावित् । श्वानं विध्यतीति नाम्नो नो लोपंशिति नलोपः । श्वावित् । सहे । ग्रहां क्ङिति चेति संप्रसारणम् । निरोचते इति नीरुक् । ऋतिं सहत इति ऋतीषट् । "ऋतिर्जुगुप्साकल्याणगतिस्पर्द्धास्वथो ऋतुः ।" इति हैमः । परितनोतीति परीतत् । क्विंतेष्विति किम् । परिणहनम् । उपसर्गकारकस्येति किम् । पटुरुक् । तिग्मरुक् ॥

तर०—नह्यतीति । उपनह्यत इति उपानत् । निवर्तत इति नीवृत् । प्रवर्षतीति प्रावृट् । मर्माणि विध्यतीति मर्मावित् । निरोचते इति नीरुक् । ऋत सहते इति ऋतीषट् । परितनोतीति परीतत् ॥

**मत्वर्थे बहुस्वरस्य ॥ ५९२ ॥ अमरावती ॥**

सुबो०—मत्वर्थे बहुस्वरस्य । बहुस्वरस्य दीर्घः स्यात् संज्ञायामस्त्यर्थे परे । अमराः संत्यस्याममरावती । मांतोपधाद्धतिवनौ इति वत् । ङ्क्ति इतीप् । संज्ञायामिति किम् । बलवती । बहुस्वरस्येति किम् । व्रीहिमती ॥

**शरादेश्च ॥ ५९३ ॥ शरावती ॥**

सुबो०—शरादेश्च । शरादेर्दीर्घः स्यात् अस्त्यर्थे । शराः संत्यस्यामिति शरावती ॥

**अजिरादेर्न ॥ ५९४ ॥ अजिरावती ॥**

सुबो०—अजिरादेर्न । अजिरादेर्दीर्घो न भवति अस्त्यर्थे । अजिरमस्त्यस्यां सा अजिरवती । "अंगणं चत्वराजिरे" इत्यमरः ॥

**उपसर्गस्य घञ्यमनुष्ये वा दीर्घः ॥ ५९५ ॥ परिपाकः, परीपाकः । परिहासः, परीहासः । अमनुष्ये किम् । निषादः ॥**

सुबो०—उपसर्गस्य घञ्यमनुष्ये वा दीर्घः । उपसर्गस्य वा दीर्घः स्यात् घञंते परे नतु मनुष्येऽर्थे । अमनुष्ये किम् । निषीदत्यस्मिन्नघामित्यधिकरणे घञ् । निषादः पुलिंदो मनुष्यजातिः ॥

**आदेश्च द्वन्द्वे ॥ ५९६ ॥ द्वन्द्वे सति क्वचिदादेर्लोपः ॥ माता च पिता च पितरौ । श्वश्रूश्च श्वशुरश्च श्वशुरौ । दुहिता च पुत्रश्च पुत्रौ । स्वसा च भ्राता च भ्रातरौ ॥**

सुबो०—आदेश्च द्वन्द्वे । द्वन्द्वविषये भिन्नार्थानां तुल्यार्थानां च नाम्नामंत्योऽवशिष्यते । आदीनां च लोपो भवतीत्यर्थः । रामश्च रामश्च रामौ । घटश्च कुंभश्च कुंभौ । घटश्च कुंभश्च कलशश्च कलशाः । मातृश्वश्रूभ्यां सहोक्तौ पितृश्वशुरौ वा शिष्येते । माता च पिता चेति पितरौ । मातापितरौ वा । "पितुर्दशगुणा माता

गौरवेणातिरिच्यते। " इति स्मृतेर्मातुः प्रधानत्वात्पूर्वनिपातः। ऋतो द्वन्द्वे इति पूर्वस्यात्वम्। श्वशुरौ। श्वश्रूश्वशुरौ वा। स्वसृदुहितृभ्यां सहोक्तौ भ्रातृपुत्रौ शिष्येते। दुहिता च पुत्रश्च पुत्रौ। स्वसा च भ्राता च भ्रातरौ॥

तत्त्व०-आदिश्च द्वंद्वे इति। द्वंद्वे समासे काचिदादिभूतस्य पदस्य लोपः। अत्र यस्य लोप इत्यतो लोपग्रहणमनुवर्त्य व्याख्यानम्। तदुदाहरणम्। पितरावित्यादि इति तु वृद्धाः। नव्यास्त्वेवमाहुः। अत्र नाम्नामित्यनुवृत्तं सदविभक्तिपरं बोध्यम्। नतु पदार्थपरम्। द्वंद्वे इत्यप्यर्थपरम्। आदेरित्येकवचनमविवक्षितम्। सूत्रे लिंगवचनमविवक्षितमित्युत्सर्गात् तुल्यार्थे इत्यनुवृत्य विभक्तिव्यत्ययेन वाक्यभेदेन च व्याख्येयम्। तथा च समानानुपूर्वकाणां भिन्नार्थानां तुल्यार्थानां भिन्नानुपूर्विकाणां च नाम्नां मध्ये आदेः आद्यौ आद्यानां चान्त्य आदेशः स्यात्। रामश्च रामश्च रामौ। घटश्च कुंभश्च कुम्भौ। घटश्च कुंभश्च कलशश्च कलशाः। पूर्वपदानामन्त्यपदादेशस्तु न कृतः। सविभक्तिकस्यादेशे तस्यैव श्रवणप्रसंगात्। द्विवचनबहुवचनयोरभावात् द्वंद्वे कृते इत्यपि न। सर्वे सर्वेषामित्यादावीत्वविकल्पसुडभावादेः प्रसगात्। द्वंद्वार्थश्च सहविवक्षया। सहविवक्षा चेयम्। " अनुस्यूते च भेदानामेका संज्ञा प्रजायते। यदा सहविवक्षा तामाहुर्द्वंद्वैकशेषयोः॥ " इति॥

**ऋतां द्वन्द्वे॥ ५९७॥ पूर्वस्यात्वम्॥ मातापितरौ। होतापोतारौ। नेष्टोद्गातारौ॥**

सुबो०-ऋतां द्वन्द्वे। पूर्वपदस्यात्वम्। विद्यायोनिसंबंधवाचिनां ऋदंतानां यो द्वंद्वस्तत्र पूर्वपदस्यात्वं भवति। षष्ठीनिर्दिष्टत्वादंत्यस्यादेशः। द्वयोर्द्वंद्वे एवात्वम्। माता च पिता चेति एकशेषाभावे मातापितरौ। पुत्रोत्पादनेऽनयोर्योनिकृतः संबंधोऽत्र। होता च पोता चेति होतापोतारौ। नेष्टा चोद्गाता च नेष्टोद्गातारौ। इह होतादिरूपविद्याकृतः संबंध एकस्मिन् यज्ञ आर्त्विज्यरूपो बोध्यः॥

तत्त्व०-ऋतां द्वंद्व इति। विद्यायोनिसंबंधवाचिनामेव ऋदन्तानामित्यर्थः। तेनेह न। कर्तृभोक्तारौ॥

**पुत्रे च॥ ५९८॥ पितापुत्रौ। गावश्च गावश्च गाव इमाः। शुक्लश्च शुक्ला च शुक्लं च शुक्लम्। स च यश्च तौ। यौ वा॥**

सुबो०-पुत्रे च। विद्यायोनिसंबंधवाचिनां ऋदंतानामात्वं भवति पुत्रे परे। पिता च पुत्रश्च पितापुत्रौ। अनयोर्योनिकृतः संबंधो जन्यजनकभावलक्षणोऽत्र। ग्राम्यपशुसमूहेष्वतरुणेष्वनेकखुरेषु सहोक्तौ स्त्रीलिंगोऽवशिष्यते। गावश्च गावश्चेति गावः। उभयत्र रूपस्य समानत्वात् स्त्रीलिंगे शेषस्य फलमाह। इमा इति। ग्रामे भवाः ग्राम्याः। यण्। ग्रामेति किम्। रुरव इमे। मृगविशेषा वनचारिण इत्यर्थः। पशुग्रहणं किम्। ब्राह्मण्यश्च ब्राह्मणाश्च ब्राह्मणाः। समूहेषु किम्। एतौ गावौ। अतरुणेषु किम्। वत्सा इमे। अनेकखुरेषु किम्। अश्वा इमे। अश्वानामेक एव खुर इत्यर्थः। अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् तल्लक्षण एव विशेषश्चेत्। शुक्लः पटः। शुक्ला शाटी। शुक्लं वस्त्रम्। तदिदं शुक्लम्। तानीमानि शुक्लानि। त्यदादीनां मिथः सहोक्तौ परं पूर्वं च शिष्यते। स च यश्च यौ तौ वा। स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत्। हंसी च हंसश्च हंसौ।

इह सर्वत्र एकशेषे कृतेऽनेकाभावात् द्वंद्वसमासो न। तेन शिरसि शिरांसि इत्यादौ प्राण्यंगत्वादेकवद्भावो न। पंथानौ पंथान इत्यादौ समासांतप्रत्ययो न भवति॥

इत्येकशेषः॥

तत्त्व०—गाव इमा इति। ग्राम्यपशुसंघेष्वतरुणेषु स्त्रिया एव एकशेष इत्यर्थः। शुक्लमिति। अक्लीबैः सहोक्तौ क्लीबमेव शिष्यते इत्यर्थः। यो तौ वेति। त्यदादिषु पर विकल्पनेत्यर्थः॥

**दिक्संख्ये संज्ञायाम्॥५९९॥** दिग्वाचिनः संख्यावाचिनः शब्दाः समानाधिकरणेन संज्ञायामेव समस्यन्ते स कर्मधारयः समासः॥ दक्षिणाग्निः। सप्तर्षयः। संज्ञायां किम्। पञ्चफलानि। दिक्संख्ये किम्। शूर्पणखा॥

सुबो०—दिक्संख्ये संज्ञायाम्। दिक् च संख्या च दिक्संख्ये दिग्वाचिनः संख्यावाचिनश्च शब्दास्तुल्यार्थेन सह समस्यंते स कर्मधारयः। कर्मधारयस्तुल्यार्थे इत्यनेनैव सिद्धे नियमार्थमिदम्। संज्ञायामेवेति। दक्षिणश्चासौ अग्निश्चेति दक्षिणाग्निः। सप्त च ते ऋषयश्च सप्तर्षयः। "दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः।" इत्यमरः॥

तत्त्व०—दिक्संख्ये संज्ञायामिति। दिक्संख्ये दिग्वाचिसंख्यावाचिनावित्यर्थः। कर्मधारयस्तुल्यार्थे इत्यनेनैव सिद्धे नियमार्थमिदम्। संज्ञायामेव नान्यत्रेत्यर्थः। दक्षिणाग्निरिति। दक्षिणादिगवस्थिते वस्तुनि दक्षिणशब्दः। अतो दानादेर्व्यावृत्तो दिगवस्थिते व्यवस्थाप्यते। अग्निशब्दोऽपि चित्रकादेर्व्यावृत्तो हुताशे व्यवस्थाप्यते। अतो विशेषणविशेष्यभावात्कर्मधारयः। संज्ञायां किम्। पंचफलानि। दिक्संख्ये किम्। शूर्पणखा। दक्षिणाग्निरित्यादौ वाक्ये संज्ञानवगमान्नित्यसमासत्वम्। अविग्रहस्य नित्यसमासत्वान्न विग्रहो यस्य लोके प्रयुज्यत इति शेषः। अन्यथा दक्षिणाग्निरुन्मत्ता गंगा यस्येति आदिविग्रहस्य सर्वत्र दर्शनादविग्रहत्वासंभव एव स्यात्। अयमत्र संग्रहः। कृत्तद्धितसमासैकशेषसनाद्यन्ता धातुरूपाः पञ्च वृत्तयः। परार्थाभिधानं वृत्तिः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स द्विधा लौकिकोऽलौकिकश्च। तल्लक्षणं चोक्तमेव। समासोऽपि द्विविधः। नित्योऽनित्यश्चेति। नित्योऽपि द्विविधः। अविग्रहोऽस्वपदविग्रहश्च। न स्वस्य समासस्य पदैर्विग्रहो यस्य सः समासः षड्विध इति प्रायोवादः। द्विग्वव्ययीभावतत्पुरुषद्वंद्वबहुव्रीहिकर्मधारयभिन्नस्यापि नाम्नः सुपेति विधानात्। एतेन नाम्नां कृता समास इति सूत्रे समासग्रहणम्। तत्पुरुषपरसमासस्य पूर्वं विधानात्। अमादौ तत्पुरुष इत्यतो मंडूकप्लुत्यानुवृत्तेर्वेति वासुदेवोक्तिः परास्ता। तथा पूर्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यपदार्थप्रधानो बहुव्रीहिः। उभयपदार्थप्रधानो द्वंद्वः। द्विगुस्तु कर्मधारयः पूर्वपदार्थप्रधानः विशेषणपूर्वस्तूत्तरपदार्थप्रधानः। द्विगुरन्यपदार्थप्रधान इत्यपि प्राचां प्रवादः प्रायोऽभिप्रायः सूचयति। उन्मत्तगंगमित्याद्यव्ययीभावे अतिमालादौ तत्पुरुषे द्वित्रा इत्यादि बहुव्रीहौ दंतौष्ठमित्यादि द्वंद्वे चाभावात्। अनेकपदस्य बहुव्रीहौरेव। ऐकपद्यमैकविभक्तिकत्वं च समासप्रयोजनं पूर्वापरः स्वरादिश्च प्रयोजनम्॥

**द्वन्द्वतत्पुरुषयोः परपदस्यैव लिङ्गम्॥६००॥** कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। अर्धपिप्पलीयम्॥

सुबो०—द्वन्द्वतत्पुरुषयोः परपदस्यैव लिंगम्। इतरेतरयोगद्वंद्वोऽत्र गृह्यते न समाहारद्वंद्वः। एकत्वे द्विगुद्वंद्वावित्युक्तत्वात्। द्वंद्वतत्पुरुषयोरिति संबंधे षष्ठी। एतयोः

परपदतुल्यं लिंगं भवति। कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ इमे इति स्त्रीलिंगनिर्देशः। मयूरी च कुक्कुटश्च मयूरीकुक्कुटौ। इमाविति पुँल्लिंगनिर्देशः। पिप्पल्या अर्द्धमित्यर्धपिप्पली। इयमिति स्त्रीलिंगनिर्देशः॥

**द्विगुप्राप्तापन्नालम्पूर्वप्रादिसमासेन ॥ ६०१ ॥ पञ्चकपालः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलंकुमार्यै, अलंकुमारिः। निष्कौशाम्बिः॥**

सुबो०–द्विगुप्राप्तापन्नालंपूर्वप्रादिसमासेन। द्विगुसमासे प्राप्ताऽपन्नालंपूर्वसमासे प्रादिसमासे च परपदतुल्यं लिंगं न भवति। पंचसु कपालेषु संस्कृतः तद्धितार्थे द्विगुः। संस्कृतार्थेऽण् तस्य लुक् च। तद्धितार्थे द्विगुर्विशेष्यनिघ्नः। पुरो दाश्यते इति दाशृ दाने कर्मणि घञ्। निपातनाद्दस्य डः। पुरोडाशः। प्राप्तजीविकः। आपन्नजीविकः। अलंकुमारिः। तत्पुरुषा एते। अन्यार्थे इति ह्रस्वः। प्रादिसमासो यथा। प्रादयो गताद्यर्थे प्रथमया। प्रगत आचार्यः प्राचार्यः। दुराचारः पुरुषो दुःपुरुषः। प्रगतः पितामहः प्रपितामह इत्यादि। अत्यादयः क्रांताद्यर्थे द्वितीयया। अतिक्रांतो मालां अतिमालः। अन्यार्थे इति ह्रस्वः। अभिगतो मुखं अभिमुखः। उद्गतो वेलां उद्वेलः। प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि। अवादयः क्रुष्टाद्यर्थे तृतीयया। अवक्रुष्टः कोकिलया अवकोकिलः। अन्यार्थे इति ह्रस्वः। परिणद्धो वीरुधा परिवीरुत्। पर्यादयो ग्लानाद्यर्थे चतुर्थ्या। परिग्लानोऽध्ययनाय पर्यध्ययनः। गुरुकुलवासादिना परिग्लानोऽध्ययनायेत्यर्थः। निरादयः क्रान्ताद्यर्थे पंचम्या। निष्क्रांतः कौशांब्याः निष्कौशाम्बिः। अन्यार्थे इति ह्रस्वः। उत्क्रांता कुलात् उत्कुला। निर्गतमंगुलिभ्यो निरंगुलम्। अस्वपदविग्रहेण नित्यसमासा एते॥ इति प्रादिसमासाः॥

तत्त्व०–निष्कौशांबिरिति। कौशांब्या निर्गत इति विग्रहः॥

**अश्ववडवयोर्द्वन्द्वः पूर्ववल्लिङ्गः ॥ ६०२ ॥ अश्ववडवान्॥**

सुबो०–अश्ववडवयोर्द्वंद्वः पूर्ववल्लिंगः। सूत्रे द्विवचनमविवक्षितम्। बहुत्वेऽपि पुँल्लिंगस्य दर्शनात्। अश्वश्च वडवा च अश्ववडवौ। निपातनादापो निवृत्तिः। बहुत्वे पुँल्लिंगं दर्शयति। अश्ववडवान् अश्ववडवैः। विभाषावृक्षेति पक्षे समाहारद्वंद्वेऽश्ववडवम्। क्रियाव्ययविशेषाणां क्लीबत्वमेकवचनं च क्रियाविशेषणानामव्ययविशेषणानां चैकवचनं क्लीबत्वं च भवति॥

**रात्राह्नाहान्ताः पुंस्येव ॥ ६०३ ॥ अहोरात्रः। पूर्वरात्रः। पूर्वाह्णः। द्व्यहः। पूर्वाहः॥**

सुबो०–रात्राह्नाहांताः पुंस्येव । परवल्लिंगताऽपवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते । अप्रत्ययांतो रात्रिशब्दष्टप्रत्ययांतोऽहन्शब्दः । एतदंता द्वन्द्वद्विगुतत्पुरुषकर्मधारयाः पुँल्लिंगे एव भवंति । अहश्च रात्रिश्च अह्न इति नस्य सः अहोरात्रः । अहःपूर्वाद्रात्रिशब्दादः समाहारे इत्यः प्रत्ययः । रात्रेः पूर्वभागः पूर्वरात्रः । सर्वैकदेशेत्यप्रत्ययः । अह्नः पूर्वं इति पूर्वाह्णः । राजाहःसखिभ्यः इति टप्रत्यये नो वेत्युपधालोपः । द्वयोरह्नोः समाहार इति टः । नो वेति टिलोपः । द्व्यहः ॥

संख्यापूर्वं रात्रं क्लीबम् ॥ ६०४ ॥ द्विरात्रम् । त्रिरात्रम् ॥

सुबो०–संख्यापूर्वं रात्रं क्लीबम् । द्वयोः रात्र्योः समाहारः तिसृणां रात्रीणां समाहार इति । सर्वैकदेशेत्यप्रत्ययः । द्विरात्रम् । त्रिरात्रम् ॥

अपथं तत्पुरुषे क्लीबम् ॥ ६०५ ॥ अपथम् ॥

सुबो०–अपथं तत्पुरुषे क्लीबम् । नञ्पूर्वः कृतसमासांतः पथशब्दः क्लीबे स्यात् । न पंथा इत्यपथम् । ऋक्पूरब्धूःपथामित्यप्रत्ययः । तत्पुरुषे इति किम् । अपथो देशः । कृतसमासांतनिर्देशात् नेह । अपंथाः । अत्र नञ्पूर्वात्पथिशब्दाद्वा समासांतस्तत्पुरुषे इति विकल्पः ॥

अर्द्धर्चादयः क्लीबपुंसोः ॥ ६०६ ॥ अर्द्धर्चम्, अर्द्धर्चः । ध्वजम्, ध्वजः । तीर्थम्, तीर्थः । एवं शरीर-मण्डप-यूप-देह-देशांकुश-कलश इत्यादि ॥

सुबो०–प्रसंगादाह । अर्द्धर्चादयः क्लीबपुंसोः । अर्द्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः ॥

आबन्तोत्तरपदाद् द्विगोर्वेप् ॥ ६०७ ॥ पञ्चखट्वी, पञ्चखट्वम् ॥

सुबो०–आबंतोत्तरपदाद्विगोर्वेप् । आबंतोत्तरपदो द्विगुर्वा स्त्रियाम् । पंचानां खट्वानां समाहारः नपुंसकस्येति ह्रस्वे कृते इदं प्रवर्तते । पंचखट्वम् । स्त्रियां तु समाहारेऽत इतीप् । पंचखट्वी ॥

तत्त्व०–पचखट्व इति । पंचाना खट्वानां समाहार इति विग्रहः ॥

अनो नलोपो द्विगोर्वेप् ॥ ६०८ ॥ पञ्चतक्षम्, पञ्चतक्षी ॥

सुबो०–अनो नलोपो द्विगोर्वेप् । अनो नलोपो द्विगुर्वा स्त्रियाम् । इह वाशब्दः स्त्रियामित्यनेन संबध्यते न तु नलोप इत्यनेन । अन्नंतस्य द्विगोर्नित्यं नलोपो भवति अनंतो द्विगुः स्त्रियां च वा । पंचानां तक्ष्णां समाहारः पंचतक्षम् । स्त्रियां तु समाहारेऽत इति ईप् । पंचतक्षी ॥

पुण्यसुदिनाभ्यामह्नः क्लीबता ॥ ६०९ ॥ पुण्याहम् । सुदिनाहम् ॥

सुबो०-पुण्यसुदिनाभ्यामह्नः क्लीबता । आभ्यां परस्याहन्शब्दस्य क्लीबत्वं स्यात् । पुण्यं च तदहश्चेति । राजाहःसखिभ्य इति टः । नो वेति टिलोपः । पुण्याहम् । सुदिनं च तदहश्चेति सुदिनशब्दः प्रशस्तपर्यायः । सुदिनाहम् । रात्राह्नाहांताः पुंस्येवेत्यस्यापवादोऽयम् ॥

तत्त्व०-सुदिनाहमिति । सुदिनशब्दः प्रशस्तपर्यायः । " सुदिनासु निशासु कार्यमेतत्प्रविचिन्वीत विशेषतः स्वप च । " इत्यादिप्रयोगदर्शनात् ॥

**संख्याव्ययाभ्यां परस्य पथः क्लीबता॥६१०॥** त्रिपथम् । विपथम्॥

सुबो०-संख्याव्ययाभ्यां परस्य पथः क्लीबता । आभ्यां परः कृतसमासांतः पथशब्दः क्लीबमित्यर्थः । त्रयाणां पंथा इति ऋक्पूरब्धूरित्यप्रत्ययः । त्रिपथम् । विरूपः पंथाः इति विपथम् । कथं पुंस्त्वम् । " व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः । " इत्यमरे उच्यते । प्रमाद एवायमिति बहवः । वस्तुतस्तु पथ गतौ इत्यस्मात्पचाद्यप्रत्यये पथति व्याप्नोतीति व्युत्पादितः पथशब्दः । तथा च त्रिकांडशेषः । "वाटः पथश्च मार्गः स्यात् " इति। अनेन समासे पुंस्त्वमुपपन्नम् । कापथ इत्यत्र कादेशस्तु ईषदर्थे बोध्यः । अथ च परवल्लिंगापवादत्वात्तत्पुरुषे एवेदं प्रवर्तते नान्यत्र । विपथा नगरी । बहुव्रीहिरयम् । पंथानमतिक्रांता अतिपथा इहापि न । द्विगुप्राप्तापन्नालमिति परपदलिंगप्रतिषेधात् इति माधवः ॥

तत्त्व०-त्रिपथं विपथमिति । " व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः । " इत्यमरे । विपथकापथाविति रभसकोशे च । पथे गतावित्यामाद्यचाचे बोध्यम् । वाटः पथश्च मार्गः स्यादिति त्रिकांडशेषोऽप्यत्रानुकूलः ॥

**सामान्ये नपुंसकम् ॥ ६११ ॥** मृदु पचति । प्रातः कमनीयम् ॥

सुबो०-सामान्ये नपुंसकम् । अनियतलिंगविषयकमिदं तेनादिपचतीत्यादौ पुंस्त्वमेव । मृदु पचति । क्रियाविशेषणत्वात् द्वितीयांतमिदं धातूपात्तक्रियां प्रति हि फलांशः कर्मीभूतः । फलसामानाधिकरण्ये द्वितीया ॥

तत्त्व०-मृदु पचतीति । क्रियाविशेषणत्वाद्द्वितीयांतं धातूपात्तभावनां प्रति फलांशः कर्मीभूतः । तथा च फलसामानाधिकरण्ये द्वितीयासामान्ये नपुंसकमिति । वा नियतलिंगविषयं तेन आदिः पचतीत्यादौ प्रातरादिरिति पुंस्त्वमेव ॥

**उपज्ञोपक्रमान्तस्तत्पुरुषः क्लीबम् ॥ ६१२ ॥** उपज्ञायमानोपक्रम्यमाणयोः प्राथम्यं चेदाख्यातुमिष्यते । पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः ॥

सुबो०-उपज्ञोपक्रमांतस्तत्पुरुषः क्लीबम्। अनञ्तत्पुरुषाधिकारोऽयम् । उपज्ञांत उपक्रमांतश्च तत्पुरुषः क्लीबं स्यात् । उपज्ञायते इत्युपज्ञा । षिद्भिदामङ् इति कर्मण्यङ् । उपक्रम्यते इत्युपक्रमः । कर्मणि घञ् । मांतस्य सेटो न वृद्धिरिति वृद्धच-

भावः । उपज्ञा च उपक्रमश्च उपज्ञोपक्रमौ उपज्ञोपक्रमौ अंते यस्य स उपज्ञोपक्रमांतः । " उपज्ञा ज्ञानमाद्यं स्यात् ज्ञात्वारंभ उपक्रमः । " इत्यमरः । उपज्ञायमानस्योपक्रम्यमाणस्य च । प्रथमस्य भावः प्राथम्यं चेद्यदि आख्यातुं वक्तुमिष्यते वांछयते । पाणिनेः इति कर्तरि षष्ठी । नंदस्योपक्रम इति नंदोपक्रमम् ॥

**छायान्तश्च पूर्वपदार्थबाहुल्ये ॥ ६१३ ॥** इक्षूणां छाया इक्षुच्छायम् ॥

सुबो०–छायांतश्च पूर्वपदार्थबाहुल्ये । छांयातस्तत्पुरुषो नपुंसकं स्यात् । पूर्वं च तत्पदं च पूर्वपदं पूर्वपदस्यार्थः पूर्वपदार्थः बहुलस्य भावो बाहुल्यं पूर्वपदार्थस्य बाहुल्यं पूर्वपदार्थबाहुल्यं तस्मिन् । सेनासुराच्छायेत्यस्य विकल्पस्यापवादोऽयम् ॥

तत्त्व०–इक्षुच्छायमिति । इक्षुच्छायानिषादिन्य इत्यत्राद्यमश्लेषो बोध्यः ॥

**राजपर्यायपूर्वो रक्षःपिशाचादिपूर्वश्च सभान्तः क्लीबम् ॥ ॥६१४॥** इनसभम् । ईश्वरसभम् । नेह । राजसभा । रक्षःसभम् । पिशाचसभम् ॥

सुबो०–राजपर्यायपूर्वो रक्षःपिशाचादिपूर्वश्च सभांतः क्लीबम् । राजपर्यायपूर्वः सभांतस्तत्पुरुषो रक्षःपिशाचादिपूर्वः सभांतस्तत्पुरुषश्च नपुंसकं स्यात् । इनेश्वरशब्दौ राजपर्यायौ । इनस्य सभा इनसभम् । ईश्वरस्य सभा ईश्वरसभम् । राजपर्यायपूर्व इति किम् । राजसभा । रक्षसः सभा रक्षःसभम् । पिशाचस्य सभा पिशाचसभम् ॥

तत्त्व०–इनसभमिति । नृपतिसभामगमन्नचेयमानेत्यत्र तु राजविशेषवाची नृपतिशब्दो बोध्यः ॥

**संघातार्थे सभान्तः ॥ ६१५ ॥** स्त्रीसभम् । स्त्रीसंघात इत्यर्थः ॥

सुबो०–संघातार्थे सभांतः । संघातार्था या सभा तदंतस्तत्पुरुषः क्लीबं स्यात् ॥

**सेनासुराच्छायाशालानिशान्तो वा ॥ ६१६ ॥** ब्राह्मणसेनम् । यवसुरम् । कुडयच्छायम् । गोशालम् । श्वनिशम् । पक्षे ब्राह्मणसेनेत्यादि ॥ इति समासप्रक्रिया ॥

सुबो०–सेनासुराच्छायाशालानिशांतो वा । एतदंतस्तत्पुरुषः क्लीबं स्याद्वा । श्वनिशम् । कृष्णचतुर्दशी । अनञ्तत्पुरुष इत्यधिकारान्नेह । दृढसेनो राजा । दृढा सेना यस्येति बहुव्रीहिः । असेना अविद्यमाना सेना इति नञ्पूर्वस्तत्पुरुषः । अथ शेषमाह । कृत्तद्धितसमासैकशेषयङाद्यंतधातुरूपाः पंच वृत्तयः । पंचानां वृत्तिरिति पूर्वाचार्यसंज्ञा । वृत्तिलक्षणमाह । परार्थाभिधानं वृत्तिः । परस्य शब्दस्य योऽर्थस्तस्याऽभिधानं शब्दांतरेण यत्र सा वृत्तिः । यथा । राजपुरुष इत्यत्र राजशब्देन

वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते । विग्रहलक्षणमाह । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स द्विधा । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः । प्रयोगानर्होऽसाधुरलौकिकः । यथा । राज्ञः पुरुष इति लौकिकविग्रहः । राजन् अस् पुरुष स् इत्यलौकिकविग्रहः । नित्यसमासलक्षणमाह । अविग्रहो नित्यसमासः । लौकिकविग्रहरहितो नित्यसमासो ज्ञेयः । लोके यस्य विग्रहो न प्रयुज्यते इति भावः । अस्वपदविग्रहो वा । समस्यमानयावत्पदैरघटितः अस्वपदविग्रहः । समासः षड्विध इति प्रायो वादः । अव्ययीभावतत्पुरुषद्वंद्वद्विगुबहुव्रीहिकर्मधारयाधिकारबहिर्भूतस्यापि नाम्नश्च कृतेति विधानात् । तद्व्याख्याने तत्पुरुष इत्युक्तिस्तु प्राचामनुरोधेनेति ध्येयम् । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । उभयपदार्थप्रधानो द्वंद्वः। संख्यापूर्वान्यपदार्थप्रधानो द्विगुः। अन्यपदार्थप्रधानो बहुव्रीहिः। विशेषणपूर्वः कर्मधारयः उत्तरपदार्थप्रधानः। विशेष्यपूर्वस्तु पूर्वपदार्थप्रधानः। न तु सार्वत्रिकः । सूपप्रति उन्मत्तगंगमित्याद्यव्ययीभावे । अतिमालादौ तत्पुरुषे । दंतोष्ठमित्यादौ द्वन्द्वे । द्वित्रा इत्यादौ बहुव्रीहौ चाऽभावात् । अनेकपदत्वं द्वंद्वबहुव्रीह्योरेव । किंच "सिपां सिपा तिपां नाम्ना धातुना च तिपां तिपा । सिबंतेनेति विज्ञेयः समासः षड्विधो बुधैः ॥" प्रायोऽभिप्रायः । सिबंतानां सिबंतेन यथा । राजपुरुषः । सिबन्तानां तिपा समासो वेदे एव भवति नान्यत्र । यथा । पर्यभूषत् । सिबन्तानां नाम्नां प्रातिपदिकेन यथा । कुंभकारः । अत्र सिबुत्पत्तेः प्रागेवोपपदसमासः । सिबंतानां धातुना यथा । क्विब्वचिपृच्छ्यायतस्तुकटप्रुजुश्रीणामित्यादिनिपातनाद्धातुना समासः। कटप्रूः । अजस्रम् । तिपां तिपा समासो यथा । क्रियासातत्ये आख्यातेन समस्यते । अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता । पचतभृज्जता । खादतमोदता । तिङा सिपा यथा । एहीडादयोऽन्यार्थे समस्यंते एहि ईड इति यस्मिन् कर्मणि तत् एहीडम् । कृंत विचक्षण इति यस्यां क्रियायां सा कृंतविचक्षणा । इवेन नित्यसमासो विभक्त्यलोपश्च । जीमूतस्येव । इति सर्वसमासशेषः । जात्याख्यायामेकस्मिन् बहुवचनं वा । ब्राह्मणाः पूज्याः, ब्राह्मणः पूज्यः । एकत्वे द्वित्वे चास्मदो बहुवचनं वा । वयं ब्रूमः । अहं ब्रवीमि । आवां ब्रुवो वा । उपमानानि सामान्यवचनैः समस्यंते । घनश्यामः । इह पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते । उपमानस्य पूर्वनिपातनार्थमिदं उपमेयं व्याघ्रादिभिः सामान्याप्रयोगे समस्यते । विशेष्यस्य पूर्वनिपातार्थमिदम् । पुरुषो व्याघ्र इव शूर इत्यर्थः ॥ इति समासप्रक्रिया ॥

तत्त्व०—श्रीविद्यानगरस्थायिलोकेशशंकरशर्मणा । कृतायामिह टीकायां समासविवृतिर्गता ॥

इति समासप्रक्रिया ।

अपत्येऽण् ॥ ६१७ ॥ नाम्नोऽपत्येऽर्थेऽण्प्रत्ययः ॥

सुबो०—अथ तद्धितो निरूप्यते। तेभ्यः स्याद्यंतपदेभ्यो हितस्तद्धितः। विभक्त्यंतनाम्न एव तद्धितोत्पत्तिर्भवतीत्यर्थः। अपत्येऽण्। षष्ठ्यंतान्नाम्नोऽण्प्रत्ययो भवति अन्वये सत्यपत्यार्थे। अन्वयस्तु एकार्थीभाव एव वृत्तौ। वाक्ये तु व्यपेक्षालक्षणः। "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी। आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे॥" इत्यमरः॥

तत्त्व०—अपत्येऽणिति। अत्र प्रकरणस्यादादिनाऽपत्यान्वयस्यासंभवात्पारिशेष्याद्वा नामलाभः। नाम्नोऽण् इत्यतः षष्ठ्यंतस्यैवापत्यवद्भावसंबंधे षष्ठ्या एवोचितत्वात्॥

आदिस्वरस्य ञ्णिति वृद्धिः ॥ ६१८ ॥ स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्ञिति णिति च तद्धिते ॥

सुबो०—आदिस्वरस्य ञ्णिति वृद्धिः। स्वरेषु आदिः आदिस्वरः। निर्द्धारणार्थसप्तम्या समासः। क्वचिदमाद्यंतस्य परत्वमिति परनिपातः। निर्द्धारणषष्ठ्या तु न समासः। निर्द्धारणे या षष्ठीति निषेधात्। यद्वा वोऽव्यस्वरे इत्यतः स्वरे इत्यनुवर्त्य तच्च जातावेकवचनं निर्द्धारणसप्तम्यंतम्। तथा च स्वरेषु य आदिस्वरस्तस्य वृद्धिरिति व्याख्याने। आदिश्चासौ स्वरश्चेति कर्मधारयः। ञ् च ण् च ञ्णौ तौ इतौ यस्य स ञ्णित् तस्मिन् ञ्णिति प्रकरणात्तद्धिते इति लभ्यते। इच्छब्दस्तु प्रत्येकं संबध्यते द्वंद्वांते श्रूयमाणत्वात्॥

तत्त्व०—आदिस्वरस्य ञ्णिति वृद्धिरिति। अत्र स्वराणां आदिस्वरः स्वरेषु वा निर्द्धारणार्थया षष्ठ्या सप्तम्या वा समासः। क्वचिदमाद्यंतस्य परत्वस्येदमपि ज्ञापकम्। निर्द्धारणे च सजातीयापेक्षा तेन स्वर एव गृह्यते न तु हस इति लघुभाष्ये। हस अत्रेदमवधेयम्। निर्द्धारणषष्ठ्या समास इति तावत् व्याहतम्। तथाहि। क्वचित्षष्ठी न समस्यत इत्युक्त्या क्वचित्पदेन ग्रन्थान्तरोक्तनिर्द्धारणादिलाभात्। न निर्द्धारण इति पाणिनिसूत्रमेवात्रार्थेऽनुकूलमिति तस्मात्सप्तम्यंतेन समासः। कर्मधारयो वा। कर्मधारये च यस्वर इत्यतः स्वरे इत्यनुवर्त्य जातावेकवचनं बोध्यम्। तथा च स्वरेषु य आदिस्वरस्तस्य वृद्धिरिति व्याख्येयम्। ञ् च ण् च ञ्णौ ञ्णौ इतौ यस्य स ञ्णित् तस्मिन् प्रकरणात्तद्धितस्यैव विशेषणम्। अत्र णितीति वा ञितीति वा एकमेव कर्त्तव्यम्। सर्वत्र णकार एव ञकार एव चानुबंधत्वेन कार्य इत्युक्तिस्तु अनेकस्थलेऽनुबंधव्यत्यासकरणक्लेशादुपेक्षिता। नन्वादेर्ञ्णिति च वृद्धिरित्येवास्तु किं स्वरग्रहणेनेति चेत्सत्यम्। हसस्य वृद्धिग्रहणेन वारणसंभवेऽपि यत्रादावेकस्वरः स्यात्तत्रैव वृद्धिर्नत्वादिहसात्परस्य स्वरस्येति शंकानिरासाय स्वरग्रहणस्यावश्यकत्वात्। आदित्वं तु यस्मात्पूर्वं नास्ति तत्त्व एवमतत्त्वमपि यस्मात्परो नास्ति तत्त्वमेव। इत्थं च व्यपदेशिवद्भावो नापेक्ष्यः इति तु सत्यन्यस्मिन्नित्यपि विशेषणमुपादेयम्। तदा व्यपदेशिवद्भावेनैकस्वरस्य सिद्धिः॥

वोऽव्यस्वरे ॥ ६१९ ॥ उवर्णस्यौतश्चाव् तद्धितस्य यकारे स्वरे च ॥ उपगोरपत्यमौपगवः। वैदुषः। वासिष्ठः। गौतमः। भार्गवः। आंगिरसः। वैदः। और्वः। वार्त्रघ्नः॥

सुबो०–वोऽन्यस्वरे । उश्च ओश्चानयोः समाहारो वो एकत्वे द्विगुद्वंद्वाविति नपुंसकत्वेऽपि न ह्रस्वः । अनुकार्यस्वरूपस्पष्टप्रतिपत्त्यर्थत्वात् । यश्च स्वरश्च तयोः समाहारः यस्वरं तस्मिन् यस्वरे तद्धितसंबंधिनि । अत्रौकारस्य स्वरे आवि सिद्धौ यकारार्थं तद्ग्रहणम् । वस्तुतस्तु क्वचिद्यकारेऽपि स्वरकार्यातिदेशादेव सिद्धिरित्योग्रहणं व्यर्थमिति ध्येयम् । गामुपगत इत्युपगुः । नाम्नश्चेति समासः । गोरिति ह्रस्वः । यादवविशेषस्य उद्धवस्य पूर्वजः कश्चित् । उद्धवं प्रकृत्यौपगविर्जगामेति भागवतात् । उपगोरपत्यमिति अणः प्रयोगे उक्तार्थानामप्रयोग इति न्यायादपत्यशब्दस्याप्रयोगः । वा टाङ्चोरित्यतो वेत्यनुवर्तते तेन पक्षे षष्ठीसमासोऽपि । उपग्वपत्यमिति समासस्य वैकल्पिकत्वाद्वाक्यमपि । औपगवः । स्त्रियां तु जातेरितीप् । औपगवी । अन्वये किम् । वस्त्रमुपगोरपत्यं चैत्रस्य । विदुषोऽपत्यं वैदुषः । वसिष्ठस्य ऋषेरपत्यं वासिष्ठः । गौतमस्य ऋषेरपत्यं गौतमः । भृगोर्ऋषेरपत्यं भार्गवः । आंगिरसऋषेरपत्यं आंगिरसः । विदस्यापत्यं वैदः । उर्वस्यापत्यं और्वः ॥

तत्त्व०–वोऽन्यस्वर इति । वो अन्यस्वरे इति छेदः । उश्च ओश्च एतयोः समाहारः वो एकत्वे द्विगुद्वंद्वावित्यस्यानित्यत्वान्नपुंसकत्वं वा ह्रस्वस्यैवानित्यत्वम् । यश्च स्वरश्च यस्वरं तस्मिन् अत्र ओकारस्य स्वरे अव्विधानस्य सिद्धत्वेऽपि यकारार्थमोग्रहणस्यावश्यकत्वात् तद्ग्रहणम् । वस्तुतस्तु क्वचिद्यकारेऽपि स्वरकार्यातिदेशादेव सिद्धिरित्योकारग्रहणं न कर्तव्यम् । यस्वरयोश्च प्रकरणात्तद्धितयोरेव ग्रहण उपगोरपत्यमिति । गामुपगत उपगुः नाम्नश्चेति समासो गोरिति ह्रस्वः । उपगुर्यादवविशेषः उद्धवपूर्वजेषु कश्चन । अण प्रयोगे उक्तार्थानामप्रयोगः इति न्यायादपत्यशब्दस्याप्रयोगः मृगापत्ये । मृगत्वसत्त्वान्न तद्वाचिभ्यस्तद्धितः । उपगुत्वं त्वौपगवे नास्तीति भवत्यपत्यप्रत्ययः ॥

**ऋ उरणि ॥ ६२० ॥ संख्यासंभद्रपूर्वस्य मातृशब्दस्य ऋत उर्भवत्याणि परे ॥ षाण्मातुरः । साम्मातुरः । भाद्रमातुरः ॥**

सुबो०–ऋ उरणि । सामान्यशब्दस्यापि लक्ष्यानुसारात् विशेषपरत्वं बोध्यम् । तेन संख्यादिपूर्वस्य मातृशब्दस्य लाभः । षण्णां मातॄणामपत्यमिति तद्धितार्थे द्विगुसमासोऽयम् । नतु षण्मातॄणामपत्यमिति विग्रहः । दिक्संख्ये संज्ञायामिति नियमेनाऽसंज्ञायां समासाऽभावात् । तद्धितांतस्य संज्ञात्वेऽपि समासस्य संज्ञात्वात् आदिस्वरवृद्धिः । षो ड इति डत्वं क्वचिज्जवस्यापि ञम् इति डस्य णः उर् । षाण्मातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः । द्वैमात्रेयश्च विनायकः । संमातुरपत्यं साम्मातुरः । भद्रमातुरपत्यं भाद्रमातुरः ॥

तत्त्व०–ऋ उरणीति । मातृशब्दस्येति जननीवाचकस्यैव ग्रहणं व्याख्यानात् । षण्णां मातॄणामपत्यमिति संख्यापूर्वो द्विगुरिति तद्धितार्थे द्विगुः । ञमे ञमा वेत्यत्र व्यवस्थितत्वाश्रयणात्क्वचिज्जवस्यापि टकारस्य ञमानां मध्ये सवर्णत्वेन णकार. ॥

**शिवादेश्चाण् ॥ ६२१ ॥ शैवः । गाङ्गः ॥**

सुबो०–शिवादेश्चाण् । शिवादेरण् स्यादपत्येऽर्थे । इञपवादोऽयम् । शिवस्या-

पत्यं शैवः । लह्यस्यापत्यं लाह्यः । गंगाया अपत्यं गांगः । पक्षे गांगेयः । ण्यण् । शिव ककुत्स्थ वेतंड जरत्कारु विपाश् तक्षन् विश्रवण् रवण ऋष्टिषेण विरूपाक्ष इति शिवादिः ॥

तत्त्व०–शिवादेश्चेति । अत इति योगविभागात् शिवादेरकारांतादप्यण् ॥

**अत इञनृषेः ॥ ६२२ ॥** अकारान्तान्नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ् ॥ दैवदत्तिः । श्रैधरिः । दाशरथिः । पौरन्दरिः ॥

सुबो०–अत इञनृषेः । ऋषिवाचकाददंतात्तु अणेव भवति । अनृषिवाचकमदंतं यत्प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यंतादिञ् स्यादपत्येऽर्थे । देवदत्तस्यापत्यं दैवदत्तिः। श्रीधरस्यापत्यं श्रैधरिः। दशरथस्यापत्यं दाशरथिः । पुरंदरस्यापत्यं पौरंदरिः ॥

तत्त्व०–अत इञनृषेरिति । अत्रात इति योगविभागः । तेनाकारांतादनृषिवाचकादप्यण् । भैमसेन इत्यादि ॥

**बह्वादेश्च ॥ ६२३ ॥** बहोरपत्यं बाहविः । औडुलोमिः । गार्गिः । बैदिः । नाडिः । कौञ्जिः ॥

सुबो०–बह्वादेश्च । बह्वादिभ्य इञ् स्यादपत्येऽर्थे । बाह्वादिराकृतिगणोऽयम् । बाहोरपत्यं बाहविः । उडुनीव लोमानि यस्य स उडुलोमा । " तारकाप्युडु वा स्त्रियाम् " इत्यमरः । उडुलोम्नोऽपत्यं नो वेति टिलोपः । औडुलोमिः बहुत्वे त्व-स्मादणेव । णितो वेत्यणित्वान्न वृद्धिः । उडुलोमाः । गर्गस्यापत्यं गार्गिः । विद-स्यापत्यं बैदिः । नडस्यापत्यं नाडिः । कुंजस्यापत्यं कौंजिः। बह्वादिर्यथा । विद-उर्व-कश्यप-कुशिक-भारद्वाज-उपमन्यु-विश्वानर-परस्त्री-परसुंच इत्यादि ॥

तत्त्व०–बह्वादेश्चेति । इञ इति द्वितीययोगविभागादनकारांतादपीञ् सिध्यतीति भावः । तेन सात्रर्णि-रित्यादिसिद्धिः । अकट चेति । ङित्वादतस्यायमादेशः ॥

**सुधातृव्यासवरुडनिषादचण्डालबिम्बानामकङ् च ॥ ६२४ ॥** सुधातुरपत्यं सौधातकिः । वैयासकिः । वारुडकिः । नैषादकिः । चाण्डालकिः । बैम्बकिः ॥

सुबो०–सुधातृव्यासवरुडनिषादचंडालबिंबानामकङ् च । एषामकङादेशः स्यात् इञ्प्रत्ययश्चापत्येऽर्थे । ङित्वादंत्यस्य स्थानेऽकङ् । सुधातुरपत्यं सौधातकिः। वेदान् व्यसतीति वेदव्यासः । कार्येऽणित्यण् । भीमो भीमसेन इतिवदेकदेशस्य ग्रहणम् । व्यासस्यापत्यमिति न संधिध्वोर्युङ् चेति वक्ष्यमाणेनैङागमः ततो वृद्धि-वैयासकिः । वरुडस्यापत्यं वारुडकिः वरुडादयो जातिविशेषाः । निषादस्यापत्यं नैषादकिः । चंडालस्यापत्यं चांडालकिः । बिंबस्यापत्यं बैंबकिः ॥

तत्त्व०–सौधातकिरिति । सुधातुरपत्यमिति विग्रहः ॥

**ण्यायनणेयणीया गर्गनडात्रिस्त्रीपितृष्वस्रादेः ॥ ६२८ ॥** गर्गादेर्ण्यो नडादेरायनण् अत्र्यादेः स्त्रीप्रत्ययान्ताच्च ण्यण् पितृष्वस्रादेर्णीयोऽपत्येऽर्थे ॥ गार्ग्यः । वात्स्यः । कात्यः । वातंड्यः । आवट्यः । माण्डूक्यः । पौतिमाष्यः । नाडायनः । चारायणः । गार्ग्यायणः । वात्स्यायनः । आमुष्यायणः । आत्रेयः । कापेयः । नैधेयः । गाङ्गेयः । गौधेयः । नाटेयः ॥

सुबो०—ण्यायनणेयणीया गर्गनडात्रिस्त्रीपितृष्वस्रादेः । ण्यश्च आयनण् च णीयश्च ते ण्यायनणेयणीयाः । गर्गश्च नडश्च अत्रिस्त्रियौ च पितृष्वसा च एषां समाहारो गर्गनडात्रिस्त्रीपितृष्वसृ गर्गनडात्रिस्त्रीपितृष्वसृ आदिर्यस्य स गर्गनडात्रिस्त्रीपितृष्वस्रादिस्तस्मात् । द्वंद्वान्ते श्रूयमाण आदिशब्दः प्रत्येकं संबध्यते । स्त्रीशब्देन स्त्रीप्रत्ययस्य ग्रहणान्नादिशब्दप्रयोगः । इह स्वरूपग्रहणं अत्र्यादिषु तस्य तु नेष्टं सुग्रहात् । यथा क्रमेण गर्गादिभ्यो ण्योऽपत्येऽर्थे । नडादेरायनणपत्येऽर्थे । अत्र्यादेः स्त्रीप्रत्ययांताच्च ण्यण् अपत्येऽर्थे । पितृष्वस्रादेर्णीयोऽपत्येऽर्थे । इह आयनणेयणोरणंतत्वादीप् । अंतणकारपाठसामर्थ्यादर्थवद्ग्रहणपरिभाषाया अनित्यत्वात् । अन्यथा ण्यणीयवत् णायनेणेयावित्येव ब्रूयादिति । गर्गादिर्यथा । गर्ग-वत्स-व्याघ्रपाद-पुलस्ति-बभ्रु-मंडु-वतंडक-शकल-कण्व-अगस्त्य-कुंडिनी-याज्ञवल्क्य-पराशर-जमदग्नि इत्यादि । नडादिर्यथा । कुंज अश्व शंख शकट इत्यादि । अत्र्यादिर्यथा । अत्रि शुभ्र मृकंड अश्वादि-नाट विधवा गोधा प्रवाहण पांडु इत्यादि । गर्गादिशब्दास्तदपत्ये लाक्षणिकाः। साक्षादपत्ये इञेव अनन्तरापत्ये गार्गिरित्युक्तत्वात् । गर्गस्यापत्यमितीञोऽर्थः गार्गेरपत्यं गार्ग्यः । वत्सस्यापत्यं वात्स्यः । कतस्यापत्यं कात्यः । वतंडस्यापत्यं वातंड्यः । अवटस्यापत्यमावट्यः । मण्डूकस्यापत्यं मांडूक्यः । पूतिमाषस्यापत्यं पौतिमाष्यः । स्त्रियां तु नदादित्वादीप् । हसात्तद्धितयस्येपीति यलोपः । गार्गी । वात्सी । नदादित्वात् स्त्रियामायनणि गार्ग्यायणी । कात्यायनी । वातंडी । वातंड्यायनी । मांडूक्यायनी । अजादित्वादाऽऽप्रत्यये । आवट्या । पौतिमाष्या । नडस्यापत्यमिति ञोऽर्थः । नाडेरपत्यं नाडायनः । चरस्यापत्यं चारायणः । ण्यंतानामिञंतानां च नडादित्वं बोध्यम् । गार्ग्यस्यापत्यं गार्ग्यायणः । वात्स्यस्यापत्यं वात्स्यायनः । दाक्षेरपत्यं दाक्षायणः । अमुष्यापत्यमामुष्यायणः षष्ठ्या अलुगत्र । अत्रेरपत्यमात्रेयः । कपेरपत्यं कापेयः ॥

तत्त्व०—ण्यायनणेयणीया इति । ण्यश्च आयनण् च एयण् च णीयश्च ते । गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च एतेषां समाहारस्तदादिर्यस्य स तथा तस्मात् । द्वंद्वात्परे आदिशब्दः प्रत्येकमभिसंबध्यते । स्त्रीशब्देन स्त्रीप्रत्ययग्रहणान्नादिशब्दप्रयोगः । अत्र नव्याः । आदिशब्दोऽत्र प्रकारवाची न तु व्यवस्थार्थः ।

एतदादिगणस्यात्रादर्शनादित्याहुः । तन्मते गर्गादेर्गणाण्ण्य इत्यादि वासुदेवोक्तिः प्रत्युक्ता । गर्गादिशब्दाश्च तदपत्ये लाक्षणिकाः । तेन गर्गस्यापत्य गर्ग्यम् । गार्ग्य इत्यत्र गार्गेरपत्यमित्यर्थो बोध्यः । साक्षादपत्ये तु गार्गिरित्येवेति ॥

**कल्याण्यादेरिनङ् च ॥ ६२६ ॥ काल्याणिनेयः । कौलटिनेयः ॥**

सुबो०—कल्याण्यादेरिनङ् च । एषामिनङादेशः । स्त्रीप्रत्ययांतत्वादेयण्प्रत्ययः । कल्याणी । सुभगा दुर्भगा बंधकी परस्त्री कुलटा इत्यादि । कल्याण्या अपत्यं ङित्वादंत्यस्थाने इनङ् आदिस्वरवृद्धिः यस्येत्यलोपः । काल्याणिनेयः । कुलान्यटति भिक्षार्थं हलादेरीषादाविति टेर्लोपः सा कुलटा । सती भिक्षुक्यत्रेनङ्विधौ गृह्यते । या तु व्यभिचारार्थे कुलान्यटति तस्य एरण्प्रत्यये कौलटेरः । एयणि तु कौलटेयः । सतीपक्षे तु इनङ् वा भवति । कौलटिनेयः, कौलटेयः । " अथ बांधकिनेयः स्याद्बंधुलश्चासतीसुतः । कौलटेरः कौलटेयो भिक्षुकी तु सती यदि ॥ तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः । " इत्यमरः । सुभगाया अपत्यमिति क्वचिद्द्वयोरिति वक्ष्यमाणेनोभयत्र वृद्धिः इनङ् । सौभागिनेयः ॥

तत्व०—इनङ् चेति । ङित्वादंत्यादेशः । काल्याणिनेय इति कल्याण्या अपत्यमिति विग्रह. ॥

**गोधादेरारणेरणौ ॥ ६२७ ॥ गौधारः । नाटारः । पाण्डारः । गौधेरः । नाटेरः । पाण्डेरः । पैतृष्वस्रीयः ॥**

सुबो०—गोधादेरारणेरणौ । गोधादेरारणेरणौ प्रत्ययौ स्तः अपत्येऽर्थे । गोधाया अपत्यं गौधारः । नट्या अपत्यं नाटारः । यस्येति लोपः । पंडोः नपुंसकस्तस्यापत्यं पांडारः । एरणि तु गौधेरः । नाटेरः । पितृष्वस्रादेर्णीयः । पितृस्वसेति मातृपितृभ्यां स्वसुरिति षत्वम् । पितृष्वसुरपत्यं पैतृष्वस्रीयः । मातृष्वसुरपत्यं मातृष्वस्रीयः ॥

तत्व०—गौधार इति । गोधाया अपत्यमिति विग्रहः । पांडार इति । पांडस्यापत्यमिति विग्रहः ॥

**पितृष्वस्रादेरेयणि टिलोपः ॥ ६२८ ॥ पैतृष्वसेयः । मातृष्वसेयः ॥**

सुबो०—पितृष्वस्रादेरेयणि टिलोपः । पितृष्वस्रादेष्टेर्लोपः स्यादेयणि । अन्यादित्वादेयण् । पैतृष्वसेयः ॥

तत्व०—पैतृष्वसेय इति । पितृष्वसुरपत्यमिति विग्रहः । पितृष्वस्रादेरित्यत्र कृतषत्वनिर्देशात्समासे क्वचित्पूर्वपदादुत्तरपदस्थस्य सस्य षः । तेन ज्योतिष्टोम इत्यादौ षत्वम् ॥

**पांडोर्ड्यण् ॥ ६२९ ॥ पाण्ड्यः ॥**

सुबो०—पांडोर्ड्यण् । पाण्डुशब्दात् ड्यण् स्यादपत्येऽर्थे । णित्करणं पांड्या भार्या इत्यत्र वृद्धिहेतोस्तद्धितस्यारक्तविकारार्थस्येति पुंवद्भावप्रतिषेधार्थम् । पांडोरपत्यं पाड्यः ॥

**चटकादेरैरण् ॥ ६३० ॥ चटकस्यापत्यं चाटकैरः ॥**

सुबो०–चटकादैरण् । चटकाशब्दादैरण् स्यादपत्येऽर्थे । प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणमिति परिभाषया स्त्रिया अपि । चटकस्य चटकाया वाऽपत्यं चाटकैरः ॥

तत्त्व०–चाटकैर इति । चटकस्य चटकाया वापत्यमिति विग्रहः ॥

**स्त्र्यपत्ये लुक् ॥ ६३१ ॥ चटका ॥**

सुबो०–स्त्र्यपत्ये लुक् । चटकादैरणो लुक् स्यात् स्त्र्यपत्ये । चटका । अजादित्वादाप् ॥

तत्त्व०–चटकेति । चटकस्य चटकाया वापत्यं स्त्रीति विग्रहः ॥

**लुग्बहुत्वे क्वचित् ॥ ६३२ ॥ प्रत्ययस्य ॥ गर्गाः । वसिष्ठाः । भृगवः । अंगिरसः । वत्साः । कुत्साः । गोतमाः । अत्रयः । विदाः । अङ्गाः । वङ्गाः । कलिंगाः । विदेहाः ॥**

सुबो०–लुग्बहुत्वे क्वचित् । क्वचिदपत्यप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे । ण्यस्य लुक् । गर्गाः । वत्साः । तत्कृते इति किम् । प्रियो गार्ग्यो येषां ते प्रियगार्ग्याः । स्त्रियां तु न । गार्ग्यः स्त्रियः । अणो लुक् । वसिष्ठाः । भृगवः । अंगिरसः । कुत्साः । गोतमाः । विदाः । उर्वाः । ण्यणो लुक् । अत्रयः । जनपदक्षत्रियवाचिनोऽपत्यप्रत्ययस्य लुक् स्यात् । बहुत्वे अणो लुक् । अङ्गाः । वङ्गाः । कलिङ्गाः । विदेहाः । तद्राजन्यर्थेष्वपत्यप्रत्यया भवंति । इक्ष्वाकूणां राजेति निपातनाट्टिलोपः । ऐक्ष्वाकः । पंचालानां राजा पांचालः । बहुत्वे लुक् । इक्ष्वाकवः । पंचाला इत्यादि । एवमंगानां राजा आंग इत्याद्यपि बोध्यम् ॥

तत्त्व०–लुग्बहुत्वे क्वचिदिति । क्वचिद्ग्रहणाद्ग्रन्थान्तरोक्तलक्ष्यानुसारेण लुग्भवतीति बोध्यम् । ग्रन्थगौरवभयान्न तत्सर्वमुदाहृतम् ॥

**स्त्रियामवन्तिकुंतिकुरुशूरसेनादिभ्योऽबहुत्वेऽपि ॥ ६३३ ॥ अवन्ती । कुन्ती । कुरूः । शूरसेनी ॥**

सुबो०–स्त्रियामवंतिकुन्तिकुरुशूरसेनादिभ्योऽबहुत्वेऽपि । एभ्योऽपत्यार्थप्रत्ययस्य लुक् स्यात् स्त्रीप्रत्यये । अवंतेरपत्यं स्त्री अवंती । कुंतेरपत्यं कौंतेयः । स्त्री कुन्ती । इतो मनुष्यजातेरितीप् । कुरोरपत्यं कौरव्यः । स्त्री कुरूः । उत ऊरित्यूप्रत्ययः । शूरसेनस्यापत्यं शौरसेनः । स्त्री शूरसेनी । मद्रस्यापत्यं माद्रः । स्त्री माद्री । जातित्वादीप् ॥

तत्त्व०–अवन्तीति । अवन्तेरपत्यमिति विग्रहः । पुमांस्त्वावंत्यः । कुंतीति । कुंतेरपत्यमिति विग्रहः । कुरूरिति । कुरोरपत्यं पुमांस्तु कौरव्यः । उत ऊरित्यूः । शूरसेनस्यापत्य शूरसेनी । पुमान् शौरसेनः ॥

**देवतेदमर्थे ॥ ६३४ ॥ देवतार्थे इदमर्थे चोक्ता वक्ष्यमाणाश्च प्र-**

**त्ययाः ॥ इंद्रो देवतास्य ऐन्द्रम् । सौम्यम् । आग्नेयम् । गृहमेधीयम् । वास्तोष्पतीयम् । अग्नीपोमीयम् । मरुत्वतीयम् ॥**

सुबो०—देवतेदमर्थे । देवता च इदं च अनयोः समाहारो देवतेदं देवतेदं चासौ अर्थश्च देवतेदमर्थस्तस्मिन् देवतेदमर्थे । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता । द्वंद्वांते श्रूयमाणत्वात्प्रत्येकमर्थशब्दः संबध्यते । देवतार्थे इदमर्थे च उक्ता वक्ष्यमाणाश्च प्रत्ययाः स्युः । अण् इञ् ण्यः । आयनण् ण्यणणीय आरण् रारण् ञ्यण् ऐरण् एते उक्तप्रत्ययाः । इन्द्रो देवता अस्येति ऐंद्रं हविः । अत्र प्रथमांतात्प्रत्ययो देवतास्येति षष्ठ्यर्थे । अन्योक्ते प्रथमेति तद्धितेनोक्ते संबंधे प्रथमा । स्त्रियां तु त्रण ईप् । ऐंद्री दिक् । सोमो देवताऽस्येति सौम्यम् । ण्यः। नदादित्वादीप् । सौमी ऋक् । हसात्तद्धितयस्येपीति यलोपः । अग्निर्देवताऽस्येति आग्नेयम् । ण्यण् । अणंतत्वादीप् । आग्नेयी । गृहमेधशब्दोऽदंतः । गृहमेधो देवताऽस्येति गृहमेधीयम् । गृहमेध्यम् । वास्तोष्पतिर्देवताऽस्येति वास्तोष्पतीयम् । वास्तोष्पत्यम् । "वास्तोष्पतिः सुरपतिः" इत्यमरः। वास्तोः पतिः वास्तोष्पतिः । "वेश्मभूर्वास्तुरस्त्रियाम्" इत्यमरः । अग्नीषोमौ देवते अस्येति अग्नीपोमीयं, अग्नीपोम्यम् । मरुत्वान् देवताऽस्येति मरुत्वतीयम् । मरुत्वत्यम् । " इन्द्रो मरुत्वान्मघवा " इत्यमरः ॥

तत्त्व०—देवतेदमर्थे इति । देवता च इद चानयोः समाहारः देवतेदम् । स चासावर्थश्च देवतेदमर्थस्तस्मिन् । द्वंद्वांते श्रूयमाणत्वादर्थशब्दस्य प्रत्येक योग इत्याशयेनाह । देवतार्थेत्यादि । इन्द्रो देवतास्येति । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मंत्रस्तुत्या च । ननु देवतास्यापि इदमर्थत्वाद्देवताग्रहणं व्यर्थमिति चेरसत्यम् । इदमर्थे इन्द्रसंबंधि हविरिति बोधः । देवतार्थे तु इन्द्रदेवतोद्देश्यक हविरिति विशेषबोधार्थं पृथक् ॥

**अपोनपादपान्नपातोरपोनप्तृअपान्नप्तृ आदेशौ ॥ ६३५ ॥ ईयेययोः परतः ॥ अपोनप्त्रियम्, अपोनप्त्रीयम् । अपान्नप्त्रियम्, अपान्नप्त्रीयम् ॥**

सुबो०—अपोनपादपांनपातोरपोनप्तृअपान्नप्तृ आदेशौ । ईयेययोः एतयोः परतः अपोनप्तृ अपांनप्तृ आदेशौ स्तः। अपोनपाद्देवताऽस्येति । अपान्नपात् देवताऽस्येति ॥

तत्त्व०—अपोनपादपान्नपातोरिति । अत्रादेशो यथासंख्य न तु प्रत्यये व्याख्यानात् ॥

**प्रावृष एण्यः ॥ ६३६ ॥ प्रावृट् देवताऽस्य प्रावृषेण्यम् । कः प्रजापतिर्देवताऽस्य कायम् ॥**

सुबो०—प्रावृष एण्यः । अस्मादेण्यप्रत्ययः स्यात् देवतार्थे । प्रवर्षतीति प्रावृट् । नहिवृतीति दीर्घः । जातेऽर्थे तु इक् । प्रावृषि जातः प्रावृषिकः । प्रावृषेण्यः । " स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियाम् । " इत्यमरः । कस्येकारां-

तादेशोऽणि । को ब्रह्मा देवताऽस्येति यस्येति लोपात्परत्वादादिवृद्धिः । आयू । कायं हविः ॥

तत्त्व०–कायमिति । अत्र यस्य लोपं बाधित्वा परत्वाद्वृद्धिः ॥

क्वचिद्द्वयोः ॥ ६३७ ॥ पूर्वोत्तरपदाद्योः स्वरयोः क्वचिद्वृद्धिर्भवति ञ्णिति ॥ आग्निमारुतम् ॥

सुबो०–क्वचिद्द्वयोः । द्वयोरिति षष्ठ्यंतं पदविशेषणम् । अग्नामरुतौ देवते अस्येति अग्नेरिदिति वक्ष्यमाणेनेकारादेशः। उभयत्र वृद्धिः। आग्निमारुतम् । अण् । स्वाभ्यर्थवाचकदेवताद्वंद्वे एव पूर्वोत्तरपदादिस्वरवृद्धिविषयकमुदाहरणमेतत् । तेनेह न । स्कंदविशाखयोरयामिति स्कांदविशाखः । अण् । " पार्वतीनंदनः स्कंदः " इत्यमरः । नेंद्रस्य परस्य उभयत्र प्राप्तौ परस्येंद्रशब्दस्य वृद्धिर्न भवति देवताद्वंद्वे । सोमेन्द्रौ देवते अस्येति सोमेंद्रः पशुः । अण् । परस्येति किम् । इंद्राग्नी देवते अस्येति ऐंद्राग्नः । अण् यस्येतीकारलोपः । दीर्घात्परस्य वरुणस्य वृद्धिर्न भवति देवताद्वंद्वे । इन्द्रावरुणौ देवते अस्येति देवताद्वंद्वे पूर्वस्येत्यात्वम् । ऐंद्रावरुणम् । मित्रावरुणौ देवते अस्येति मैत्रावरुणम् । अण् । दीर्घात्किम् । अग्नीवरुणौ देवते अस्येति । ईदग्नेः सोमवरुणयोरितीत्वम् ॥

तत्त्व०–क्वचिद्द्वयोरिति । अत्रादिस्वरस्येति संपूर्णसूत्रमनुवर्त्तते । द्वयोरिति षष्ठ्यंतं पदविशेषणम् । यद्यपि समासेनैकपद्यं तथाप्यतर्वर्तिन्या विभक्त्या पदद्वयत्व बोध्यम् । एदोतोत इति ज्ञापितमुत्तरस्यापदत्वं तु ज्ञापकसिद्ध न सर्वत्रेति वचनान्नेहाश्रयणीयम् । आग्निमारुतमिति । अग्नीमरुतौ देवते अस्येति विग्रहः ॥

अग्नेरिद्वृद्धौ ॥ ६३८ ॥ वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्यात् ॥ आग्निवारुणम् । सौहार्दम् । सौभागिनेयः । सौभाग्यम् । साक्तुसैन्धवः। आनुशातिकम् । ऐहलौकिकम् । पारलौकिकम् । पौर्वाह्णिकम् ॥

सुबो०–अग्नेरिद्वृद्धौ । अग्निशब्दस्येत्स्यात् वृद्धिमत्युत्तरपदे देवताद्वंद्वे । अलौकिके वाक्ये आत्वमत्वं च बाधित्वा इत् । विष्णौ परे इत्वं न । विष्णुशब्दे परेऽग्निशब्दस्येन्न । आग्नावैष्णवम् । प्रत्ययः । आग्निवारुणम् । उभयत्र वृद्धिः। सुहृदो भावः सौहार्दम् । अण् । सुभगाया अपत्यं सौभागिनेयः। ण्यणि न ङौ वृद्धी । सुभगस्य भावः सौभाग्यम् । ण्यः। सक्तुप्रधानाः सिंधवः सक्तुसिंधवः सक्तुसिंधुषु भवः साक्तुसैंधवः। अण्वृद्धी । शतेन क्रीतः शातिकः शातिकमनुगतो अनुशातिकः अनुशातिकस्येदं आनुशातिकम्। अण्वृद्धी । इह लोके भवं ऐहलौकिकम् । इकः। परलोके भवं पारलौकिकम् ॥

तत्त्व०–अग्नेरिदिति । वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्यादित्यर्थः । सौहार्दमिति । सुहृदो भावः । सौभागिनेय इति । सुभगाया अपत्यमित्यर्थः । साक्तुसैंधव इति । सक्तुप्रधानाः सिंधवः सक्तुसिंधवस्तेषु भवः । शतेन क्रीतः शातिकः तमनुगतोऽनुशातिकस्तस्येदमानुशातिकम् ॥

**णितो वा ॥ ६३९ ॥** उक्ता वक्ष्यमाणाश्च प्रत्यया णितो वा ॥ स्वस्रीयः । श्वशुरस्यापत्यं श्वाशुर्यः । पित्र्यम् । गव्यम् । पयस्यम् । कुल्यम् । तदीयम् । त्वदीयम् । मदीयम् ॥

सुबो०–णितो वा । अणादयः कादयश्च णितो वा भवन्ति । अणादीनां णित्वे सिद्धे पक्षे निषेधार्थं वचनम् । कादीनामणित्वे सिद्धे पक्षे विधानार्थम् । स च क्वचिन्नित्यनिषेधः । क्वचिद्वैकल्पिकः । क्वचिदनिषेध एव । स्वसुरपत्यं स्वस्रीयः। णीयः । श्वशुरस्यापत्यं यस्येत्यलोपः । श्वाशुर्यः । पितुरिदमिति क्वचित्स्वरवद्यकार इति स्वरत्वात् रत्वम् । पित्र्यम् । ण्यः । गोरिदं गव्यम् । ण्यः। स्वरत्वादव् । पयसि भवं पयस्यम् । कुले भवं कुल्यम् । ण्यः । तस्येदं तदीयम् । तवेदं ममेदं त्वन्मदेकत्वे इति त्वद् मद् । त्वदीयम् । मदीयम् ॥

तत्त्व०–णितो वेति । अत्र वेत्यस्य व्यवस्थितत्वात् । क्वचिदणितोऽपि णित्त्वं क्वचित् णितोऽप्यणित्त्वं क्वचिद्विकल्प इति बोध्यम् । णितो बहुत्वाण्णित इत्युक्तिर्ब्राह्मणग्राम इतिवत् । तेन णितोऽपि अनित्यविकारो बोध्यः । पित्र्यमिति पितुरिदमिति विग्रहे क्वचित्स्वरवद्य इति स्वरत्वाद्रत्वम् । एवं गव्यमित्यपि ॥

**अन्यस्य दुक् ॥ ६४० ॥** अन्यदीयम् ॥

सुबो०–अन्यस्य दुक् । अन्यशब्दस्य दगागमो भवति णीये । अषष्ठीतृतीयांतस्यान्यशब्दस्य दगागमो वाच्यः। आशीराशास्थाऽऽस्थितोत्सुकोतिकारकरागणीयेषु परतः । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यत्कारकः । अन्यद्रागः । अषष्ठीतृतीयांतस्येति किम् । अन्यस्यान्येन वा आशीः अन्याशीः । कारकणीययोरषष्ठीतृतीयांतस्येति निषेधो न वाच्यः अर्थे परे अन्यस्य वा दुक् । अन्यदर्थः अन्यार्थः । अन्यदीयम् ॥

**पितुर्भ्रातरि व्यः ॥ ६४१ ॥** पितुर्भ्राता पितृव्यः ॥

सुबो०–पितुर्भ्रातरि व्यः । पितृशब्दाद्व्यप्रत्ययो भवति भ्रात्रर्थे ॥

**मातुर्भ्रातरि डुलः ॥ ६४२ ॥** मातुलः ॥

सुबो०–मातुर्भ्रातरि डुलः । मातृशब्दात् डुलप्रत्ययो भवति भ्रात्रर्थे । डित्वाट्टिलोपः ॥

**मातृपितृभ्यां पितरि मातरि च डामहष् ॥ ६४३ ॥** मातुः पिता मातामहः । पितामहः । मातुर्माता मातामही । पितामही ॥

सुबो०–मातृपितृभ्यां पितरि मातरि च डामहष् । आभ्यां डामहष्प्रत्ययः स्यात् पित्रर्थे मात्रर्थे च । डित्वाट्टिलोपः । षित्वात्स्त्रियां ङ्गित इतीप् ॥

तत्त्व०–मातृपितृभ्यामिति । षित्वादीप् ॥

**अवेर्दुग्धे सोढदूसमरीसाः ॥ ६४४ ॥** अवेर्दुग्धं अविसोढम् । अविदूसम् । अविमरीसम् ॥

सुबो०-अवेर्दुग्धे सोढदूसमरीसाः । अविशब्दादेते प्रत्यया भवंति दुग्धेऽर्थे । सकारपाठसामर्थ्यान्न षः । अविसोढमिति ॥

**तिलान्निष्फलात्पिञ्जपेजौ ॥ ६४५ ॥** निष्फलस्तिलस्तिलपिञ्जः । तिलपेजः ॥

सुबो०-तिलान्निष्फलात्पिञ्जपेजौ । तिलशब्दादेतौ प्रत्ययौ स्तः निष्फलेऽर्थे । तिलपिंजः । तिलपेजः । वंध्यस्तिल इत्यर्थः ॥

**कारकात् क्रियायुक्ते ॥ ६४६ ॥** कारकादप्येते प्रत्ययाः क्रियायुक्ते कर्तरि कर्मणि च ॥ कुंकुमेन रक्तं कौंकुमम् । वस्त्रेण परिवृतो वास्त्रो रथः । काम्बलः । द्वैपः । वैयाघ्रः ॥

सुबो०-कारकात् क्रियायुक्ते । कारकादणादयः कादयश्च प्रत्ययाः स्युः । " कर्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणे इत्याहुः कारकाणि षट् ॥ " इत्यत्र कारकशब्दः सर्वस्मिन्नपि क्रियासाधने दृष्टः । स्वार्थिकः कारकः संगीत्यत्र तु कर्तृमात्रे दृष्टस्तस्य कस्मान्न ग्रहणम् । उच्यते । अत्राद्यस्यैव ग्रहः । अन्यथा कर्तुरित्येवावक्ष्यत् । अथ का क्रिया किं च तदुक्तं उच्यते । व्यापारो भावना सवोत्पादना सैव च क्रियेति । उक्तं च । " गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पितो भेदः क्रियेति व्यपदिश्यते ॥ " इति स्वभावतो गुणीभूतैरवयवैरवांतरलक्षणैर्युक्तः क्रमजन्मनां क्षणानां समूहः आचार्यैः क्रिया व्यपदिश्यते । कीदृशः संकलनात्मिकया बुद्ध्याऽभेद एकत्वं प्रकल्पितः तद्युक्तमेतया क्रियया युक्तं क्रिया चोत्पत्त्युत्पादनारूपा उत्पत्तिः फलम् । उत्पादना व्यापारः । व्यापारेण युक्तः कर्ता । फलेन युक्तं कर्म । तस्मिन् क्रियायुक्ते कर्तरि कर्मणि च । तेन रक्तं रागात् । रज्यते अनेनेति बाहुलकात् करणे घञ् । रागो रंजकद्रव्यम् । तृतीयांताद्रागवाचकात्प्रत्ययो रक्तमित्यर्थे । कुंकुमेन रक्तं वस्त्रं कौंकुमम् । रंजनाक्रियायाः करणकारकात् कुंकुमादण् तद्युक्तमत्र वस्त्रं कर्मेत्यादि ज्ञेयम् । लाक्षया रक्तं लाक्षिकम् । रोचनया रक्तं रौचनिकम् । इकः । नील्या रक्तं नीलम् । अण् । णितो वेति न वृद्धिः । पीतेन रक्तं पीतकम् । कः । तेन परिवृतो रथः । समन्ताद्वेष्टितः परिवृत उच्यते । तेनेति तृतीयांतादणादयः परिवृतो रथ इत्यर्थे । वास्त्रो रथः । अण् । कंबलेन परिवृतो रथः कांबलः । अण् । द्वीपिनो विकारो द्वैपं द्वैपेन परिवृतो रथः द्वैपः । व्याघ्रस्य विकारो वैयाघ्रम् । इद्वृद्धी । वैयाघ्रेण परिवृतो वैयाघ्रो रथः ॥

तत्त्व०–कारकात्क्रियायुक्ते । कारकशब्दो यद्यपि द्व्यर्थः कर्तृपरः सर्वकारकपरश्च तथाप्यत्र सर्वकारकार्थ एव गृह्यते । अन्यथा कर्तुरित्येवावक्ष्यत । क्रिया च धात्वर्थः। स च फलव्यापारात्मकः फलव्यापारयोर्धातुरित्युक्तत्वात् । ततश्च फलयुक्तं कर्म व्यापारयुक्तः कर्तेत्याशयेनाह । क्रियायुक्ते कर्तरीत्यादि । कुंकुमेन रक्तमिति । रंजनक्रियायाः करणकारकात् कुंकुमादण् तद्युक्तमत्र वस्त्रं कर्मेति । माथुर इत्यत्रागमनक्रियायाः अपादानकारकान्मथुराशब्दादण् तद्युक्तोऽत्र कर्तेत्यादिकमूह्यम् । कारकादिति किम् । फलानां सुहितः । क्रियायुक्ते किम् । काष्ठैः पाकः । नात्र पाकादिक्रियायुक्तः किं तु क्रियैव । क्रियेति किम् । गेहे घटः । अत्र घटत्वयुक्तो घटः । न क्रियायुक्तः क्रियायामित्युक्ते शब्दं करोति शाब्दिक इत्यादौ प्राधान्येन क्रियाया एव मानं स्यान्नतु कर्तुः । यदि कर्तृकार्यग्रहणं मण्डूकप्लुत्यानुवर्तते तदा कारकादित्येवास्तु ॥

**पाण्डुकम्बलादिनिः ॥ ६४७ ॥** पाण्डुकम्बलेन संवीतः पाण्डुकम्बली रथः । वसिष्ठेन दृष्टं वासिष्ठं साम । कालेयम् । वररुचिना कृतो वाररुचो ग्रन्थः । मनुना प्रोक्तो मानवो धर्मः । मथुराया आगतो माथुरः । ग्रामादागतो ग्राम्यः । धुरं वहतीति धुर्यः, धौरेयः । सर्वधुरीणः । एकधुरीणः ॥

सुबो०–पांडुकम्बलादिनिः । पांडुकंबलशब्दो राजास्तरणपांडुवर्णकंबलस्य वाचकः । अस्त्यर्थेनैव सिद्धे वचनमणो निवृत्त्यर्थम् । इकार उच्चारणार्थः । तेन दृष्टं साम । तेनेति तृतीयांतादणादयः दृष्टं सामेत्यर्थे । वासिष्ठं साम । अण् । कलिना दृष्टं साम कालेयम् । एयण् । वामदेवेन दृष्टं साम वामदेव्यम् । ण्यः । उशनसा दृष्टं साम निपातनाट्टिलोपो वा । औशनसम्, औशनम् । अण् । तेन कृतो ग्रन्थः । तेनेति तृतीयांतादणादयः कृतो ग्रंथः इत्यर्थे । वररुचिना कृतो वाररुचो ग्रंथः । तेन प्रोक्तम् । तेनेति तृतीयांतादणादयः प्रोक्तमित्यर्थे । मनुना प्रोक्तो मानवो धर्मः । अण् । तत आगतः। तत इति पञ्चम्यंतादणादयः आगत इत्यर्थे । माथुरः। अण् । ग्रामण्यः तद्वहति । तदिति द्वितीयांतादणादयो वहतीत्यर्थे । धुरं वहति धुर्यः। ण्यः। णितो वेति न वृद्धिः। र्वोर्विहसे इति दीर्घो न । संज्ञापूर्वकत्वेन तस्यानित्यत्वात् । धौरेयः । एयण् । सर्वा चासौ धूश्चेति ऋक्पूरित्यप्रत्ययः । कर्मधारये इति पुंवत् । सर्वधुरा तां वहति यस्येत्यालोपः । सर्वधुरीणः । ईनः । एका चासौ धूश्चेति एकधुरा तां वहति एकधुरीणः । ईनः । एकधुरः । अण् । शकटं वहति शाकटो गौः । अण् । हलं वहति हालिकः। इकः । सीरं वहति सैरिकः। इकः । रथं वहति रथ्यः । ण्यः । युगं वहति युग्यः । ण्यः ॥

तत्त्व०–धुर्य इति । संज्ञापूर्वकविधेरनित्यत्वात्क्वचिन्न दीर्घः। एकधुरीण इति । णित्त्वविकल्पान्न वृद्धिः ॥

**मुखपार्श्वतसोर्लोप ईये ॥ ६४८ ॥** मुखतो भवं मुखतीयम् । पार्श्वतीयम् ॥

सुबो०-मुखपार्श्वतसोर्लोप ईये। मुखं च पार्श्वं च मुखपार्श्वे मुखपार्श्वयोस्तसौ मुखपार्श्वतसौ तयोः षष्ठीनिर्दिष्टत्वात्सलोपः। यस्येत्यलोपः। मुखतीयम्। पार्श्वतो भवं पार्श्वतीयम्। णीयः॥

तत्त्व०-मुखपार्श्वेति। द्वंद्वांते श्रूयमाणत्वात्तसः प्रत्येकं योग०। मुखतीयमिति षष्ठीनिर्दिष्टस्येति सकारलोपे यस्य लोपे च रूपसिद्धिः॥

**देवस्वराजजनपराणां कुक् ईये॥ ६४९॥** देवकीयम्। स्वकीयम्। राजकीयम्। जनकीयम्। परकीयम्॥

सुबो०-देवस्वराजजनपराणां कुक् ईये। एषां कुक् स्यात् ईये। देवस्येदं देवकीयम्। स्वस्येदं स्वकीयम्। राज्ञ इदं राजकीयम्। नाम्नो नो लोपशिति नलोपे कृते पश्चात् कुक् बोध्यः। जनस्येदं जनकीयम्। परस्येदं परकीयम्॥

तत्त्व०-देवस्वेति। देवकीयमिति देवस्येदमिति वाक्यम्। राजकीयमिति। अत्र नलोपे यत्नः नाम्नो नो लोपशित्यस्य नान्तस्य नाम्न इति व्याख्यानात्। प्रकृते कुको राजान्त्यावयवत्वान्नांतताभावात्। अतो नो वेत्यत्र वेत्यस्य व्यवस्थितत्वाश्रयणादत्र नलोपः॥

**मध्यान्मः॥ ६५०॥** मध्यमः॥

सुबो०-मध्यान्मः। अस्मान्मः प्रत्ययः स्यात् भवाद्यर्थे। मध्ये भवो मध्यमः॥

**हेमन्तस्य वा तलोपोऽणि॥ ६५१॥** हैमनम्, हैमन्तम्॥

सुबो०-हेमन्तस्य वा तलोपोऽणि। हेमन्तादण् स्यात् तस्य लोपश्च वा। हेमंते भवं हैमनं हैमन्तं च॥

तत्त्व०-हैमनमिति। हेमंते भवमिति विग्रहः। रिलोपस्तूक्तयुक्तेरेव न॥

**चिरपरुत्परारिभ्यस्त्नः॥६५२॥** चिरत्नम्। परुत्नम्। परारित्नम्॥

सुबो०-चिरपरुत्परारिभ्यस्त्नः एभ्यस्त्नप्रत्ययः स्यात्। चिरशब्दोऽदन्तः। परुदित्यव्ययम्। पूर्वस्मिन् वत्सरे परारि पूर्वतरे वत्सरेऽव्ययम्॥

**अग्रादिपश्चादन्ताड्डिमः॥ ६५३॥** अग्रिमम्। आदिमम्। पश्चिमम्। अन्तिमम्॥

सुबो०-अग्रादिपश्चादंतात् डिमः। एभ्यो डिमः प्रत्ययः स्यात्। डित्वाट्टिलोपः। अग्रे भवं अग्रिमम्। आदौ भवं आदिमम्। पश्चाद्भवं पश्चिमम्। अंते भवं अंतिमम्॥

तत्त्व०-पश्चिममिति। पश्चाद्भवम्। डित्वादादित्यस्य लोपः॥

**हेतुमनुष्येभ्यो वा रूप्यमयटौ॥६५४॥** समादागतं समरूप्यम्। सममयम्। समीयम्। देवदत्तमयम्। देवदत्तरूप्यम्। देवदत्तीयम्॥

सुबो०-हेतुमनुष्येभ्यो वा रूप्यमयटौ। हेतुवाचकेभ्यो मनुष्यवाचकेभ्यश्च रूप्यमयटौ वा स्तः। टो ईवर्थः। आगतमित्यर्थे समात् मार्गादागतं समरूप्यम्। स-

ममयम् । पक्षे णीयः । समीयम् । देवदत्तादागतं देवदत्तरूप्यम् । देवदत्तमयम् । देवदत्तीयम् । णीयः । दैवदत्तः । अण् ॥

तत्त्व०–हेतुमनुष्येभ्य इति । हेतुमनुष्यवाचिभ्य इत्यर्थः ॥

**छगलिनो णेयिनः ॥ ६५५ ॥ छगलिना प्रोक्तमधीते यः छागलेयिनः ॥**

सुबो०–छगलिनो णेयिनः । छगलिन्शब्दात् णेयिनः प्रत्ययः स्यात् प्रोक्तमधीते इत्यर्थे । छगलिना प्रोक्तं शास्त्रमधीयते पठंति ये ते छागलेयिनः । नो वेति टिलोपः ॥

तत्त्व०–छागलेयिन इति । णित्वाद्वृद्धिः ॥

**पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोर्णिनिः ॥ ६५६ ॥ पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः॥**

सुबो०–पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोर्णिनिः । आभ्यां णिनिः स्यात् । इकार उच्चारणार्थः । पाराशर्यो व्यासः । अनंतरापत्येऽपि उपचाराद्गर्गादिभ्यो ण्यः । यस्येत्यलोपे क्वचिद्यलोप इति वक्ष्यमाणेन यलोपः । पाराशरीणः । शिलालिना प्रोक्तं नटसूत्रमधीतं यैः ते शैलालिनः ॥

तत्त्व०–पाराशर्य्येति । भिक्षुसूत्रे वाच्ये पाराशर्यशब्दात् नटसूत्रे शिलालिशब्दादणि निरित्यर्थः । पाराशरीण इति । कन्यादित्वाद्यलोपः ॥

**कर्मन्दकृशाश्वादिनिः ॥ ६५७ ॥ उक्तविषये ॥ कर्मंदिनः । कृशाश्विनः ॥**

सुबो०–कर्मदकृशाश्वादिनिः । उक्तविषये आभ्यामिनिः स्यात् । कर्मंदेन प्रोक्तं भिक्षुकसूत्रमधीयते ये ते कर्मंदिनो भिक्षवः । कृशाश्वेन प्रोक्तं नटसूत्रमधीयते ये ते कृशाश्विनो नटाः । भिक्षुनटसूत्रयोः किम् । पाराशर्यस्येदं पाराशरम् । शिलालिन इदं शैलालम् । कार्मदम् । कार्शाश्वम् । अण् ॥

तत्त्व०–उक्तविषये इति । भिक्षुनटसूत्रयोरित्यर्थः ॥

**त्रपुजतुनोः षण् विकारे ॥ ६५८ ॥ त्रापुषम् । जातुषम् ॥**

सुबो०–त्रपुजतुनोः षण् विकारे । आभ्यां षण् स्याद्विकारे । त्रपुणो विकारः त्रापुषम् । जतुनो विकारः जातुषम् ॥

**शम्याः ष्लञ् ॥ ६५९ ॥ शामीली स्रुक् ॥**

सुबो०–शम्याः ष्लञ् । शमीशब्दात् ष्लञ् स्यात् । पित्वादीप् । शम्या विकारः शामीलं भस्म । ञ्रित इतीप् । शामीली ॥

तत्त्व०–शामीलीति । शम्या विकार इति विग्रहः । पित्वादीप् ॥

**शक्तियष्ट्योरीकण् प्रहरणे ॥ ६६० ॥ शाक्तीकः । याष्टीकः ॥**

सुबो०–शक्तियष्ट्योरीकण् प्रहरणे। आभ्यामीकण् स्यात्। शक्तिः प्रहरणमस्य शाक्तीकः। यष्टिः प्रहरणमस्य याष्टीकः॥

तत्त्व०–शाक्तीक इति। शक्तिः प्रहरणमस्येति विग्रहः॥

**विंशतित्रिंशद्भ्यां डककौ वा॥ ६६१॥ विंशकः॥**

सुबो०–विंशतित्रिंशद्भ्यां डककौ वा। तेन क्रीतमित्यर्थे आभ्यां डककौ प्रत्ययौ स्तः। असंज्ञायामर्थे डकः॥

**विंशतेस्तिलोपो डिति॥६६२॥ विंशकः। विंशतिकः। त्रिंशत्कः॥**

सुबो०–विंशतेस्तिलोपो डिति। तिशब्दलोपः। विंशकः। त्रिंशकः। संज्ञायां तु कः। विंशतिकः। त्रिंशत्कः॥

**कर्मण उकञ्॥ ६६३॥ कर्मणे प्रभवति कार्मुकम्॥**

सुबो०–कर्मण उकञ्। कर्मशब्दादुकञ् स्यात् तस्मै प्रभवतीत्यर्थे। समर्थः शक्तः प्रभवतीत्युच्यते॥

**मनोर्जातावपत्ये ष्यषणौ॥ ६६४॥ मनोरपत्यं मनुष्यः। मानुषः। जातौ किम्। मानवः॥**

सुबो०–मनोर्जातावपत्ये ष्यषणौ। मनुशब्दादेतौ स्तः अपत्यत्वे जातौ वाच्ये। समुदायार्थो जातिः। मनुष्यः। मानुषः। जातिशब्दावेतौ॥

**केनेयेकाः॥ ६६५॥ कारकात्क ईन ईय इक इत्येते प्रत्यया भवन्ति कर्त्तरि कर्मणि चोक्तवक्ष्यमाणेष्वर्थेषु च॥ णितो वा। क्रममधीते क्रमकः। पदकः। ग्रामादागतस्तत्र जातो वा ग्रामीणः। सध्रीचीनः। समीचीनः। तिरश्चीनः। कुलस्यापत्यं कुलीनः। महाकुलीनः। आढ्यकुलीनः॥**

सुबो०–केनेयेकाः। कश्च ईनश्च ईयश्च इकश्च ते केनेयेकाः। क्रममधीते क्रमकः। क्रमपदशिक्षामीमांसाः क्रमादयः। एभ्यः कः पूर्वस्य ह्रस्वो निपातनात्। शिक्षकः। मीमांसामधीते मीमांसकः। ग्रामे भवः ग्रामीणः। ईनः। ग्राम्येऽपि ण्यः। सध्र्यङेव सध्रीचीनः। सम्यङेव समीचीनः। तिर्यङेव तिरश्चीनः। सहांचतीति सध्र्यङ्। अचत्यंतान्नाम्नः स्वार्थे ईनो वा। दिशि न। प्राक् प्राचीनम्। प्रत्यक् प्रतीचीनम्। अवाक् अवाचीनम्। अर्वाक् अर्वाचीनम्। अर्वतं अंचतीति अर्वाक्। "निकृष्टप्रतिकृष्टार्वरेफयाप्याऽवमाऽधमाः।" इत्यमरः। दिशि तु प्राची दिक्। अचेर्दीर्घश्चेति अलोपपूर्वदीर्घः। उदीची दिक्। तिरश्चादय इति उदीचादेशः। कुलस्याप-

त्यमिति कुलीनः । तदंतादपि । महच्च तत्कुलं चेति सहादेः सादिरिति । महाकुलस्यापत्यं महाकुलीनः । आढ्यं च तत् कुलं च आढ्यकुलं आढ्यकुलस्यापत्यमाढ्यकुलीनः ॥

तत्त्व०—केनेयेका इति । कश्च ईनश्च ईयश्च इकश्च ते । देवतेदमर्थं इत्यत्र देवतेदमोरिति वक्तव्येऽर्थग्रहणं स्पष्टार्थमिहानुवर्तते ततश्चोक्तानुक्तलाभ इत्याशयेनाह । उक्तेत्यादि । सध्रीचीन इति । सध्यङेवेति विग्रहे स्वार्थे ईनः णित्वाभावान्न वृद्धिः । एवं सम्यगेव समीचीनः । अंचेर्लोपो दीर्घश्चेत्यकारलोपे पूर्वस्येकारस्य दीर्घः तस्यापि तद्धिते विधानात् ॥

क्वचिद्यलोपः ॥ ६६६ ॥ कन्याया अपत्यं कानीनः । कात्यस्येमे कातीयाः छात्राः । गार्गीयाः । रेवत्या अपत्यं रैवतिकः । पुष्येण युक्ता पौर्णमासी पौषी । तैषी । क्षत्रस्यापत्यं क्षत्रियः । शुक्रो देवतास्य शुक्रियम् । इन्द्रस्य लिङ्गमिंद्रियम् । अक्षैर्दीव्यतीत्याक्षिकः। कुद्दालैः खनति कौद्दालिकः । हलं वहति हालिकः । शब्दं करोति शाब्दिकः । दार्दुरिकः। धर्मं चरति धार्मिकः । अधार्मिकः। पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । तैत्तिरिकः । मात्सिकः । मैनिकः । मार्गिकः। सारङ्गिकः। पुराणमधीते पौराणिकः। ऐतिहासिकः। वैदिकः॥

सुबो०—क्वचिद्यलोपः । क्वचिद्धसात्परस्य यकारस्य लोपः स्यात् तद्धिते स्वरे नत्वाकारे। कन्याया अपत्यमिति ण्यणोऽपवाद ईनः यस्येत्यालोपः। ततो यलोपः। णितो वेति णित्वाद्वृद्धिः । कानीनो व्यासः कर्णश्च । अविवाहिताया अपत्यमित्यर्थः। कात्यस्येमे गर्गादिण्यंतात् णीये यलोपः। कातीयाः । गार्ग्यस्येमे गार्गीयाः।यलोपः । नत्वाकारे इति किम् । गार्ग्यायणः । इह न यलोपः । रैवतिकः। णितो वेति णित्वाद्वृद्धिः । रेवती अश्वपाली मणिपाली द्वारपाली इत्यादि रेवत्यादयः । नक्षत्रेण युक्तः कालः । तृतीयांतनक्षत्रशब्दात्प्रत्ययात् युक्तः काल इत्यर्थे । पुष्येण युक्तं पौषमहः । अण् । स्त्रियां तु त्रण ईप् । तिष्यपुष्ययोर्नक्षत्राणीति यलोपः । पौषी । तिष्येण युक्ता तैषी । क्षत्रशब्दाज्जातावियः । क्षत्रियः । क्षात्रिरन्यः। शुक्रियं हविः। इय् । इन्द्रस्यात्मनो लिंगं चिह्नमिति इंद्रियम् । तेन दीव्यति खनति जयति जितम् । तेनेति तृतीयांतादिको दीव्यत्यादिष्वर्थेषु । णितो वेति णित्वाद्वृद्धिः । अक्षैः पाशकैर्दीव्यत्याक्षिकः । कुद्दालैः खनति कौद्दालिकः । " गोदारणं तु कुद्दालः " इति हैमः । अक्षैर्जयत्याक्षिकः । अक्षैर्जितं आक्षिकम् । हलं सीरं वहति हालिकः । इकः। तेनेति तृतीयांतादिकः संस्कृतेऽर्थे । दध्ना संस्कृतं दाधिकम् । मरिचैः संस्कृतं मारिचिकम् । शब्दं करोति शाब्दिकः । प्रकृतिप्रत्यय-

विभागेन शब्दं व्युत्पादयतीत्यर्थः । दर्दुरं करोति दार्दुरिकः । इह दर्दुरशब्दः वाद्यभांडवाची । कुलाल इत्यर्थः । धर्मं चरति धार्मिकः । सद्वृत्त इत्यर्थः । अधर्मं चरत्याधर्मिकः । असद्वृत्त इत्यर्थः । पक्षिणो हंति नो वेति टिलोपः । इकः पाक्षिकः । शकुनं हंति शाकुनिकः । तित्तिरिं हंति तैत्तिरिकः । मत्स्यं हंति मात्स्यिकः । मीनं हंति मैनिकः । मृगं हंति मार्गिकः । सारंगं हंति सारंगिकः । मयूरं हंति मायूरिकः । पुराणमधीते पौराणिकः । इतिहासमधीते वेत्ति वा ऐतिहासिकः । वेदमधीते वेत्ति वा वैदिकः । णितो वेति णित्त्वाद्वृद्धिः ॥

तत्त्व०–कानीन इति । णित्वाद्वृद्धिः । व्यासः कर्णश्च । शाकुनिक इत्यादीनां शकुनीन् हंतीत्यादिर्वाक्यम् । इति ऐतिहासिक इतिहासमधीते ॥

**पील्वादिकर्णादिभ्यः कुणजाहौ पाकमूलयोः ॥ ६६७ ॥** पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् ॥

सुबो०–पील्वादिकर्णादिभ्यः कुणजाहौ पाकमूलयोः । पील्वादिभ्यः कर्णादिभ्यश्च कुणजाहौ प्रत्ययौ स्तः पाकमूलयोरर्थयोः । पाकः परिणामः मूलमुपक्रमः । पीलु कर्कंधु शमी करीर कुवल बदर खदिर पील्वादयः । कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृंग दंत ओष्ठ पृष्ठ कर्णादयः ॥

तत्त्व०–पाकमूलयोरिति । यथाक्रममनयोरन्वय इत्याशयेनाह । पीलूनां पाक इत्यादि ॥

**पक्षात्तिर्मूले ॥ ६६८ ॥** पक्षस्य मूलं पक्षतिः ॥

सुबो०–पक्षात्तिर्मूले । पक्षशब्दात्तिप्रत्ययः स्यात् मूलेऽर्थे । पक्षतिः प्रतिपत् ॥

**चञ्चुचणौ वित्ते ॥ ६६९ ॥** विद्यया वित्तो विद्याचञ्चुः । विद्याचणः ॥

सुबो०–चञ्चुचणौ वित्ते । चंचुचणौ प्रत्ययौ स्तो वित्तेऽर्थे । "वित्तो भोगप्रतीतयोः" इति निपातनात् दस्तस्येति नत्वं न ॥

**वेः शालशंकटौ ॥ ६७० ॥** विस्तृतम् । विशालम् ॥

सुबो०–वेः शालशंकटौ । वेःस्वार्थे एतौ स्तः । विस्तृतम् । विशालम् । विशंकटम् । विनञ्भ्यां नानञौ न सह । असहार्थे पृथग्भावे वर्तमानाभ्यां नानाञौ स्तः । विना । नाना ॥

**विसम्प्रोदः कटः ॥ ६७१ ॥** विकटम् । संकटम् । प्रकटम् । उत्कटम् ॥

सुबो०–विसंप्रोदः कटः । एभ्यः कटप्रत्ययः स्यात् स्वार्थे । विकटम् । विकृतम् । संकटम् । संहतम् । संबाध इत्यर्थः । प्रकटम् । प्रज्ञातम् । प्रकाशते इत्यर्थः । उत्कटमुद्भूतम् । रूढशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते ॥

**अलाबूतिलोमाभङ्गाभ्यो रजसि ॥ ६७२ ॥** अलाब्वा रजोऽलाबूकटम् । तिलकटम् । उमाकटम् । भंगाकटम् ॥

सुबो०—अलाबूतिलोमाभंगाभ्यो रजसि । एभ्यो रजस्यभिधेये कटप्रत्ययः स्यात् । रजसो विकारत्वात् विकारार्थे प्रत्ययानामपवादोऽयम् । अलाबूनां रजः अलाबूकटम् । तिलानां रजः तिलकटम् । उमायाः रजः उमाकटम् । भंगायाः रजः भंगाकटम् ॥

गोष्ठादयः स्थानादिषु पशुनामभ्यः ॥ ६७३ ॥ गवां स्थानं गोष्ठम् । अश्वगोष्ठम् ॥

सुबो०—गोष्ठादयः स्थानादिषु पशुनामभ्यः । पशुनामभ्यो गोष्ठादयः प्रत्ययाः स्युः स्थानादिष्वर्थेषु ॥

संघाते कटः ॥ ६७४ ॥ अवीनां संघातोऽविकटः ॥

सुबो०—संघाते कटः । अप्रसृतावयवसमूहः संघातस्तत्र कटप्रत्ययः । सामूहिकानामपवादोऽयम् ॥

विस्तारे पटः ॥ ६७५ ॥ अविपटः ॥

सुबो०—विस्तारे पटः । प्रसृतावयवः समूहो विस्तारस्तत्र पटः प्रत्ययः । सामूहिकानामपवादोऽयम् ॥

द्वित्वे गोयुगः ॥ ६७६ ॥ द्वावुष्ट्रौ उष्ट्रगोयुगम् ॥

सुबो०—द्वित्वे गोयुगः । प्रकृत्यर्थस्य द्वित्वे द्योत्ये गोयुगप्रत्ययः स्यात् । उष्ट्रगोयुगम् । द्वयं युगमित्यादिवत् अवयवसंघातप्राधान्यादेकवचनमित्यर्थः ॥

षट्त्वे षड्गवः ॥ ६७७ ॥ अश्वषड्गवम् ॥

सुबो०—षट्त्वे षड्गवः । षट्त्वे वाच्ये षड्गवप्रत्ययः स्यात् । अश्वानां षट्त्वं अश्वषड्गवम् । अवयवसंघातस्य प्राधान्यादेकवचनम् ॥

तत्त्व०—अश्वषड्गवमिति । षट् अश्वा इत्यर्थः ॥

स्नेहे तैलः ॥ ६७८ ॥ तिलतैलम् । सर्षपतैलम् ॥

सुबो०—स्नेहे तैलः । स्नेहे वाच्ये तैलप्रत्ययः । तिलानां स्नेहः तिलतैलम् । सर्षपाणां स्नेहः सर्षपतैलम् ॥

भवने क्षेत्रे शाकटशाकिनौ ॥ ६७९ ॥ इक्षूणां भवनं क्षेत्रं इक्षुशाकटम् । इक्षुशाकिनम् ॥

सुबो०—भवने क्षेत्रे शाकटशाकिनौ । भवने क्षेत्रे इत्यर्थे शाकटशाकिनौ प्रत्ययौ भवतः ॥

अवात्कुटारकटौ ॥ ६८० ॥ अवाचीनोऽवकुटारः । अवकटः ॥

सुबो०—अवात् कुटारकटौ । अवशब्दात् कुटारकटौ प्रत्ययौ भवतः अवाचीनेऽर्थे । अवकुटारावकटशब्दौ वेदे प्रसिद्धौ ॥

**नासिकाया नते संज्ञायां टीटनाटभ्रटा अवात् ॥ ६८१ ॥** नासिकाया नतं अवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगान्नासिकावटीटा । पुरुषोऽवटीटः ॥

सुबो०—नासिकाया नते संज्ञायां टीटनाटभ्रटा अवात् । नासिकासाधनके नमने वर्तमानादवशब्दादेते प्रत्ययाः स्वार्थे संज्ञायां वाच्यायाम् । नतमिति नपुंसके भावे क्तः । नमनं नीचैस्त्वम् । कथं तर्हि नासिकायां पुरुषे चावटीटशब्दप्रयोग इत्यत आह । तद्योगादिति ॥

**नेर्बिडबिरीसौ ॥ ६८२ ॥** निबिडम् । निबिरीसम् ॥

सुबो०—नेर्बिडबिरीसौ । उक्तेऽर्थे निशब्दान्नासिकाया नतेऽभिधेये बिडबिरीसौ प्रत्ययौ स्तः ॥

**इनपिटकाः प्रत्यया नेश्चिकचिचिकादेशाः ॥ ६८३ ॥** चिकिनम् । चिपिटम् । चिक्कम् ॥

सुबो०—इनपिटकाः प्रत्यया नेश्चिकचिचिकादेशाः । उक्तेऽर्थे नासिकाया नतेऽभिधेये इनपिटकाः प्रत्ययाः स्युः । निशब्दस्य चिकचिचिका यथाक्रममादेशाश्च ॥

तत्त्व०—इनपिटका इति । यथाक्रम प्रत्ययत्रय आदेशत्रय बोध्यम् ॥

**क्लिन्नस्य चिल्पिल्चुलोलः प्रत्ययोऽस्य चक्षुषी इत्यर्थे ॥ ६८४ ॥** क्लिन्ने चक्षुषी अस्य चिल्लः । पिल्लः । चुल्लः ॥

सुबो०· क्लिन्नस्य चिल्पिल्चुलोलः प्रत्ययोऽस्य चक्षुषी इत्यर्थे । अस्य चक्षुषी एतस्मिन्नर्थे क्लिन्नशब्दाल्लप्रत्ययः स्यात् क्लिन्नस्य चिल्पिल्चुलः आदेशाश्च । कथं तर्हि " स्युः क्लिन्नाक्षे चिल्लचुल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी । " इत्यमरः इति चेत् अत्राहुः । पुरुषे व्युत्पादितानां तदवयवे लक्षणा बोध्यात्र ॥

**उपाधिभ्यामासन्नारूढयोस्त्यकः ॥ ६८५ ॥** पर्वतस्यासन्ना भूमिरुपत्यका । आरूढा अधित्यका ॥

सुबो०—उपाधिभ्यामासन्नारूढयोस्त्यकः । उपाधिभ्यां त्यकः प्रत्ययः स्यात् । आसन्नं समीपम् । आरूढमुच्चस्थानम् । तत्र संज्ञायाम् । पर्वतस्यासन्नं स्थलमुपत्यका । आरूढस्थलमधित्यका । क्षिपकादित्वात् काप्यत इतीत्वं न ॥

**कर्मणष्ठो घटते इत्यर्थे ॥ ६८६ ॥** कर्मणि घटते कर्मठः ॥

सुबो०—कर्मणष्ठो घटते इत्यर्थे । सप्तम्यंतात् कर्मशब्दाद्‌ ठप्रत्ययः स्यात् घटते चेष्टते इत्यर्थे । नो वेति टिलोपः । " कर्मशूरस्तु कर्मठः " इत्यमरः ॥

**साक्षाद्द्रष्टरि संज्ञायां डिनिः ॥ ६८७ ॥ साक्षाद्द्रष्टा साक्षी ॥**

सुबो०—साक्षाद्द्रष्टरि संज्ञायां डिनिः । द्रष्टर्थे साक्षादित्यव्ययात् डिनिः स्यात् । डित्वाट्टिलोपः संज्ञायामर्थे । इनामिति दीर्घः । साक्षी ॥

**इष्टादिभ्य इनिरनेनेत्यर्थे ॥ ६८८ ॥ इष्टमनेन इष्टी । अधीती । हैयङ्गवीनम् । श्रोत्रियः । क्षेत्रियोऽनुपदी इत्यादयो निपात्याः । ह्योगोदोहोद्भवं हैयङ्गवीनम् । छन्दोऽधीते श्रोत्रियः । परक्षेत्रे चिकित्स्यः क्षेत्रियः । अनुपदमन्वेष्टानुपदी ॥**

सुबो०—इष्टादिभ्य इनिरनेनेत्यर्थे । एभ्य इनिप्रत्ययः स्यात् अनेनेत्यर्थे । अधीतमनेनेति अधीती । हैयंगवीनं श्रोत्रियः क्षेत्रियोऽनुपदो इत्यादयो निपात्याः । दुह्यते इति दोहः क्षीरम् । ह्योगोदोहस्य विकार इति ह्योगोदोहस्य हियंगुरादेशो विकारार्थे ईनप्रत्ययश्च निपात्यते । णितो वेति णित्वाद्वृद्धिः । वोऽव् यस्वरे इत्यव् । हैयंगवीनं नवनीतम् । छंदसः श्रोत्रभावो निपात्यते तदधीते इत्येतस्मिन्नर्थे इयप्रत्ययश्च णितो वेति वृद्ध्यभावः । श्रोत्रियः । परक्षेत्रशब्दात् सप्तम्यंतात् इयप्रत्ययः परशब्दलोपश्च निपात्यते । क्षेत्रियो व्याधिः शरीरांतरे चिकित्स्यः । अप्रतीकार्य इत्यर्थः । अनुपदशब्दादन्वेष्टरि इन्प्रत्ययो निपात्यते । पदस्य पश्चादनुपदम् ॥

**आख्याताव्ययसर्वादेष्टेः प्रागकः ॥ ६८९ ॥ पचतकि । उच्चकैः । नीचकैः । सर्वकः । अयकम् । असकौ । त्वकम् । अहकम् ॥**

सुबो०—आख्याताव्ययसर्वादेष्टेः प्रागकः । एषां टेः प्राक् अकप्रत्ययः स्यात् स्वार्थे । अंत्योऽकार उच्चारणार्थः ॥

**त्यतनौ भवाद्यर्थे ॥ ६९० ॥ त्यतनौ प्रत्ययौ स्तः अव्ययात् ॥ कुत्रभवः कुत्रत्यः । कुतस्त्यः । अमात्यः । इहत्यः । अव्ययस्य तद्धितयस्वरयोष्टिलोपः । वहिर्भावो बाह्यः । स्वः स्वर्गस्तत्र भवः सौवर्गः । पौनःपुन्यम् । पौनःपुनिकः ॥**

सुबो०—त्यतनौ भवाद्यर्थे । एतौ स्तः । अमेहक्वतसूत्रेभ्य एव त्यः । अमांतिकसहार्थयोः । अमा भवः अमात्यः ॥

**दक्षिणपश्चात्पुरसस्त्यण् ॥ ६९१ ॥ दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः । ऐषमस्त्यम् । ऐषमस्तनम् ॥**

सुबो०—दक्षिणापश्चात्पुरसस्त्यण् । एभ्यस्त्यण् स्यात् भवाद्यर्थे । दक्षिणेत्यादंतमव्ययम् । दक्षिणाभवः दाक्षिणात्यः । ऐषमो ह्यस्श्वसूभ्यो वा त्यः । पक्षेतनः । अत्र वर्षे ऐषमः । अतीतेऽह्नि ह्यः । आगामिदिने श्वः ॥

**श्वसस्तिकण्वा ॥ ६९२ ॥** शौवस्तिकम् । अद्यतनः । ह्यस्तनः । श्वस्तनः । सनातनः। सदातनः। पुरातनः । दोषातनः । सायन्तनः । चिरन्तनः । प्राह्लेतनः ॥

सुबो०—श्वसस्तिकण्वा । श्वसव्ययात्तिकणपि स्यात् । श्वो भवमिति न संधिश्वोरित्युडागमवृद्धी । शौवस्तिकम् । कालवाचिभ्योऽव्ययेभ्यः सायं चिरं प्राह्ले प्रगे इति चतुर्भ्यश्च तनः स्यात् । दोषेति रात्रौ । दोषाभवः दोषातनः । प्राह्लेतनः । प्रगे प्रातर्भवः प्रगेतनः । सप्तम्या अलुक् उभयत्र । स्यतेर्घञि आतो युगिति युकि कृते सायशब्दोऽकारांतो दिवसावसाने रूढः । तस्य चिरशब्दोऽप्यदंतस्यापि प्रत्ययसंनियोगेन मांतत्वं प्राह्लप्रगयोरेदंतत्वं च निपात्यते इति वार्तिककृन्मतम् । भाष्ये तु सायं चिरं च मांतमव्ययं स्वीकृतम् ॥

तत्त्व०—शौवस्तिकमिति । श्वो भवमिति विग्रहः । द्वारादित्वाद्वकारात्पूर्वमुटि कृते पश्चाद्वृद्धिः । प्राह्लेतन इति एदंतत्वं निपातनात् ॥

**स्वार्थेऽपि ॥ ६९३ ॥** उक्ता वक्ष्यमाणाश्च प्रत्ययाः स्वार्थे स्युः ॥ देवदत्त एव दैवदत्तकः । चौरः । वय एव वायसः । रक्षः एव राक्षसः । चत्वारो वर्णाश्चातुर्वर्ण्यम् । समीपमेव सामीप्यम् । चत्वारो वेदाश्चातुर्वेद्यम् । प्रज्ञ एव प्राज्ञः । चातुराश्रम्यम् । त्रैलोक्यम् । अनंत एवानन्त्यम् । अवसथ एवावसथ्यम् । इतिह एव ऐतिह्यम् । भेषजमेव भैषज्यम् ॥

सुबो०—स्वार्थेऽपि । प्रकृत्यर्थेऽप्यणादयः स्युः । देवदत्त एव दैवदत्तकः । णितो वेति णित्वाद्वृद्धिः । चौर एव चौरः । वय एव वायसः । रक्ष एव राक्षसः । अण् । चत्वारश्च ते वर्णाश्चतुर्वर्णाः चतुर्वर्णा एव चातुर्वर्ण्यम् । ण्यः । चतुरो वेदानधीते इति तद्धितार्थे द्विगुः । तमधीते इत्यर्थेऽण् तस्य लुक् च चतुर्वेद एव उभयत्र वृद्धिः । चातुर्वेद्यः । ण्यः । चत्वारश्च ते वेदाश्च चतुर्वेदाः चतुर्वेद एव चातुर्वेद्यमिति वा । प्रज्ञ एव प्राज्ञः । अण् । चत्वार आश्रमाः एव चातुराश्रम्यम् । ण्यः । त्रयश्च ते लोकाश्च त्रिलोकाः त्रिलोका एव त्रैलोक्यम् । अनंत एव आनंत्यः। ण्यः। आवसथ एवेति । उपसर्गेऽवसेरथप्रत्ययः । आवसथ्यं गृहम् । ण्यः। इतिहेति निपातसमुदायः।

ऐतिह्यम् । ण्यः । भिषज्यते कंड्वादियगंतात् क्विप् । भिषक् । भिषजामिदं भेषजं अणि निपातनादेकारः । भैषज्यम् । ण्यः ॥

तत्त्व०—स्वार्थेऽपीति । वय एव वायसमिति स्वार्थिकाः । प्रकृतितो लिंगवचनानि न व्यभिचरतीत्यस्यौत्सर्गिकत्वाल्लिंगविपर्ययः ॥

भागरूपनामभ्यो धेयः ॥ ६९४ ॥ भाग एव भागधेयम् । नामधेयम् । रूपधेयम् ॥

सुबो०—भागरूपनामभ्यो धेयः । एभ्यो धेयप्रत्ययः स्यात्स्वार्थे । "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ।" इत्यमरः । "आख्याह्वे अभिधानं च नामधेयं च नाम च ।" इत्यमरः ॥

देवात्तः ॥ ६९५ ॥ देव एव देवता ॥

सुबो०—देवात्तः । देवशब्दात्तप्रत्ययः स्यात् स्वार्थे । तांतं स्त्रियाम् ॥

मृदस्तिकः ॥ ६९६ ॥ मृदेव मृत्तिका ॥

सुबो०—मृदस्तिकः । मृद्शब्दात्तिकप्रत्ययः स्यात् स्वार्थे ॥

सस्नौ प्रशंसायाम् ॥ ६९७ ॥ प्रशस्ता मृत् मृत्सा, मृत्स्ना ॥

सुबो०—सस्नौ प्रशंसायाम् । रूपप्रत्ययस्यापवादौ मृदः सस्नौ प्रत्ययौ स्तः प्रशंसायामर्थे । "मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।" इत्यमरः ॥

अणीनयोर्युष्मदस्मदोर्युष्माकास्माकौ ॥ ६९८ ॥

सुबो०—अणीनयोर्युष्मदस्मदोर्युष्माकास्माकौ । एतयोर्द्वित्वे बहुत्वे च वर्तमानयोर्युष्माकास्माकावादेशौ स्तः अणीनयोः परतः ॥

तत्त्व०—अणीनयोरिति । आदेशौ यथासंख्यं नतु प्रत्ययौ ॥

एकत्वे तवकममकौ ॥ ६९९ ॥ युवयोर्युष्माकं वायं यौष्माकः, यौष्माकीनः । अनयोरस्माकं वायं आस्माकः, आस्माकीनः । तवायं तावकः । ममायं मामकः । तावकीनः । मामकीनः ॥

सुबो०—एकत्वे तवकममकौ । एकत्वे वर्तमानयोर्युष्मदस्मदोस्तवकममकावादेशौ स्तः अणीनयोः परतः ॥

वत्तुल्ये ॥ ७०० ॥ सादृश्येऽर्थे वत्प्रत्ययः ॥ चन्द्रेण तुल्यं चन्द्रवत् । ब्राह्मणवत् । क्षत्रियवत् । मथुरायामिव मथुरावत् । पाटलिपुत्रे इव प्राकारः पाटलिपुत्रवत् । चैत्रस्येव चैत्रवत् मैत्रस्य गृहम् ॥

सुबो०—वत्तुल्ये । तुल्यते सादृश्येनोन्मीयते ज्ञायते इति तुल - उन्मानेऽस्मात्

क्यप् तुल्यम् । यद्वा तोलनं तुला ञेरभावे भिदाद्यङ् । तुलया संमितं तुल्यम् । कारकादिति ण्यः णितो वेत्यणित्वम् । तृतीयांतात् सप्तम्यंताच्च वत्प्रत्ययः स्यात् तुल्ये सादृश्येऽर्थे । ब्राह्मणेन तुल्यं ब्राह्मणवदधीते । तृतीयांतात् तु क्रियातुल्ये एव गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः । द्रव्यतुल्येऽपि न । गवा तुल्यो गवयः । सप्तम्यंतात् षष्ठ्यंताच्च क्रियातुल्येऽपि भवतीत्यर्थः । मथुरावत् पाटलिपुत्रे प्राकारः । मथुरायां यादृशः प्राकारस्तादृशः पाटलिपुत्रे इत्यर्थः ॥

तत्त्व०—वत्तुल्ये इति । अत्र क्रियाग्रहणमनुवर्तते । तच्च तुल्येन संबध्यते । तेन तुल्यायां क्रियायामित्यर्थो लभ्यते । तोलनं तुला तया संमितमिति विग्रहे कारकादिति ण्यप्रत्यये णितो वेति णित्वाभावाद्वृद्ध्यभावः । चतुर्वदित्यादि निर्देशात्क्रियासादृश्याभावेऽपि षष्ठ्यंतात्सप्तम्यंताच्च भवति इत्याशयेनाह । मथुरावदित्यादि । योगविभागान्महानसवदित्यादावक्रियासाम्येऽपि भवति ॥

**अर्हेऽपि ॥ ७०१ ॥ विधिमर्हति विधिवत् ॥**

सुबो०—अर्हेऽपि । अर्हेऽर्थेऽपि द्वितीयांताद्वत् स्यात् क्रियातुल्ये । विधिवत्पूज्यते । विधानं विधिः । अर्हतीति अर्हः । पचाद्यः ॥

**भावे तत्वयणः ॥७०२॥ शब्दस्य प्रवृत्तिनिमित्तं भावस्तत्र वाच्ये एते स्युः ॥ तान्तं स्त्रियाम् । त्वान्तं क्लीबम् । ब्राह्मणता, ब्राह्मणत्वम्, ब्राह्मण्यम् । शुक्लता, शुक्लत्वम्, शौक्ल्यम् । वैदुष्यम् ॥**

सुबो०—भावे तत्वयणः। तश्च त्वश्च यण् च ते तत्वयणः भावे तत्वयणः प्रत्यया अणादयश्च स्युः । भावशब्दोऽनेकार्थवचनः । अभिप्राये यथा अयं भावः । पदार्थमात्रे यथा । विचित्रा भावशक्तयः । शृंगारादिषु यथा स्थायिभावः । संचारिभावः। प्रवृत्तिनिमित्ते धात्वर्थमात्रे च भावः । तेष्वत्र कस्य ग्रहणम् । उच्यते । प्रवृत्तिनिमित्तवचनस्य भावस्यात्र ग्रहणम् । भवंति शब्दा अनेनेति व्युत्पत्तेः । अभिप्रायादिवचनस्यात्र अग्रहोऽनभिधानात् । तथाच सिद्धांतकौमुद्यां प्रकृतिजन्यबोधे प्रकारो भाव इति । उक्तं च हरिटीकायाम् । कृत्तद्धितसमासेभ्यः संबंधाभिधानं भावप्रत्ययेनेति । तेन पाचकत्वमित्यत्र कर्तृत्वरूपः संबंधः । औपगवत्वमित्यत्र जन्यत्वरूपः संबंधः । राजपुरुषत्वमित्यत्र स्वरूपसंबंधः । तप्रत्ययांतं स्त्रीलिंगम् । त्वप्रत्ययांतं नपुंसकम् । यणंतमुभयत्र । मैत्र्यं मैत्रीत्यादि । ब्राह्मणस्य भावः यस्येत्यलोपः । ब्राह्मण्यम् । शुक्लाया भावः त्वतलोर्गुणवचनस्येति पुंवद्भावः । शुक्लत्वम् ॥

तत्त्व०—भावे तत्वयण इति । तश्च त्वश्च यण् च ते । भावशब्दोऽभिप्रायाद्यनेकार्थोऽप्यत्र प्रवृत्तिनिमित्तवचन एव गृह्यते । न त्वभिप्रायाद्यर्थः । अनभिधानादित्याशयेनाह । शब्दस्येत्यादि । प्रवृत्तेर्निमित्तं प्रवृत्तिनिमित्तं तस्मिन् प्रत्यया इत्यर्थः । यणन्तमुभयम् । मैत्र्यम् । मैत्री ॥

**कर्मण्यपि ॥७०३॥ ब्राह्मणस्य कर्म ब्राह्मण्यम् । राज्यम् । स्तैन्यम् ॥**

सुबो०—कर्मण्यपि । कर्मण्यर्थेऽपि तत्वयणः प्रत्यया अणादयश्च स्युः । राज्ञो

भावः कर्म वा नो वेति टिलोपः । राज्यम् । यण् । स्तेनस्य चौरस्य भावः कर्म वा स्तैन्यम् । यण् ॥

तत्त्व०—कर्मण्यपीति । अत्र क्रियानुवृत्तेः क्रियायामित्यर्थः ॥

**लोहितादेर्डिमन् भावे वा ॥ ७०४ ॥** लोहितिमा, लोहितता । लोहितत्वम्, लौहित्यम् । अणिमा । लघिमा ॥

सुबो०—लोहितादेर्डिमन् भावे वा । लोहितादेर्गणात् डिमन्प्रत्ययस्तादयश्च भावे । लोहितस्य भावः डित्वाट्टिलोपः । लोहितिमा । अणोर्भावः अणिमा । लघोर्भावः लघिमा ॥

तत्त्व०—लोहितिमेति । लोहितस्य भाव इत्यर्थः ॥

**भावेऽणपि ॥ ७०५ ॥** लाघवम् । गौरवम् । यौवनम् । शैशवम् । मौनम् । हौत्रम् । औद्गात्रम् । महतो भावो महिमा ॥

सुबो०—भावेऽणपि । अण्प्रत्ययोऽपि स्यात् भावे । गुरोर्भावो गौरवम् । वोऽव् थस्वरे इत्यव् । यूनो भावः नो वेति टिलोपो न । यौवनम् । शिशोर्भावः शैशवम् । मुनेर्भावः मौनम् । होतुर्भावः हौत्रम् । उद्गातुर्भावः औद्गात्रम् । महतो भावः टिलोपः । महिमा ॥

तत्त्व०—लाघवेति । लघोर्भाव इति विग्रहः ॥

**ऋर इमनि ॥ ७०६ ॥** हसादेर्लघोर्ऋकारस्य रेफो भवति इमनि इष्ठेयसोश्च ॥ पृथोर्भावः प्रथिमा । म्रदिमा । क्रशिमा । द्रढिमा । लघोः किम् । कृष्णिमा । हसादेः किम् । ऋजिमा ॥

सुबो०—ऋर इमनि । ऋ इति षष्ठ्यंतं सांकेतिकम् । पृथोर्भावः टिलोपः रत्वम् । प्रथिमा । अणिमा । पार्थवम् । मृदोर्भावः म्रदिमा मार्दवम् । कृशस्य भावः क्रशिमा । दृढस्य भावः द्रढिमा । कृष्णस्य भावः कृष्णिमा । लघोरभावान्न रत्वम् । ऋजोर्भावः ऋजिमा । हसादित्वाभावान्न रत्वम् ॥

तत्त्व०—ऋर इमनि । प्रयोगानुसरणमेव हसादेर्लघोरिति व्याख्यानमेव शरणम् ॥

**बहोर्लोपो भू च बहोः ॥ ७०७ ॥** बहोः परेषामिमनादीनामिवर्णस्तस्य लोपो बहोर्भूरादेशश्च ॥ बहोर्भावो भूमा ॥

सुबो०—बहोर्लोपो भू च बहोः । बहुरुदंतः । शेषं सुगमम् ॥

तत्त्व०—बहोरिति । बहोरिति पंचम्यंतम् । ततश्च पचमीनिर्दिष्टत्वाल्लोप इवर्णस्यैवेत्याशयेनेवर्णस्येत्युक्तम् । पुनर्ग्रहणात् बहोर्भूस्यानित्यम् ॥

**स्तेनाद्यो नलोपश्च ॥ ७०८ ॥** स्तेनस्य कर्म भावो वा स्तेयम् ॥

सुबो०-स्तेनाद्यो नलोपश्च । स्तेनशब्दाद्यप्रत्ययः स्याद्भावे कर्मणि चार्थे नलोपश्च । स्तेन चौर्ये । पचाद्यः । स्तेयं चौर्यम् ॥

**समूहेऽर्थेऽपि ॥ ७०९ ॥** मयूराणां समूहो मायूरम् । कौशिकम् । क्षैत्रम् । कैदारिकम् । गाणिक्यम् । तद्धितयस्वरयोः पुंवत् । हास्तिकम् । गार्भिणम् । ग्रामता । जनता । बंधुता । पाश्या । वात्या । खल्या । गव्या । वार्द्धकम् । कैदार्यम् । कावचिकम् । ब्राह्मण्यम् । वाडव्यम् । माणव्यम् । गजता । सहायता ॥

सुबो०-समूहेऽर्थेऽपि । समूहेऽर्थेऽपि अणादयः प्रत्ययाः स्युः । मयूराणां समूहः अण् । मायूरम् । काकानां समूहः काकम् । क्षेत्राणां समूहः क्षैत्रम् । केदाराणां समूहः इकः णितो वेति णित्वाद्वृद्धिः । कैदारिकम् । गणिकानां समूहो यण् । गाणिक्यम् । हस्तिनां हस्तिनीनां वा समूहः इकः । यस्य लोप इति लोपे नो वेति टिलोपः । हास्तिकम् । गर्भिणीनां समूहोऽण् यस्य लोप इति लोपः । गार्भिणम् । नो वेति टिलोपाऽभावोऽत्र । ग्रामाणां समूहः तः । ग्रामता । जनानां समूहो जनता । बंधूनां समूहो बंधुता । पाशानां समूहो यण् । पाश्या । वातानां समूहो वात्या । खलानां समूहः खल्या । णितो वेति न वृद्धिः । गवां समूहो गव्या । वोऽव् यस्वरे इत्यव् । वृद्धानां समूहः कः णितो वेति णित्वाद्वृद्धिः । वार्द्धकम् । केदाराणां समूहो यण् । कैदार्यम् । कवचिनां समूहः इकः । कावचिकम् । ब्राह्मणानां समूहो यण् ब्राह्मण्यम् । वडवानां समूहो वाडव्यम् । माणवानां समूहो माणव्यम् । गजानां समूहः तः । गजता । सहायानां समूहः सहायता ॥

तत्त्व०-पाश्येति । पाशानां समूह इति विग्रहः । स्त्रीत्वं लोकात् ॥

**पश्वाड्ड्वण् ॥ ७१० ॥** पशूनां समूहः पार्श्वम् । साक्तुकम् । धैनुकम् । रथ्या ॥

सुबो०-पश्वाड्ड्वण् । पशुशब्दात् ड्वण् प्रत्ययः स्यात् समूहे । डित्वाट्टिलोपः । पशूनां समूहः पार्श्वम् । सक्तूनां समूहः साक्तुकम् । धेनूनां समूहः धैनुकम् । रथानां समूहो यण् णितो वेति न वृद्धिः । रथ्या ॥

तत्त्व०-पार्श्वमिति । डित्वाट्टिलोपः ॥

**खलगोरथेभ्य इनित्रकट्याः ॥ ७११ ॥** खलिनी । गोत्रा । रथकट्या ॥

सुबो०-खलगोरथेभ्य इनित्रकट्याः । खलादिभ्यः क्रमात् एते स्युः । खलानां समूहः त्रण इतीप् । खलिनी । गवां समूहो गोत्रा । रथानां समूहो रथकट्या ॥

तत्त्व०-खलगोरथेभ्य इति । यथासंख्यं प्रत्ययाः । खलिनीति खलानां समूहः । एवमन्यत्रापि ॥

**हिते च ॥ ७१२ ॥** सूर्याय हितः सूरीयः । आत्मनीनः । विश्वजनीनः । मातृभोगीणः । अपूपाय हितोऽपूपीयः, अपूप्यः । आमिक्षीयम् । शंकव्यम् । गव्यम् । हविष्यम् । खल्यम् । यव्यम् ॥

सुबो०–हिते च । अणादयः प्रत्यया हितेऽर्थे च स्युः । सूर्याय हित इति सूर्यागस्त्ययोरीये ईपि चेति यलोपः । सूरीयः । णीयः । आत्मने हितः नो वेत्यस्य टिलोपो न । आत्मनीनः । ईनः । विश्वजनाय हितः विश्वजनीनः । कर्मधारयादेवेष्यते । विश्वस्य जनः सर्वसाधारणो वेश्यादिरिति तत्पुरुषे विश्वो जनोऽस्येति बहुव्रीहौ च विश्वजनाय हितं विश्वजनीयम् । णीय एव । मातुर्भोगः शरीरं मातृभोगः मातृभोगाय हितः मातृभोगीणः । णत्वम् । " भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः । " इत्यमरेण यद्यप्यहेरित्युक्तं तथापि प्रयोगबाहुल्याभिप्रायम् । तच्छक्तिस्तु शरीरमात्रेऽप्यस्ति इत्याकरः । अपूपेभ्यो हितः अपूप्यं चूर्णम् । ण्यः । णितो वेति न वृद्धिः । अपूपीयः । णीयः । आमिक्षायै हितं ण्यणीयौ । आमिक्ष्यं, आमिक्षीयम् । " हविः सान्नाय्यमामिक्षशृतोष्णक्षीरजं दधि । " इति हैमः । आमीयते क्षिप्यते दधि यत्र सा आमिक्षा । शंकवे हितं शंकव्यम् । ण्यः । णितो वेति न वृद्धिः । वोऽवित्यव् । गवे हितं गव्यम् । हविषे हितं हविष्यम् । खलाय हितं खल्यम् । यवेभ्यो हितं यव्यम् ॥

तत्त्व०–सूरीय इति । सूर्यागस्त्ययोरितीये यलोपः ॥

**शुनो वस उवौ च दीर्घः ॥ ७१३ ॥** शुने हितं शून्यम्, शुन्यम् ॥

सुबो०–शुनो वस उवौ च दीर्घः । श्वनशब्दस्य वकाराकारयोरुत्वं भवति उतश्च वा दीर्घः । नो वेति टिलोपो न भवति । वाशब्दस्य व्यवस्थार्थत्वात् । शून्यम्, शुन्यम् ॥

**ऊधसो नङ् ॥ ७१४ ॥** ऊधन्यः ॥

सुबो०–ऊधसो नङ् । ऊधसशब्दस्य नङादेशो भवति । ङित्वादंतस्य स्थाने नङ् । अकार उच्चारणार्थः । ऊधसे हितः णितो वेति न वृद्धिः । ऊधन्यः ॥

तत्त्व०–ऊधस इति । ऊधसे हितः ॥

**अजाविभ्यां थ्यः ॥ ७१५ ॥** अजथ्या । अविथ्या ॥

सुबो०–अजाविभ्यां थ्यः । आभ्यां थ्यप्रत्ययः स्यात्तद्धितेऽर्थे । अजेभ्यो अजाभ्यो वा हिता अजथ्या । थ्यप्रत्ययस्य तरादौ पाठात् पुंवद्भावे रूपं तुल्यम् । अविभ्यो हिता अविथ्या । सर्वस्मै हितं सार्वम् । अण् । सार्वीयम् । णीयः । वृद्धिः ॥

तत्त्व०–अजथ्येति । अजायै हिता ॥

**अस्त्यर्थे मतुः ॥ ७१६ ॥ नाम्नः ॥ गावोऽस्यास्मिन् वा सन्ति गोमान् । श्रीर्विद्यतेऽस्य श्रीमान् । विदुष्मान् । गोमती ॥**

सुबो०–अस्त्यर्थे मतुः । प्रथमांतान्नाम्नो मतुप्रत्ययो भवति अस्यास्तीत्यर्थे अस्मिन्नस्तीत्यर्थे च । उदित्वात्पुंसि त्रितो नुमिति नुम् । स्त्रियां च ङ्गित इतीप् । क्लीबे शौ नुम् । "भूमनिंदाप्रशंसासु नित्ययोगेऽतिशायिनि । संबंधेऽस्तिविवक्षायां भवंति मत्विनादयः ॥" अस्तीत्यस्य विवक्षायां ये मत्वादयः प्रत्यया विधीयंते ते भूमादिषु विषयेषु भवंति । भूमा बहुत्वम् । यथा गावोऽस्यास्मिन्वा संति स गोमान् । निन्दायां यथा । ककुदावर्तिनी कन्या । प्रशंसायां यथा । रूपवान् । नित्ययोगे यथा । क्षीरिणः वृक्षाः । अतिशायिनि यथा । उदरिणी कन्या । संबंधः संसर्गः । संयोगे इति यावत् । तत्र तथा । दंडी पुरुषः । श्रीरस्ति अस्यास्मिन् वा श्रीमान् । विद्वांसोऽस्यास्मिन् वा संति वसोर्व उरित्युत्वे षत्वम् । विदुष्मान् देशः । ङ्गित इतीप् । गोमती ॥

तत्त्व०–अस्त्यर्थे मतुरिति । अस्तीत्यत्र लिंगवचने अविवक्षिते । कालस्तु विवक्षितः । तथा चास्तिकर्तृभूतादुक्तान्नाम्नः अर्थे भूमादौ मतुप्रत्ययः । अस्तीत्यनेन स्वाम्याधारयोराक्षेपः । एवं च प्रथमांतान्नाम्नोऽस्तिकर्तुरस्यास्मिन्नित्यर्थे मतुरिति पर्यवसितोऽर्थः । उक्तं च । "भूमनिंदाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां जायंते मात्विनादयः ॥" अत्र दीक्षिताः । अस्तिविवक्षायां ये मतुवादयो विधीयंते ते भूमादिषु विषयेषु भवंतीति वार्त्तिकार्थः । भूमा बहुत्वम् । तच्चापेक्षा यस्य यावता तस्य तावता बोध्यम् । भूम्नि गोमान् । निंदायाम् । ककुदावर्तिनी कन्या । प्रशंसायां रूपवान् । निक्षीरिणो वृक्षाः । अतिशायने उदरिणी कन्या । सदंडी संसर्गसंयोगस्तेन संयुक्त एव ननु गृहावस्थितोऽपि दंडः । एतेन एतदुदाहृत्य अस्त्यर्थोदाहरण चोक्तमित्युक्तवंतो वासुदेवादयो निरस्ताः । यद्यपि यद्यस्य तत्तस्मिन्नपि यद्यस्मिन् तत्तस्य भवत्येवेत्युभयनिर्देशोऽप्यर्थस्तथापि वृक्षवान्पर्वतः पुत्रवांश्चैत्र इत्यत्र पर्वते वृक्षसंबंधस्य चैत्रे पुत्राधारत्वस्य वा सत्त्वादुभयनिर्देशः । असन्निहितपुत्रस्यापि पुत्रवानिति प्रतीतेः सामीपिकाधारत्वस्य विवक्षणादिति ॥

**अइकौ च मत्वर्थे ॥ ७१७ ॥ नाम्नोऽइकस्त्वदन्तात् ॥ अर्शसः । वैजयन्तः । दण्डिकः । धनिकः ॥**

सुबो०–अइकौ च मत्वर्थे । प्रत्ययभ्रमनिरासाय संधिरत्र न कृतः । अइकाविति निर्देशेन समासे संहितायां अनित्यत्वं ज्ञापितम् । पदान्तानां समानानामृतीत्यनेन सप्तऋषीणामित्यत्र वा संहिता भवति । अर्शोऽस्यास्मिन्वास्ति अर्शसः । वैजयंती पताकास्यास्मिन्वास्ति वैजयंती । अः । इकप्रत्ययस्तु अकारांतादेव । दण्डोऽस्यास्मिन्वास्ति दंडिकः । धनमस्यास्मिन्वास्ति धनिकः । इकः ॥

तत्त्व०–अइकाविति । अश्च इकश्च तौ-संध्यभावोऽसंदेहार्थः ॥

**मान्तोपधाद्वत्विनौ ॥ ७१८ ॥ मान्तान्मान्तोपधादवर्णांतादवर्णोपधाच्च वतुरिनस्त्वदन्तात् ॥ किंवान् । लक्ष्मीवान् । धनवान् । विद्यावान् । यशस्वान् । भास्वान् । क्षत्री । दण्डी ॥**

सुबो०–मान्तोपधाद्वत्विनौ । मश्च अश्च मौ अन्तश्च उपधा च अन्तोपधे मौ अन्तोपधे यस्य तत् मान्तोपधं तस्मान्मान्तोपधात् । प्रथमाद्वत्विनौ प्रत्ययौ भवतः अस्त्यर्थे । इन्प्रत्ययस्तु अकारांतादेव मतोरपवादोऽयं विधिः । यथासंख्यं तु न । गुरुकरणात् । तथाहि । म् अंते यस्य तन्मंतं अ उपधा यस्य तत् ओपधं मन्तं च ओपधं च अनयोः समाहारो मंतोपधं तस्मान्मांतोपधात् । इत्थं हि स्पष्टं यथासंख्यं लभ्यते तदकरणाद्यथासंख्याऽभावः । वतोरुकारो ञितो नुमिति नुमर्थः । ष्ट्रित इतीवर्थश्च । किमस्यास्मिन्वास्ति किंवान् । लक्ष्मीरस्यास्मिन्वास्ति लक्ष्मीवान् । धनमस्यास्मिन्वास्ति धनवान् । विद्यास्यास्मिन्वास्ति विद्यावान् । यशोऽस्यास्ति यस्मिन्वास्ति यशस्वान् । भाः अस्यास्मिन्वास्ति भास्वान् । क्षत्रमस्यास्मिन् वास्ति क्षत्री । दंडोऽस्याऽस्मिन्वास्ति दण्डी ॥

तत्त्व०–मांतोपधादिति । मश्च अश्च मौ अतश्च उपधा च अतोपधे मौ अतोपधे यस्य तन्मांतोपधं तस्मात् । यथासख्यं नाशंकनीयम् । लाघवमुत्सृज्य गौरवस्यात्रादृष्टत्वात् । तथाहि । मंतोपधादित्येवोच्येत । म् अंतं यस्य तन्मत अ उपधा यस्य तत् ओपधं मंत च ओपध च मतोपध तस्मात् । औदौतोर्लाघवगौरवयोर्विशेषाभावात् इत्याशयेनाह । मकारांतादित्यादि । यशस्वानिति । तान्तमान्तयोर्हसादावस्त्यर्थे अपदान्तता वाच्या अतो न विसर्गः । यस्वरयोस्तु सर्वेषाम् । भवदीय इत्यत्र तु कसादित्वादत्व बोध्यम् ॥

**यवादेर्न ॥ ७१९ ॥ यवमान् । भूमिमान् ॥**

सुबो०–यवादेर्न । यवादेर्गणान्मतुरेव स्यात् वत्विनौ न । यवा अस्यास्मिन् वा संति यवमान् । भूमिरस्यास्मिन्वास्ति भूमिमान् ॥

तत्त्व०–यवादेर्नेति । णितो वेरयस्य व्यवस्थितत्स्य मण्डूकप्लुत्यानुवर्त्तनान्नेत्यर्थः ॥

**तडिदादिभ्यश्च ॥ ७२० ॥ तडित्त्वान् । विद्युत्त्वान् । मायी । व्रीही । मायिकः ॥**

सुबो०–तडिदादिभ्यश्च । एभ्यो वतु इक इन् प्रत्ययाः स्युः अस्त्यर्थे । तडिदस्यास्मिन् वास्ति तडित्त्वान् । विद्युदस्यास्मिन् वास्ति विद्युत्त्वान् । मायास्यास्मिन् वास्ति मायी । इन् । मायिकः । इकः । व्रीहयोऽस्यास्मिन् वा संति व्रीही । इन् । व्रीहिकः । इकः ॥

तत्त्व०–तडित्त्वानिति । अपदांतत्वान्न दत्वम् ॥

**लोमपामपिच्छादिभ्यः शनेलाः ॥ ७२१ ॥ लोमशः । गिरिशः । पामनः । दद्रूणः । अङ्गना ॥**

सुबो०–लोमपामपिच्छादिभ्यः शनेलाः । लोमादिभ्यः शः । पामादिभ्यो नः । पिच्छादिभ्य इलः स्यादस्त्यर्थे । लोमान्यस्यास्मिन्वा संति लोमशः, लोमवान् । वतुः । गिरिरस्यास्मिन् वास्ति गिरिशः । पामास्यास्मिन्वास्ति पामनः । नाम्नो नो लोपश धाविति नलोपः । शाकीपललीदद्रूणां ह्रस्वत्वं च न प्रत्यये । एषां

ह्रस्वः । महच्छाकमिति शाकी । ईप् । तद्वत् शाकिनम् । महत्पलालं पलाली तद्वत् पलालिनम् । दर्द्रुस्त्वग्रोगविशेषः । दर्द्रूरस्याऽस्मिन्वास्ति दर्द्रूणः । णत्वम् । अंगमस्या अस्यां वास्ति अङ्गना ॥

तत्त्व०-शनेला इति । यथासंख्यं बोध्यम् ॥

**लक्ष्म्या अच्च ॥ ७२२ ॥ लक्ष्मणः ॥**

सुबो०-लक्ष्म्या अच्च । लक्ष्मीशब्दस्याकारोन्तादेशः स्यान्नप्रत्यये । लक्ष्मीरस्याऽस्मिन्वास्ति लक्ष्मणः । णत्वम् । विषु साम्येऽव्ययम् । विषु अंचतीति विष्वक् । विष्वगस्यास्मिन्वास्ति ॥

तत्त्व०-लक्ष्मण इति । लक्ष्मीरस्यास्तीति विग्रहः ॥

**विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ॥ ७२३ ॥ विषुणः । पिच्छिलः । तुन्दिलः । फेनिलः ॥**

सुबो०-विष्वगित्युत्तरपदलोपश्चाकृतसंधेः । विष्वक्शब्दस्योत्तरपदस्य लोपः स्यात् संधायकृते सति न प्रत्यये । विषुणः । विषुवदाख्यः कालः । "समरात्रिंदिवे काले विषुवद्विषुवं च तत् । " इत्यमरः । पिच्छं चिक्कणमस्याऽस्मिन् वास्ति पिच्छिलः । तुन्दमस्याऽस्मिन्वा तुंदिलः । फेनमस्याऽस्मिन्वा फेनिलः । उरसिलः उरस्वान् । पिच्छवान् ॥

तत्त्व०-विषुण इति । विषुणा नाना अंचतीति विष्वाचि तान्यस्य सतीति विषुणः। विषुणवदाख्यः कालः । तस्य हि नानागतानि दिनानि सति । दिनांतराणा न्यूनाधिकभावस्य तन्मूलकत्वात् । यदि कृतसंधेः स्यात्तदा वलोपे विष्ण इति स्यादित्यत आह । अकृतसंधेरिति ॥

**सिध्मादेर्लः ॥ ७२४ ॥ सिध्मलः । चूडालः ॥**

सुबो०-सिध्मादेर्लः । सिध्मादेर्गणाल्लप्रत्ययः स्यादस्त्यर्थे । पक्षे वतुः । सिध्मवान् । दन्त वल ललाट वत्स अंस फेन धमनि क्षुद्रजंतु उपताप गडु मणि विजय निष्पाठ पांशु हनु पार्ष्णि चूडा सिध्मादयः । पार्ष्णिधमन्योर्दीर्घश्च । पार्ष्णीलः । धमनीलः । क्षुद्रजंतुर्यथा । यूकालः । मक्षिकालः । उपतापो रोगः । विपादिकाऽस्यास्ति विपादिकालः । "पादस्फोटो विपादिका" इत्यमरः । सिध्ममस्यास्मिन्वास्ति सिध्मलः । चूडाऽस्याऽस्मिन्वास्ति चूडालः । वातदंतवलललाटानामूङ्च । वातुलः, वातूलः । इत्यादि ॥

**कुमुदनड्वेतसेभ्यो ड्मतुः ॥ ७२५ ॥ कुमुद्वान् । नड्वान् । वेतस्वान् ॥**

सुबो०-कुमुदनड्वेतसेभ्यो ड्मतुः । एभ्यो ड्मतुप्रत्ययः स्यादस्त्यर्थे । डित्वाट्टिलोपः। कुमुदान्यस्याऽस्मिन्वा सन्ति कुमुद्वान् । नडा अस्याऽस्मिन् वा संति नड्वान् । वेतसा अस्यास्मिन् वा संति वेतस्वान् ॥

**महिषाड्डमतुः ॥ ७२६ ॥ महिष्मान् देशः ॥**

सुबो०–महिषाड्डमतुः । महिषशब्दात् डमतुः स्यादस्त्यर्थे । महिषा अस्याऽस्मिन् वा संति महिष्मान् । टिलोपः ॥

**नडशादाद् ड्वलः ॥ ७२७ ॥ नड्वलः । शाद्वलः ॥**

सुबो०–नडशादाद् ड्वलः । आभ्यां ड्वलप्रत्ययः स्यादस्त्यर्थे । नडा अस्याऽस्मिन्वा सन्ति नड्वलः । डित्वाट्टिलोपः । शादोऽस्याऽस्मिन् वास्ति शाद्वलः । " शादो जंबालघासयोः " इत्यमरः ॥

**शिखाया वलः ॥ ७२८ ॥ शिखावलः ॥**

सुबो०–शिखाया वलः । शिखाशब्दाद्वलप्रत्ययः स्यादस्त्यर्थे । शिखाऽस्याऽस्मिन्वास्ति शिखावलः ॥

**नडादीनामीये कुक् ॥ ७२९ ॥ नडकीयम् ॥**

सुबो०–नडादीनामीये कुक् । नडादीनां कुगागमो भवति णीयप्रत्यये । नड प्लक्ष बिल्व वेत्र वेतस क्रुंचा तक्षन् नडादयः । नडा अस्यास्मिन्वा संति नडकीयम् ॥

**क्रुञ्चा ह्रस्वत्वं च ॥ ७३० ॥ क्रुञ्चकीयम् ॥**

सुबो०–क्रुंचा ह्रस्वत्वं च । क्रुंचाशब्दस्य ह्रस्वो भवति णीये । क्रुंचाऽस्यास्मिन्वा क्रुंचकीयम् । एवं तक्षकीयम् । निपातनान्नलोपः । बिल्वकीयम् । वेत्रकीयम् ॥

**शृङ्गवृन्दाभ्यामारकः ॥ ७३१ ॥ शृङ्गारकः । वृन्दारकः ॥**

सुबो०–शृंगवृंदाभ्यामारकः । आभ्यामारकप्रत्ययः स्यादस्त्यर्थे । शृंगमस्याऽस्मिन्वास्ति शृंगारकः । " शृंगं प्रधानसान्वोश्च " इत्यमरः । वृंदमस्याऽस्मिन् वास्ति वृंदारकः । " वृंदारकौ रूपिमुख्यौ " इत्यमरः ॥

**फलबर्हाभ्यामिनः ॥ ७३२ ॥ फलिनः । बर्हिणः ॥**

**मलादिनः ॥ ७३३ ॥ मलीनः । ईमसश्च । मलीमसः ॥**

सुबो०–फलबर्हाभ्यामिनः । आभ्यामिनप्रत्ययः स्यादस्त्यर्थे । फलमस्यास्मिन्वास्ति फलिनः । बर्हमस्याऽस्मिन्वास्ति बर्हिणः । णत्वम् ॥

**हृदयादालुः ॥ ७३४ ॥ हृदयालुः ॥**

सुबो०–हृदयादालुः । हृदयशब्दादालुः प्रत्ययः स्यादस्त्यर्थे । हृदयमस्याऽस्मिन्वास्ति हृदयालुः । पक्षे हृदयी । हृदयिकः । हृदयवान् ॥

**शीतोष्णतृप्रेभ्यस्तदसहने ॥ ७३५ ॥ शीतं न सहते शीतालुः । उष्णालुः । तृप्रं दुःखं न सहते तृप्रालुः ॥**

सुबो०–शीतोष्णतृप्रेभ्यस्तदसहने । एभ्यः आलुप्रत्ययः स्यात् प्रकृत्यर्थाऽसहनेऽर्थे । शीतं न सहते स शीतालुः । उष्णं न सहते उष्णालुः । तृप्रं दुःखं न सहते तृप्रालुः । तृप्रः पुरोडाशः । तृप्रं दुःखमित्यर्थः ॥

हिमादेलुः ॥ ७३६ ॥ हिमं न सहते हिमेलुः ॥

सुबो०–हिमादेलुः । हिमशब्दादेलुप्रत्ययः स्यात्तदसहनेऽर्थे ॥

बलादूलः ॥ ७३७ ॥ बलं न सहते बलूलः ॥

सुबो०–बलादूलः । बलशब्दादूलप्रत्ययः स्यात्तदसहनेऽर्थे ॥

वातात्समूहे च ॥ ७३८ ॥ वातं न सहते तस्य समूहो वा वातूलः ॥

सुबो०–वातात्समूहे च । वातशब्दादूलप्रत्ययः स्यात्तदसहनेऽर्थे समूहेऽर्थे च । बलूलवातूलशब्दावस्त्यर्थे च व्युत्पादितौ ॥

तः पर्वमरुद्भ्याम् ॥ ७३९ ॥ पर्वतः । मरुत्तः ॥

सुबो०–तः पर्वमरुद्भ्याम् । आभ्यां तः प्रत्ययोऽस्त्यर्थे । पर्वाऽस्याऽस्मिन्वास्ति नाम्नो इति नलोपः । पर्वतः । मरुदस्यास्मिन्वास्ति मरुत्तः ॥

ऊर्णाहंशुभंभ्यो युः ॥७४०॥ ऊर्णायुः । अहंयुः । शुभंयुः ॥

सुबो०–ऊर्णाहंशुभंभ्यो युः । एभ्यो युप्रत्ययः स्यादस्त्यर्थे । ऊर्णाऽस्यास्मिन् वाऽस्ति ऊर्णायुः । अत्र निपातनाद्यस्येत्यालोपो न । अहमिति मांतमव्ययमहंकारे । शुभमिति च शुभे । अहंयुरहंकारवान् । शुभंयुः शुभान्वितः ॥

स्वादामिन्नैश्वर्ये ॥ ७४१ ॥ स्वमैश्वर्यमस्यास्मिन्वास्ति स्वामी ॥

सुबो०–स्वादामिन्नैश्वर्ये । ऐश्वर्ये स्वशब्दादामिन्प्रत्ययः स्यादस्त्यर्थे । ईशिता हि ईश्वरस्तस्य भाव ऐश्वर्यम् । ऐश्वर्ये किम् । स्ववान् । स्वं द्रव्यमस्यास्मिन्वाऽस्ति ॥

वातातीसारपिशाचानामिनिः कुक् च ॥ ७४२ ॥ वातकी । अतीसारकी । पिशाचकी ॥

सुबो०–वातातीसारपिशाचानामिनिः कुक् च । एभ्य इनिः प्रत्ययः स्यादस्त्यर्थे । इकार उच्चारणार्थः । एषां कुगागमश्च इनिप्रत्यये । वातोऽस्यास्मिन्वास्ति वातकी । "वातकी वातरोगी स्यात्" इत्यमरः । अतीसारोऽस्यास्मिन्वास्ति अतीसारकी । रोगे चायमिनिरिष्यते । नेह । वातवती गुहा । पिशाचोऽस्याऽस्मिन्वास्ति पिशाचकी ॥

ज्योत्स्नादिभ्योऽण् ॥ ७४३ ॥ ज्योत्स्नः । तामिस्रः । तापसः । सैकतः । शार्करः ॥

सुबो०—ज्योत्स्नादिभ्योऽण् । ज्योत्स्नादिभ्योऽण् स्यादस्त्यर्थे । किंच ज्योत्स्नातमिस्राशृंगिणोर्ज्जस्विनूर्ज्जस्वलगोमिन्मलिनमलीमसा अस्त्यर्थे निपात्यंते । ज्योतिरस्या अस्यां वास्ति ज्योत्स्ना चंद्रप्रभा । ज्योतिषशब्दस्य निपातनादुपधालोपो नप्रत्ययश्च । तमोऽस्याऽस्मिन्वा तमिस्रम् । तमस्शब्दस्योपधाया इत्वं रप्रत्ययश्च । शृंगमस्याऽस्मिन्वास्ति शृंगिणः । अत्र इन्प्रत्ययो निपातनात् । ऊर्जोऽस्यास्मिन्वास्ति ऊर्जस्वी, ऊर्ज्जस्वलः । विनूवलप्रत्ययौ निपातनात् । गौरस्याऽस्मिन् वास्ति गोमी । मिन्प्रत्ययो निपातनात् । मलोऽस्यास्मिन्वास्ति मलिनः । मलीमसः । मलशब्दादिनेमसप्रत्ययौ निपातनादिति । ज्योत्स्नास्यास्मिन्वास्तीत्याणि ज्यौत्स्नः शुक्लपक्षः । तमिस्रमस्याऽस्मिन्वास्ति तामिस्रः कृष्णपक्षो नरकविशेषश्च । " तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चंद्रिकयान्विता । " इत्यमरोक्तौ तु तमिस्रेत्येतदर्दंतं न त्वणंतमिति न विरोधः । तपोऽस्याऽस्मिन्वास्ति तापसः । विन्प्रत्ययोऽपि । तपस्वी । सिकताऽस्यास्मिन्वास्ति सैकतः । इलप्रत्यये सिकतिलः । वतौ तु सिकतावान् । शर्कराऽस्यास्मिन्वास्ति शार्करः । अण् । शार्करिलः । इलः । शर्करावान् । वतुपक्षे प्रत्ययलुक्च भवति । सिकता । शर्करा । " स्त्री शर्करा शर्करिलः शार्करः शर्करावति । देश एवादिमावेवमुन्नेयाः सिकतावति ॥ " इत्यमरः ॥

तत्व०—ज्यौत्स्न इति शुक्लपक्षे । तामिस्रः कृष्णपक्षे नरकविशेषश्च ॥

**ऊषशुषिमुष्कमधुखमुखकुञ्जनगपांशुपाण्डुभ्यो रः ॥७४४ ॥**

**ऊषरः । शुषिरम् । मुष्करः । मधुरः । खरः । मुखरः । कुञ्जरः । नगरः । पांशुरः । पाण्डुरः ॥**

सुबो०—ऊषशुषिमुष्कमधुखमुखकुंजनगपांशुपांडुभ्यो रः । एभ्यो रप्रत्ययः स्यादस्त्यर्थे । ऊषोऽस्यास्मिन्वास्ति ऊषरः । " स्यादूषः क्षारमृत्तिका । ऊषवानूषरः " इत्यमरः । शुषिरस्यास्मिन्वास्ति शुषिरः । शुषिश्छिद्रम् । " वंशादिकं तु शुषिरम् " इत्यमरः । मुष्कोऽस्यास्मिन्वास्ति मुष्करः । मुष्कोऽण्डः । मधु माधुर्यमस्यास्मिन्वास्ति मधुरः । खमस्यास्मिन्वास्ति खरः महत् कंठविवरं खम् । गर्द्दभे रूढोऽयम् । मुखमस्यास्मिन्वास्ति मुखरः वाचालः । कुंजो हस्तिहनुरस्यास्मिन्वास्ति कुंजरः । नगा वृक्षाः पर्वताश्च ते अस्यास्मिन्वा संति नगरम् । जातिशब्दोऽयम् । तेन स्त्रियां जातिलक्षण ईप् । नगरी । पांशू रजोऽस्यास्मिन्वास्ति पांशुरः । पांडुरस्यास्मिन्वास्ति पांडुरः । " हरिणः पांडुरः पांडुः " इत्यमरः ॥

तत्व०—ऊषशुषीति । ऊषा हरिणाः । पांशवः रजांसि । शुषिश्छिद्रम् । कुंजो हस्तिहनुः । नगरमिति । नगाः वृक्षाः पर्वताश्च । जातिशब्दत्वान्नगरीत्यपि । पाण्डुर इति । पांडुः शुक्लो वर्णस्तद्वान् ॥

**कच्छ्वा ह्रस्वत्वं च ॥ ७४५ ॥ कच्छुरः ॥**

सुबो०–कच्छ्वा ह्रस्वत्वं च । कच्छुशब्दाद्रः स्यादस्त्यर्थे । कच्छू इत्यस्य ह्रस्वश्च । कच्छूरस्याऽस्मिन्वास्ति कच्छुरः । कच्छू रोगविशेषः ॥

तत्त्व०–कच्छुर इति । कच्छू रोगविशेषस्तद्वान् ॥

**द्युद्रुभ्यां मः ॥ ७४६ ॥ द्युमः । द्रुमः ॥**

सुबो०–द्युद्रुभ्यां मः । आभ्यां मप्रत्ययः स्यादस्त्यर्थे । द्यौरस्याऽस्मिन्वास्ति द्युमः । दिव उरसे इत्युत्वम् । द्रुः शाखा वृक्षश्च । द्रुरस्यास्मिन्वास्ति द्रुमः । " पलाशी द्रुद्रुमागमाः " इत्यमरः ॥

तत्त्व०–द्युद्रुभ्यां म इति । द्यौरस्यास्तीति । दिव उरस इत्युत्वम् । अव्युत्पन्नोऽपि द्युशब्दो दिनवाच्यस्ति । द्रुर्वृक्षः सोऽस्यास्तीति जनकतयेति द्रुमोऽपि वृक्ष एव ॥

**केशादिभ्यो वः ॥ ७४७ ॥ केशवः । मणिवः । हिरण्यवः ॥**

सुबो०–केशादिभ्यो वः । एभ्यो वः स्यादस्त्यर्थे । केशा अस्याऽस्मिन्वा सन्ति केशवः । केशी । इन् । केशिकः । इकः । केशवान् । वतुः । मणिरस्यास्मिन्वास्ति मणिवः नागविशेषः । हिरण्यमस्याऽस्मिन् वास्ति हिरण्यवो निधिविशेषः ॥

तत्त्व०–केशव इति । प्रशस्ताः केशाः सन्त्यस्येति विग्रहः ॥

**अर्णसो लोपश्च ॥ ७४८ ॥ अर्णवः ॥**

सुबो०–अर्णसो लोपश्च । अर्णस्शब्दाद्वः स्यादस्त्यर्थे सस्य लोपश्च । अर्णो जलं तद्वानर्णवः । अर्णस्वान् वतुः ॥

तत्त्व०–अर्णव इति । अर्णांसि जलानि सन्त्यस्येति ॥

**रजःकृष्यासुतिपरिषद्भ्यो वलः ॥ ७४९ ॥ रजस्वला ॥**

सुबो०–रजःकृष्यासुतिपरिषद्भ्यो वलः । एभ्यो वलप्रत्ययः स्यादस्त्यर्थे । रजोऽस्या अस्यां वास्ति रजस्वला । " रजः स्त्रीकुसुमेऽपि च " इत्यमरः ॥

तत्त्व०–परिषद्वल इति । परितः सीदतीति परिषत् ॥

**कृष्यादीनां वले दीर्घः ॥ ७५० ॥ कृषीवलः । आसुतीवलः । परिषद्वलः ॥**

सुबो०–कृष्यादीनां वले दीर्घः । वलप्रत्यये संज्ञायामेषां दीर्घः स्यात् । कृषिरस्याऽस्मिन्वास्ति कृषीवलः । आसुतिरभिषवः । " मद्यसंधानमासुतिः " इति हैमः । षुञ् अभिषवे क्तिः । आसुतिरस्याऽस्मिस्वास्ति आसुतीवलः शौण्डिकः । परितः सीदतीति परिषत् । प् पर्षदिति पाठातरम् । परिषदस्याऽस्मिन् वास्ति परिषद्वलः पर्षद्वलश्च । " पर्षद्वलान्महाब्रह्मैराटनैकटिकाश्रमान् । " इति भट्टिः ॥

**अन्येभ्योऽपि ॥ ७५१ ॥ भ्रातृवलः । पुत्रवलः । दन्तावलः । बंधुवलः ॥**

सुबो०–अन्येभ्योऽपि । वलप्रत्ययः स्यादस्त्यर्थे । भ्राताऽस्यास्मिन्वास्ति भ्रातृ-

वलः । पुत्रोऽस्याऽस्मिन्वास्ति पुत्रवलः । संज्ञाया अभावान्नेह दीर्घः । दंता अस्याऽस्मिन्वा संति दंतावलो हस्ती । कृष्यादीनामिति दीर्घः ॥

तुंडिबलिवटेर्भः ॥ ७८२ ॥ तुंडिभः । बलिभः । वटिभः ॥

सुबो०—तुंडिबलिवटेर्भः । एभ्यो भप्रत्ययः स्यादस्त्यर्थे । वृद्धा नाभिस्तुंडिः तुंडिरस्याऽस्मिन्वास्ति तुंडिभः । बलिरस्याऽस्मिन्वास्ति बलिभः । वटिरस्याऽस्मिन्वास्ति वटिभः । वल्मीकगृहमित्यर्थः । पामादित्वाद्बलिनोऽपि ॥

एतत्किमिदंयत्तद्भ्यः परिमाणे वतुः ॥ ७८३ ॥

सुबो०—एतत्किमिदंयत्तद्भ्यः परिमाणे वतुः । एभ्यो वतुप्रत्ययः स्यात् परिमाणेऽर्थे । परिमाणमिह परिच्छेदकमात्रम् ॥

तत्त्व०—एतत्किमिदयत्तद्भ्यः परिमाणे वतुरिति । मातोपधादित्यनेनैव सिद्धे परिमाणार्थे वचनम् ॥

यत्तदेतदामावतौ ॥ ७८४ ॥ यावान् । तावान् । एतावान् ॥

सुबो०—यत्तदेतदामावतौ । वतुप्रत्यये परे एषामाकारोऽन्तादेशः स्यात् । यत्परिमाणमस्य यावान् । तत्परिमाणमस्य तावान् । एतत्परिमाणमस्य एतावान् ॥

तत्त्व०—यत्तदेतदामावताविति । यत्तदेतच्छब्दानां वतुप्रत्यये परे अकारोऽन्तादेश इत्यर्थ. । यावानिति । यत् परिमाणमस्येति विग्रहः ॥

किमः किर्वतोर्वस्य यः ॥ ७८५ ॥ इयान् ॥

सुबो०—किमः किर्वतोर्वस्य यः । किम्शब्दस्य किरादेशः स्यात् वतुप्रत्यये वस्य यकारश्च । किं परिमाणमस्य कियान् ॥

इदम इश्वतोर्वस्य यः ॥ ७८६ ॥ इयान् ॥

सुबो०—इदम इश्वतोर्वस्य यः । इदम्शब्दाद्वतुः स्यात्परिमाणेऽर्थे इदम्स्थाने इशादेशश्च । शित्वात्सर्वादेशः । वतुप्रत्ययस्य यकारश्च । इदं परिमाणमस्य स इयान् ॥

तत्त्व०—इदम इशिति । शकारः सर्वादेशार्थः ॥

श्रद्धादेर्लुः ॥ ७८७ ॥ श्रद्धालुः । कृपालुः । दयालुः ॥

सुबो०—श्रद्धादेर्लुः । लुप्रत्ययः स्यादस्त्यर्थे । श्रद्धाऽस्याऽस्मिन्वास्ति श्रद्धालुः । कृपाऽस्याऽस्मिन्वा कृपालुः । दयाऽस्याऽस्मिन् वास्ति दयालुः । स्पृहिगृहिपतिदयिनिद्रातंद्राश्रद्धाशीङ्भ्य इत्यालुप्रत्ययेनापीष्टसिद्धेरिदं सूत्रं चिंत्यम् ॥

औन्नत्ये दन्तादुरः ॥ ७८८ ॥ दन्तुरः ॥

सुबो०—औन्नत्ये दंतादुरः । उन्नते वर्तमानाद्दन्तशब्दादुरप्रत्ययः स्यादस्त्यर्थे । उन्नता दंता संत्यस्य दन्तुरः । औन्नत्ये किम् । दन्तवान् ॥

अस्मायामेधास्रग्भ्यो विनिः ॥ ७८९ ॥ तपस्वी । ओजस्वी । वर्चस्वी । तेजस्वी । वचस्वी । मायावी । मेधावी । स्रग्वी ॥

सुबो०—अस्मायामेधास्रजो विनिः। एभ्यो विन् स्यादस्त्यर्थे पक्षे वतुरपि। तपोऽस्याऽस्मिन् वास्ति तपस्वी। ओजोऽस्याऽस्मिन् वास्ति ओजस्वी। वर्चोऽस्याऽस्मिन्वास्ति वर्चस्वी। तेजोऽस्याऽस्मिन्वास्ति तेजस्वी। वचोऽस्याऽस्मिन्वास्ति वचस्वी। मनोऽस्याऽस्मिन्वास्ति मनस्वी। मायास्याऽस्मिन् मायी, मायिकः। इनिकौ। मेधाऽस्याऽस्मिन्वास्ति मेधावी। स्रगस्याऽस्मिन्वास्तीति चोः कुरित्यनेन सिद्धे परत्वात्प्राप्तं छशषेति षत्वं निराकृत्य दिशामिति कुत्वम्। स्रग्वी॥

तत्त्व०—अस्मायेति। असः असप्रत्ययग्रहणेन तदंतस्य ग्रहणमिति। अस्प्रत्ययांतात्। मायादेश्च विनित्यर्थः॥

## आमयस्य दीर्घश्च ॥ ७६० ॥ आमयावी ॥

सुबो०—आमयस्य दीर्घश्च। अस्मादपि विन् स्यादस्त्यर्थे विन्प्रत्ययेऽस्य दीर्घश्च। आमयोऽस्याऽस्मिन्वास्ति आमयावी॥

## वाचो ग्मिनिः ॥ ७६१ ॥ वाग्मी ॥

सुबो०—वाचो ग्मिनिः। वाच्शब्दात् ग्मिन् प्रत्ययः स्यादस्त्यर्थे। वागस्याऽस्मिन्वास्ति चस्य कुत्वे झबे जशा इति गत्वे वाग्मी। गकारद्वयमस्ति॥

तत्त्व०—वाचो ग्मिनिरिति। गकारो मादित्वव्यावृत्त्यर्थः। तेन गत्वमेव। यद्वा ग् मिन इति छेदः। ग् चादेशो मिन्प्रत्ययः॥

## आलाटौ कुत्सितभाषिणि ॥ ७६२ ॥ वाचालः। वाचाटः ॥

सुबो०—आलाटौ कुत्सितभाषिणि। वाच्शब्दादेतौ स्तः कुत्सितबहुभाषकेऽर्थे। कुत्सितं बहु भाषते वाचालः। वाचाटः। यस्तु सम्यग्बहु भाषते स वाग्मीत्येव॥

तत्त्व०-कुत्सितेति। कुत्सितमनान्वितं भाषितुं शीलमस्य स तथा तस्मिन्नित्यर्थः। प्रत्ययार्थे वाच्य इत्यर्थः॥

## ईषदसमाप्तौ कल्पदेश्यदेशीयाः॥७६३॥ ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः। पटुदेश्यः। विद्वद्देशीयः। पटुदेशीयः॥

सुबो०—ईषदसमाप्तौ कल्पदेश्यदेशीयाः। प्रथमान्तान्नाम्नः आख्यातांताच्चैते स्युरीषदूनेऽर्थे। ईषदसमाप्तौ ये प्रत्ययास्तेष्वभिधेयवदेव लिंगवचने स्तः। तेन गुडकल्पा द्राक्षा। शर्कराकल्पो गुड इति। ईषदूनः सर्वज्ञः सर्वज्ञकल्पः। ईषदूनः पटुः पटुदेश्यः। ईषदूनो विद्वान् वसां स्रंसे इति दत्वं विद्वद्देशीयः। ईषदूनं पचति पचतिकल्पम्। क्रियाप्रधानमाख्यातमिति क्रियायामौत्सर्गिकमेकवचनं क्लीबत्वं च॥

तत्त्व०—ईषदिति। ईषदपरिसमाप्तिः किंचिन्न्यूनत्वे॥

## बहुर्वा उक्तार्थे स च प्रागेव ॥ ७६४ ॥ ईषदूनः पटुः बहुपटुः ॥

सुबो०—बहुर्वा उक्तार्थे स च प्रागेव। ईषदसमाप्तिविशिष्टेऽर्थे प्रथमांतान्नाम्नो बहुप्रत्ययः स्यात् स च प्रकृतेः प्रागेव न तु परतः। लिंगसंख्येऽपि प्रकृतेरेव न

तु तद्विपर्ययः। तेन बहुगुडो द्राक्षा लघु। बहुतृणं नर इत्यादौ न विशेष्यनिघ्नता ॥

तत्त्व०—बहुर्वा उक्तार्थे स च प्रागेवेति। उक्तार्थे किंचिन्न्यूनत्वेऽर्थे बहुप्रत्ययो विकल्पेन भवति स च बहुप्रत्ययः प्रकृतेः प्रागेव न तु परतः। लिंगसंख्ये अपि प्रकृतेरेव। नतु तद्विपर्ययः। तेन बहुगुडो द्राक्षा लघु बहुतृणं नर इत्यादौ न विशेष्यनिघ्नता ॥

**प्रकारे जातीयः ॥ ७६५ ॥ पटुप्रकारः पटुजातीयः ॥**

सुबो०—प्रकारे जातीयः। प्रकारवति जातीयप्रत्ययः स्यात्। सामान्यस्य भेदकः प्रकारः ॥

**कुटीशमीशुण्डाभ्यो रो ह्रस्वत्वे ॥ ७६६॥ ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः ॥**

सुबो०—कुटीशमीशुंडाभ्यो रो ह्रस्वत्वे। एभ्यो रः प्रत्ययो भवति ह्रस्वेऽर्थे। ह्रस्वा कुटीति स्वार्थिकाः प्रकृतिलिंगमतिवर्तते इति पुँल्लिंगतात्र। कुटीरः। ह्रस्वा शमी शमीरः। ह्रस्वा शुंडा शुंडारः ॥

**कुत्वा डुपः ॥ ७६७ ॥ ह्रस्वा कुतूः कुतुपः ॥**

सुबो०—कुत्वा डुपः। कुतूशब्दात् डुपप्रत्ययः स्यात् ह्रस्वेऽर्थे। "कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्।" इत्यमरः ॥

तत्त्व०—कुतुप इति। "कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान् ॥"

**कासूगोणीभ्यां ष्टरः ॥७६८॥ ह्रस्वा कासूः कासूतरी। गोणीतरी ॥**

सुबो०—कासूगोणीभ्यां ष्टरः। आभ्यां ष्टरप्रत्ययः स्यात् ह्रस्वे। षित्वात् ङ्रित इतीप्। ह्रस्वा कासूः कासूतरी। कासूः आयुधविशेषः। ह्रस्वा गोणी गोणीतरी ॥

तत्त्व०—कासूरिति। आयुधविशेषः कासूः सा ह्रस्वेत्यर्थः ॥

**वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे ॥ ७६९॥ तनुर्वत्सः वत्सतरः। उक्षतरः। अश्वतरी। ऋषभतरः ॥**

सुबो०—वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे। एभ्यः ष्टरः स्यात्। तनोर्भावस्तनुत्वम्। न्यूनता। सा च प्रवृत्तिनिमित्तस्यैव प्रत्यासत्तेः। क्वचित्तु तत्सहचरितधर्मान्तराणामपि न्यूनता। तत्र वत्सः प्रथमवयाः प्रथमवयसो न्यूनत्वं नाम वयोऽन्तरप्राप्तिः। उक्षा तरुणवयाः तारुण्यस्य तनुत्वं तृतीयवयःप्राप्तिः। अश्वायामश्वादुत्पन्नोऽश्वः अश्वत्वं च जातिः। तत्सहचरितस्याऽश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यपितृकता। तथा च गर्दभेनाऽश्वायामुत्पादितोऽश्वतरः। तरतमेति पुंवद्भावः। अश्वतरो भारस्य वोढा ऋषभस्तस्य तनुत्वं भारोद्वहने मंदशक्तिता। तद्वांस्तु ऋषभतरः। प्रवृत्तिनिमित्ततनुत्वे एवायम् ॥

तत्त्व०—वत्सतर इति। द्वितीयं वयः प्राप्तः उक्षतरः ॥

**देवतान्तात्तादर्थ्ये यः ॥ ७७० ॥** अग्निदेवतायै इदमग्निदेवत्यम् ॥

सुबो०—देवतांतात्तादर्थ्ये यः । तदर्थं एव तादर्थ्यम् । स्वार्थे ष्यः । अग्निश्चासौ देवता च अग्निदेवता तस्यै ॥

**पादार्घाभ्यां च ॥ ७७१ ॥** पादार्थमुदकं पाद्यम् । अर्घ्यम् ॥

सुबो०—पादार्घाभ्यां च । आभ्यां यः स्यात्तादर्थ्ये । " पाद्यं पादाय वारिणि " इत्यमरः । " मूल्ये पूजाविधौ चार्घः " इत्यमरः । अर्घार्थमुदकमर्घ्यम् ॥

**नवस्य नु आदेशस्त्नतनईनाः प्रत्ययाः स्वार्थे ॥ ७७२ ॥**

नूत्नम् । नूतनम् । नवीनम् ॥

सुबो०—नवस्य नु आदेशस्त्नतनईनाः प्रत्ययाः स्वार्थे । नवशब्दात्स्वार्थे एते स्युर्नवस्थाने नुश्च वा । अव् यस्वरे इत्यव् । नवीनम् ॥

तत्त्व०—नवीनमिति । नवशब्दस्य इन्प्रत्ययः ऊकारस्य वोऽन्यस्वर इत्यवादेशः ॥

**पुराणे प्रान्नश्च ॥ ७७३ ॥** प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ॥

सुबो०—पुराणे प्रान्नश्च । प्रात्पुराणेऽर्थे नप्रत्ययः स्यात् चादुक्ताः त्नतनईनाः ॥

**अतिथेर्ञ्यः ॥ ७७४ ॥** अतिथय इदमातिथ्यम् ॥

सुबो०—अतिथेर्ञ्यः । अतिथिशब्दात्तादर्थ्ये ञ्यः स्यात् ॥

**प्रशंसायां रूपः ॥ ७७५ ॥** प्रशस्तो वैयाकरणो वैयाकरणरूपः ॥

सुबो०—प्रशंसायां रूपः । प्रथमान्तान्नाम्नः आख्यातांताच्च रूपप्रत्ययः स्यात् प्रशंसायामर्थे । प्रकृत्यर्थस्यापरिपूर्णतेह प्रशंसा । न तु स्तुतिः। तेनेहापि रूपप्रत्ययः। चोररूपोऽयं यदक्ष्णोरप्यंजनं हरति । गुप्तवस्तुनोऽपहरणेन चौर्य्यं परिपूर्यते । प्रशस्तं पचति पचतिरूपम् ॥

**कुत्सायां पाशः ॥ ७७६ ॥** कुत्सितो भिषक् भिषक्पाशः ॥

सुबो०—कुत्सायां पाशः । प्रथमांतान्नाम्नः पाशप्रत्ययः स्यात् कुत्सायामर्थे ॥

**भूतपूर्वे चरट् ॥ ७७७ ॥** पूर्वं दृष्टो दृष्टचरः । दृष्टचरी । आढ्यचरी ॥

सुबो०—भूतपूर्वे चरट् । पूर्वं भूतो भूतपूर्वस्तत्र वर्तमानात्प्रथमांताच्चरट् स्यात् । टित्वादीप् । भूतपूर्वाऽऽढ्या च आढ्यचरी । तरतमचराडिति पुंवत् ॥

तत्त्व०—भूतपूर्व इति । पूर्वं भूतः । प्राप्त इति यावत् । टित्वादीप् ॥

**षष्ठ्या रूप्य च ॥ ७७८ ॥**

सुबो०—षष्ठ्या रूप्य च । षष्ठ्यंताद्भूतपूर्वेऽर्थे रूप्यप्रत्ययो वा पक्षे चरट् । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः । कृष्णचरः ॥

**प्राचुर्यविकारप्राधान्यादिषु मयट् ॥ ७७९॥** अन्नं प्रचुरमत्रान्नमयो यज्ञः । मृन्मयो घटः । स्त्रीमयो जाल्मः । अमृतं स्वरूपमस्यामृतमयश्चन्द्रः । आम्रस्य विकारोऽवयवो वा आम्रमयम् । शरमयम् ॥

सुबो०—प्राचुर्यविकारप्राधान्यादिषु मयट् । नाम्न एष्वर्थेषु मयट् स्यात् प्राचुर्ये । अन्नमयो यज्ञः । विशेष्यनिघ्नतात्र । विकारे । मृदो विकारो मृन्मयः । मयट्प्रत्ययः । ञमे जवस्यापीति नः । प्राधान्ये स्त्रीप्रधानमस्य स्त्रीमयः । आदिशब्दादन्येष्वप्यर्थेषु मयट् यथा । अमृतमयोऽत्र स्वरूपे मयट् । आम्रमयमत्र विकारावयवयोर्मयट् । शराणां विकारोऽवयवो वा शरमयम् ॥

तत्त्व०—प्राचुर्येति । प्रचुरस्य भावः प्राचुर्यं बाहुल्यम् । प्राचुर्यं विकारश्च प्राधान्यादिश्च ते तेषु । जाल्मोऽसमीक्ष्यकारी । अमृतमय इति । आदिपदात्ताद्रूप्येऽपि ॥

**गोः पुरीषे ॥ ७८० ॥** गोमयम् ॥

सुबो०—गोः पुरीषे । गोशब्दान्मयट् स्यात् पुरीषेऽर्थे । गोः पुरीषं गोमयम् । पुरीषे किम् । गव्यम् । पयसो ण्यः ॥

**न सन्धिय्वोर्युट् च ॥ ७८१ ॥** संधिजयोर्यकारवकारयोः सम्बन्धिनः स्वरस्य न वृद्धिः ॥ किन्तु तयोर्युडागमो यस्येट् वस्योट् पश्चाद्वृद्धिः । व्याकरणमधीते वेद वा वैयाकरणः । स्वश्वं वेद सौवश्वः । व्यासस्यापत्यं वैयासकिः ॥

सुबो०—न संधिय्वोर्युट् च । संधानं संधिः नञ्कीति किप्रत्ययः । संधौ जातौ संधिजौ । य् च व् च य्वौ संधिजौ च तौ य्वौ च संधिय्वौ । शाकपार्थिवादित्वान्मध्यमपदलोपः । माधवस्तु संधेर्य्वाविति षष्ठीतत्पुरुषमाह । इश्च उश्चानयोः । समाहारो यु युसहितः ट् युट् । द्वंद्वांते श्रूयमाणत्वात् टकारः प्रत्येकं संबध्यते । इट् उट् इत्यर्थः । वैयाकरणः । अण् इट् वृद्धिः । सुष्ठु अश्वः स्वश्वः । स्वश्वं वेत्तीति सौवश्वः । अण् उट् वृद्धी । वैयासकिः । अपत्ये इञ् । सुधातृव्यासेत्यकङ् इट्वृद्धी ॥

तत्त्व०—न संधिय्वोर्युट् चेति । संधाने पूर्वपरयोरव्यवधानेनोच्चारणं संधिः । नञ्की इति कि संधौ जातौ संधिजौ । [illegible] इति [illegible] । य् च व् च य्वौ संधिजौ च तौ य्वौ शाकपार्थिवादिः । इश्च उश्चानयोः समाहारो यु तेन सह ट् युट् । द्वंद्वांते श्रूयमाणत्वात् प्रत्येकं संबन्धः । इट् उट् इति । सौरियतिरित्यादिषु [illegible] न संधिरिति नाशंकनीयम् । युट्करणसामर्थ्यात् । अन्यथा सवर्णदीर्घेण तद्विधाने व्यर्थं [illegible] । [illegible] सवर्णदीर्घ [illegible] न भविष्यतीति वाच्यम् । नञो वैयर्थ्यप्रसंगात् । युटः पदस्य [illegible] निषेधः । उत्सर्गसमानदेशा अपवादा भवन्तीति न्यायात् । दध्यश्व इत्यादौ न दधिप्रियोऽश्वो दध्य[illegible] । [illegible] व्याहारव्यायामप्रभृतीनां न निषेधयुटौ ॥

**द्वारादीनां च ॥ ७८२ ॥** द्वारादीनां सम्बन्धिनः स्वरस्य न वृद्धिः किन्तु तयोर्युडागमः ॥ द्वारे नियुक्तो दौवारिकः । व्यल्कसस्येदं वैयल्कसम् । सौवरम् । शौवम् । सौवग्रामिकः । नैयग्रोधम् । सौवादुमृदवम् । शौवस्तिकम् ॥

सुबो०–द्वारादीनां च । द्वारादीनामसंधिजयोर्यकारवकारयोरपि युट् स्यात् पश्चाद्वृद्धिश्च । यस्य इट् वस्य उट् इत्यर्थः । दौवारिकः । नियुक्तेऽर्थे इकः । उट्वृद्धी । वैयल्कसम् । इदमर्थेऽण् इट्वृद्धी । स्वरस्येदं सौवरम् । उट्वृद्धी । स्वग्रामे भवः सौवग्रामिकः । इकः उट्वृद्धी । न्यग्रोधस्येदं नैयग्रोधम् । अण् । इट्वृद्धी । स्वादु च तत् मृदु च स्वादुमृदु स्वादुमृदुन इदं सौवादुमृदवम् । अण् । वोऽव्यस्वरे इत्यव् । उट्वृद्धी । श्वो भवं शौवस्तिकं तिकण् उट्वृद्धी । श्वापदस्येदं निपातनात्पूर्वपदस्य दीर्घः अण् वा उट्वृद्धी । श्वापदम् । शौवापदम् ॥

तत्त्व०–द्वारादीनां संधिजत्वाभावेऽपि तौ । वस्तुतस्त्वद्वारित्येव सुवचनम् । अतशब्दश्च पदातपरतया व्याख्येयः। अनत इत्यादौ तथैव व्याख्यानात् । नुडादिवद्युडेव तु नागमः व्याख्यानतो विशेषप्रतीतेः । वैयाकरण इति । कारकादित्यण् । यकारात्पूर्वमिट् । तस्य पश्चाद् वृद्धिः। सौवरमिति । स्वरस्येदम् । शौवमिति । शुन इदम् । सौवग्रामिक इति । स्वग्रामे भवः । सौवादमृदवमिति स्वादु च तत् मृदु च तस्येदम् । शौवस्तिकमिति । श्वोभवम् । श्वसस्तिकन् ॥

**इतो जातार्थे ॥ ७८३ ॥** लज्जा जातास्य लज्जितः । फलितः । तारकितः ॥

सुबो०–इतो जातार्थे । प्रथमांतान्नाम्नोऽस्य जातमित्यर्थे इतः प्रत्ययः स्यात् । यस्य लोप इत्यालोपः । लज्जितः । फलानि जातान्यस्य फलितः । त्रपा जाताऽस्य त्रपितः । तारका जाता अस्य तारकितं नभः । एवं पुष्पितम् । पुलकितम् । रोमांचितम् ॥

तत्त्व०–इतो जातार्थ इति । अस्य जातमित्यर्थे इत इत्यर्थः ॥

**तरतमेयस्विष्ठाः प्रकर्षे ॥ ७८४ ॥** अतिशयेन शुक्लः शुक्लतरः । शुक्लतमः ॥

सुबो०–तरतमेयस्विष्ठाः प्रकर्षे । तरश्च तमश्च ईयसुश्च इष्ठश्च ते तरतमेयस्विष्ठाः । प्रकर्ष इति प्रकृत्यर्थे विशेषणम् । प्रकर्षणं प्रकर्षश्च नाधिक्यं किंत्वभिभवो मतः । यद्यपि कृषिः केवलो विलेखने तथापि प्रपूर्वोऽभिभवेऽर्थे । यद्यपि द्रव्यस्य स्वतः प्रकर्षो न तथापि गुणप्रकर्षात् प्रकर्षो भवति । उक्तं च । "द्रव्यस्याऽव्यपदेशस्य य उपादीयते गुणः । भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते ॥" धर्मयोगं विना व्यपदेष्टुमशक्यस्य द्रव्यस्य व्यपदेशाय यो भेदको गुण उपादीयते प्रत्ययेन

तस्य प्रकर्षोऽभिधीयते । गुणक्रियाजातिसंज्ञाभेदेन चतुष्टयीशब्दानां प्रवृत्तिः । तत्र गुणक्रिययोः प्रवृत्तिनिमित्तयोस्तत्प्रकर्षे प्रत्ययः । जातिशब्देभ्यस्तु जातेः सर्वत्रैकरूपत्वेन प्रकर्षाभावात्तत्सहचारितायैवाह । दोहादयो धर्मास्तत्प्रकर्षे प्रत्ययः । संज्ञाशब्देषु प्रकर्षो नास्ति । शब्दरूपस्यैव प्रवृत्तिनिमित्तत्वात् । तस्य च सर्वत्र तुल्यत्वात् । गुणशब्दो यथा । यस्य सामान्यतः श्वेतो गुणः स शुक्लः । यस्य तदपेक्षयाधिकः स शुक्लतरः । यस्य ताभ्यामत्याधिकः स शुक्लतमः । यः किंचिज्जानाति स पटुः । ततोऽधिकं जानाति स पटुतरः । ततोऽप्यधिकं स पटुतमः । क्रियाशब्दो यथा । यो विलंबेन पचति स पाचकः । यस्तु ततः किंचिच्छीघ्रं पचति च पाचकतरः । यस्त्वतिशीघ्रं पचति पाचकतमः । जातिशब्दो यथा । गौरयं हलं वहति । गोतरोऽयं हलं शकटं च वहति । गोतमोऽयं तौ गोणीं च वहति । इष्ठेयसुप्रत्ययौ गुणवचनादेव संख्यापरिमाणप्रमाणोन्मानवाचिभ्यो न तरादयः । संख्या एकादिः । परिमाणं कुडवद्रोणादि । प्रमाणं हस्तवितस्त्यादि । उन्मानं तुलादिः । उक्तं च । " ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्याबाह्यं तु सर्वतः " ॥

तत्त्व०—तरतमेयस्विष्ठा इति । तरश्च तमश्च ईयसुश्च इष्ठश्च ते । प्रकर्षेण प्रकर्षः प्रकर्षश्चात्र नाधिक्यं किंत्वभिभवो मतः । यद्यपि केवलः कृपिर्विलेखनार्थस्तस्याप्युपसर्गवशादभिभवार्थोऽपि । प्रकर्षस्य सजातीयप्रतियोगिकत्वात्संज्ञाजातिवाचिकयोस्तदभावान्न तरादयः । तथा संख्यापरिमाणप्रमाणोन्मानवाचिभ्यो न । उक्तं च । "ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्याबाह्यस्तु सर्वतः॥" ऊर्ध्वमानं तुला । परिमाणं द्रोणादिः । प्रमाणं हस्तवितस्त्यादिः । संख्या एकद्वावित्यादिः । यद्यपि सामान्येन तरादिविधानं तथापि एकस्य द्वयोश्च प्रकर्षे तरेयसू । बहूनां तमेष्ठाविति विवेकः । याचकादिभ्यस्तु ईयस्विष्ठौ वानभिधानात् ॥

**ईयस्विष्ठौ ङितौ ॥ ७८५ ॥** अतिशयेन लघुर्लघीयान् । लघिष्ठः ॥

सुबो०—ईयस्विष्ठौ ङितौ । एतौ ङित्संज्ञकौ स्तः । अतिशयेन लघु ईयसु टिलोपे उदित्वान्नुम् । न्सम्महत इति दीर्घः । सिलोपसंयोगांतलोपौ । लघीयान् । लघिष्ठः । इष्ठः ॥

**गुर्वादेरिष्ठेमेयस्सु गरादिष्टचलोपश्च ॥७८६॥** गुरोर्भावो गरिमा। अतिशयेन गुरुर्गरिष्ठः, गरीयान् । प्रियस्य भावः प्रेमा । अतिशयेन प्रियः प्रेष्ठः, प्रेयान् । अतिशयेन स्थूलः स्थविष्ठः, स्थवीयान् । अतिशयेन प्रशस्यः श्रेष्ठः, श्रेयान् । दीर्घः । द्राघिष्ठः, द्राघीयान् । स्थिरः । स्थेष्ठः, स्थेयान् । स्फिरः । स्फेष्ठः, स्फेयान् । उरुः । वरिष्ठः, वरीयान् । बहुलः । बंहिष्ठः, बंहीयान् । वृद्धः । वर्षिष्ठः,

वर्षीयान् । तृप्रः। त्रपिष्ठः, त्रपीयान् । वृन्दारकः। वृन्दिष्ठः, वृन्दीयान् । दूरः । दविष्ठः, दवीयान् । युवा । यविष्ठः, यवीयान् ॥

सुबो०–गुर्वादेरिष्ठेमेयस्सु गरादिष्टचलोपश्च । गुरु १ प्रिय २ स्थूल ३ प्रशस्य ४ दीर्घ ५ स्थिर ६ स्फिर ७ गुरु ८ बहुल ९ वृद्ध १० तृप्र ११ वृंदारक १२ दूर १३ युवन् १४ अल्प १५ ह्रस्व १६ क्षिप्र १७ क्षुद्र १८ अंतिक १९ बाढ २० गुर्वादयः । गर् रांतः । प्र अदंतः । स्थो ओदन्तः । श्र अदंतः । द्राघ अदंतः । स्थ अदंतः । स्फ अदंतः । वर् रान्तः । बंह अदंतः । वर्ष् षांतः । त्रप् पांतः । वृंद अदंतः । दो ओदन्तः । यो ओदन्तः । अल्प् पांतः । ह्रस् सांतः । क्षेप् पांतः । क्षोद् दांतः । नेद् अदंतः । साध अदंतः । एते गरादयः। एषामेकस्वराणां टिलोपो यस्य लोप इत्यलोपश्च न । द्विस्वराणां तु यस्य लोपो इत्यलोपो भवत्येव । गरिमा। इमन् । गरिष्ठः । इष्ठः । गरीयान् । ईयसुः । स्त्रियां तु उगित इतीप् । गरीयसी । प्रेमा । ईमन् । प्रेष्ठः । इष्ठः । प्रेयान् । ईयसुः । स्थविष्ठः । इष्ठः । स्थवीयान् । ईयसुः । श्रेष्ठः । इष्ठः । श्रेयान् । ईयसुः । द्राघिष्ठः । यस्य लोप इत्यलोपः । इष्ठः। द्राघीयान् । ईयसुः । स्थेष्ठः । इष्ठः । स्थीयान् । ईयसुः । अतिशयेन स्फिरः । "भूर्यदभ्र पुरु स्फिरम्" इति हैमः । स्फेष्ठः । इष्ठः । स्फेयान् । ईयसुः । अतिशयेन उरुः वरिष्ठः । इष्ठः । वरीयान् । ईयसुः । अतिशयेन बहुलः । यस्येत्यलोपः । बंहिष्ठः । इष्ठः । बंहीयान् । ईयसुः । अतिशयेन वृद्धः वर्षिष्ठः । इष्ठः । वर्षीयान् । ईयसुः । अतिशयेन तृप्रः पुरोडाशः तृप्रं दुःखम् । त्रपिष्ठः । इष्ठः । त्रपीयान् । ईयसुः । अतिशयेन वृंदारकः । "वृंदारकौ रूपिमुख्यौ" इत्यमरः । यस्येत्यलोपः । वंहिष्ठः । इष्ठः । वंहीयान् । ईयसुः । अतिशयेन दूरः दविष्ठः । इष्ठः । दवीयान् । ईयसुः । अतिशयेन युवा यविष्ठः । इष्ठः । यवीयान् । ईयसुः ॥

तत्त्व०–टचलोपश्चेति । टेरलोपष्टचलोपः । ईयस्विष्ठयोर्डित्वाट्टिलोपे प्राप्ते निषेधः । कल्पादिप्रपंच एवैतानीति बोध्यम् ॥

युवाल्पयोः कन् वा ॥ ७८७ ॥ कनिष्ठः, कनीयान् । अल्पिष्ठः, अल्पीयान् । कनिष्ठः, कनीयान् । ह्रस्वः । ह्रसिष्ठः, ह्रसीयान् । क्षिप्रः । क्षेपिष्ठः, क्षेपीयान् । क्षुद्रः, क्षोदीयान् । अन्तिकः । नेदिष्ठः, नेदीयान् । बाढः। साधिष्ठः, साधीयान् ॥

सुबो०–युवाल्पयोः कन्वा । एतयोः कनादेशो वा स्यात् इष्ठेयस्वोः परतः । कनिष्ठः । इष्ठः । कनीयान् । ईयसुः । अतिशयेनाल्पः अल्पिष्ठः । इष्ठः । अल्पीयान् । ईयसुः । कनिष्ठः । कनीयान् । अतिशयेन ह्रस्वः । ह्रसिष्ठः । इष्ठः । ह्रसीयान् । ईयसुः । अतिशयेन क्षिप्रः क्षेपिष्ठः । इष्ठः । क्षेपीयान् । ईयसुः । अतिशयेन क्षुद्रः क्षोदिष्ठः ।

इष्ठः । क्षोदीयान् । ईयसुः । अतिशयेनांतिकः यस्येत्यलोपः । नेदिष्ठः । इष्ठः । नेदीयान् । ईयसुः । अतिशयेन बाढः यस्येत्यलोपः । साधिष्ठः । इष्ठः । साधीयान् । ईयसुः ॥

**वृद्धप्रशस्ययोर्वा ॥ ७८८ ॥**

सुबो०—वृद्धप्रशस्ययोर्वा । ज्या स्यादिष्ठेयस्वोः परतः ॥

**ईलोपो ज्याशब्दादीयसः ॥७८९ ॥** ज्याशब्दात्परस्येयस ईकारस्य लोपः ॥ अतिशयेन वृद्धः प्रशस्यो वा । ज्यायान्, ज्येष्ठः ॥

सुबो०—ईलोपो ज्याशब्दादीयसः । ईयसः किम् । ज्येष्ठः । प्रियोरुबहुलगुरुदीर्घाणां लोहितादित्वादिमन् । प्रेमेत्यादि ॥

तत्त्व०—ईलोपो ज्याशब्दादिति । आदेशादित्यर्थः प्रकरणात् ॥

**बहोरिष्ठेर्यिः ॥ ७९० ॥** बहोरुत्तरस्येकारस्य यिरादेशो भवति ॥

सुबो०—बहोरिष्ठेर्यिः । इष्ठेति लुप्तषष्ठीकं पदम् । बहुशब्दादिष्ठप्रत्ययेकारस्य यिः स्यात् । ईयसुप्रत्यये परे ईकारस्य लोपश्च ॥

तत्त्व०—बहोरिति । इष्ठस्य इष्ठेति लुप्तषष्ठीकमित्याशयेनाह । बहोरुत्तरस्येष्ठस्येकारस्येति ॥

**बहोर्भूश्च ॥ ७९१ ॥** भूयिष्ठः, भूयान् ॥

सुबो०—बहोर्भूश्च । बहोः स्थाने भूः स्यादिष्ठेयस्वोः परतः । अतिशयेन बहुः भूयिष्ठः । इष्ठः । भूयान् । ईयसुः ॥

**विन्मतोर्लुक् ॥ ७९२ ॥**

सुबो०—विन्मतोर्लुक् । विनो मतोश्च लुक् स्यादिष्ठेयस्वोः परतः । मतुग्रहणं वतोरप्युपलक्षणं बोध्यम् । अतिशयेन स्रग्वी स्रजिष्ठः, स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः, त्वचीयान् ॥

**किमोऽव्ययादाख्याताच्च तरतमयोराम्वद्रव्यप्रकर्षे ॥ ७९३ ॥** किंतराम् । किन्तमाम् । कुतस्तराम् । कुतस्तमाम् । उच्चैस्तरां गायति । उच्चैस्तमाम् । पचतितराम् । पचतितमाम् । पठतितराम् । पठतितमाम् । द्रव्यप्रकर्षे तु । उच्चैस्तमस्तरुः ॥

सुबो०—किमोऽव्ययादाख्याताच्च तरतमयोराम्वद्रव्यप्रकर्षे । किमव्ययाख्यातेभ्यः । परौ यौ तरतमौ तदंतेभ्य आमु स्यात् न तु द्रव्यप्रकर्षे । उकार उच्चारणार्थः । निरनुबंधग्रहणे न सानुबंधस्येति परिभाषया लुङ्विधौ नास्य ग्रहणम् । अन्यथा पचतितराणामिति स्यात् ॥

तत्त्व०-किमोऽव्ययादाख्याताच्च तरतमयोराम्वद्रव्यप्रकर्षे इति । आमंतस्य वत्वाद्यंतत्वादव्ययत्वं बोध्यम् । तेन पचतितरामित्यादौ विभक्तेर्लुक् ॥

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ७९४ ॥** जानुदघ्नम् । शिरोद्वयसम् । पुरुषमात्रम् ॥

सुबो०-प्रमाणे दघ्नट्द्वयसट्मात्रटः । प्रथमान्तान्नाम्नः तत्प्रमाणमस्येत्यर्थे एते स्युः । आयामस्तु प्रमाणं स्यादिति नेह गृह्यते किंतु प्रमाणमिह परिच्छेदकमात्रं तत्र मात्रट् । आद्यौ तूर्ध्वमान एव भवतः तथैव वृद्धैः स्वीकृतत्वात् । ष्ट्रित इति स्त्रियामीप् । जानुप्रमाणमस्य जानुदघ्नम् । शिरः प्रमाणमस्य शिरोद्वयसम् । पुरुषः प्रमाणमस्य पुरुषमात्रं जलम् ॥

तत्त्व०-प्रमाणे इति । अत्र च प्रमाणशब्देन परिच्छेदकमात्रं तत्र मात्रट् । द्वयसट्दघ्नटौ तूर्ध्वमान एव नतु तिर्यङ्मानादाविति विवेकः ॥

**पुरुषहस्तिभ्यामण् च ॥ ७९५ ॥** पौरुषम् । हास्तिनम् ॥

सुबो०-पुरुषहस्तिभ्यामण् च । आभ्यां प्रमाणेऽर्थेऽणपि स्यात् ॥

तत्त्व०-हास्तिनमिति । हस्ती प्रमाणमस्येति विग्रहः । नो वेत्यत्र वेत्यस्य व्यवस्थितत्वाट्टिलोपादि न ॥

**वत्वन्तात्स्वार्थे द्वयसट्मात्रटौ ॥ ७९६ ॥** तावद्द्वयसम् । तावन्मात्रम् ॥

सुबो०-वत्वंतात्स्वार्थे द्वयसट्मात्रटौ । वतुप्रत्ययांतात्प्रकृत्यर्थे एतौ स्तः । तावदेव तावद्द्वयसम् ॥

तत्त्व०-तावद्द्वयसमिति । तावदेवेत्यर्थः ॥

**द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ ॥ ७९७ ॥** भवतोः काण्वः कतरः । भवतां तांत्रिकः कतमः । भवतोर्यतरस्तार्किकः ततर उद्गृह्णातु ॥

सुबो०-द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ । किमूयत्तदेकेभ्यो द्वयोर्मध्ये एकस्य निर्द्धारणे डतरः । बहूनां मध्ये एकस्य निर्द्धारणे डतमश्च स्यात् । द्वयोर्बहूनामिति निर्द्धारणे षष्ठी । निर्द्धार्यमाणवाचिभ्य एवैतावभिधानस्वभावात् । कतरः काण्व इति जात्या निर्द्धारणम् । तंत्रमधीते वेत्ति वा तांत्रिकः। कतम इति गुणेन निर्द्धारणम् । तर्कमधीते वेति वा तार्किको यतर इति गुणेन निर्द्धारणम् । ततरस्तर्कमुद्गृह्णातु । कतरोऽध्यापक इति क्रियया निर्द्धारणम् । कतरो देवदत्त इति संज्ञया निर्द्धारणम् । एवं यतमः । ततमः । अनयोरेकतरो मैत्रः । एषामेकतमः । पक्षे किंशब्दस्य कः । यच्छब्दस्य यः । तद्शब्दस्य सः । आख्याताव्यये त्यक्प्रत्यये तु किमः कः । यकः । सकः । कक इति तु नोक्तमकसहितस्यापि किमो भाष्ये कादेशविधानात् ॥

तत्त्व०—द्वयोरित्यादि । द्वयोर्मध्ये एकस्य निर्द्धारणे डतरः । बहूनां मध्ये एकस्य निर्द्धारणे डतम इत्यर्थः। कतर इति । डित्वाट्टिलोपः ॥

**संख्येयविशेषावधारणे द्वेस्तीयः ॥ ७९८ ॥ द्वयोः पूरणे द्वितीयः ॥**

सुबो०—संख्येयविशेषावधारणे द्वेस्तीयः। संख्यातुं योग्यः संख्येयः । विशेषेणावधारणं विशेषावधारणम् । संख्येयस्य विशेषावधारणं संख्येयविशेषावधारणं तस्मिन्नर्थे द्विशब्दात्तीयप्रत्ययः स्यात् पूरणे इत्यधिकारोऽयम् ॥

तत्त्व०—संख्येयेति । संख्यातुमर्हं सख्येयम् । तस्य विशेषस्तत्पूरकस्तस्यावधारणे इत्यर्थः ॥

**त्रेस्तृ च ॥ ७९९ ॥ तृतीयः ॥**

सुबो०—त्रेस्तृ च । त्रिशब्दात्तीयः स्यात् त्रेः स्थाने तृ चादेशः। त्रयाणां संख्यापूरणः तृतीयः ॥

तत्त्व०—त्रेस्तृ चेति । संप्रसारणमिति विहाय तृ चेत्युक्तिस्तु लाघवाय वस्तुतस्तु तृ चेत्युक्तौ तृ इत्यस्य प्रत्ययांतरत्वशंकानिराकरणाय तदुक्तिः ॥

**षट्कतिकतिपयचतुर्भ्यस्थट् ॥८००॥ षष्ठः । कतिथः । कतिपयथः । चतुर्थः ॥**

सुबो०—षट्कतिकतिपयचतुर्भ्यस्थट् । एभ्यस्थट् स्यादुक्तेऽर्थे । षण्णां पूरणः षष्ठः । कतीनां पूरणः कतिथः । कतिपयानां पूरणः कतिपयथः । चतुर्णां पूरणः चतुर्थः । टित्त्वात् स्त्रियामीप् । युष्मदस्मदोः षष्ठीचतुर्थीति निर्देशात् । षष्ठे षकारस्य जश्त्वचतुर्थे रेफस्य विसर्गश्च न ॥

तत्त्व०—षष्ठ इति । कत्यादित्वादुत्वाभावः एव चतुर्थ इत्यत्रापि विसर्गप्रसंगः ॥

**चतुरो ययौ चस्य चलोपः ॥ ८०१ ॥ तुर्यः । तुरीयः ॥**

सुबो०—चतुरो ययौ चस्य चलोपः । चतुरशब्दात् य ईय एतौ स्तः। चकाराकारयोर्लोपश्च । चतुर्णां पूरणः तुर्यः, तुरीयः ॥

तत्त्व०—तुर्य इति । चतुर्णां पूरण इति विग्रहः ॥

**पञ्चादेर्मट् ॥ ८०२ ॥ पञ्चमः । सप्तमः ॥**

सुबो०—पंचादेर्मट् । पंचप्रभृतिभ्यो मट् स्यात् । पंचानां पूरणः नाम्नो नो लोपशिति नलोपः । पंचमः । सप्तानां पूरणः सप्तमः । अष्टानां पूरणः अष्टमः । नवानां पूरणः नवमः । दशानां पूरणः दशमः । टित्वात् स्त्रियामीप् । दशमी ॥

**एकादशादेर्डट् ॥ ८०३ ॥ एकादशः । द्वादशः ॥**

सुबो०—एकादशादेर्डट् । एकादशशब्दप्रभृतिभ्यो डट् स्यात् डित्वाट्टिलोपः टित्वादीप् । एकश्च दश चेति सह्यादेरित्यात्वं एकादशानां पूरणः एकादशः । द्वौ च दश चेति द्व्यधिका दशेति वा ॥

तत्त्व०–एकादश इति । एकादशादेरिति निर्देशादेकशब्दस्यात्वम् ॥

**द्व्यष्टनोरात्वं संख्यायामुत्तरपदे ॥ ८०४ ॥ अष्टादशः ॥**

सुबो०–द्व्यष्टनोरात्वं संख्यायामुत्तरपदे । एतयोरात्वं स्यात् बहुव्रीहौ । अशीतिपरे च न । द्वादशः । बहुव्रीहौ किम् । द्विरावृत्ता दशेति सुप्रत्ययार्थे बहुव्रीहिः । द्विदशः । डप्रत्ययः । अशीतिपरे किम् । द्व्यशीतिः । प्राक्शताद्वक्तव्यम् । नेह । द्विशतम् । द्विसहस्रम् । द्वादशानां पूरणः द्वादशः ॥

**त्रेस्त्रयस् ॥ ८०५ ॥ त्रयोदशः । चतुर्दशः । पञ्चदशः । षोडशः । सप्तदशः ॥**

सुबो०–त्रेस्त्रयस् । त्रिशब्दस्य त्रयस् स्यात् बहुव्रीहौ । अशीतिपरे च न । त्रयश्च दश चेति त्रयोदशः । बहुव्रीहौ तु त्रिर्दशेति त्रिदशाः सुप्रत्ययाऽर्थे बहुव्रीहिः । अशीतौ तु त्र्यशीतिः । प्राक्शतादित्येव । त्रिशतम् । त्रिसहस्रम् । त्रयोदशानां पूरणः त्रयोदशः । चतुर्दशानां पूरणः चतुर्दशः । पंचदशानां पूरणः पंचदशः । षोडशानां पूरणः षोडशः । सप्तदशानां पूरणः सप्तदशः । अष्टादशानां पूरणः अष्टादशः ॥

**विंशत्यादेर्वा तमट् ॥८०६॥ विंशतितमः । एकेन ऊना विंशतिः एकोनविंशतिः । एकोनविंशतेः संख्यापूरक एकोनविंशतितमः ॥**

सुबो०–विंशत्यादेर्वा तमट् । विंशतिप्रभृतिभ्यो वा तमट् स्यात् । पक्षे एकादशादेरिति डट् । टित्वादीप् । डट्प्रत्यये तु एकोनविंशतेः पूरणः ॥

**विंशतेस्तिलोपो डिति ॥ ८०७ ॥ विंशः । त्रिंशत्तमः । त्रिंशः । द्वाभ्यामधिका अशीतिर्द्व्यशीतिः । द्व्यशीतेः संख्यापूरको द्व्यशीतितमः । द्विचत्वारिंशत्तमः । पञ्चाशत्तमः । षष्टेः संख्यापूरणः षष्टितमः । सप्ततितमः । नवतितमः ॥**

सुबो०–विंशतेस्तिलोपो डिति । विंशतिशब्दस्य ति इत्यस्य लोपः स्यात् डिति प्रत्यये । एकोनविंशः । तमटि एकोनविंशतितमः । विंशतेः पूरणः विंशतितमः । डति तु विंशः । एकविंशतेः पूरणः एकविंशतितमः, एकविंशः । एवं द्वाविंशतितमः, द्वाविंशः । त्रयोविंशतितमः, त्रयोविंशः । चतुर्विंशतितमः, चतुर्विंशः । पंचविंशतितमः, पंचविंशः । षड्विंशतितमः, षड्विंशः । सप्तविंशतितमः, सप्तविंशः । अष्टाविंशतितमः, अष्टाविंशः । किंच पंक्तिविंशतित्रिंशच्चत्वारिंशत्पंचाशत्षष्टिसप्तत्यशीतिनवतिशतमेते निपाते सिद्धाः। एकोनत्रिंशतः पूरणः एकोनत्रिंशत्तमः, एकोनत्रिंशः । त्रिंशतः पूरणः त्रिंशत्तमः, त्रिंशः । एवं एकत्रिंशत्तमः, एकत्रिंशः ।

द्वात्रिंशत्तमः, द्वात्रिंशः । त्रयस्त्रिंशत्तमः, त्रयस्त्रिंशः । चतुस्त्रिंशत्तमः, चतुस्त्रिंशः । पंचत्रिंशत्तमः, पंचत्रिंशः । षट्त्रिंशत्तमः, षट्त्रिंशः । सप्तत्रिंशत्तमः, सप्तत्रिंशः । अष्टात्रिंशत्तमः, अष्टात्रिंशः । एकोनचत्वारिंशत्तमः, एकोनचत्वारिंशः । द्व्यष्टनोरात्वं वा । त्रेस्त्रयश्च वा चत्वारिंशत्प्रभृतौ परे । चत्वारिंशत्तमः, चत्वारिंशः । एकचत्वारिंशत्तमः, एकचत्वारिंशः । एवं सर्वत्र डट्तमटौ । द्विचत्वारिंशत्, द्वाचत्वारिंशत् । त्रिचत्वारिंशत्, त्रयश्चत्वारिंशत् । पंचचत्वारिंशत् । षट्चत्वारिंशत् । सप्तचत्वारिंशत् । अष्टचत्वारिंशत्, अष्टाचत्वारिंशत् । एकोनपंचाशत् । पंचाशत् । एकपंचाशत् । द्विपंचाशत्, द्वापंचाशत् । त्रिपंचाशत्, त्रयःपंचाशत् । चतुःपंचाशत् । पंचपंचाशत् । षट्पंचाशत् । सप्तपंचाशत् । अष्टपंचाशत्, अष्टापंचाशत् । एकोनषष्टिः । षष्टिः । एकषष्टिः । द्वाषष्टिः, द्विषष्टिः । त्रिषष्टिः, त्रयःषष्टिः । चतुःषष्टिः । पंचषष्टिः । षट्षष्टिः । सप्तषष्टिः । अष्टषष्टिः, अष्टाषष्टिः । एकोनसप्ततिः । सप्ततिः । एकसप्ततिः । द्विसप्ततिः, द्वासप्ततिः । त्रिसप्ततिः, त्रयःसप्ततिः । चतुःसप्ततिः । पंचसप्ततिः । षट्सप्ततिः । सप्तसप्ततिः । अष्टसप्ततिः, अष्टासप्ततिः । एकोननवतिः । नवतिः । एकनवतिः । द्विनवतिः, द्वानवतिः । त्रिनवतिः, त्रयोनवतिः । चतुर्णवतिः । पंचनवतिः । षण्णवतिः । सप्तनवतिः । अष्टनवतिः, अष्टानवतिः । एकोनशतम् । शतम् । शतस्य पूरणः शततमः ॥

**शतादेर्नित्यम् ॥ ८०८ ॥ शततमः ॥**

सुबो०–शतादेर्नित्यम् । शतप्रभृतिभ्यस्तमडेव स्यात् न डट् । असंख्यादेः षष्टिशब्दाच्च नित्यं तमट् । षष्टितमः । संख्यादेः षष्टेस्तु डट्तमटौ । एकषष्टः, एकषष्टितमः ॥

**संख्यायाः प्रकारे धा ॥ ८०९ ॥ द्विधा । त्रिधा । चतुर्धा । दशधा ॥**

सुबो०–संख्यायाः प्रकारे धा । संख्यावाचिशब्दात्प्रकारेऽर्थे धाप्रत्ययः स्यात् । द्वौ प्रकारौ द्विधा । त्रयः प्रकारास्त्रिधा । चतुः प्रकाराश्चतुर्धा । दश प्रकारा दशधा । क्त्वाद्यंतं चेत्यव्ययत्वाद्विभक्तेर्लुक् ॥

**द्वित्रिभ्यामेधाधमुञौ वा ॥ ८१० ॥ द्वेधा । त्रेधा । द्वैधम् । त्रैधम् ॥**

सुबो०–द्वित्रिभ्यामेधाधमुञौ वा । आभ्यामेतौ स्तः प्रकारेऽर्थे पक्षे धा । द्वौ प्रकारौ यस्य लोप इतीकारलोपः । द्वेधा । धमुञ् । उकार उच्चारणार्थः । द्वैधम्, द्विधा । त्रयः प्रकाराः त्रेधा, त्रैधम्, त्रिधा ॥

**एकाद्ध्यमुञ् वा ॥ ८११ ॥ एकध्यम्, एकधा ॥**

सुबो०–एकात् ध्यमुञ्वा । एकशब्दात् ध्यमुञ् वा स्यात् । उकार उच्चारणार्थः । पक्षे धा । एकः प्रकारः ऐकध्यम्, एकधा ॥

एकादाकिनिच्चासहाये ॥ ८१२ ॥ एकाकी ॥

सुबो०—एकादाकिनिच्चासहाये। असहायवाचिन एकशब्दादाकिन् स्यात्। यस्य लोप इत्यलोपः। एकाकी। कप्रत्ययोऽपि। एककः ॥

क्रियाया आवृत्तौ कृत्वस् ॥ ८१३ ॥ पञ्चकृत्वः। सप्तकृत्वः ॥

सुबो०—क्रियाया आवृत्तौ कृत्वस्। संख्यावाचिशब्दात् क्रियाया आवृत्तावर्थे कृत्वस्प्रत्ययः स्यात्। पौनःपुन्ये गणनमावृत्तिः। पंचवारान् पंचकृत्वः। सप्तवारान् सप्तकृत्वः। क्त्वाद्यंतं चेत्यव्ययत्वाद्विभक्तेर्लुक्। वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात्कालाध्वनोरिति द्वितीया। संख्यायाः किम्। भूरिवारान् भुंक्ते। भूरिशब्दस्य लौकिकसंख्यावाचित्वेऽपि नेह ग्रहणम् ॥

द्वित्रिचतुर्भ्यः सुः ॥ ८१४ ॥ द्विः। त्रिः। चतुः ॥

सुबो०—द्वित्रिचतुर्भ्यः सुः। एभ्यः सुप्रत्ययः स्यात् क्रियाया आवृत्तौ गणने। उकार उच्चारणार्थः। कृत्वसोऽपवादोऽयम्। द्वौ वारौ द्विः। त्रीन् वारान् त्रिः। चतुरो वारानिति रात्सस्येति सलोपः। चतुः। क्त्वाद्यंतं चेत्यव्ययत्वाद्विभक्तेर्लुक्

बहोर्वा धाऽऽसन्नकाले। पक्षे कृत्वस्। बहुधा बहुकृत्वो वा दिवसस्य भुंक्ते। आसन्नकाले किम्। बहुकृत्वो मासस्य भुंक्ते। दिवसस्येति संबंधे षष्ठी ॥

एकस्य सकृदादेशश्च ॥ ८१५ ॥ एकवारं सकृत् ॥

सुबो०—एकस्य सकृदादेशश्च। एकशब्दस्य स्थाने सकृदित्यादेशः स्याच्चात्सुप्रत्ययः। संयोगांतस्येति सुलोपः। गुरुत्वात्सर्वस्यादेशः। एकवारमिति सकृत् ॥

बह्वल्पार्थात्कारकाच्छस् ॥ ८१६ ॥ बहुशः। अल्पशः ॥

सुबो०—बह्वल्पार्थात्कारकाच्छस्। बहु चाल्पं च बह्वल्पे बह्वल्पेऽर्थौ यस्य तद्बह्वल्पार्थं तस्माद्बह्वल्पार्थात् कारकात् शस् स्यात्। बहुभ्य इति बहुशः। अल्पेभ्यरल्पशः। दानपात्रे चतुर्थी। बह्वल्पार्थात् किम्। गां ददाति। अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च शस्। भूरिशो ददाति। त्रिशः। कारकात्किम्। बहूनां स्वामी। अल्पानां स्वामी ॥

तत्त्व०—कारकादिति। तेन बहूनां स्वामीत्यत्र न ॥

संख्यैकवचनाभ्यां वीप्सायाम् ॥ ८१७ ॥ द्वौ द्वौ इति द्विशो ददाति। प्रस्थशः। माषशः ॥

सुबो०—संख्यैकवचनाभ्यां वीप्सायाम्। संख्यापरिमाणवाचककारकाभ्यां वीप्सायामर्थे शस् स्यात्। द्वौ द्वाविति द्विशः। प्रस्थं प्रस्थमिति प्रस्थशः। माषं माषमिति माषशः। संख्यापरिमाणाभ्यां किम्। घटं घटं ददाति। वीप्सायां किम्। द्वौ ददाति। कारकात्किम्। द्वयोर्द्वयोः स्वामी ॥

तत्त्व०—संख्यैकवचनाभ्यामिति । संख्या च एकवचनं च संख्यैकवचने ताभ्याम् । प्रस्थश इति । प्रस्थप्रस्थमित्यर्थः । एकवचनग्रहणेन वृत्तावेकार्थता नियता । परिमाणशब्दा एव ग्राह्यास्तेनेह न । घटं घटमिति । घटादयो हि जातिशब्दा नैकार्था भवंति । जातियोगस्यैकानेकसाधारणत्वात् । केचित्तु कुंडशो ददातीति प्रयुजाना जातिशब्देभ्योऽपि मन्यते । एकैकश इत्यादिप्रयोगास्तु प्रामादिका एव । शसप्रत्ययेनैव वीप्सावगते स्वार्थिकशसा तु न क्षतिः । " अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ " इत्यत्र तु सहस्र सहस्र ये समवेतास्तेषामपि परिषत्त्व नेत्यर्थः । इति समवायाक्रियां प्राति सहस्रस्य कर्तृत्ववीप्सास्त्येवेति ॥

**तयडयटौ संख्याया अवयवे ॥ ८१८ ॥** द्वाववयवौ यस्य द्वितयम् । त्रितयम् । चतुष्टयम् । चतुष्टयी ॥

सुबो०—तयडयटौ संख्याया अवयवे । अवयवे वर्तमाना या संख्या तद्वाचिनः प्रथमांतात् षष्ठ्यर्थे तयडयटौ स्तः । टकारः ङ्गित इतीवर्थः । द्वितयम् । यस्येतीलोपः । द्वयम् । त्रयोऽवयवा यस्य त्रितयम्, त्रयम् । उभाववयवौ यस्य उभयम् । नित्यमत्रायट् । चत्वारोऽवयवा यस्याः सा रेफस्य विसर्गे च सत्वे ष्टुत्वम् । चतुष्टयी ॥

तत्त्व०—तयडयटाविति । तयट् च अयट् च तयडयटौ । टित्वमीवर्थम् । यत्तु प्राचा तयायटाविति पठितम् । यच्च तद्व्याख्यातृभिर्वासुदेवादिभिरुक्तम् । द्वितयीत्यत्र नदादित्वादीप् । द्वयीत्यत्र तु टित्वादिति तत्रेयो द्विहेतुकत्वेन गौरवादुपेक्षितम् । चतुष्टयमिति । चत्वारोऽवयवा अस्येति विग्रहः । रेफस्य विसर्गे तस्य सत्वे षत्वे ष्टुत्वाद्रूपसिद्धिः ॥

**स्त्रीपुंसाभ्यां नञ्स्नञौ ॥ ८१९ ॥** स्त्रियां भवः स्त्रैणः । पुंसि भवः पौंस्नः ॥

सुबो०—स्त्रीपुंसाभ्यां नञ्स्नञौ । आभ्यामेतौ स्तः भवाद्यर्थे । संयोगांतस्येति सलोपः । स्त्रैणः । पौंस्नः । अथ विभक्तिनामकप्रत्यया उच्यंते । इह वक्ष्यमाणप्रत्ययानां विभक्तिसंज्ञा बोध्या । इदम इश् विभक्तौ इदम एतेतौ स्तो रथयोः । इशोपवादोऽयम् । एतदोऽयं एतदो अश् । विभक्तौ शित्वात्सर्वादेशः । एतद एदेतौ स्तो रथयोः । आशोपवादोऽयम् । सर्वस्य सो वादे । किमः कुः तद्योः पंचम्यर्थे । किंसर्वादिबहुभ्यस्तस् वाऽद्व्यादिभ्यः । द्व्यादिपर्युदासात् किमः पृथग्ग्रहणम् । तस्मादिति तसि कुः । कुतः । यस्मादिति तसि त्यदादेरित्यः । यतः । तस्मादिति ततः । अस्मादिति तसि इतः । एतस्मादिति तसि असादेशः । अतः । अमुष्मादिति अदसस्तासित्यदाद्यत्वे मत्वे उत्वे च । अमुतः । बहोरिति बहुतः । द्व्यादेस्तु द्वाभ्यामित्यादि । सर्वोभयार्थाभ्यां पर्यभिभ्यां तस् । परितः । सर्वत इत्यर्थः । अभितः उभयत इत्यर्थः । सप्तम्यर्थे किम् । सर्वादिबहुभ्यस्त्रो द्व्यादिभ्यः । इदमः सप्तम्यर्थे हः । त्रस्यापवादः इशादेशः । अस्मिन्निति इह । कस्मिन्निति कुत्र । किमः सप्तम्यर्थे अः । किमः क्व । यस्येत्यलोपः । छंदसि किमो हः सप्तम्यर्थे । कुह । एतस्मिन्निति एतदा । अश् । अत्र पंचमीसप्तमीतरविभक्त्यंतादपि तसादयो दृश्यंते भवादियोगे एव । सभवान् । ततोभवान् । तत्रभवान् । तंभवंतम् । ततोभवंतम् ।

तत्रभवंतम् । इत्यादि । एवं दीर्घायुः । देवानां प्रियः आयुष्मान् । एतैर्योगेऽपि । सर्वैकान्यकिंयत्तद्भ्यः कालार्थेभ्यः सप्तम्यर्थे दा । सर्वस्मिन् काले इति सादेशो वा । सदा, सर्वदा । एकस्मिन्काले इति एकदा । अन्यस्मिन्काले इति अन्यदा । कस्मिन् काले इति त्यदादेरित्यत्वम् । कदा । यस्मिन्काले इति यदा । तस्मिन् काले इति तदा । कालार्थेभ्य इति किम् । सर्वत्र देशे । अस्मिन् काले इति कालवाचकादिदमः सप्तम्यर्थे र्हिप्रत्ययः । ह्प्रत्ययस्यापवादोऽयम् । एतादेशः । एतर्हि । कालेति किम् । इह देशे कालवाचकादिदमः सप्तम्यर्थेऽधुना दानीं प्रत्ययौ च । इशादेशः यस्य लोप इति लोपः । अधुना । इशादेशः । इदानीम् । कालवाचकात्तदा सप्तम्यर्थेदानींप्रत्ययश्च । तस्मिन्काले त्यदादेरित्यत्वम् । तदानीम् । किम्यत्तदेतद्भ्योऽनद्यतनकालवाचकेभ्यः सप्तम्यर्थे र्हिप्रत्ययो वा । कस्मिन् काले इति त्यदादेरित्यत्वम् । कर्हि । पक्षे दा । कदा । यस्मिन् काले यर्हि, यदा । तस्मिन् काले तर्हि, तदा । एतस्मिन्काले एतादेशः । एतर्हि । समानेऽह्नि इति सहादेरित्यनेन समानस्य सः । समानशब्दात् सप्तम्यंतस्याऽहन्शब्दस्यार्थे द्यस् निपात्यते । सद्यः । पूर्वस्मिन् वत्सरे इति पूर्वतरे वत्सरे इति च सहादेरित्यनेन पूर्वपूर्वतरयोः पर इत्यादेशो निपात्यते संवत्सरेऽर्थे । पूर्वपूर्वतरशब्दाभ्यां उत् आरिप्रत्ययौ यस्येत्यलोपः । परुत्, परारि । अस्मिन् संवत्सरे इति संवत्सरेऽर्थे इदम्शब्दात् समसण्प्रत्ययः । इशादेशः आदिवृद्धिः षत्वम् । ऐषमः । परस्मिन्नहनीति परस्मादहनि इत्यर्थे एद्यविप्रत्ययो निपातनात् । परेद्यवि । अस्मिन्नहनीति इदम्शब्दात् द्यप्रत्ययो निपातनादशादेशश्च । अद्यपूर्वअन्यअन्यतरइतरअपरअधरउभउत्तरइत्येभ्योऽहनीत्यर्थे एद्युस्प्रत्ययो निपातनात् । यस्येत्यलोपः । पूर्वस्मिन्नहनीति पूर्वेद्युः । अन्यस्मिन्नहनीति अन्येद्युः । अन्यतरस्मिन्नहनीति अन्यतरेद्युः । इतरस्मिन्नहनीति इतरेद्युः । अपरस्मिन्नहनीति अपरेद्युः । अधरस्मिन्नहनीति अधरेद्युः । उभयोरह्नोरिति उभयेद्युः । उभयाद् द्युः प्रत्ययः । उभयद्युः । अद्व्यादिभ्यः किम् । सर्वादिभ्यः प्रकारेऽर्थे वर्तमानेभ्यः स्वार्थे थाप्रत्ययः । सामान्यस्य भेदको विशेषः प्रकारः । यथा । किमिदमेतद्भ्यः प्रकारेऽर्थे वर्तमानेभ्यः स्वार्थे थप्रत्ययः । थाप्रत्ययस्यापवादोऽयम् । केन प्रकारेण त्यदादेरित्यः । कथम् । अनेन प्रकारेण एतेन प्रकारेण वा इदमेतदोरित् । इत्थम् । अव्ययत्वाद्विभक्तेर्लुक् सर्वत्र ॥ इति विभक्तिनामकाः प्रत्ययाः ॥ दिग्देशकालवृत्तिभ्यो दिशिरूढेभ्यः शब्देभ्यः सप्तमीपंचमीप्रथमाविभक्त्यर्थे स्तात्प्रत्ययः । पूर्वाधरावरेभ्योऽस्प्रत्ययोऽपि । पुर अधाऽवादेशाश्च । अस्तात् असोः परयोः । पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः । अस्प्रत्ययः । पुरस्तात् । अस्तात्प्रत्ययः । पूर्वशब्दादतस्प्रत्ययः पुरादेशश्च वा । पुरतः । " स्यात्पुरः पुरतोऽग्रतः " इत्यमरः । " पुरतः प्रथमे चाग्रे " इति विश्वश्च । अध-

रस्यां अधरस्याः अधरा वा अधः । अस् । अधस्तात् । अस्तात्प्रत्ययः । अवरस्यां अवरस्याः अवरा वा । अवः । अस् । अवस्तात् । अस्तात् । अवरस्यास्तात् परेऽवू वा । अवस्तात् । अवरस्तात् । एवं देशे काले च । दिशिरूढेभ्यः किम् । ऐंद्र्यां वसति । सप्तम्याद्यर्थे किम् । पूर्वं ग्रामं गतः । दिगादिवृत्तिभ्यः किम् । पूर्वस्मिन् गुरौ वसति । दक्षिणोत्तराभ्यामतस् । अस्तात्प्रत्ययस्यापवादः । दक्षिणस्यां दक्षिणस्याः दक्षिणा वा दिक् दक्षिणतः । उत्तरस्यां उत्तरस्याः उत्तरा वा उत्तरतः । अतस् । पराऽवराभ्यामतस् वा । पक्षेऽस्तात् । परस्यां परस्याः परा वा परतः। अवरस्यां अवरस्याः अवरा वा अवरतः । अतस् पक्षेऽस्तात् । परस्तात् । अवरस्तात् । अंचत्यंतादिक्शब्दादस्तात्प्रत्ययस्य लुक् । तद्धितलुकि स्त्रीप्रत्ययस्य लुग् वाच्यः । प्राच्यां प्राच्याः प्राची वा दिक् प्राक् । उदक् । एवं देशे काले च । ऊर्ध्वशब्दाद्रिरिष्टात्प्रत्ययौ दस्ताद्विषये । ऊर्ध्वस्योपादेशश्च । ऊर्ध्वं ऊर्ध्वात् ऊर्ध्वो वेति उपरि, उपरिष्टाद्वा । अपरशब्दादातप्रत्ययोऽपरस्य पश्चादेशश्चाऽस्ताद्विषये । अपरस्मिन् अपरस्मात् अपरो वेति । पश्चात् । उत्तराऽधरदक्षिणादात्प्रत्ययोऽस्ताद्विषये । उत्तरात् । अधरात् । दक्षिणात् । अदूरे वर्तमानेभ्यः उत्तराऽधरदक्षिणेभ्य एनप्रत्ययो वा सप्तमीप्रथमाविभक्त्यर्थे । उत्तरस्मिन् उत्तरो वेति उत्तरेण । अधरस्मिन् अधरो वेति अधरेण । दक्षिणस्मिन् दक्षिणो वेति दक्षिणेन । पक्षे उत्तरात् । अधरात् । दक्षिणात् । आत्प्रत्ययः । उत्तरतः । अधः, अधस्तात् । दक्षिणतः । केचिद्दिक्शब्दमात्रादेनप्रत्ययमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् । दक्षिणाशब्दादाप्रत्ययः सप्तमीप्रथमाविभक्त्यर्थे । दक्षिणस्यां दक्षिणां वेति दक्षिणा । दक्षिणोत्तराभ्यां दूरेऽर्थे आआहिप्रत्ययौ । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि, दक्षिणा । उत्तरस्यां दिशि दूरे इति उत्तराहि, उत्तरा । अव्ययत्वाद्विभक्तेर्लुक् सर्वत्र ॥

तर०—मोच्च इति । सयोगातस्येति सलोपः ॥

इति तद्धिताः ।

---

**वीप्सायां पदं द्विः ॥ ८२० ॥** वृक्षं वृक्षं सिंचति । ग्रामो ग्रामो रमणीयः ॥

सुबो०—अथ सर्वं पदं द्विरुच्चारयेदित्यधिकारोऽयम् । वीप्सायां पदं द्विः । व्याप्तुमिच्छा वीप्सा । व्याप्तिप्रतिपिपादयिषेति यावत् । व्याप्तिः कात्स्न्र्यं तच्चाधिकारकम् । सर्वे ब्राह्मणा आमंत्रिता इत्यादौ यथा । न हि जगतीतले विद्यमाना ब्राह्मणाः सर्वेऽपि केनचिदामंत्रयितुं शक्यंते इति स्वग्रामस्थस्वजातीयब्राह्मणानां संकोचो यद्यभ्युपेयते तर्हत्रापि सकलवृक्षसेचनसामर्थ्यं कस्यापि मनुष्यस्य नास्तीति । यत्र

वाटिकादौ वृक्षसेचनार्थमधिकारस्तद्वाटिकास्थवृक्षाणामेव कार्त्स्न्यम्। वृक्षं वृक्षं सिंचतीत्यादौ गम्यते इत्यभ्युपेयम्। यत्र तु संकोचे कारणं नास्ति तत्राऽसंकोच इष्ट एव। यथा जातौ जातौ निधनमुपैतीति तस्यां वीप्सायां वाच्यायामेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते इत्यर्थः। वृक्षं वृक्षमित्यत्र प्रत्येकनिष्ठमेकत्वमेव हि प्रतिभासतेऽतो न बहुवचनप्रसंगः॥

तत्त्व०—वीप्सायामिति। व्याप्तुमिच्छा वीप्सा। व्याप्तिपिपादयिषेति यावत्। व्याप्तिश्च कार्त्स्न्यम्। वृक्षं वृक्षं सिंचतीति। सेकक्रियायाः सकलवृक्षे अन्वयः। बहुवचनप्रसंगस्तु बहूनां भावेऽपि बहुत्वसंख्याया अभावादेव न प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासते॥

**परेर्वर्जने वा द्वित्वम्॥ ८२१॥** परि परि वङ्गेभ्यो वृष्टो देवः। परिवङ्गेभ्यो वृष्टो देवः। वङ्गान्परिहृत्येत्यर्थः॥

सुबो०—परेर्वर्जने वा द्वित्वम्। वर्ज्जनार्थवाचिनः परेर्वा द्वित्वं स्यात्। परिपरि वंगेभ्य इत्यत्र परियोगे पंचमी। वाग्रहणात्परिहरेः संसार इति॥

तत्त्व०—परेर्वर्जन इति। अत्र वाशब्दस्य व्यवस्थितत्वात्समासे न। तेन परित्रिगर्त्तं वृष्टो देव इत्यादौ न॥

**उपर्यध्यधसः सामीप्ये द्विः॥८२२॥** उपर्युपरि ग्रामम्। ग्रामस्योपरिष्टात्समीपदेश इत्यर्थः। अध्यधिसुखम्। सुखस्योपरिष्टात्समीपदेश इत्यर्थः॥

सुबो०—उपर्यध्यधसः सामीप्ये द्विः। सामीप्यार्थवाचिन एते द्विः स्युः। सामीप्यं प्रत्यासत्तिस्तच्च कालकृतं देशकृतं वा। कालकृतस्य सामीप्यस्योदाहरणमध्यधिसुखमिति। अन्यद्द्वयं देशकृतस्य सामीप्यस्योदाहरणम्॥

तत्त्व०—उपरीति। उपरि शिरसो घटं धारयतीत्यत्र तु औत्तराधर्यमत्र विवक्षणेन सामीप्याभावान्न द्वित्वम्॥

**वाक्यादेः सम्बोधनस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु॥८२३॥** असूयायामुदाहरणम्। सुन्दर सुंदर वृथा ते सौंदर्यम्। देव देव वंद्योऽसि। कोपे। दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि। कुत्सने। धानुष्क धानुष्क वृथा ते धनुः। भर्त्सने। चोर चोर घातयिष्यामि त्वाम्॥

सुबो०—वाक्यादेः संबोधनस्याऽसूयासम्मतिकोपकुत्सनभर्त्सनेषु। एष्वर्थेषु विद्यमानस्य वाक्यादिस्थितस्य संबोधनस्य द्वित्वं स्यात्। ननु कोपासूयाभ्यां पृथक् कुत्सनभर्त्सनग्रहणमपार्थकम्। नाऽसूयां विना कुत्सयते नाप्यऽकुपितो भर्त्सयति। इति चेदत्राहुः। गुरवो हि हितैषित्वात्कुपिता अपि भर्त्सनं कुर्वंति। विनाप्यसूयया कुत्सां कुर्वंत्यतो पृथक् तयोर्निर्देशः। सम्मतिः पूजा॥

तत्त्व०—वाक्यादेरिति । वाक्यादेः सबोधनस्यासूयाद्यर्थेषु द्विरित्यर्थः । गुणेषु दोषारोपोऽसूया ॥

द्विरुक्त एकशब्दो बहुव्रीहिवत् ॥ ८२४ ॥ तेन विभक्तिलोपपुंवद्भावौ । एकैकमक्षरम् । एकैकयाहुत्या । इह पूर्वभागे पुंवद्भावादवयवे विशेषः । पदविभागोऽवग्रहः । एकैकया इत्यादिविशेषः । एकैकस्मै देहि ॥

सुबो०—द्विरुक्त एकशब्दो बहुव्रीहिवत् । बहुव्रीहौ यत्कार्यमुक्तं तद् द्विरुक्ते एकशब्दे भवतीत्यर्थः। बहुव्रीहिसमासवत्त्वात् समासप्रत्यययोरिति विभक्तिलोपः । पुंवद्वेति । पुंवद्भावश्च एकएकमित्यत्र द्वयोरपि विभक्तेर्लुकि कृते बहुव्रीहिसमासवद्भावादेव कृत्तद्धितसमासाश्चेत्यनेन समुदायात्स्याद्युत्पत्तिः। अंतरंगैकसंख्याऽवरुद्धो द्विरुक्तार्थः। संख्यांतरे निराकांक्ष एव इत्युक्तत्वादेकवचनमेव । एकैकयेत्यत्र सर्वादेः समासादाविति पूर्वभागे पुंवद्भावः । एकस्मै एकस्मै इत्येकैकस्मै ॥

तत्त्व०—अवग्रहेति । वैदिकानां पदपाठ इत्यर्थः ॥

पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च ॥ ८२५ ॥ गतगतः । विरहात्पीड्यमानस्येयमुक्तिः । गतगता ॥

सुबो०—पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च । पीडार्थद्योतकं पदं द्विः स्यात् । गतः गत इति बहुव्रीहिवद्भावाद्विभक्तेर्लुक् । गतगतः । गतगतेति पुंवद्वेति पुंवद्भावः । गतगता ॥

तत्त्व०—गतगतेति । इह पुंवद्भावः । पूर्वपदस्य बहुव्रीहिवद्भावान्नोत्तरस्येति भावः ॥

सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तो बहुव्रीहिवच्च ॥ ८२६ ॥ पटुपट्वी । पटुपटुः । पटुसदृशः ईषत्पटुरिति यावत् । गुणोपसर्ज्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह गृह्यंते । शुक्लशुक्लः पटः । शुक्लशुक्लं रूपम् ॥

सुबो०—सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तो बहुव्रीहिवच्च । तद्भिन्नत्वे संति तद्गतभूयोधर्मवत्त्वं सादृश्यम् । पटी पट्वीति पुंवद्वेति पुंवद्भावः । पटुः पटुरिति बहुव्रीहिवद्भावाद्विभक्तेर्लुक् । पटुपटुः । " गुणे शुक्लादयः पुंसि गुणि लिंगास्तु तद्वति । " इत्युक्तत्वात् । यत्र शुक्लादयः शब्दा द्रव्यवाचकास्तत्र गुणा उपसर्जनीभूता एव संति । अतोऽत्र द्रव्यवाचकशुक्लादिपदस्य गुणवाचका शुक्लादिपदस्य च ग्रहणम् । शुक्लः शुक्ल इति बहुव्रीहित्वाद्विभक्तेर्लुक् । शुक्लशुक्लः पटः। गुणोपसर्ज्जनद्रव्यवाचिन उदाहरणम् । शुक्लं शुक्लमिति समासत्वाद्विभक्तेर्लुक् । शुक्लशुक्लं रूपम् । केवलगुणवाचिन उदाहरणम् ॥

तत्त्व०–पटुपट्वी इति । बहुव्रीहिवद्भावात्पूर्वभागे सिलोपपुंवद्भावौ । "नवं नवं प्रीतिं रहो करोति" इत्यत्र वीप्सायां द्वित्वम् । अनेकाद्वित्वे सिलुक् स्यात् । कथं "भीतभीत इव शीतमयूखः" इति भारविः । इवशब्देन सादृश्यस्योक्ततया सादृश्ये द्वित्वायोगात् । सत्यम् । भीतेभ्यो भीत इति व्याख्येयम् । तेनातिभीत इति फलितम् । "खिन्नः खिन्नः शिखरिषु पदं न्यस्य गंतासि यत्र । क्षीणः क्षीणः परिलघुपयः स्रोतसां चोपभुज्य" इति मेघदूते । एकस्यापि खेदावस्थासु च भेदं प्रकल्प्य वीप्सा बोध्या । मन्दं मन्दं नुदतीत्यत्र तु मन्दं स्वतो मन्दगामिन मन्दं नुदतीत्यन्वयो बोध्यः । क्रियासमभिहारे पौनःपुन्ये भृशार्थे चेत्यर्थः ॥

**अनुक्रमे द्योत्ये द्वे ॥ ८२७ ॥ मूले मूले स्थूलो वृक्षः ॥**

सुबो०–अनुक्रमे द्योत्ये द्वे । अनुक्रमद्योतकं पदं द्विः स्यात् । वीप्साभावादयमारंभः । एकस्य वृक्षादेरेकमेव मुख्यं मूलमग्रं च भवति । इतरेषां भागानामापेक्षिकोऽग्रमूलव्यपदेशः । स्थौल्यसौक्ष्म्येऽपि नैकरूपे । यथा मूलं स्थूलं यथाऽग्रं सूक्ष्मं यथा नेतरे भागा इति वीप्साया असंभवः । मूले मूले स्थूलस्तथाऽग्रेऽग्रे सूक्ष्मः ॥

**सम्भ्रमेण प्रवृत्तावनेकधाप्रयोगः ॥ ८२८ ॥ सर्प ३ बुध्यस्व ३ ॥**

सुबो०–संभ्रमेण प्रवृत्तावनेकधाप्रयोगः । संबोध्यो हि यावद्भिः शब्दैः प्रयोजनमेति तावंतः प्रयोगा वाच्या इत्यर्थः ॥

**क्रियासमभिहारे द्वे ॥ ८२९ ॥ लुनीहि लुनीहि इत्येवायं लुनाति ॥**

सुबो०–क्रियासमभिहारे द्वे । पौनःपुन्यं भृशार्थश्च क्रियासमभिहारस्तत्र पदे द्विः स्यात् । पौनःपुन्ये यथा आख्यातकृदंतयोरेव । पचतिपचति । भुक्त्वाभुक्त्वा । भृशार्थे यथा । लुनीहिलुनीहीति ॥

**कर्मव्यतिहारे सर्वादेर्द्वित्वं समासवच्च बहुलम् ॥ ८३० ॥**

**बहुलग्रहणादन्तपरयोर्न समासवत् । इतरशब्दस्य नित्यं समासवत् ॥**

सुबो०–कर्मव्यतिहारे सर्वादेर्द्वित्वं समासवच्च बहुलम् । क्रियाविनिमयेऽर्थे सर्वादिगणस्य द्वित्वं स्यात् । नित्यमेवेदं द्वित्वम् । बाहुलकं तु समासवद्भावस्यैव । तेनान्यपरशब्दयोः समासवद्भावो न । इतरशब्दस्य नित्यमेव समासवद्भावो भवतीत्यर्थः ॥

तत्त्व०–कर्मव्यतिहारे इति । क्रियाविनिमये इत्यर्थः ॥

**असमासवद्भावे पूर्वपदस्थाया विभक्तेः सिरादेशो वाच्यः ॥ ८३१ ॥** अन्योन्यौ । अन्योन्यान् । अन्योन्येन कृतम् । अन्योन्यस्मै दत्तमित्यादि । "अन्योन्येषां पुष्करैरामृशन्तं" इति माघः । एवं परस्परम् । वाचस्पत्यादित्वात्सः । इतरेतरम् । इतरेतरेणेत्यादि ॥

सुबो०–असमासवद्भावे पूर्वपदस्थाया विभक्तेः सिरादेशो वाच्यः। पूर्वपदस्य प्रथमादिविभक्तीनां स्थाने सिरेव भवत्यसमासवद्भावे । अन्यः अन्य इति अन्योऽन्यः । अन्यौ अन्याविति अन्योन्यौ । अन्ये अन्ये इति अन्योन्ये । अन्यमन्यमिति अन्योन्यमित्यादिषु सर्वत्र पूर्वपदस्य विभक्तेः सिकृते ततो विसर्गः अतोऽत्युरित्युत्वे उओ इत्योत्वे एदोतोऽत इत्यलोपे च रूपसिद्धिः। एवं परः पर इति परस्परम् । परौ पराविति परस्परौ । परे परे इति परस्परे । परं परमिति परस्परमित्यादि । इतरशब्दस्य तु समासवद्भावात् समासप्रत्यययोरिति विभक्तेर्लुक्। इतर इतर इति इतरेतरः । इतरौ इतराविति इतरेतरौ । इतरे इतरे इति इतरेतरे । इतरं इतरमिति इतरेतरमित्यादि ॥

**स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा ॥ ८३२ ॥**

अन्योऽन्याम् । अन्योऽन्यम् । परस्पराम् । परस्परम् । इतरेतराम् । इतरेतरं वा । इमे ब्राह्मण्यौ कुले वा भोजयतः । दलद्वयेऽप्याम्भावः क्लीबे तु विरहस्य मोः समासे सेरलुक् चेति सिद्धं बाहुलकात्रयम् । समासे सेरलुक् चेत्यस्योदाहरणं तु अन्योऽन्याश्रयः । परस्पराक्षिसादृश्यमित्यादिकं बोध्यम् ॥

सुबो०–स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा । स्त्रियां क्लीबे चोत्तरपदस्थविभक्तीनामामादेशो वा भवति । स्त्रियां यथा । अन्या अन्येति पूर्वपदस्थविभक्तेः सिः परपदस्थविभक्तेश्चाम् । अन्योन्याम् । आमभावपक्षे अन्योन्यः । बहुलग्रहणात् स्त्रियामित्याप्प्रत्ययाभावो दलद्वये । अन्ये अन्ये इति अन्योन्यं, अन्योन्यौ । अन्या अन्या इति अन्योन्या, अन्योन्ये। अन्यामन्यामिति अन्योन्यां, अन्योन्यामित्यादि । एवं परस्परः परस्परां परस्परौ । परस्परां, परस्परे । परस्परां, परस्परामित्यादि । एवमितरेतरां, इतरेतरः। इतरेतरां, इतरेतरे। इतरेतरौ इतरेतराम् । इतरेतरे इतरेतराम् । इतरेतरमित्यादि । क्लीबे तु अन्यत् अन्यदिति अन्योन्यां, अन्योन्यम् । स्यमोः प्रत्यययोः स्थाने त्वन्यादेरिति त्वादेशाभावो बाहुलकादेव । इमे कन्यौ इमे कर्तृणी वा । अन्यामन्यामन्यदन्यद्वा भोजनं कारयतः । ननु अन्योन्यं परस्परमित्यादौ केवलपूर्वपदविभक्तीनां स्यादेशविधानस्य चरितार्थत्वमस्ति । अन्योऽन्यसंसक्तमहस्त्रियाममिति । अन्योन्याश्रय इति परस्पराक्षिसादृश्यमिति । अदृष्टपरस्परैरित्यादौ समासप्रत्यययोरित्यनेन पूर्वपदविभक्तीना स्यादेशस्य कथं लुग् न स्यादिति चेदत्राहुः । बाहुलकात्समासविषये पूर्वपदविभक्तीनां स्यादेशस्य लुग् न भवतीत्यर्थः ॥

तत्त्व०–दलद्वये इत्यादि। दलद्वये आबभावः आपः अभावः। अन्योन्यं परस्परमित्यत्र दलद्वयेऽपि आपः प्राप्तः स नेत्यर्थः। अन्योन्यमित्यत्र रुत्वन्यादेस्तु प्राप्तः स नेत्यर्थः। अन्योन्याश्रय इत्यत्र समासे सेर्लुक् नेत्यर्थः॥

अकृच्छ्रे प्रियसुखयोर्वा द्वित्वम् ॥८३३॥ प्रियप्रियेण ददाति। प्रियेण वा। सुखसुखेन ददाति। सुखेन वा। अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः॥

सुबो०–अकृच्छ्रे प्रियसुखयोर्वा द्वित्वम्। अनयोर्द्वित्वं समासवच्च वा स्यात्। द्विवचने समासवद्भावात्। स्यादिलुकि कृते पुनः कृत्तद्धितसमासाश्चेत्यनेन स्यादिः॥

यथास्वे यथायथम् ॥ ८३४ ॥ यथाशब्दस्य द्वित्वं क्लीबत्वं च भवति॥ यथास्वमिति वीप्सायामव्ययीभावः। यो य आत्मा। यद्यच्चात्मीयं तद्यथास्वम्। यथायथं ज्ञाता। यथास्वभावमित्यर्थः। यथात्मीयमिति वा॥

सुबो०–यथास्वे यथायथम्। यथास्वे इति स्वं स्वमिति यथास्वम्। वीप्सार्थेऽव्ययीभावः। योऽयमात्मेत्यादि। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।" इत्युक्तत्वादात्मात्मीययोरपि स्वशब्दवाच्यत्वमस्ति। आत्मात्मीययोरर्थे विद्यमानस्य यथाशब्दस्य द्वित्वं नपुंसकत्वं च भवति। नपुंसकत्वान्नपुंसकस्येति ह्रस्वः। यथायथं ज्ञातेत्यत्र कर्तृकार्ययोरक्तादावित्यनेन कर्मणि षष्ठी न। तृन्प्रत्ययस्य क्तादिषु गणनात्। "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च।" इत्यमरोक्तत्वात् यथायथस्य यथास्वभावमर्थः॥

द्वंद्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ ८३५॥ एष्वर्थेषु द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते॥ तत्र रहस्यं द्वंद्वशब्दस्य वाच्यम्। इतरे तु विषयभूताः। द्वंद्वं मंत्रयते रहस्यमित्यर्थः। मर्यादा स्थित्यनतिक्रमः। आचतुरं हीमे पशवो द्वन्द्वं मिथुनायंते। माता पुत्रेण मिथुनं गच्छति। पौत्रेण प्रपौत्रेणापीति मर्यादार्थः। व्युत्क्रमणं पृथगवस्थानम्। द्वन्द्वं व्युत्क्रान्तः। द्विवर्गसंबंधेन पृथगवस्थितः। द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति। द्वन्द्वं संकर्षणवासुदेवौ। अभिव्यक्तौ। साहचर्येणेत्यर्थः। चार्थे द्वन्द्व इति निपातनात्पुंस्त्वमपि॥

सुबो०—द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । एष्वर्थेषु द्विशब्दस्य द्वित्वं समासत्वमेकवद्भावश्च भवति । तथाहि । द्वि औ द्वि औ इति स्थिते समासवद्भावात् विभक्तिलुकि कृते पूर्वपदावयवेकारस्याम्भावः उत्तरपदावयवे-कारस्यात्वं क्लीवत्वैकवद्भावौ च निपातनात् । एकवद्भावादतोमित्यमादेशे द्वंद्वमिति । रहसि निर्वृत्तमिति रहस्यम् । द्वंद्वं मंत्रयते । द्वौ द्वौ भूत्वा मंत्रयते इत्यर्थः । एत-देव द्विरहस्यम् । मर्यादायां यथा । चतुरो मर्यादीकृतेति आचतुरम् । अव्ययीभावे टप्रत्ययः । चतुरशब्दोऽत्र चतुर्णां पूरणेऽस्ति । आचतुर्थादित्यर्थः । " स्त्रीपुंसौ मिथुनं द्वंद्वं युग्मं तु युगलं युगम् । " इत्यमरः । मिथुनमिवाचरंतीति मिथुनायंते । यज्ञपात्रे प्रयोगे यथा । पात्राणि द्वंद्वं प्रयुनक्ति । आसादयतीत्यर्थः । "संकर्षणः सीरपाणिः" इत्यमरः " वासुदेवस्त्रिविक्रमः " इत्यमरश्च । अभिव्यक्तौ तु द्विशब्दस्य स्वार्थे द्वित्वमेकवद्भावादिकं तु पूर्ववदेव ॥

**शेषा निपात्याः कत्यादयः ॥८३६॥** का संख्या येषां ते कति ।

दाविकः । शांशपः । दात्यौहः । दार्घसत्रः । श्रायसः ॥

इति श्रीरामाश्रमाचार्यविरचितायां सिद्धान्तचन्द्रिकायां पूर्वार्धं सम्पूर्णम् ।

सुबो०—शेषा निपात्याः कत्यादयः । कत्यादयः शब्दा निपात्यंते संख्यापरि-माणे कर्तव्ये । यः प्रश्नस्तत्र वर्तमानात् किम्शब्दाद्वा डतिप्रत्ययः । पक्षे वतुः । का संख्या येषां ते डतेरिति जसो लुक् । कति । कियंतः । देविकाशिंशपादित्य-वाड्दीर्घसत्रश्रेयसां पंचानां वृद्धौ प्राप्तायामादेः स्वरस्यात्वं निपात्यते ञिति णिति च । देविकायां भवं दाविकम् । " देविकायां सरय्वां च भवेदाविकसारवौ । " इत्य-मरः । अण् । शिंशपाया विकारः शांशपश्चमसः । अण् । दित्यौह इदं दात्यौहम् । वाहोर्वौ इत्यात्वं निपातनात् । अण् । दीर्घसत्रे भवं दार्घसत्रम् । अण् । श्रेयसि भवं श्रायसम् । अण् ॥ इति द्विरुक्तप्रक्रिया ॥

श्रीमत्पावकवर्यभक्तिविनया विख्यातकीर्तिप्रभा
राजेन्द्रैः परिपूजिताः सुकृतिनः पुंभाववाग्देवता ॥
मंतारो जागतां पतिं गुणगणैर्विभ्राजमानाः सनत्
संवेगादियुजो जयंतु सततं षट्शास्त्रविद्याविदः ॥ १ ॥
तेषां शिष्यः सदानंदस्तदनुग्रहभूषितः ॥
सिद्धांतचंद्रिकावृत्तिं पूर्वार्द्धेऽचकरीदिमाम् ॥ २ ॥

इति श्रीसिद्धांतचंद्रिकाव्याख्यायां सदानंदकृतौ पूर्वार्द्धः समाप्तिमगात् ।

तत्त्व०—तद्धितप्रकरणानन्तरम् । कार्त्स्न्येनाभिधातुमशक्यत्वादनुक्तसिद्धयर्थमाह । शेषा इति । उक्तेभ्यो-ऽन्ये शेषाः । निपातनात्साधवो निपात्याः । किमः संख्यापरिप्रश्ने डतिः । दाविक इति । देविकायां भव इति

विग्रहः। कारकादित्यण् । एकारस्यात्वं निपात्यते । शांशप इति । शिंशपाया विकारः । अत्राप्यादेः। स्वरस्यात्वं निपात्यते । दात्यौह इति । दित्यौहोऽयामिति विग्रहः । इदमर्थेऽण् । अत्राप्यादेः स्वरस्यात्वं निपात्यते । प्रकृतिस्तु दित्यवाह इति तत्र वाहोर्वौरिति वा इत्यस्यौत्वम् । सर्वसत्रे भवः सार्वसत्रः । अत्रापि कारकादित्यण् । आदिस्वरस्यात्वं निपात्यते । श्रायस इति । श्रेयसि भव इति विग्रहः । अत्राप्यादिस्वरस्यात्वं निपात्यते ॥

श्रीनाथकरपौत्रेण लोकेशकरशर्मणा । कृतायामिह टीकायां ताद्धितव्याकृतिर्गता ॥ १ ॥

सिद्धान्तचन्द्रिकाव्याख्या या त्वियं तत्वदीपिका । तत्पूर्वार्द्धमभूत्पूर्णं तेन तुष्यतु पार्वती ॥ २ ॥

इति श्रीलोकेशकरविरचितायां तत्वदीपिकायां सिद्धान्तचन्द्रिकाव्याख्यायां पूर्वार्द्धं समाप्तम् ॥






पुस्तक मिलनेका ठिकाणा–
गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापाखाना,
कल्याण–मुंबई.

॥ श्रीगणेशाय नमः ॥

अथ

# सिद्धान्तचन्द्रिकापूर्वार्द्धस्य

## अकारानुक्रमेण सूत्रानुक्रमणिका ।



इत्यनुक्रमणिका समाप्ता ।

पुस्तक मिलनेका ठिकाना—
गङ्गाविष्णु श्रीकृष्णदास,
" लक्ष्मीवेंकटेश्वर " छापाखाना,
कल्याण-मुंबई.

तत्त्व०—ऋसंयोगादिति । ऋश्च संयोगश्च ऋसंयोगं तस्मात् । णादिः किदिति पूर्वसूत्रमनुवर्त्तते किरवाभावात्संप्रसारणाभावोऽपि कित्त्वाविधानात् ङित्त्वमपि न । अत्र केचित् । अर्त्तिं प्रश्लिष्य आरतुरित्यादिसिद्धमित्याहुः । अन्ये तु ऋ अतुरिति स्थिते र इत्यन्ते ऋ अरिति च कृते पूर्ववद्ग्रहणेन आभ्वोरित्यत्वे आरतुरिति । अत्रादिग्रहणमनुवर्त्य तंत्रेण द्वितीयवाक्यार्थः । ऋदंतात्संयोगादेर्णादिरकित् । तेन सस्मरतुरित्यादि । अथ कथं सस्मरतुरिति चेत् । नञोक्तस्यानित्यत्वात् । अत्र ऋ हसादित्येव सुवचम् । ऋश्च हसश्च ऋहसं तस्मात् । एवं संयोगान्तस्य लोप इत्यत्र हसान्तस्य लोप इत्यस्यैव न्याय्यत्वम् । हसावन्ते यस्येति विग्रहः । हस्य वर्गचतुर्थ इति । स्थानेऽन्तरतम इत्यनेन घोषवत्त्वादिगुणवतो हस्य तादृशो वर्गचतुर्थ एव । एतच्चानयीतं ग्रर्थातैर्दुर्ज्ञेयम् ॥

नो लोपः ॥ ६१ ॥ धातोर्हसान्तस्योपधाभूतस्य नकारस्य लोपः किति परे ॥ पूजार्थाञ्चितेर्न निरुपपदात् कुञ्चेः क्विपि न । मथ्यात् । मन्थिता । मन्थिष्यति । अमन्थिष्यत् । अमन्थीत् ॥ कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः ॥

सुबो०—नो लोपः । मथ्यात् ॥

इदितो नुम् ॥ ६२ ॥ इदितो धातोर्नुम् ॥ कुन्थति । कुन्थेत् । कुन्थतु कुन्थताद्वा । अकुन्थत् ॥

सुबो०—इदितो नुम् । इत् इर्यस्य स इदित् तस्य नुम् स्यात् ॥

कुहोश्चुः ॥ ६३ ॥ पूर्वस्य कवर्गहकारयोश्चुत्वं भवति हस्य वर्गचतुर्थः ॥ चुकुन्थ ॥

सुबो०—कुहोश्चुः । पूर्वस्येत्यनुवृत्तम् । कुश्च ह च कुहौ तयोः संवारनादघोषमहाप्राणप्रयत्नस्य हस्य तादृश एव वर्गचतुर्थो भवति ॥

इदितो नलोपो न ॥ ६४ ॥ कुन्थ्यात् । कुन्थिष्यति । अकुन्थिष्यत् । अकुन्थीत् ॥ चुबि वक्त्रसंयोगे ॥ चुम्बति ॥ षिधु गत्याम् ॥

सुबो०—इदितो नलोपो न । इदितो धातोर्नस्य लोपो न भवति । नो लोप इत्यस्यापवादः । षिध गत्याम् । अयमूदिदित्येके ॥

तत्त्व०—इदितो नलोपो नेति । इदं च नो लोप इत्यत्र नो वेत्यतो वेत्यस्यापकृष्टस्य व्यवस्थितत्वाल्लभ्यते न चेदितो नुम्विधिसामर्थ्यादेव लोपो नेति वाच्यम् । नंदतीत्यादावकिति तस्य चरितार्थत्वात् । षिध गत्यामिति । काश्यपादिभिरयमूदिदुक्तः । माधवादिभिस्तु वृत्तिस्वरसादनुदिदेव स्वीकृतः ॥

आदेः ष्णः स्नः ॥६५॥ धात्वाद्योः षकारणकारयोः सकारनकारौ भवतः ॥ सेधति । सेधतु । सेधेत् सेधताद्वा । असेधत् । सिषेध । सिध्यात् । सेधिता ॥

सुबो०—आदेः ष्णः स्नः । ष् च ण् च ष्ण् तस्य ष्णः स् च नश्च स्नः । धातोः किम् । षट् । आदेः किम् । लषति । अणति । षोपदेशानाह । " सेक् सृप् सृ स्तृञ् सृज् स्तृस्त्यान्ये दंत्याजंतसादयः । एकाचः षोपदेशाः ष्वष्क् स्विद् स्वद् स्वंज् स्वप् स्मिङः ॥ " दंत्यश्च अच्च दंत्याचौ तौ अंते अव्यवहितौ यस्य स दंत्याजंतः । दंत्याजंतश्चासौ सश्च दंत्याजंतसः दंत्याजंतस आदिर्येषां धातूनां ते दंत्याजंतसादयः । दंत्यांतसादयोऽजंतसादयश्चैकाचः एकस्वरा धातवः षोपदेशाः । कथंभूताः । सेकृ गतौ । सृप्लृ गतौ । सृ गतौ । स्तृञ् आच्छादने । सृज् विसर्गे । स्तॄञ् आच्छादने । स्त्यै शब्दसंघातयोः । एभ्यो अन्ये । उक्तलक्षणस्यातिव्याप्तिं वारयितुमिदं विशेषणम् । पुनः कथंभूताः । ष्वष्क गतौ । ञिष्विदा गात्रप्रक्षरणे । ष्वद आस्वादने । ष्वंज परिष्वंगे । ञिष्वप् शये । स्मिङ् ईषद्धसने । एतैः सहिताः । एकाचः किम् । सोसूच्यते । चुरादावदंतोऽयम् । दंत्याजंतेति किम् । चुस्कुंदे । दंत्यः केवलदंत्यो न तु दंतोष्ठजोऽपि । ष्वष्कादीनां पृथग्ग्रहणात् । तेन स्वाद आस्वादने । इत्यस्यासिस्वददित्यादौ षत्वं न । णोपदेशानाह । नर्द नाटि नाथ नाध नंद नक्क नॄ नृतः नर्द शब्दे । नट अवस्यंदने । चुरादिः । नट नृत्ताविति घटादिस्तु नेह गृह्यते । नाटीति दीर्घानिर्देशात् । नाथृ नाधृ याच्ञादौ । टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एभ्योऽष्टाभ्यो भिन्ना णोपदेशाः । नाधृ नंद नॄ इति त्रयाणां केचिण्णोपदेशतामाहुः ॥

तत्त्व०—आदेरिति । ष् च ण् च ष्ण् तस्य । स् च नश्च स्नः ॥

**प्रादेश्च तथातौसुनमाम् ॥ ६६ ॥ प्रादेः परेषां स्वादीनां नमादीनां च धातूनां सकारनकारयोः षकारणकारौ भवतः षत्वणत्वनिमित्ते सति ॥ निषेधति ॥**

सुबो०—प्रादेश्च तथातौसुनमाम् । प्रादिसंबंधिनः किलात् परेषां स्वादीनां सस्य षः नमादीनां नस्य णश्च । षत्वनिमित्तं किलम् । णत्वनिमित्तं षकाररेफऋवर्णाः । स्वादीनाह । उपसर्गस्थान्निमित्तात् सुनोति स्यति स्तौति स्तोभाति स्था सेनय सेध सिच संज स्वञ्जाम् । प्रतिभिन्नात् सदेश्चाऽवादालंबनाविदूर्ययोः स्तंभेश्च व्यवाभ्यां भोजने स्वनश्च परिनिविभ्यः सेव सित सय सिवु सह सुट् स्तु स्वंजादेः स्कभ्नातेश्च सस्य षः । षुञ् अभिषवे । षू प्रेरणे । षो अंतकर्मणि । ष्टुञ् स्तुतौ । ष्टुभ स्तंभे । एषां स्तिपानिर्देशाद्यङ्लुकि षत्वं न । तेनाभिसोषवीति अभिसोषोतीत्यादि । ष्ठा गतिनिवृत्तौ । सेनयेति ण्यंतो नामधातुः । सेनया अभियातीति अभिषेणयति । षिधु गत्याम् । षिच क्षरणे । षंज संगे । ष्वंज परिष्वंगे । स्तंभु इति सौत्रो रोधनार्थः । ष्टभि प्रतिबंधे । इति तु न गृह्यते । लक्षणप्रतिपदोक्तन्यायेन सौत्रो हि

नोपध इति प्रतिपदोक्तः । इदित्त्वान्नुमि कृते ष्टभिर्लाक्षणिकस्तेन विस्तंभते इत्यादौ षत्वं न । षद्लृ विशरणादौ । प्रतिभिन्नात्किम् । प्रतिसीदति । आलंबनमाश्रयणम् । अविदूर एवावदूर्यं सामीप्यम् । ष्यः । अवष्टब्धा गौः । निरुद्धा । समीपे आस्ते इत्यर्थः । एतयोः किम् । अवस्तब्धो वृषलः शीतेन । स्वन शब्दे । विष्वणति । सशब्दं भुंक्ते इत्यर्थः । भोजने किम् । विस्वनति वीणा । षेवृ सेवायाम् । परिषेवणम् । षिञ् बंधने । क्तांतः सितः शब्दः । सयशब्दस्तु स्वराद इति पचादेर्वा अप्रत्ययांतो विषयः । षिवु तंतुसंताने । परिषीव्यति । षह मर्षणे । परिषहते । सुडागमः । परिष्करोति । स्तुस्वंजोः पुनर्वचनं सिवादीनामड्व्यवायेऽपीति विकल्पार्थम् । स्कंभु रोधने । विष्टभ्नाति । एते स्वादयः । णोपदेशा एव नमादय इति ॥

तत्त्व०—प्रादेश्च तथातौसुनमाम् । यद्यपि क्लिलादित्यस्यैवानन्तरस्येति न्यायेनानुवृत्तिस्तथापि चकारेण प्कनौ ण इत्यनुवर्त्तते । तदेवानुवृत्तौ किं चकारेण तथातावित्यस्य तेन प्रकारेण तौ स्तः । षत्वणत्वनिमित्ते सतीति । षत्वनिमित्त क्लिलम् । णत्वनिमित्त षकाररेफऋवर्णाः तत्र स्वादयः सप्रत्ययस्यप्प्रत्ययान्त्येषु । षुञ् अभिषवे । ष्टुञ् स्तुतौ । स्तुभ स्तंभे । षोऽन्तकर्माणि । षु प्रेरणे । ष्ठा गतिनिवृत्तौ । ञ्यन्तसेनाशब्दः । षञ्ज सगे । ष्वज परिष्वगे । षिध गत्याम् । अतिप्रतिपूर्वषद्लृ विशरणगत्योः । अयङन्तषिच क्षरणे । अवपूर्वष्टंभ निरोधे । व्यवपूर्वको भोजनार्थः । स्वन शब्दे । परिनिविपूर्वकः षेवृ सेचने । सुट् प्रत्ययः । अड्वर्जितषिवु तन्तुसन्ताने । अड्वर्जितषह मर्षणे ॥

## सेधतेर्गतौ न षः ॥ ६७ ॥ गङ्गां विसेधति ॥

सुबो०—सेधतेर्गतौ न षः । उपसर्गस्थनिमित्ताद्गत्यर्थसेधतेः सस्य षत्वं न । श्तिपानिर्देशाद्यङ्लुकि गत्यर्थसेधतेः षत्वं निषेधीति ॥

## अड्द्वित्वव्यवधानेऽपि षः ॥६८॥ न्यषेधत् । निषिषेध ॥ षिधू शास्त्रे माङ्गल्ये च ॥

सुबो०—अड्द्वित्वव्यवधानेऽपि षः । सितशब्दात्प्राक् पंचदशानां सुनोत्यादीनामड्व्यवधानेऽपि षत्वम् । अभ्यषुणोत् । सितशब्दात्प्राग्दशानां स्थादीनां द्वित्वव्यवधानेऽपि षत्वमित्यर्थः। निषिषेध । षिधू शास्त्रे मांगल्ये च। शास्त्रं शासनम् । मंगलमेव मांगल्यं ष्यः । मंगलक्रियेत्यर्थः ॥

तत्त्व०—अत्रान्तरेऽपीत्यनुवर्त्तते तेनाड्द्वित्वव्यवहितेऽपीत्याह । अड्द्वित्वेत्यादि । षिधू शास्त्रे माङ्गल्ये च । शास्त्र शासनम् । मांगल्यं मगलक्रिया ॥

## ऊदितो वा ॥ ६९ ॥ ऊदितो धातोः परस्य वसादेरनपीड्वा ॥

सुबो०—ऊदितो वा । ऊत् इद्यस्य स ऊदित् तस्मात् । अनपीति षण्णां लेट्लिङ्लुट्लृट्लङ्लुङां लकाराणामन्येषामपीत्यादिप्रत्ययानां च संज्ञा । अप्प्रत्ययविषयताभावात् ॥

तत्त्व०—ऊदितो वा । ऊत् इद्यस्य स ऊदित् तस्मात् ॥

**स्वरतिसूतिसूयतिधूञ्रधनशतृप्दृपद्रुहमुहस्नुहस्निहां च ॥७०॥** स्वरतिसूतिसूयतिधूञां किद्वसादेर्णादेर्नित्यमिट् स्यात् ॥ सेधति । सेधेत् । सेधतु सेधताद्वा । असेधत् । सिषेध सिषेधिथ ॥

सुबो०—स्वरतिसूतिसूयतिधूञ्रधनशतृप्दृपद्रुहमुहस्नुहस्निहां च । एभ्योऽपि परस्य वसादेरनपीड् वा । स्वृ शब्दोपतापयोः । भ्वादिर्गृह्यतेऽलुविकरणत्वात् । षूङ् प्राणिगर्भविमोचने । आदादिको दैवादिकश्च गृह्यते न तु षूङ् प्रेरणे तौदादिकः । धूञ् कंपने स्वादिस्थः क्र्यादिस्थश्च । न तु धू विधूनने । सानुबंधनिर्देशात् । रध हिंसासंराध्योः । णश् अदर्शने । तृप् प्रीणने । दृप् हर्षमोहनयोः । द्रुह जिघांसायाम् । मुह वैचित्त्ये । ष्णुह उद्गिरणे । ष्णिह प्रीतौ । स्वरतिसूतिसूयतिधूञां किद्वसादेर्णादेर्नित्यमिट् । एभ्यः परस्य कितो वसादेर्णादेर्नित्यमिट् भवति । स्वरत्यादिविकल्पं बाधित्वा कित इतीण्निषेधे प्राप्ते क्रादिनियमादिड्विधिः ॥

तत्त्व०—वाशब्दस्य व्यवस्थावाचित्वादाह । स्वरतीत्यादि ॥

**तथोर्धः ॥ ७१ ॥** झभान्ताद्धातोस्तकारथकारयोर्धकारो भवति दधातेर्न ॥ झभे जबाः ॥ सिषेद्ध । सेधिता सेद्धा । सेधिष्यति सेत्स्यति । असेधिष्यत् असेत्स्यत् । असेधीत् ॥

सुबो०—तथोर्धः । तश्च थ् च तथौ तयोः आदिजबानामित्यतो झभांतस्येत्यनुवृत्तं पंचम्या विपरिणम्यते । झभांतात् किम् । भूतः । दधातेर्न । डुधाञ् धारणादावस्मात् परयोस्तथोर्धो न । धत्तः ॥

तत्त्व०—तथोर्ध इति । तश्च थ् च तथौ तयो' । वेत्यनुवृत्तेर्दधातेर्निषेध. । यद्वा तथोऽधः इति पाठ. । तत्र तश्च थ् च एतयो' समाहार तथ् तस्य तथ. अध इति दधातेर्नेत्यर्थः । आदिजबानामित्यतो झभानुवृत्तिः ॥

**अनिटोऽनामिवतः ॥ ७२ ॥** अनिटोऽनामिवतश्च धातोर्वृद्धिः स्यात्पे परे सौ ॥ असैत्सीत् ॥

सुबो०—अनिटोऽनामिवतः । द्वयमिदं धातोर्विशेषणम् । यद्यपि धातुः सर्वोऽप्यनिडेव तस्य इड्विधानाभावात् । तथापि न इट् यस्मात् तस्मात्परस्य तादिप्रत्ययस्येति व्याख्येयम् । अनिटो धातोरुपधाभूतस्य नामिनो वृद्धिर्भवति पे सौ । नाम्यंतस्य तु धातोर्नामिन इति सूत्रेणैव वृद्धिः । कार्यातिदेशोऽयम् । नामि विद्यतेऽस्येति नामिवान् तस्य तडिदादित्वाद्वतुः ॥

तत्त्व०—अनिटोऽनामिवत इति । अनिटः नामिवत् इति छेदः । नन्वनिट्त्वं धातुमात्रस्यैव नहि कस्यापि धातोरिड्विधीयते किन्तु प्रत्ययस्यैव । तस्मादनिट् इति व्यर्थमिति चेत्सत्यम् । न इट् यस्मात्तस्य प्रत्ययस्येति व्याख्यानात् । तथापीडभावः कस्य प्रत्ययस्य ग्राह्यः तादेरिति गृहाण । णादेस्तु क्रादिनियमप्राप्ततित्वात् [illegible]कारपरस्य सेट्त्वात् । अश्च नामी च अनामिनौ तौ स्तोऽस्यानामिवान् तस्य द्वर्ति श्रूयमाणस्य वतोः प्रत्ये-

कमन्वय इत्याशयेनाह । अवतो नामिनत इति । यद्यपि पूर्वेणाकारनामिनोः प्राप्तिस्तथाप्यनुपधाभूताकारस्योपधाभूतनामिनश्चाप्राप्तारभः । नन्वत्र मान्तोपधात्वाभावात्कथं वतुरिति चेत्सत्यम् । अन्यतोऽपि वतुर्भवतीत्यनेनैव ज्ञाप्यते । तेन तडित्वानित्यादि सिद्धमिति । अथ तथाप्यनामिन इत्येवास्तु किं वतुना इति चेन्न नञ्समासभ्रमप्रसंगात् । मत्वर्थीयाद्विरूपो मत्वर्थीयो भवतीत्यनेन ज्ञाप्यते । तेन हस्तिमती शालेत्यादि सिद्धम् । अथानिट इत्येवास्तु स्वरादेरित्यतः स्वरस्यानुवृत्तेस्तस्य च मत्वर्थीयाकारान्तत्वेन ग्रहणात् स्वरवतोऽनिटो धातोः सिर्णित् कार्यकृदित्यर्थलाभात् । यद्वा णित्कार्यं वृद्धिरेव सा च स्वरस्यैवेति स्वरलाभात् । पूर्वेणाप्राप्तस्यैव स्वरस्य भविष्यतीत्यर्थादनुपधाभूताकारस्योपधाभूतनामिनश्च वृद्धिर्भविष्यतीत्यर्थो लभ्य एवेति चेत्सत्यम् । नामिवद्ग्रहणस्योत्तरार्थत्वादित्यलं पल्लवितेन ॥

**झसात् ॥ ७३ ॥ झसादुत्तरस्य सेर्लोपो झसे ॥ असैद्धां असैत्सुः । असैत्स्व असैत्स्म ॥ खद स्थैर्ये हिंसायां च ॥ खदति । खदेत् । खदतु खदताद्वा । अखदत् ॥**

सुबो०—झसात् । ह्रस्वादित्यतो लोपो झसे इत्यनुवृत्तं सेरिति सूत्रं च । झसात्किम् । अचेष्ट । झसे किम् । असैत्सीत् । इट्पक्षे असेधीत् । खद स्थैर्ये हिंसायां च । चाद्भक्षणे । स्थिरस्य भावः स्थैर्यम् । ण्यः ॥

तत्त्व०—झसादिति । सेरित्यस्यानुवृत्तिः । लोपो ह्रस्वादित्यतो लोपस्य । झसात्किम् । अचेष्ट । झसे किम् । असैत्सुः । सेः किम् । अरुवतामित्यत्र ङस्य मा भूत् । अत्र लोपो ह्रस्वझसात्सेरिति पठितुं युक्तम् ॥

**अत उपधायाः ॥ ७४ ॥ धातोरुपधाया अतो वृद्धिः ञ्णिति ॥ चखाद ॥**

सुबो०—अत उपधायाः । आदिस्वरस्येत्यतो ञ्णितीति वृद्धिरिति चानुवृत्तम् । अतः किम् । तुतोद । उपधायाः किम् । गणयति ॥

तत्त्व०—अत उपधाया इति । आदिस्वरस्येत्यतो ञ्णिति च वृद्धेरनुवृत्तिः । अत्रात इति योगं विभज्यादन्तस्य च धातोर्वृद्धिस्तेन वापय इत्यादि सिद्धमिति पुनरुपधाया इत्यत्र नाम्न इति योजनीयम् । तेन नाम्न उपधाया वृद्धिरिति व्याख्येयत्वादयतीत्यादिसिद्धिरिति । पुनरुभयोर्मेलनात् । धातोरुपधाया अतो वृद्धिरिति । ञ्णिति किम् । पक्ता । उपधायाः किम् । ततक्ष । धातोः किम् । जगतोऽयं जागतः । अत्र परत्वादादिवृद्धिं बाधित्वा उपधावृद्धिः प्रसज्येत । गार्ग्यो जमादेत्यादावादिवृद्ध्युपधावृद्ध्योरवकाशः । णित्पे । ण् इत्यस्य स णित् । अणितो णित्करणाण्णिद्वदिति गम्यते । अन्यशब्दोऽन्यत्र प्रयुज्यमानोऽपि वत्यर्थं गमयति । प्राधान्याच्च कार्यातिदेशोऽयम् । तथा च । णितो यत्कार्यमत उपधाया इत्यादिना वृद्ध्यादि तदतिदिश्यते । यद्यपि णितां णबादीनामातो णव्धानित्यादिना विहितं अवाद्यपि णित्कार्यं तथापि तत्रातिदिश्यते । कार्यविशेषत्वात् । सामान्यातिदेशोऽयम् । णविणादयस्तु णिद्विशेषाः यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्यत्र यद्विशिष्टे गोतमे च तत्रातिदिश्यते किंतु ब्राह्मणसामान्यस्य । तथात्रापि णिति यत् दृष्टं कार्यं तदतिदिश्यते ॥

**णबुत्तमो वा णित् ॥ ७५ ॥ चखाद चखद । प्सेर्णित् ॥**

सुबो०—णबुत्तमो वा णित् । उत्तमपुरुषसंबंधि णब् वा णित् । प्सेरित्यनुवर्त्यते । पे परे सेर्णिद्भवति । ण् इत् यस्य स णित् अणितं णिदित्याह । कार्यातिदेशोऽयम् ॥

**अतो हसादेर्लघोर्वा वृद्धिः सेटि सौ ॥ ७६ ॥ अखदीत् अखादीत् ॥ गद व्यक्तायां वाचि ॥ व्यक्ता कोऽर्थः परिस्फुटवर्णा ॥**

सुबो०—अतो हसादेर्लघोर्वा वृद्धिः सेटि सौ । हसादेर्लघोरकारस्य वा वृद्धिः स्यात् सेटि परस्मैपदे सौ । अतः किम् । अदेवीत् । हसादेः किम् । मा अतीत् । लघोः किम् । अगर्दीत् । सेटि किम् । अपाक्षीत् । पे किम् । अयतिष्ट । वद स्थैर्ये । पवर्गीयादिः ॥

तत्त्व०—अतो हसादेरिति । अत इत्यस्यैव विशेषणद्वयम् । हस आदिर्यस्य स हसादिस्तस्य । हसादेः किम् । मा भवानतीत् । लघोः किम् । अनर्दीत् । यद्यत्रकाशादित्यत्र वकारादकारस्य वृद्धिवारणाय येन नाव्यवधानमिति न्यायेनाप्येकवर्णव्यवधानमाश्रियते तदा स्वरक्षीदित्यत्रापि प्रसक्त्यभावाल्लघोरिति न कर्त्तव्यमिति केचित् । एतच्च अत उपधाया इत्यत्र नो वेत्यतो वानुवृत्त्या लभ्यते । एवमन्यत्रापि वृद्धिनिषेधविकल्पयोरिदमेव मूलमूह्यम् ॥

**प्रादिस्थान्निमित्तान्नेर्नस्य णो गदनदपदपतअपिद्दाधास्थामाङ्मेङ्स्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिमिनोतिदेग्धिषु ॥ ७७ ॥**

सुबो०—प्रादिस्थान्निमित्तान्नेर्नस्य णो गदनदपदपतअपिद्दाधास्थामाङ्मेङ्स्यतिहंतियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु । प्रादिषु तिष्ठतीति प्रादिस्थः तस्मात् निमित्तात् षकाररेफऋवर्णरूपात् परस्य नेर्णत्वं गदादिषु परेषु । गद व्यक्तायां वाचि । णद् अव्यक्ते शब्दे । पद गतौ । पत्लृ पतने । एषां चतुर्णामपानिर्देशाद्यङ्लुकि णत्वं न । प्रनिजागदीति । प्रनिनानदीति । अपिद्दाधेति चत्वारः । डुदाञ् दाने । प्रणिददाति । दाण् प्रणियच्छति । दो प्रणिद्यति । देङ् प्रणिदयते । धारूपौ द्वौ । धेट् प्रणिधयति । डुधाञ् प्रणिदधाति । ष्ठा गतिनिवृत्तौ । माङ् माने । मेङ् प्रणिदाने । षो अंतकर्म्मणि । हन् हिंसागत्योः । या प्रापणे । वा गतिगंधनयोः । द्रा कुत्सायाम् । प्सा भक्षणे । टुवप् बीजतंतुसंताने । वह प्रापणे । शमु उपशमे । चिञ् चयने । दिह उपचये । स्यत्यादीनामेकादशानां स्तिपानिर्देशाद्यङ्लुकि णत्वं न । प्रनिसासेति । प्रनिजंघनीतीति ॥

तत्त्व०—प्रादिस्थादिति । प्रादिषु तिष्ठतीति प्रादिस्थम् । तस्मात् निमित्तात् णत्वनिमित्तात् षकाररेफऋवर्णरूपात् निरुपसर्गस्य नस्य णत्वमित्यर्थ । गदादिषु धातुषु परेषु । यत्तु एतत्पूर्वस्य नेर्णत्वमित्येतावन्मात्रं वासुदेवेनोक्तं तन्न । निर्गच्छतीत्यादावतिव्याप्तेः । विनिगच्छतीत्यत्र च ॥

**अन्यत्राकखादावषान्ते आद्योच्चारणे वा ॥ ७८ ॥ अकखादौ किम् । प्रनिकरोति । प्रनिखादति । अषान्ते किम् । प्रनिदुःख्यति । वेति किम् । प्रणिभवति प्रनिभवति । आद्योच्चारणे किम् । प्रणि-**

चखाद प्रनिचखाद । प्रणिगदति । अगदीत् ॥ रद विलेखने ॥ रदति । रदेत् । रदतु । अरदत् । रराद ॥

सुबो०—अन्यत्राकखादावषांते आद्योच्चारणे वा । आदौ भवा आद्याः। आद्यानां पाणिनिकात्यायनपतंजलीनामुच्चारणमाद्योच्चारणं तस्मिन् । कादिखादिषांतवर्जे गदनदादेरन्यस्मिन् धातौ परे प्रादिस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा । कश्च खश्च कखौ तावादी यस्य स कखादिः कखादेरन्योऽकखादिस्तस्मिन् । षोऽतो यस्य स षांतस्तस्मादन्योऽषांतस्तस्मिन् । अकखादौ किम् । प्रनिचकार । प्रनिचखाद । अषांते किम् । प्रनिषेक्ष्यति । रद विलेखने । विलेखनं भेदनम् ॥

तत्त्व०—अन्यत्रेति । अन्यत्र वा अन्यस्मिन् धातौ परे प्रादिस्थनिमित्तपूर्वकस्य नेर्णत्व वेत्यर्थः । आद्युच्चारणे प्रथमोच्चारणसमये अकखादौ अषान्ते च । कश्च खश्च कखौ तावादी यस्य स कखादिः कखादेरन्योऽकखादिस्तस्मिन् । षः अन्ते यस्य स षान्तस्तस्मिन् । आद्योच्चारणे इत्युभयत्रान्वेति तथा चायमर्थः । आद्योच्चारणे कादिखादिषांतवर्जगदनदादेरन्यस्मिन् धातौ परे प्रादिस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा भवति । प्रणिभवंति । प्रनिभवंति । अकखादौ किम् । प्रनिकरोति । प्रनिखादति । अषांते किम् । प्रनिपिनष्टि । विलेखने इति । विलेखनं भेदनम् ॥

लोपः पचां कित्ये चास्य ॥ ७९ ॥ पचादीनां किति लिट्यनादेशादीनां पूर्वस्य लोपो भवत्यकारस्य एकहसमध्यस्थस्य चैकारः किति णादौ सेटि थपि च ॥ रेदतुः । रेदिथ ॥ णद अव्यक्ते शब्दे ॥ प्रणिनेदुः । नेदिथ ॥ अर्द गतौ याचने च ॥ आभ्वोर्णादौ ॥

सुबो०—लोपः पचां कित्ये चास्य । पचामिति बहुवचनेन पचप्रकारा धातवो गृह्यंते । यथा पच्धातुरेकहसमध्यस्थाकारवान् । लिटि अनादेशादिश्च तथान्येऽपि धातवः । अस्य किम् । दिदिवतुः । ररासे । अनादेशादीति किम् । चकणतुः । एकशब्दोऽत्राऽसहायवचनः । एकौ च तौ हसौ च एकहसौ तयोर्मध्यस्थः एकहसमध्यस्थस्तस्य । एकहसः किम् । तत्सरतुः । त्सर छद्मगतौ । आभ्वोर्णादौ ॥

तत्त्व०—लोपः पचामिति । पचामिति बहुवचनेन पचप्रकाराः धातवो गृह्यंते तथा पचधातुरेकहसमध्यस्थाकारवान् लिटि अनादेशादिश्च तथान्योऽपि धातुरिति । तथा च पप्रच्छतुरित्यत्र एकहसः मध्यस्थत्वाभावान्नेत्त्वलोपौ । अनादेशादे किम् । चखनतुः । लिडादेशविशेषणात् । नेमिथ । सेहे । अस्य किम् । दिदिवतुः ॥

नुगशाम् ॥ ८० ॥ अश्नोतेर्ऋकारादेः संयोगान्ताकारादेश्च पूर्वस्य नुग्भवति णादौ ॥ आनर्द । आर्दीत् ॥ नर्द गर्द शब्दे ॥ तर्द हिंसायाम् ॥ तर्दति ॥ कर्द कुत्सिते शब्दे ॥ कर्दति ॥ खर्द दंदशूके ॥ खर्दति ॥ क्रदि चेष्टायाम् ॥ क्लिदि परिदेवने ॥ क्लिन्दति ॥ अत सात-

त्यगमने ॥ आतिथ ॥ खाद भक्षणे ॥ अखादीत् ॥ क्रदि आह्वाने रोदने च ॥ अति अदि बन्धने ॥ अन्तति । अन्तेत् । अन्ततु । आन्तत् । आनन्त । आनन्द । अन्द्यात् । अन्दिता । अन्दिष्यति । आन्दिष्यत् । आन्दीत् ॥ टुणदि समृद्धौ ॥ ननन्द ॥ चदि आह्लादने दीप्तौ च ॥ इदितो नुम् । चन्दति । चन्देत् । चन्दतु । अचन्दत् । चचन्द । चन्द्यात् । चन्दिता । चन्दिष्यति । अचन्दिष्यत् । अचन्दीत् ॥ शुन्ध शुद्धौ ॥ शुन्धति । शुन्धेत् । शुन्धतु । अशुन्धत् । शुशुन्ध । शुन्ध्यात् । शुन्धिता । शुन्धिष्यति । अशुन्धिष्यत् । अशुन्धीत् ॥ तक्क कक्क हसने ॥ तकि कृच्छ्रजीवने ॥ तङ्कति । ततङ्क । अतङ्कीत् ॥ शुक गतौ ॥ शोकति । अशोकीत् ॥ बुक्क भषणे ॥ बुक्कति ॥ कष हसने ॥ कषति ॥ युगि जुगि वर्जने ॥ युङ्गति ॥ इदि परमैश्वर्ये ॥ इन्दति ॥

सुबो०—नुगशाम् । अशूङ् व्याप्तौ । अशामिति बहुवचनमाद्यर्थम् । संयोगोऽन्तो यस्य स संयोगांतः स्वर आदिर्यस्य स स्वरादिः संयोगांतश्चासौ स्वरादिश्च संयोगांतस्वरादिस्तस्य । अत सातत्यगमने । सततस्य भावः सातत्यं सातत्येन गमनं सातत्यगमनं तस्मिन् । खाद भक्षणे । ऋदित्त्वान्नेरित इत्यङ् । काप्यन् । अचखादन् । टुनदि समृद्धौ । टु इति ट्वितोऽथुरित्यत्राथुप्रत्ययार्थः । नंदथुः । इदित्त्वान्नस्य लोपो न । नंद्यात् । चदि आह्लादने दीप्तौ च हर्षे तेजसि चेत्यर्थः । क्लिदि परिदेवने । परिदेवनं शोकः । इदि परमैश्वर्ये । ईश्वरस्य भाव ऐश्वर्यम् । ष्यः । परा उत्कृष्टा मा लक्ष्मीर्यस्य तत् परमं परमं च तदैश्वर्यं च परमैश्वर्यं तस्मिन् ॥

त० प्र०—नुगशामिति । अशामिति बहुवचनेनैतत्स [illegible] लब्धमित्याह । ऋकारादेरित्यादि । स्वरादेरिति अ- [illegible] बोध्यम् ॥

स्वरादेः ॥८१॥ स्वरादेर्धातोर्द्वितीयोऽडागमो भवति दिवादौ परे ॥ अड प ॥ एधे ए ॥ ऐन्दत् ॥

सुबो०—स्वरादेः । दिवादावडित्यनुवृत्तं स्वर आदिर्यस्य सः स्वरादिस्तस्य आगमसामर्थ्यात् द्वितीयोऽडादित्यर्थः । अटं विना स्वरादित्वमिह विवक्षितमन्यथा दिवादावडित्यत्रे नाटि चेति सूच्यताम् ॥

त० प्र०—स्वरादेरिति । [illegible] । अन्यथा दिवादावडित्यस्यापेऽडटि नेति सूचितेन द्वितीयाटः [illegible] आदेशपक्षे स्वरादि. [illegible] प्रथमं स्वरादित्वादन्यापद्यचोरित्युक्तं तत्र ।

औष्ट ऐज्यत इत्यादावप्रसंगात् । द्वितीय इति विधानसामर्थ्यात् प्रथमाबाधेन भवतीत्याशयः करणसामर्थ्यादेकेन याधातुकार्यानन्तरं द्वितीयेन कार्यमित्याह । ए ऐ ऐ इति ॥

**कासादिप्रत्ययादाम् कृस्भूपरः ॥ ८२ ॥** कास् आस् दय अय गुरुनाम्याद्यनेकस्वरेभ्यो णबादौ परे आम् प्रत्ययो भवति । स च कृअस्भूपरः प्रयोक्तव्यः ॥

सुबो०—कासादिप्रत्ययादाम् कृस्भूपरः। कास् शब्दकुत्सायाम् । आस उपवेशने । दय दाने । अय गतौ । गुरुश्चासौ नामी च गुरुनामी गुरुनामी आदिर्यस्य स गुरुनाम्यादिर्धातुः । प्रत्ययग्रहणमनेकस्वरोपलक्षकम् । एभ्य आमूप्रत्ययः स्यात् । कीदृशः । कृस्भुवः परे यस्मात्स कृस्भूपर इत्यर्थकथनेन विपर्यासव्यवहितयोर्निवृत्तिः कथिता । कथं तर्हि " तं पातयां प्रथममास पपात पश्चात् । प्रभ्रंसयां यो नहुषं चकार " इत्यादिप्रयोगाः प्रमादत एव । कृस्भुवां क्रियासामान्यवाचित्वादामूप्रकृतीनां क्रियाविशेषवाचित्वात् तदर्थयोरभेदान्वयो भवति । सामान्यविशेषयोरभेदान्वयो लोकतः सिद्धोऽस्ति । एवं च ईदांचकार । ईदांबभूवेत्यादौ एककर्तृकाभूतानद्यतनपरोक्षापरमैश्वर्याभिन्ना क्रियेति तुल्यो बोधः । ननु करोतिः सकर्मकः भवतिस्त्वकर्मकः कथं द्वयोस्तुल्यबोध इति चेदत्राहुः । यदा हि करोतिरुत्पादनार्थकः स्वातंत्र्येण प्रयुज्यते तदा तस्य नियमेन सकर्मकत्वं भवति । घटं चक्रे राज्यं चकारेत्यादौ । यदा तु क्रियांतरसमानाधिकरणः करोतिः प्रयुज्यते तदा यत्समानाधिकरणः करोतिस्तत्सकर्मकत्वाऽकर्मकत्वाभ्यां कृत्वा स्वयमपि तथा सकर्मकाऽकर्मकभावौ भजते । जुहवांचकारेति एवं भ्वस्त्योरप्यामूप्रकृतिसमानाधिकरणत्वेन क्वचित्सकर्मकत्वं बोध्यम् । तथा च "तस्याऽतपत्रं विभरांबभूव " इति माघः । "तपर्त्तुपूर्त्तावपि मेदसांभरा विभावरीभिर्विभरांबभूविरे । " इति श्रीहर्षश्च । इत्यत्र क्रियान्तरसमानाधिकरणाद्भवतेः सकर्मकत्वात् कर्मणि लिट् । एवं चामूप्रकृत्यर्थगतकारकसंख्यादिविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति । गुरुनाम्यादि किम् । इयेष । अनेकस्वरेति किम् । अ इवाचचारेति । औ इत्यत्र प्रत्ययांतत्वेऽप्यनेकस्वरत्वाभावादाम् न ॥

तत्त्व०—कासादीति । गुरुर्यो नामी स आदिर्यस्य स गुरुनाम्यादिः । प्रत्ययग्रहणमनेकस्वरोपलक्षकम् । तेन अ इयाचचार औ इत्यत्र प्रत्ययान्तत्वेऽप्यनेकस्वरत्वाभावान्नाम् ॥

**विददरिद्राजाग्रुषां वा ॥ ८३ ॥ रः ॥ ८४ ॥ पूर्वस्य रवर्णस्याकारः ॥**

सुबो०—विददरिद्राजाग्रुषां वा । एभ्यो वाऽऽम् दरिद्राजागर्त्योरनेकस्वरत्वान्नित्यप्राप्तौ वेत्त्योषत्योश्चाप्राप्तौ विकल्पः । विद् ज्ञाने । दरिद्रा दुर्गतौ । जागृ निद्राक्षये । उष दाहे । आमो मस्य नेत्वम् । आस्कासोरामूविधानात् ज्ञापकात् । रः । ऋ अ इति छेदः । पूर्वस्य हसादिः शेष इत्यतः पूर्वस्येत्यनुवृत्तम् ॥

तत्त्व०—अत्रोदितो वेत्यतो वानुवृत्तेराह । विददरिद्राजागुर्षा वेति । दरिद्राजागत्योरनेकस्वरत्वान्नित्यप्राप्तौ नेत्त्योपत्योश्चाप्राप्तौ विकल्पः । र इति । ऋ अ इति छेदः । पूर्वस्य हसादिः शेषः इत्यतः पूर्वस्येत्यनुवर्त्तते । यत्तु वासुदेवेन णवादौ पूर्वस्येत्यनुवर्त्तते इत्युक्तं तन्न । र इत्यत्राख्यापादस्थे णवादाविति अस्मात्कूरादस्यनुवृत्त्यसंभवात् ॥

धातोर्नामिनः ॥८५॥ नाम्यन्तस्यादन्तस्य च धातोर्वृद्धिः ञ्णिति परे ॥ इन्दांचकार इन्दांचक्रतुः इन्दांचक्रुः । इन्दांचकर्थ । इन्दानास इन्दामासतुः इन्दामासुः । इन्दांबभूव । इन्द्यात् । ऐन्दीत् ॥ णिदि कुत्सायाम् ॥ इदितो नुम् । प्रपूर्वः । प्रणिन्दति प्रनिन्दति । प्रनिन्देत् । प्रणिन्दतु । प्राणिन्दत् । निनिन्द । निन्द्यात् । निन्दिता । निन्दिष्यति । अनिन्दिष्यत् । अनिन्दीत् ॥ दधि पालने ॥ ददन्ध ॥ उख गतौ ॥ अप् कर्तरि । उपधालघोर्गुणः । ओखति । ओखेत् । ओखतु । औखत् ॥

सुबो०—धातोर्नामिनः । आदिस्वरस्येत्यतो वृद्धिरिति ञ्णितीति चानुवृत्तम् । अत्र हि स्वरस्येति पदमनुवृत्त्य वाक्यभेदेन व्याख्येयम् । तेन स्वरांतस्य धातोर्वृद्धिः ञ्णिति । तेन श्वानमाचष्टे शावयति । विद्वांसं विदावयतीत्यादि सिद्धम् । अदंतस्येति अत उपधाया इत्यत्रात् इति योगविभागात्तस्येहाकर्षणाद्वा लब्धं तेन च अंकायतीत्यादि सिद्धम् ॥

तत्त्व०—धातोर्नामिन इति । आदिस्वरस्येत्यतो वृद्धिरिति ञ्णितीति चानुवर्त्तते । धातोः किम् । आत्रेयः । नात्रादिवृद्धिर्बाधिका नापि यस्य लोपः उभयोरन्यत्रावकाशत्वादत्र परत्वादन्त्यवृद्धिरेव स्यात् । तथाहि आदिवृद्धेरवकाश आश्वयुजः इत्यत्र । अन्त्यवृद्धेः निनाय । इहोभयप्रसंगे परत्वादन्त्यवृद्धिः आतो धातोरित्येकम् । अथैवमग्निभुवोऽपत्यमाग्निभव इत्यत्रान्त्यवृद्धिः प्राप्नोति भुवो धातुत्वादिति चेत् । शृणु । धातोरित्येवशब्देन विहिते णिति वृद्धिरिति व्याख्येयम् । अत्र तु नाम्नो विहितोऽण् न तु धातोः एव चाग्निभुवमिच्छतीति वाक्ये नाम्नो य ई चास्येति य तत. क्विप् अल्लोपयलोपौ तस्यापत्यमाग्निभव इत्यत्रापि न भवति । नामशब्देनात्राणो विधानात् अथात्रादिस्वरस्येत्यनुवर्त्य स्वरान्तस्य धातोरिति व्याख्येयम् । मैव स्वरसहचरितादिशब्दस्याप्यनुवृत्तिप्रसंगात् दरिद्रावित्यादावतिव्याप्तेः स्वरमात्रानुवृत्तौ तु गणयतीत्यादावत्यवृद्धेर्दुर्वारत्वात् न चात्र यत इति लोपो बाधक. तस्यानपि सामान्ये विहितत्वेनास्यानपि विशेषे ञ्णिति विहितत्वादपवादत्वात् । इदामासेति । कस्भूपर इत्यत्र प्रथमग्रहणादस्तेर्भूभावो न । अन्यथा हि कृभूपर इत्येवोच्यते । आमो मस्येत्त्वमास्कासोर्विधानान्न । अन्यथा मित्त्वादत्यस्वरात्परत्र विधानादास्कासोः सकारात्पूर्वविधाने सवर्णदीर्घत्वे वैलक्षण्याभावात् ॥

असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवौ ॥८६॥ उवोख ऊखतुः ऊखुः । उवोखिथ । औखीत् ॥ लुञ्च अपनयने ॥ अञ्चु गतिपूजनयोः ॥ अञ्चति । अञ्चेत् । अञ्चतु । आञ्चत् । आनञ्च । अ-

च्यात् । पूजायां अञ्च्यात् । अञ्चिता । अञ्चिष्यति । आञ्चिष्यत् । आञ्चीत् ॥ आछि आयामे ॥ आञ्छति । आञ्छेत् । आञ्छत् ॥

सुबो०—असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवौ । धातोः पूर्वस्येवर्णोवर्णयोरियुवौ भवतः असवर्णे स्वरे । पूर्वं द्वित्वं पश्चादुकारस्योपधाया लघोरिति गुणे कृते पूर्वस्योऽव् । उवोख । कित्त्वाद्गुणाभावे ऊखतुः । अत्र उ उख् अतुस् इति स्थिते पर्जन्यवल्लक्षणप्रवृत्तिरिति न्यायात् पूर्वस्य ह्रस्वस्यापि ह्रस्वे कृते सवर्णदीर्घः ततो ह्रस्व इति पुनर्ह्रस्वो न । लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते इत्युक्तत्वात् । नुगशामिति नुक् । आनञ्च । गतौ नो लोप इति नलोपः। अच्यात् । आछि आयामे । आयामो दैर्घ्यम्॥

आञ्छेर्नुग्वा ॥ ८७ ॥ णादौ ॥ आञ्छ ॥ हूर्छा कौटिल्ये ॥

सुबो०—आञ्छेर्नुग्वा। आञ्छेः पूर्वस्य नुग् वा । नुगशामिति नित्ये प्राप्ते विकल्पः॥

य्वोर्विहसे ॥८८॥ हूर्छति । हूर्छतु। अहूर्छत् । जुहूर्छ । हूर्छ्यात् । हूर्छिता । हूर्छिष्यति । अहूर्छिष्यत् ॥ युच्छ प्रमादे ॥ युच्छति ॥ वज गतौ ॥

शसददवादिगुणभूताकाराणां नैत्वपूर्वलोपौ ॥ ८९ ॥ ववाज ॥ ववजतुः । अवाजीत् ॥ व्रज गतौ ॥ व्रजति । व्रजेत् । व्रजतु । अव्रजत् । वव्राज । व्रज्यात् । व्रजिता । व्रजिष्यति । अव्रजिष्यत् ॥

सुबो०—शसददवादिगुणभूताकाराणां नैत्वपूर्वलोपौ । एषामेत्वपूर्वलोपौ न । शसु हिंसायाम् । दंत्यांतः । दद दाने । वकारो दंतौष्ठ्यः आदौ यस्य स वादिः । गुणशब्देन भूत उत्पादितः गुणभूतः गुणभूतश्चासौ अकारश्च गुणभूताकारः । शशरतुरित्यादौ गुणशब्देन क्रियमाणोऽर् तदवयवोऽकारः । लुलविथेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्यावादेशस्यावयवोऽकारस्तस्यैत्वपूर्वलोपौ न ॥

तत्त्व०—शशददेति । शश प्लुतगताविति तालव्यान्तस्य ग्रहणमिति कश्चिद्बभ्राम तद्ग्राह्याविरोधादुपेक्ष्यम् । गुणभूतेति । गुणो भवतीति गुणशब्देन भावितो योऽकारस्तस्येत्यर्थः । तथा च शशरतुरत्रारि गुणे कृतेऽवयवस्यास्य न । लुलविथेत्यत्र ओकारे गुणे तस्यापि तदवयवस्यास्य न । गुणभूतत्वं शात्परस्यासाधारणम् । तेनोक्तप्रयोगद्वयनिर्वाहः । एतच्च लोपः पचामिति सूत्रे चकारादधिकारार्थाल्लभ्यते ॥

वदिव्रज्योः सौ नित्यं वृद्धिः ॥ ९० ॥ अव्राजीत् ॥ अज गतौ क्षेपणे च ॥ अजति । अजेत् । अजतु । आजत् ॥

सुबो०—वदिव्रज्योः सौ नित्यं वृद्धिः । एतयोर्नित्यं वृद्धिः सौ परे । अतो हसादेरिति विकल्पप्राप्तौ नित्यविधानम् ॥

तत्त्व०—वदिव्रज्योरिति । अतो हसादेरिति विकल्पप्राप्तौ नित्यम् ॥

**अजेरचतुर्षु वीवसादौ वा ॥ ९१ ॥ विवाय ॥**

सुबो०—अजेरचतुर्षु वीवसादौ वा । अजेर्वीत्यादेशोऽनपि वसादावनपि तु वा । गुरुत्वात् सर्वादेशः ॥

**नुधातोः ॥ ९२ ॥ विकरणस्य नोर्धातोश्चेवर्णोवर्णयोरियुवौ स्वरे ॥ अनेकस्वरस्यासंयोगपूर्वस्य तु य्वौ ॥**

सुबो०—नुधातोः । य्वोर्धातोरिति सूत्रं य्वौ वेति चानुवृत्तम् । कृप्रत्ययसंबंधिनो नु इत्यस्य न ग्रहणम् । निरनुबंधकग्रहणे न सानुबंधकस्येत्युक्तत्वात् । णु स्तुताविति धातोरपि न कृत्रिमाकृत्रिमयोरकृत्रिमस्यैव ग्रहणमिति परिभाषितत्वात् । परिशेषात् नु इत्यस्य विकरणस्य ग्रहणम् । नुप्रत्ययांतस्य धातोश्चेवर्णोवर्णयोरियुवौ । अनेकस्वरस्यासंयोगपूर्वस्य तु नोर्द्धातोश्चेवर्णोवर्णयोर्य्वौ धातोर्विहिते स्वरादौ परे । शक्नुवंति । शिश्रियतुः । श्रुवंति । असंयोगपूर्वस्यानेकस्वरस्य तु सुन्वंति । निन्यतुः। जुह्वति । अनेकस्वरस्येति किम् । रियति । पियति । रि पि गतौ । रुवंति । नुप्रत्ययांतस्यानेकस्वरत्वाव्यभिचारात् प्रत्युदाहरणं न । धातोर्विहिते इति किम् । सुधीशौ ॥

तत्त्व०—नुधातोरिति । य्वोर्धातोरिति य्वौ वेति च पूर्वसूत्रद्वयमनुवर्तते । अत्र च धातोर्विहिते स्वरादौ परे इति बोध्यम् । तेन सुधीशावत्र पदादिस्वरे न स्यादिभ्यः क्नोरपि न ग्रहणं नुग्रहणेन । निरनुबन्धकग्रहणे न सानुबंधकस्येति परिभाषया विकरणस्यैव नोर्ग्रहणात् । णु स्तुताविति धातोरपि न ग्रहणं कृत्रिमत्वात् ॥

**उवर्णान्ते हुन्वोरेवापि ॥ ९३ ॥ विव्यतुः ॥**

सुबो०—उवर्णान्ते हुन्वोरेवापि । अपि अपूविषये चतुर्षु अनेकस्वरस्याऽसंयोगपूर्वस्य धातोरुवर्णस्य वत्वं न हुन्वोरेव वत्वं चतुर्षु । अनपि तु जुहुवतुः । विव्यतुरित्यत्र य्वोर्विहसे इति दीर्घो न यत्वस्यासिद्धत्वात् ॥

तत्त्व०—उवर्णान्ते हुन्वोरेवापीति । हु दानादनयोः । नोर्विकरणस्य आपि अपूविषये इत्यर्थः । तेन जुह्वति चिन्वतीन्यत्रैव नतु बोभुवतीत्यत्रापि एतच्चानुवृत्त्या लभ्यते ॥

**स्वरान्तादत्वतश्च तादौ नित्यानिटस्थपो वेट् ॥९४॥ विवयिथ विवेथ । आजिथ । विव्यथुः विव्य । आजिव आजिम । वीयात् ॥**

सुबो०—स्वरांतादत्वतश्च तादौ नित्यानिटस्थपो वेट् । स्वरांतात्तादौ नित्यानिट आद्योच्चारणेऽत्वतस्तादौ नित्यानिटश्च धातोः परस्य थप इट् वा भवति । अत् विद्यते यस्य स अत्वान् तस्मात् । स्वरांतात् किम् । बिभेदिथ । थपः किम् । पपिव । तादौ नित्यानिटः किम् । सस्वर्थ सस्वरिथ । स्वरतिसूतीत्यनेन वेट्कोऽयम् । आद्योच्चारणे इति किम् । चकर्षिथ । अत्वतः किम् । बिभेदिथ । तपरः किम् । रराधिथ ।

तादाविति किम् । जग्रहिथ । श्रुः से इत्यनेन समत्ययेऽयं नित्यमनिट् । नित्यानिटः किम् । आनंजिथ । ऊदित्त्वादिट्कोऽयम् ॥

तत्त्व०—अत्वत इति । अद्विद्यते यस्य सोऽस्त्वान् तस्मादित्यर्थः । नित्यानिटः किम् । अञ्जिता । अञ्जिता॥

नैकस्वरादनुदात्तात् ॥९५॥ आद्योच्चारणेऽनुदात्तादेकस्वराद्धातोः परस्य वसादेरिण्न स्यात् ॥

सुबो०—नैकस्वरादनुदात्तात् । आद्योच्चारणे इत्युभयत्रान्वेति । आद्योच्चारणेऽनुदात्तादेकस्वराश्चेत्यर्थः । तेन विभत्सतीत्यत्र सांते अनेकस्वरत्वेऽपीण्निषेधो भवत्येव ॥

तत्त्व०—नैकस्वरादिति । आद्योच्चारणे इति उभयत्रान्वेति । आद्योच्चारणेऽनुदात्तादेकस्वराश्चेत्यर्थः । तेन बिभित्सतीत्यत्र सांतादित्वदशायामनेकात्वेऽपि इण्निषेधो भवत्येव ॥

अनिट् स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः । अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥१॥ गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः। इति स्वरान्ता निपुणैः समुच्चितास्ततो हलान्तानपि सन्निबोधत ॥२॥ शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी । रभिश्च भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥३॥ यमिर्मान्तेष्वनिडेक इष्यते रमिश्च यश्चादावपि पठ्यते मनिः । नमिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥ दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः । इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥५॥ दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् । लिशिं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥६॥ रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः । इमे तु धान्ता दश चानिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥ ७ ॥ शिपिं पिपिं शुप्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् । इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषकर्षती तथा ॥ ८ ॥ तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यति-दृप्यती सृपिम् । स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान्

१ लि. २ सृ

गणितांस्त्रयोदश ॥ ९ ॥ अर्दिं हर्दिं स्कन्दिभिदिच्छिदिक्षुदीन् शर्दिं सर्दिं स्विद्यतिपद्यती खिदिम् । नुर्दिं तुर्दिं विध्यति विन्त इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥१०॥ पचिं वचिं विचिरिचिरञ्जिपृच्छतीन् निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् । त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिविजिविद्ध्यनिट्स्वरान् ॥११॥

सुबो०—अथानुदात्ताः । स्वरांतो धातुरनिट् भवति न इट् यस्मात्सोऽनिट् इति भवद्भिर्दृश्यतां ज्ञायताम् । तु पुनः स्वरांतेष्विमान् धातून् सेटः प्रवदंति । तान् विदंतीति तद्विदः। तानाह । अदंतं धातुं कथ वाक्यप्रबंधे इत्यादि । ऋदंतं कॄ विक्षेपे इत्यादिकम् । ऋतां मध्ये वृङ्वृञौ सेटौ । वृङ् संभक्तौ । वृञ् वरणे । अथेवर्णेषु इवर्णांतेषु श्विडीङ् सेट् कथ्यते । श्विश्च डीङ् चानयोः समाहारः श्विडीङ् । टुओश्विइर् गतिवृद्ध्योः। डीङ् विहायसा गतौ। पुनस्तेषु शीङ्श्रिञावपि सेटौ कथ्येते। शीङ् स्वप्ने । श्रिञ् सेवायामिति ॥ १ ॥ गणे तिष्ठतीति गणस्थस्तं गणस्थमूदंतं धातुं भूलूप्रभृति । किंच पुनः उतां उकारांतानां मध्ये रुस्नुवौ सेटौ । रु शब्दे रुङ् गतिरेषणयोरित्युभयम् । स्नु प्रस्रवणे । तथा क्षुवं टुक्षु शब्दे । ऊर्णोति । ऊर्णुञ् आच्छादने । अथो युणुक्ष्णवः धातून् सेटः । यु मिश्रणादौ । अयं सेट् । युञ् बंधने । क्रैयादिकस्त्वनिट् । णु स्तुतौ । क्ष्णु तेजने प्रवदंतीत्यनेनान्वयः । इति अमुना प्रकारेण निपुणैः विचक्षणैः स्वरांता धातवः समुच्चिताः एकीकृताः । ततोऽनंतरं हसांतान् धातून् अनिटः सकाशात् यूयं निबोधत जानीत । लोटो मध्यमपुरुषस्य बहुवचनम् ॥२॥ अथ हसांतान् धातूनाह । कांतेषु शकिः एकः अनिट् । शक्लृ शक्तौ। शक मर्षणे। दैवादिकस्तु सेट्। सांतेषु घसिः घस्लृ अदने । अदादेशो घासिश्च । तु पुनः वसिः प्रसारणी । वस निवासे। प्रसारणं संप्रसारणमस्यास्तीति प्रसारणी । एतेन वस आच्छादने अदादिकः सेट् । तस्य संप्रसारणाभावात् । भांतेषु रभिः । रभ राभस्ये । अथ मैथुने यभिः यभ मैथुने । ततस्तृतीयो लभिः । अनिट् डुलभष् प्राप्तौ अनिट् इष्यते इत्यन्वयः । इतरे धातवोऽनिटो न ॥ ३ ॥ नमांतेषु नमप्रत्याहारांतेषु धातुषु प्रतिषेधवाचिनामिण्निषेधकानां मध्ये एकः अनिट् यमिः । यम उपरमे । रमिश्च रमु क्रीडायामपि दिवादौ दिवादिगणे यः मनिः विचक्षणैः पठ्यते स मनिः मन ज्ञाने दैवादिकः। मनु अवबोधने तानादिकः सेट् । चतुर्थो नमिः णम् प्रह्वत्वे शब्दे च । पंचमो हनिः हन हिंसागत्योः । ततस्तु षष्ठो गमिः गम्लृ गतौ मया इत्यन्वयः ॥ ४ ॥ इहानिट्कारिकायामिमेऽनिटोऽष्टौ धातवो हान्ता मया कीर्तिताः कथिताः । कीदृशाः । मुक्तः संशयो येषु ते मुक्तसंशयाः ।

किं कृत्वा । गणेषु हांतान् प्रविभज्य भिन्नीकृत्य । ते के । दिहिः दिह उपचये । दुहिः दुह प्रपूरणे । दुहिरिति दुहिर् अर्दने भौवादिको न गृह्यते सानुबंधकत्वात् । आदादिक एवानिडिति प्राञ्चः । मेहतिरोहती । मिह सेचने । रुह बीजजन्मनि प्रादुर्भावे च । वहिः वह प्रापणे । तु पुनः षष्ठो नहिः णह बंधने । दहतिः दह भस्मीकरणे । तथा लिहिः लिह आस्वादने ॥ ५ ॥ पुराणगाः प्राचीनाः विद्वांसः गणपाठेषु शांतान् अनिट्कान् दशैव पठंति इतरान् न । तान् कान् । दिशिं दिश अतिसर्ज्जने । दृशिं दृशिर् प्रेक्षणे । दंशि दंशने । अथो मृशिं मृश आमर्शने । स्पृशिं स्पृश संस्पर्शने । रिशिं रुशिं रिश् रुश हिंसायाम् । अष्टमं क्रोशतिं क्रुश आह्वाने रोदने च । विशिं विश प्रवेशने । लिशिं लिश अल्पीभावे । दिवादिस्थो लिश गतौ तुदादिस्थ इत्युभयम् ॥६॥ तथा धांता धातव इमे दशानिटो मताः कथिताः। ते के। रुधिः रुधिर् आवरणे । अनोरुध कामे । इति दैवादिक इत्युभयम् । सराधिः राध संसिद्धौ । युधिवंधिसाधयः । युध संप्रहारे। बंध बंधने । साध संसिद्धौ । क्रुधिक्षुधी । क्रुध कोपे । क्षुध बुभुक्षायाम् । शुध्यतिबुध्यती । शुध शौचे। बुध अवगमने । दैवादिकौ । बुधिर् बोधने इति बुध अवगमने इत्येतौ भौवादिकौ तु सेटौ । व्यधिः व्यध ताडने। ततः परं सिध्यतिरेव । षिधु संराद्धौ अनिट् । षिधु गत्याम्। षिधू शास्त्रे मांगल्ये चैतौ भौवादिकौ सेटौ ॥७॥ गणेषु गणपाठेषु अनिड्विधौ अनिट्प्रकरणे षांतान् इमान् दशैवाऽऽचार्य्या उपदिशंति । तान् कान् । शिषिं शिष्लृ विशेषणे । पिषिं पिष्लृ संचूर्णने । शुष्यतिपुष्यती । शुष शोषणे । पुष पुष्टौ । दैवादिकावनिटौ । भौवादिकः सेट् । त्विषिं त्विष दीप्तौ । विषिं विष्लृ व्याप्तौ जौहोत्यादिकः । श्लिषिं श्लिष् आलिंगने । श्लिष दाहे भौवादिकः सेट् । तुष्यतिदुष्यती । तुष तुष्टौ । दुष वैकृत्ये । दैवादिकौ । द्विषिं द्विष अप्रीतौ । तथा कृषिकर्षती । कृष विलेखने । भौवादिकतौदादिकौ ॥ ८ ॥ स्वरेण नीचेन अनुदात्तस्वरेण गणितान् पांतान् अनिटः त्रयोदश त्वं प्रतीहि जानीहि । तानाह । तपिं तप संतापे । तप ऐश्वर्ये । दैवादिकः । तप दाहे इति चौरादिकोऽपि । णिप्रत्ययाभावपक्षेऽनिट् । तिपिं तिपृ क्षरणे । च पुनः आपिं आप्लृ व्याप्तौ । अथो वपिं डुवप् बीजतंतुसंताने । स्वपिं ञिष्वप् शये । लिपिं लिप उपदेहे । लुपिं लुप्लृ छेदने । तृप्यतिदृप्यती । तृप् प्रीणने । दृप् हर्षमोचनयोः । एतौ दैवादिकावनिटौ । तृप् तृप्तौ । दृप् उत्क्लेशे । एतौ दैवादिकौ सेटौ । तृप् तृप्तौ । दृप् संदीपने । एतौ चौरादिकौ च सेटौ । सृप्लृ गतौ । शपिं शप आक्रोशे । शप् उपालंभे च । छुपिं छुप स्पर्शे । क्षिपिं क्षिप प्रेरणे । दैवादिकस्तौदादिकश्चानिट् ॥ ९ ॥ दांतान् धातून् अनिटः पंचदश त्वं प्रतीहि अवेहि । तानाह । अदिं अद भक्षणे । हादिं हद पुरीषोत्सर्गे । स्कंदिभिदिछिदिक्षुदीन् । स्कंदिर् गतिशोषणयोः । भिदिर् विदारणे । छिदिर् द्वैधीकरणे । क्षुदिर्

संचूर्णने । शर्दि शद्लृ शातने । सर्दि षद्लृ विशरणादौ । स्विद्यतिपद्यती । ञिष्विदा गात्रप्रक्षरणे । पद गतौ । दैवादिकः । ञिष्विदा स्नेहनमोचनयोः । पद स्थैर्ये भौवादिकः सेट् । खिदिं खिद दैन्ये । खिद परिघाते । रौधादिको दैवादिकस्तौदादिकश्चानिट् । नुदिं नुद प्रेरणे । तुदिं तुद व्यथने । विद्यविनत्तिकावपि । विद सत्तायां दैवादिः । विद विचारणे रौधादिकः । विद ज्ञाने । विद्लृ लाभे । एतौ सेटौ । विद्यविनत्ती एव विद्यविनत्तिकौ स्वार्थे कप्रत्ययः ॥१०॥ न विद्यते इट् स्वरो येभ्यस्तेऽनिट्स्वराः तान् धातून् त्वं विद्धि जानीहि । तानाह । पाचिं डुपचष् पाके । पची व्यक्तीकरणे च सेट् । वचिं वच परिभाषणे । ब्रुवो वचिरपि । विचिरिचिराचिरञ्जिपृच्छतीन् । विचिर् पृथग्भावे । रिचिर् विरेचने । रिच वियोजनसंपर्चनयोरिति च । रञ्ज रागे । प्रच्छ ज्ञीप्सायाम् । निजिं णिजिर शौचपोषणयोः । णिजि शुद्धौ आदादिकः सेट् । सिचिं षिच क्षरणे । मुचिभाजिभंजिभृज्जतीन् । मुच्लृ मोक्षणे । भज सेवायाम् । भंजो आमर्दने । भ्रस्ज पाके । त्यजिं त्यज हानौ । यजिं यज देवपूजादौ । युजिरुजिसंजिमज्जतीन् । युजिर् योगे । युज समाधौ इति च । भाष्यमते युज समाधौ सेट् । रुज रोगे । षंज संगे । टुमस्ज शुद्धौ । भुजिं भुज पालनाऽभ्यवहारयोः । भुजो कौटिल्ये इति च । स्वजिं स्वंज परिष्वंगे । सृजिविजि । समाहारे एकवचनम् । सृज विसर्गे । दैवादिकस्तौदादिकश्चानिट् । विजिर् पृथग्भावे । ओविजी भयचलनयोः । तौदादिकस्सेट् । चांताः षट् । छांत एकः । जांताः पंचदश ॥ ११ ॥

तत्त्व०—अनुदात्तस्वरान्संगृह्णाति । अनिट्स्वरांत इति । न इट् यस्मात् सोऽनिट् स्वरोऽन्तो यस्य स स्वरान्तः स्वरान्तो धातुरनिट् भवति इति दृश्यतामित्यन्वयः । इमानिति स्वरान्तेषु इमान् वक्ष्यमाणान् सेटः प्रवदन्ति । तानाह । अदतामिति । अदन्ता अतीत्यादयः ऋदता स्तृप्रभृतयः । ऋतामिति । ऋदतानां मध्ये वृङ् संभक्तौ । वृञ् वरणे । टुओश्विइर् गतिवृद्धयोः । डीङ् विहायसा गतौ । शीङ् स्वप्ने । श्रिञ् सेवायाम् । ऊदन्ता भूप्रभृतयः । रु शब्दे । रुङ् गतौ रेषणे च । स्नु प्रस्रवणे । टुक्षु शब्दे । ऊर्णुञ् आच्छादने । न चोर्णोतेर्द्विस्वरत्वात्प्रातिरेव न संभवति कारिकायां ग्रहणं किमर्थमिति वाच्यम् । ऊर्णोतेर्नेडिति निषेधादत्र ग्रहणम् । एतद्बीजं तु वाच्यम् । ऊर्णोतेर्नुवद्भाव इत्यादिशेषोक्तिरेवेति दिक् । यु मिश्रणामिश्रणयोः । णु स्तुतौ । क्ष्णु तेजने । स्वरान्तानुक्त्वेदानीं हसांतान् कांतादिक्रमेणाह । शक्लृ शक्तौ । एक एव कान्तेषु नान्य इत्यर्थः । खगघङान्ता न सन्त्येव । घस्लृ अदने । वस निवासे । द्वावेव सान्तेषु नान्य इत्यर्थः । अदादेशस्य घसेस्तु स्थान्यानिट्त्वेनैव सिद्धम् । रभ राभस्ये । यभ मैथुने । डुलभष् प्राप्तौ । भांतेषु त्रय एव नापरे इत्यर्थः । यमु उपरमे । रमु क्रीडायाम् । मन ज्ञाने । णम प्रह्वत्वे शब्दे च । गम्लृ गतौ । मांते चत्वार एव । मन ज्ञाने दिवादिः हन हिंसागत्योः । नांतेषु द्वावेव । प्रतिषेधवाचिनः अनिट इत्यर्थः । दिह उपचये । दुह प्रपूरणे । मिह सेचने । रुह बीजजन्मनि प्रादुर्भावे च । वह प्रापणे । णह बन्धने । दह भस्मीकरणे । लिह आस्वादने । हांतेषु अष्टावनिटः प्रकीर्तिताः कथिता इत्यर्थः । मुक्त॰ सशपो येषु ते तथा । गणेषु प्रविभज्य गणविभागेनेत्यर्थः । दिश अतिसर्जने । दृशिर् प्रेक्षणे । दंश दशने । मृश आमर्शने । स्पृश संस्पर्शे । रिश रुश हिंसायाम् । क्रुश आह्वाने । विश प्रवेशने । लिश गतौ । लिश अल्पीभावे । शान्तेषु दश । राधिर् आवरणे । अनोरुध कामे । इति दिवादिश्च । सराधिं राधसिद्धौ । इतरत्ताड़ित । युध संप्रहारे । बंध बधने । साध संसिद्धौ । क्रुध क्रोधे । क्षुध बुभुक्षायाम् । शुध शौचे ।

क्षुध अवगमने । दिवादी । व्यध ताडने । षिध सराद्धौ । षांतेष्वेकादश इतरे नेत्यर्थः । शिष्लृ विशेषणे । पिष्लृ संचूर्णने । शुष शोषणे । पुष पुष्टौ । दिवादी । त्विष दीप्तौ । विष्लृ व्याप्तौ । श्लिष आलिंगने । तुष तुष्टौ । दुष वैकृत्ये । दिवादौ । द्विष अप्रीतौ । कृषि विलेखने । भौवादिकतौदादिकौ । षांतेष्वेकादश । तप संतापे । तिपृ ऐश्वर्ये । दिवादिः । तप दाहे । इत्यपि न्यभावपक्षे । तिपृ क्षरणे । आप्लृ व्याप्तौ । टुवप् बीजतंतुसंताने । ञिष्वप् शये । लिप उपदेहे । लुप्लृ छेदने । तृप प्रीणने । दृप दर्पविमोचनयोः । दिवादिः । सृप्लृ गतौ । स्वरेण नीचेन अनुदात्तेनेत्यर्थः । शप उपालंभे । छुप स्पर्शे । क्षिप प्रेरणे । दिवादिस्तुदादिश्च । पातान् त्रयोदश प्रतीहि जानीहि । अद भक्षणे । हद पुरीषोत्सर्गे । स्कंदिर् गतिशोषणयोः । भिदिर् विदारणे । छिदिर् द्वैधीकरणे । शद्लृ शातने । षद्लृ विशरणादिषु । ञिष्विदा गात्रप्रक्षरणे । पद गतौ । दिवादी । खिद दैन्ये । खिद्यति खिदति खिनत्तिश्च । नुद प्रेरणे । तुद व्यथने । विद सत्तायाम् । विद विचारणे । दांतेषु पंचदश । डुपचष् पाके । पच व्यक्तीकरणे । द्वावपि । वच परिभाषणे । ब्रूञो वचिरपि । विचिर् पृथग्भावे । रिचिर् विरेके । रिच वियोजनसंपर्चनयोरिति । रिच क्षरणे । मुच्लृ मोचने । चांतेषु षट् । प्रच्छ ज्ञीप्सायाम् । छांतेष्वेकः । त्यज हानौ । णिजिर् शौचपोषणयोः । भज सेवायाम् । भंजो आमर्दने । भुज पालनाभ्यवहारयोः । भुजो कौटिल्ये इति च । भ्रस्ज पाके । टुमस्जो शुद्धौ । यज पूजादौ । युजिर् योगे । रुजो भंगे । रंज रागे । विजिर् पृथग्भावे । ष्वंज परिष्वंगे । षंज संगे । सृज विसर्गे । जांतेषु पंचदश अनिट्स्वरान् अनुदात्तानित्यर्थः ॥

वेत्ता । अवैषीत् ॥ क्षि क्षये ॥ चिक्षयिथ चिक्षेथ ॥

सुबो०—स्वरांतादात्वतश्चेति वेट् । विवयिथ, विवेथ आजिथ । विव्यिव विव्यिम । वीयात् । लुटि वेत्ता, अजिता । वेष्यति, अजिष्यति । अवेष्यत्, आजिष्यत् । धातोर्नामिन इति वृद्धिः । अवैषीत् आजीत् । क्षि क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः । नुधातोरितीय् । चिक्षियतुः ॥

ये ॥९६॥ अनपि यकारे परे पूर्वस्वरस्य दीर्घः स्यात् ॥ क्षीयात् । अक्षैषीत् ॥ तुम्प हिंसायाम् ॥

सुबो०—ये । अनपि यकारे परे पे से दीर्घ इत्यतो दीर्घ इति अनपीति चानुवर्त्तते । अनपि ये किम् । चिनुयात् । संज्ञापूर्वकस्य विधेरनित्यत्वाद्वात्र न दीर्घः । क्षि निवासगत्योरिति तौदादिकः ॥

तत्त्व०—ये इति । दीर्घस्तु पे से दीर्घ इत्यतोऽनुवर्तते । सप्तमीनिर्देशात्पूर्वस्येति लभ्यते । यकारस्तु प्रत्ययस्यैव प्रकरणत्वात् । तेनेयाजेत्यादौ नातिप्रसंगः । वानुवृत्तेर्व्यवस्थया वा ॥

प्रात्तुम्पतेः सुट् गवि कर्तरि ॥ ९७ ॥ प्रस्तुम्पति गौः । अड्द्वित्वव्यवधानेऽपि सुट् । प्रास्तुम्पत् । प्रतुस्तुम्प ॥ ओणृ अपनयने ॥ ओणांचकार ॥ वन षण संभक्तौ ॥ ववनतुः । अवनीत् अवानीत् । सेनतुः ॥

सुबो०—प्रात्तुम्पतेः सुट् गवि कर्तरि । प्रादुपसर्गात् परस्य तुंपतेः सुट् स्यात् गौः कर्ता चेत् । ऋसंयोगादिति लिटः कित्त्वाभावात् नस्य लोपो न । तुतुंपतुः आशिषि नो लोप इति न लोप । तुप्यात् । श्तिपानिर्देशात् यङ्लुकि सुट् न । प्रतो

तुंपीति। ओणृ अपनयने। अपनयनं दूरीकरणम्। वन षण संभक्तौ। वन शब्दे च। संभक्तिर्भजनम्॥

**जनसनखनामात्वमनिटि से क्ङिति झसे हे च क्कौ यादादौ क्ङिति वा ॥९८॥ सायात् सन्यात्। असनीत् असानीत्॥ चमु अदने॥**

सुबो०–जनसनखनामात्वं से क्ङिति झसे यादादौ क्ङिति वा। जन जनने। जुहोत्यादिः। जनी प्रादुर्भावे। दिवादिः। उभयोर्ग्रहणम्। एषामात्वं स्यात्। अनिटि सप्रत्यये किति ङिति झसे च यकारादौ क्ङिति वा से परे। सिषासति॥

**ष्ठिवुक्लम्वाचमां दीर्घोऽपि॥ ९९॥ आचामति। आङ् किम्। चमति विचमति। चेमतुः। अचमीत्॥ ष्ठिवु निरसने॥**

सुबो०–ष्ठिवुक्लम्वाचमां दीर्घोऽपि। एषां दीर्घः स्यात् अप्रत्यये। ष्ठिवु निरसने। निरसनं थूत्करणम्॥

**नामधातुष्वष्कष्ठिवां सत्वं न॥ १००॥ ष्ठीवति॥**

सुबो०–नामधातुष्वष्कष्ठिवां सत्वं न। ष्वष्क गतौ। नामधातोरुदाहरणानि। षट् दंता अस्येति षोडन् तमाचष्टे नाम्नो णिर्डित्करणे इति णिप्रत्यये टिलोपे च षोडयति।षंडमाचष्टे करोति वा षंडयति। नाम्नो य इति यप्रत्यये। षंडमिच्छतीति षंडीयति। कटे वर्षावरणयोः। वर्षो वृष्टिः। आवरणमाच्छादनम्॥

तत्त्व०–नामधातुष्विति। एतच्च विदो नवानामिति सूत्रस्थवानुवृत्तेर्व्यवस्थया बोध्यम्। षण्डमाचष्टे षण्डयतीत्यादौ॥

**ष्ठिवेः पूर्वस्य ठस्य थो वा॥१०१॥ तिष्ठेव टिष्ठेव। ष्वोर्विहसे। ष्ठीव्यात्। अष्ठेवीत्॥ कटे वर्षावरणयोः॥**

**ह्म्यन्तक्षणश्वसजागृश्व्येदितां सेटि सौ न वृद्धिः॥ १०२॥ अकटीत्॥ हय गतौ॥ अहयीत्॥ जु रंहसि॥**

सुबो०–ह्म्यंतक्षणश्वसजागृश्व्येदितां सेटि सौ न वृद्धिः। ह् च म् च य् च ह्म्यः ते अंते येषां ते ह्म्यंताः एत् इत् यस्य स एदित् ह्म्यंतस्य क्षणादेरेदितश्च वृद्धिर्न सेटि सौ। ग्रह उपादाने। अग्रहीत्। टुवम् उद्गिरणे। अवमीत्। हय गतौ। अहयीत्। क्षणु हिंसायाम्। अक्षणीत्। श्वस प्राणने। अश्वसीत्। जागृ निद्राक्षये। अजागरीत्। टुओश्विइर् गतिवृद्ध्योः। अश्वयीत्। सेटि सौ किम्। दह भस्मीकरणे। अधाक्षीत्। जु रंहसि। रंहो वेगः॥

तत्त्व०–ह्म्यंतेति। ह् च म् च य् च ह्म्यः ते अंते येषां ते ह्म्यंताः हकारमकारयकारान्ता इत्यर्थः। क्षण इत्यादौ। श्वस प्राणने। जागृ निद्राक्षये। टुओश्वि गतिवृद्ध्योः। एत् इद्येषां ते तथा तेषामित्यर्थः॥

**नानप्योर्वः ॥१०३॥ अनपि विषये उवर्णस्य वत्वं न ॥ जुजुवतुः । जुजविथ जुजोथ । अजोषीत् ॥ गुपू रक्षणे ॥**

सुबो०—नानप्योर्वः । उवर्णान्तस्य धातोर्वत्वं न स्यात् । अनपि परे । गुपू रक्षणे । रक्षणं पालनम् ॥

**आयः ॥ १०४ ॥ गुपूधूपविच्छिपणिपनिभ्यः स्वार्थे आयः प्रत्ययः । अनपि तु वा ॥**

सुबो०—आयः । गुभ्भ्यः इत्यनुवृत्तं पणिपन्योरनुदात्ते च आयाभावे चरितार्थ-मात्मनेपदमित्यायान्तान्नाद्भवति । गुपू रक्षणे । धूप संतापे । विच्छ गतौ । पण व्यवहारे स्तुतौ च । पन च ॥

तत्त्व०—आय इति । इह गुभ्भ्य इत्यनुवर्त्तते इत्याह । गुपधूपेत्यादि । स्वार्थे इति अपरस्यानिर्दिष्टत्वात् स्वार्थ एव लभ्यते ॥

**स धातुः ॥१०५॥ यङादिप्रत्ययान्तः शब्दो धातुसंज्ञको भवति ॥ गोपायति । गोपायांचकार । जुगोप ॥**

सुबो०—स धातुः । तच्छब्देन यङादिः परामृश्यते । यङादिना च प्रत्ययग्रहणपरिभाषया तदंतं गृह्यते तेषां केवलानां संज्ञाप्रयोजनाभावाद्वा । " यङ्क्यकाम्या इयङ् चेति यगायञिणिङस्तथा । आचारे क्विबथो यश्च ज्ञेया दश यङादयः ॥ " प्रत्ययविशिष्टस्य धातुत्वात् तिबादिः ॥

तत्त्व०—स धातुरिति । तच्छब्दस्य त्यदादित्वेन तेषां च प्रधानपरामर्शित्वेन यङादिर्गृहीतः केवलयङादेश्च संज्ञाप्रयोजनाभावात्तदंतलाभः । अनन्तरोक्तस्य ञेरपि ग्रहणं सग्रहणेन निवार्यते । अन्यथानुवृत्त्यैव तद्ग्रहणे सिद्धे सग्रहणं व्यर्थं स्यात् । आदेशादिविधायकप्रकरणेन विच्छेदाद्व्यवहिततिबादेरपि न ग्रहणमतः परिशेषा-द्यङादिरेव गृह्येत इत्याशयेनाह । यङादिप्रत्ययान्त इति ॥

**यतः ॥ १०६ ॥ यस्यातश्चानपि लोपः ॥ गोपायात् गुप्यात् । गोपायिता गोपिता गोप्ता । अगोपायीत् अगौप्सीत् ॥**

सुबो०—यतः । य् च अच्चानयोः समाहारो यत् तस्य । धातोर्विशेषणत्वात्तदं-तविधिः । यंतस्य अदंतस्य च लोपः अनपि । अदंतस्य किम् । अय पय गतौ । आभ्यां क्विपि यवयोर्वसे हकारेति यलोपे कृते य इत्यलोपो मा भूत् । अत् पत् । ऊदित्त्वादिट् । गोपिता गोप्ता । इडभावपक्षे अनिटो नामिवत इति वृद्धिः । अगौप्सीत् । क्रमु पादविक्षेपे । पादविक्षेपः पादविहरणम् ॥

तत्त्व०—यत इति । य् च अच्च अनयोः समाहारः यत् तस्य ॥

**झसात् ॥ १०७ ॥ अगौप्ताम् ॥ एवं धूप संतापे ॥ तप संतापे ॥**

तेपिथ ततप्थ । अताप्सीत् ॥ जप जल्प व्यक्तायां वाचि ॥ जेपिथ । जपिता । अजापीत् ॥ क्रमु पादविक्षेपे ॥

भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषां यो वा कर्त्रर्थेषु चतुर्षु १०८

सुबो०–भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषां यो वा कर्त्रर्थेषु चतुर्षु । प्राप्ताप्राप्त विभाषेयम् । अनवस्थानार्थो भ्रमिः क्लमिः त्रसिश्च दिवादयस्तेभ्यो नित्ये प्राप्ते इतरे षामप्राप्तेश्चारंभः । भ्राशृ भ्लाशृ दीप्तौ । फणादावेतौ । भ्रमु चलने । भ्वादिर्ज्वलादिश्च । भ्रमु अनवस्थाने । दिवादिः पुषादिः । शमादिः तत्र भ्वादेः भ्रमति, भ्राम्यति । शमादेस्तु शमायदीनामिति दीर्घे भ्राम्यति । इति त्रैरूप्यम् । क्लमु ग्लानौ त्रसी उद्वेगे । त्रुट च्छेदने । लष कांतौ ॥

क्रमः पे दीर्घोऽङ्विषये ॥ १०९ ॥ क्राम्यति क्रामति । अक्रमीत् ॥ यम उपरमे ॥

सुबो०–क्रमः पे दीर्घोऽङ्विषये । क्रमो दीर्घः स्यात् पे चतुर्षु । पे किम् । उपक्रमते । प्रोपाभ्यामित्यात् । स्नुक्रमोरीति नेट् स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थोऽयम् । आभ्यां परस्य परस्मैपदस्यैवेट् स्यान्नातः । स्नु प्रस्रवणे । उपस्नोष्यते जलेन । उपक्रंस्यते । यमु उपरमे । उपरमो निवृत्तिः ॥

गमां छः ॥ ११० ॥ गमयमेषूणां छः स्यादङ्विषये ॥ यच्छति । येमिथ ययन्थ ॥

सुबो०–गमां छः । गम्लृ गतौ । यम उपरमे । इषु इच्छायाम् । बहुवचनमाद्यर्थम् ॥

तत्त्व०–गमामिति । बहुवचननिर्देशस्य फलमाह । गमादय इत्यादि ॥

यमिरमिनमातां सक्सेरिट् पे ॥ १११ ॥ अयंसीत् अयंसिष्टाम् ॥ णम प्रह्वत्वे शब्दे च ॥ नेमिथ । ननन्थ । अनंसीत् ॥ ईर्क्ष्य ईर्ष्य ईर्ष्यायाम् ॥ ईर्क्ष्यति । ऐर्क्ष्यीत् ऐर्ष्यीत्॥ गम्लृ गतौ॥ गच्छति॥

सुबो०–यमिरमिनमातां सक्सेरिट् पे । एषां सक् स्यात् । एभ्यः सेरिट् पे परे । अयंसीत अयंसिष्टाम् । व्यरंसीत् व्यरंसिष्टाम् । अनंसीत् अनंसिष्टाम् । पे किम् । उदायत । अरंसाताम् ॥

गमां स्वरे ॥ ११२ ॥ गम्हन्जन्खन्घसामुपधाया लोपः स्यात्स्वरे क्ङिति न तु ङे ॥ जग्मतुः । जगमिथ जगन्थ ॥

सुबो०–गमां स्वरे । गम्लृ गतौ । हन् हिंसागत्योः । खनु अवदारणे । घस्लृ

अदने । एषामुपधाया लोपः स्यात् स्वरादौ क्ङिति प्रत्यये न तु ङे । नो वेत्यतो व्यवस्थितार्थत्वानुवर्त्तनात् । जग्मतुः । जघ्नतुः । चख्नतुः । जक्षतुः । ङे किम् । अगमत् ॥

तत्त्व०—गमां स्वर इति । बहुवचनस्य बहूपलक्षकत्त्वमभिप्रेत्य गणयति । गमहनेत्यादि नो वेत्यतो वानुवृत्तेर्व्यवस्थया क्वचिन्नेत्यभिप्रेत्याह । न तु ङे इति । तेन अगमदित्यत्र लोपो न ॥

**हनृतः स्यपः ॥ ११३॥** हन्तेः ऋदन्ताच्च परस्य स्यप इट् भवति गमेस्तु पे ॥ गमिष्यति ॥

सुबो०—हनृतः स्यपः । अनुदात्तत्वादिण्निषेधे प्राप्ते विधिः । हन् च ऋश्चानयोः समाहारो हनृत् तस्मात् हनृतः । गमेः परस्मैपदस्यैवेट् नातः । तेन संगंस्यते इत्यादौ न ॥

तत्त्व०—हनृत इति । हन् च ऋच्च हनृत् तस्मात् उदितो वेत्यतो वेत्यनुवृत्तेर्व्यवस्थया गमेः परस्मैपदमेवेत्याह । गमेस्त्विति । तेन संगंस्यत इत्यादौ न । हंतेर्ऋदन्ताच्चोभयपदेऽपि । हनिष्यते । करिष्यते ॥

**लित्पुषादेर्ङः ॥११४॥** लितो धातोः पुषादेश्च ङः प्रत्ययः स्यात् पे ॥ सेरपवादः । अगमत् ॥ म्रुचु म्लुचु गतौ ॥ म्रोचति ॥

सुबो०—लित्पुषादेर्ङः । ऌ इत् यस्य स लित् पुष् आदिर्यस्य स पुषादिः । लिच्च पुषादिश्चानयोः समाहारो लित्पुषादिः तस्मात् सौत्रत्वात्पुंस्त्वम् । संज्ञापूर्वकविधेरनित्यत्वान्न नुम् । अरङ् द्विश्चेत्यतोऽङित्यनुवृत्त्यैव सिद्धे ङ इति योगविभागेन तु द्युतादिभ्योऽस्यतिवक्तीति च लब्धम् । पुषादिश्च दिवाद्यंतर्गणो ग्राह्यः लित्साहचर्यात् लितो हि प्रायेणानिट्साहचर्यात् पुषोऽप्यनिड् ग्राह्यः स च दिवादिः । भ्वादिः सेट्त्वात् न चुरादिर्ञिना व्यवधानाच्च ॥

तत्त्व०—लित्पुषादेरिति । ऌ इत् यस्य स लित् । पुष् आदिर्यस्य स पुषादिः लिच्च पुषादिश्चानयोः समाहारः लित्पुषादिस्तस्य। नुमोऽनित्यत्वात् क्लीबत्वस्यैव वा पुंस्त्वम् । ननु अरङ् द्विश्चेत्यनन्तरोक्तसूत्रादङनुवृत्तेः किं ङग्रहणेनेति चेत्सत्यम् । ङग्रहणं योगविभागेनान्यतोऽपि विधानार्थम् । तेन द्युतादिभ्योऽपि अस्यातिवक्तिख्यातिभ्यश्च भवति । अयंकयोगनिर्दिष्टन्यायेनाङि द्वित्वं भवेदिति वाच्यम् । ञेरिति ग्रहणात् । ञ्यंतादेवाङि द्वित्वविधानात् । न त्वन्यस्मात् । अङि लघोर्ह्रस्व उपधाया इति ह्रस्वस्तु लित्पुषादेर्दीर्घोपधत्वाभावादेव न द्वित्वाभावेन पूर्वपदत्वाप्रसंगाच्च ॥

**म्रुचादेर्वा ङः ॥११५॥** अम्रुचत् अम्रोचीत् । अम्लुचत् अम्लोचीत् ॥ ग्रुच ग्लुच चौर्ये ॥ अग्रुचत् अग्रोचीत् । अग्लुचत् अग्लोचीत् ॥ ग्लुञ्चु गतौ ॥ अग्लुञ्चत् अग्लुञ्चीत् ॥ ञिफला विशरणे ॥

सुबो०—म्रुचादेर्वा ङः । म्रुचु म्लुचु ग्रुचु ग्लुचु ग्लुंचु इति म्रुचादयः । ञिफला विशरणे । विशरणमवयवानां विभागः ॥

**तॄफलभजत्रपाम् ॥ ११६ ॥** क्ङिति णादौ सेटि थपि चैत्वपूर्वलोपौ ॥ फेलतुः । फेलिथ ॥

सुबो०—तॄफलभजत्रपाम् । किति णादौ सेटि थपि चेत्पूर्वलोपौ । तरतेरकारस्य गुणशब्देन भावितत्वात् फलभजोस्तु वैरूप्यसंपादकादेशत्वात् त्रपतेश्च एकहसमध्यस्थत्वाऽभावादप्राप्तेः विधिः । तेरतुः तेरुः । फेलतुः फेलुः । भेजतुः भेजुः । त्रेपे त्रेपाते ॥

**लान्तस्य ॥ ११७ ॥** लसमीपाकारस्य सौ नित्यं वृद्धिः ॥ अफालीत् ॥ फल निष्पत्तौ॥ फेलतुः। अफालीत् ॥ चर गतिभक्षणयोः॥ अचारीत् ॥ स्वृ शब्दोपतापयोः ॥ स्वरति । सस्वार ॥

**गुणोऽर्तिसंयोगाद्योः ॥ ११८ ॥** सस्वरिथ सस्वर्थ । सस्वरिव । स्वर्यात् । स्वरिष्यति । अस्वरीत् अस्वारिष्टाम् । अस्वार्षीत् अस्वार्ष्टां अस्वार्षुः ॥ जि जये ॥

सुबो०—लांतस्य । लसमीपाकारस्य सौ नित्यं वृद्धिः । अतो हलादेरिति विकल्पस्यापवादः । लांतस्य किम् । अलपीत् । अरणीत् । अत्र लसमीपत्वेऽपि लांतत्वाभावान्न नित्यं वृद्धिः । लसमीपाकारस्य किम् । श्वल्ल आशुगमने । अस्य अश्वल्लीत् । अत्र समीपत्वेऽपि अंत्यलसमीपत्वाभावान्न वृद्धिः । जि जये । जय उत्कर्षप्राप्तिः अकर्मकोऽयम् ॥

तत्त्व०—लान्तस्येति । लांतस्य किम् । अलपीत् । अरणीत् । अत्र लसमीपत्वेऽपि लान्तत्वाभावान्न । लसमीपाकारस्य किम् । श्वल्ल आशुगमने इत्यस्य अश्वल्लीत् । अत्र लसमीपत्वेऽपि अन्त्यलसमीपत्वाभावान्न । अतो हलादेरिति प्राप्तविकल्पस्यापवादः । जि जय इति । जय उत्कर्षप्राप्तिः ॥

**सपरोक्षयोर्जेर्गिः ॥११९॥** जिगाय जिग्यतुः जिग्युः । जिगयिथ जिगेथ । जीयात् । अजैषीत् ॥ कृष विलेखने ॥ कर्षति । चकर्ष । चकर्षिथ ॥

सुबो०—सपरोक्षयोर्जेर्गिः । जेर्गिः स्यात् सप्रत्यये णबादौ च द्वित्वनिमित्तयोरिति व्याख्येयम् । तेन यङ्लुगंतात्सेर्ग्यादेशो न । जेजयांचकारेत्यत्र । कृष् विलेखने । विलेखनमाकर्षणम् ॥

तत्त्व०—सपरोक्षयोरिति । परोक्षशब्देन तदर्थकणवादिग्रहः द्वित्वनिमित्तयोरिति व्याख्येयम् । यथाश्रुतव्याख्याने तु यङ्लुङन्ताज्जेर्ग्यादेशः स्यात् ॥

**रारो झसे दृशाम् ॥१२०॥** दृशसृजकृषमृशस्पृशतृपदृपसृपां झसेऽरो रो भवत्यरो रश्च ॥

सुबो०—रारो झसे दृशाम् । अश्च आश्च तयोः समाहारः अं तेन सहितो र् अर् तस्य अरः । अरः स्थाने आरः स्थाने च रो भवति । तेन द्रक्ष्यति अद्राक्षीदित्युभ-

यत्रापि गुणवृद्धिस्थाने र आदेशः सिध्यति । बहुवचनं त्वाद्यर्थम् । दृशिर् प्रेक्षणे । सृज विसर्गे । कृष विलेखने । मृश आमर्शने । स्पृश स्पर्शने । तृप प्रीणने । दृप हर्षमोहनयोः । सृप्लृ गतौ ॥

कृषादीनां वा ॥ १२१ ॥ क्रष्टा कर्ष्टा ॥

सुबो०—कृषादीनां वा । कृषादीनां षण्णां तु वाऽरः स्थाने रः ॥

षढोः कः से ॥१२२॥ धातोः षढयोः कत्वं स्यात्से परे ॥ क्रक्ष्यति कर्क्ष्यति । अक्राक्षीत् अकार्क्षीत् ॥

सुबो०—षढोः कस्से । धातोरित्यनुवृत्तम् । से किम् । क्रष्टा । षढोः किम् । त्रप्स्यति । धातोः किम् । लिट्सु ॥

तत्त्व०—षढोः कस्से इति । धातोरिति । अत्र धातुग्रहणद्वयानुवर्त्तनं विधेयम् । तेन धातोरेव धातोर्नतु नामत्वविशिष्टस्यापि । अतो लिह्य इत्यत्र नातिप्रसंगः । न चात्र क्यस्य बाधकत्वम् । तदपवादकत्वादस्य । न चात्र नामत्वेन धातुत्वमिति भ्रमितव्यम् । तेन तदनपायात् ॥

कृषमृषस्पृशमृशतृपदृपां वा सिः ॥ १२३ ॥

हशषान्तात्सक् ॥ १२४ ॥ हान्तात् शान्तात्षान्तान्नाम्युपधादनिटः सक् प्रत्ययः स्याद्दिबादिपरो न तु दृशेः ॥ सेरपवादः । अकृक्षत् ॥ सृप्लृ गतौ ॥ सर्पति । स्रप्ता सर्प्ता । असृपत् ॥ क्रुश आह्वाने रोदने च ॥ क्रोशति । क्रोष्टा । अक्रुक्षत् ॥ रुष रिष शिष हिंसायाम् ॥

सुबो०—कृषमृषस्पृशमृशतृपदृपां वा सिः । एभ्यो वा सिः स्यात् पक्षे । हशषान्तात्सक् । तृपदृभ्यां पुष्पादित्वात्तु ङः हशषांतात्सक् । अनिटो नामिवत इत्यनुवृत्तम् । हशषांतात्किम् । अत्सि । नाम्युपधात्किम् । अगाढ । अनिटः किम् । औहिष्ट । दृशेस्तु अद्राक्षीत् । हश्च शश्च षश्च हशषाः ते अंते यस्य स तस्मात् । अत्रांतग्रहणं चिंत्यम् । हशषादिति पाठ्यम् । तेन च धातोर्विशेषणादंतलाभः ॥

तत्त्व०—हशषान्तात्सगिति । हश्च शश्च षश्च ते अन्ते यस्य स तस्मात् । अत्र चानिटो नामिवत इति पूर्वसूत्रान्नामिवत इत्यनुवर्त्य स च विशेषार्थतया विलक्षणान्नाम्युपधत्वलाभः इत्यभिमेत्याह । नाम्युपधादिति । तेन स्तृहेस्ताक्षीदित्येव रूपमिति बोध्यम् । हशषादित्येव युक्त धातोर्विशेषणत्वेनान्तलाभात् ॥

इषुसहलुभरिषरुषामनपि तस्येड्वा ॥ १२५ ॥ रोषिता रोष्टा । रेषिता रेष्टा । अशिक्षत् ॥ उष गतौ ॥ ओषति । ओषांचकार । उवोष ॥ मिह सेचने ॥

सुबो०—इषुसहलुभरिषरुषामनपि तस्येड्वा । इषु इच्छायाम् । षह मर्षणे । लुभ गार्ध्ये । रुष रिष हिंसायामेभ्यः परस्य तकारस्य इड्वा भवति अनति अनपि

परे । विदद्दरिद्रेत्याम् । उपधाया लघोरिति गुणः । ओषांचकार । असवर्णे स्वरे इत्युव् । उवोष । मिह सेचने । सेचनमार्द्रीकरणम् ॥

ढि ढो लोपो दीर्घश्च ॥ १२६ ॥ ढे परे ढस्य लोपः स्याच्चानृतो दीर्घः ॥ मेढा । षढोः कः से । अमिक्षत् ॥ दह भस्मीकरणे ॥ देहिथ ददग्ध । धक्ष्यति । अधाक्षीत् । झसात् । अदाग्धाम् ॥ इवि व्याप्तौ ॥ इन्वति । इन्वांचकार । ऐन्वीत् ॥ हिवि दिवि धिवि जिवि प्रीणने ॥ हिन्वति ॥

सुबो०–ढि ढो लोपो दीर्घश्च । अनृतः किम् । जर्गृढात् । हो ढ इति ढत्वम् । तथोर्धं इति तस्य धः । ष्टुभिः ष्टुः इति ढः । ढलोपे मेढा । ढशषांतात् इति सक् । अमिक्षत् । हिवि दिवि धिवि जिवि प्रीणने । प्रीणनं तर्पणम् । इदितो नुमिति नुम् । हिन्वति ॥

तत्त्व०–ढि ढो लोप इति । वान्यत्रेत्यतो वानुवृत्तेर्व्यवस्थयाऽनृतः पूर्वस्येति बोध्यम् । ढ्रो ढ्रोर्लोपो दीर्घश्चेति सुवचम् । एव च रिलोपो दीर्घश्चेति न सूत्रणीयम् । प्रीणनमिति । प्रीणनं तृप्तिस्तर्पणश्च ॥

धिन्विकृण्व्योर्वस्य लोपो गुणाभाव उप्रत्ययश्चाव्विषये॥१२७॥ विकरणस्य नुप्रत्ययस्योप्रत्ययस्य च गुणो भवति पिति परे॥ धिनोति॥

सुबो०–धिन्विकृण्व्योर्वस्य लोपो गुणाभाव उप्रत्ययश्चाव्विषये । आभ्यामुप्रत्ययः स्यात् धातोर्वकारस्य लोपो गुणाभावश्च चतुर्षु । अपोऽपवादः । धिवि प्रीणने । कृवि हिंसायाम् । नूप इति गुणे धिनोति ॥

ओर्म्वोर्वा लोपः ॥ १२८॥ असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा वमयोः ॥ धिन्वः धिनुवः । धिन्मः धिनुमः । मिपि तु गुणो बाधकः । धिनोमि ॥

सुबो०–ओर्म्वोर्वा लोपः । उकारः प्रत्ययावयवः प्रत्ययरूपश्च गृह्यते । ओर्वा हेरित्यतो वेत्यनुवृत्तं तस्यासंयोगपूर्वस्य प्रत्ययस्येत्यर्थः । प्रत्ययोकारस्य किम् । युवः युमः । असंयोगपूर्वस्य किम् । शक्नुवः । तक्ष्णुमः । धिनोमीत्यत्र परत्वाद्गुणः ॥

तत्त्व०–ओर्म्वोर्वा लोप इति । ओर्वा हेरित्यतो वेत्यनुवर्त्य व्यवस्थया संयोगपूर्वप्रत्ययोकारलाभः । उकारश्च प्रत्ययस्तदवयवश्च ॥

ओर्वा हेः ॥ १२९ ॥ असंयोगपूर्वात्प्रत्ययोकाराद्धेर्लोपो भवति ॥ धिनु धिनुतात् ॥ कृवि हिंसाकरणगतिषु ॥ कृणोति कृण्वन्ति । चकृण्व ॥ अक्षू व्याप्तौ ॥ अक्षो नुप्रत्ययोऽव्विषये । अक्ष्णोति ।

अक्ष्णुवन्ति । अक्षति । आनक्षिथ आनष्ठ । अक्षिता अष्टा । अक्षिष्यति अक्ष्यति । आक्षीत् आक्षिष्टाम् । आक्षीत् आष्टाम् आक्षुः ॥

तक्षू त्वक्षू तनूकरणे ॥

सुबो०—ओर्वा हेः । वेति न विकल्पार्थम् । किंतु प्रत्ययसंबंधिनोऽसंयोगपूर्वादित्यस्यार्थस्य प्रतिपादनार्थम् । उप्रत्ययरूपः प्रत्ययावयवश्च गृह्यते । प्रत्ययसंबंधिनः किम् । युहि रुहि । असंयोगपूर्वात्किम् । शक्नुहि । अक्षू व्याप्तौ । व्याप्तिः कात्स्न्यर्यम् । अक्षो वा नुप्रत्ययोऽब्विषये । अक्षेर्नुप्रत्ययो वा स्यात् चतुर्षु । अपोऽपवादः । ऌटि स्कोरिति कलोपः । षढोः कः से इति कः षत्वम् । अक्ष्यति । लुङि ऊदित्त्वाद्वेट् । आक्षीत् । आक्षिष्टाम् । इडभावपक्षे तु मा अक्षीत् । झसादिति सिलोपे । आष्टाम् । आक्षुः ॥

तत्त्व०—ओर्वा हेरिति । वाशब्दोऽत्र न विकल्पार्थः किंतु व्यवस्थार्थ. । तत्फल तूक्तमेव ॥

तक्षस्तनूकरणे नुर्वा अब्विषये ॥ १३० ॥ तक्ष्णोति तक्षति वा काष्ठान् । ततक्षिथ ततष्ठ । अतक्षीत् अतक्षिष्टाम् । अताक्षीत् अताष्टाम् । तनूकरणे किम् । वाग्भिः संतक्षति । भर्त्सयतीत्यर्थः ॥

णिक्ष चुम्बने ॥ प्रणिक्षति । निक्षति ॥ ग्लै म्लै हर्षक्षये ॥

सुबो०—तक्षस्तनूकरणे नुर्वाऽब्विषये । तनूकरणेऽर्थे तक्षेर्नुप्रत्ययो वा चतुर्षु । अणोऽपवादः । ग्लै म्लै हर्षक्षये । हर्षक्षयो धातुक्षयः ॥

सन्ध्यक्षराणामा ॥ १३१ ॥ अनपि ॥

सुबो०—संध्यक्षराणामा । संध्यक्षरान्तानां धातूनामा । अनपि धातोः किम् । गोभ्याम् नौभ्याम् ॥

आतो णब्डौ ॥ १३२ ॥ आदन्ताद्धातोः परो णब् डौ ॥ जग्लौ ॥

सुबो०—आतो णब् डौ । आत इति धातोर्विशेषणात्तदंतविधिः । आदंतादाकाररूपाच्च धातोः परो णब् डौ स्यात् । अ इवाचचारेति औ ॥

तत्त्व०—आतो णबु डाविति । धातोर्विशेषणत्वात्तदन्तलाभ इत्यभिप्रेत्याह । आदन्तादिति । आदन्ताकाररूपाच्चेति बोध्यम् । णबित्यत्रानुबंधद्वयग्रहणप्रथमपुरुषबहुवचने गाते इत्यादावतिप्रसंगवारणाय डित्करणम् । आतो युग्वारणाय णित्वं वा स्थानिवत्त्वात् । तज्ज्ञापकं चात्र उग्रहणमेव नित्यत्वात्प्रथमप्राप्तोऽपि युक सावकाशन्यायेन वारितः ॥

आतोऽनपि ॥ १३३ ॥ धातोरातो लोपोऽनपि क्ङिति स्वरे इटि च ॥ जग्लतुः । जग्लिथ जग्लाथ ॥

सुबो०—आतोऽनपि । आत इति योगविभागात् सेटि थपि चेति लब्धम् ॥

तत्त्व०–आतोऽनापि । आत इति योगविभागात्सेटि थपि चेत्यस्य लाभः । सयोगादेरिति ॥

संयोगादेरादन्तस्य किति लिङ्येकारो वा ॥१३४॥ ग्लायात् ग्लेयात् । अग्लासीत् ॥ कै गै रै शब्दे ॥ जगौ ॥

सुबो०–संयोगादेरादंतस्य किति लिङ्येकारो वा संयोगादेरादंतस्य धातोरेत्वं वा किति लिङि ॥

दादेरे ॥ १३५ ॥ अपिद्दाधामागेहाक्पिबतिसोस्थामात एकारो भवत्याशीर्यादादौ पे ॥ गेयात् । अगासीत् ॥ स्त्यै ष्ट्यै शब्दसङ्घातयोः ॥ स्त्यायति । तस्त्यौ । स्त्यायात् । स्त्येयात् । अस्त्यासीत् ॥ दैप् शोधने ॥ ददौ । दायात् । अदासीत् ॥ धेट् पाने ॥ दधौ । धेयात् । अधासीत् । सिलोपपक्षे । अधात् अधाताम् ॥

सुबो०–दादेरे । इह दारूपास्त्रयः । डुदाञ् दाने । दाण् दाने । दो अवखंडने । न देङ् रक्षणे गृह्यते लिङि कित्त्वासंभवात् । धारूपौ द्वौ । डुधाञ् धारणपोषणयोः। धेट् पाने । दाश्च दाश्च दाश्च दाः । धाश्च धाश्च धौ दाश्च धौ च दाधा इति विग्रहः । दाप् लवने । दैप् शोधने । एतौ पित्त्वात् न ग्राह्यौ । मा माने । माङ्मेङौ नेह गृह्येते । लिङि कित्त्वासंभवात् । गै शब्दे । गाङ् गताविति तु न गृह्यते । लिङि कित्त्वासंभवात् । ओहाक् त्यागे । पा पाने । षोऽन्तकर्मणि । ष्ठा गतिनिवृत्तौ । एषामेत्वं किति लिङि । देयात् । धेयात् । मेयात् । हेयात् । पेयात् । अवसेयात् । स्थेयात् । किति किम् । दासीष्ट ॥

तत्त्व०–दादेरित्यत्र दादेरित्यतो दादेरित्यस्यानुवृत्त्यैव सिद्धेऽत्र दादेरिति ग्रहणसामर्थ्यादेतल्लाभः । यादादौ पे इति । एतदप्युक्तयुक्तेर्लभ्यते । ष्ट्यै स्त्यै इति । अत्र वासुदेव' नामधातुष्वष्कष्टचोष्ठिवां सत्वं नेत्युक्तवान् तद्भाष्यविरुद्धम् । पृथक्पाठस्तु तिष्ठ्यासतति । अतिष्ठ्यासदित्यत्र षत्वार्थः ॥

उस्यालोपः ॥ १३६ ॥ अधुः ॥

सुबो०–उस्यालोपः । आदंतस्य धातोरातो लोप उसि परे ॥

धेटो भूतमात्रे दिवादिपरो ङो वा द्वित्वं च ॥ १३७ ॥ आतोऽनापि ॥ अदधत् ॥ दृशिर् प्रेक्षणे ॥

सुबो०–धेटो भूतमात्रे दिवादिपरो ङो वा द्वित्वं च । धेटो ङप्रत्ययो वा स्यात् द्वित्वं च लुङि । सेरपवादः । पक्षे यमिरमिनमातामिति सक् । अधासीत् । शाछेति सिलोपे अधात् । दृशिर् प्रेक्षणे । प्रेक्षणं दर्शनम् ॥

दृशादेः पश्यादिः ॥ १३८ ॥ चतुर्ष्वपि दृशकसृशदसदपाघ्राध्मा-

घ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥

पश्यति । ददर्श ददृशतुः ॥

सुबो०—दृशादेः पश्यादिः । दृशिर् प्रेक्षणे । ऋ गतौ । सृ गतौ । शद्लृ शातने । षद्लृ विशरणादौ । पा पाने । पा रक्षणे इति तु न गृह्यते । लुग्विकरणत्वात् । घ्रा गंधोपादाने । ध्मा शब्दाग्निसंयोगयोः। म्ना अभ्यासे । दाण् दाने । ष्ठा गतिनिवृत्तौ । एषामेकादशानां यथासंख्यमेकादश पश्यादय आदेशा भवंति अप्प्रत्यये परे ॥

तत्त्व०—दृशादेः पश्यादिरिति । पा पाने इत्यस्यैव ग्रहणं न तु पा रक्षणे इत्यस्यापि लुग्विकरणालुग्विकरणयोर्लुग्विकरणस्यैव ग्रहणमिति केचित् । तन्न । न्यायेन सिद्धौ साहचर्यस्यागतिकत्वात् ॥

सृजिदृशोस्थपो वेट् ॥१३९॥ ददर्शिथ दद्रष्ठ । द्रष्टा । अद्राक्षीत् अद्राक्षम् ॥

सुबो०—सृजिदृशोस्थपो वेट् । क्रादेर्णादेरिति नियमान्नित्ये प्राप्ते विभाषेयम् । लुङि इरितो वेति ङः ॥

ऋवर्णदृशोङि गुणः ॥ १४० ॥ अदर्शत् ॥ ऋ गतौ ॥ ऋच्छति । आर्च्छत् ॥

सुबो०—ऋवर्णदृशोङि गुणः । ऋवर्णांतस्य धातोर्दृशेश्च गुणः स्यात् ङप्रत्यये । ङाभावे अनिटो नामिवत इति वृद्धिः । ततो रारो झसे दृशामित्यारो रः अत उपधाया इति पुनर्वृद्धौ अद्राक्षीत् ॥

गुणोऽर्तिसंयोगाद्योः ॥१४१॥ अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यकि यङि किति णादावाशीर्यादादौ च ॥ आरतुः आरुः ॥

सुबो०—गुणोऽर्तिसंयोगाद्योः । अर्तीति भ्वादिह्वाद्योर्ग्रहणम् । लुका निर्देशस्तु सौत्रस्तिप्निर्देशो यङ्लुग्निवृत्त्यर्थः। व्याख्यानात् ऋत इति लभ्यते तच्च संयोगादित्वेन विशिष्यते । तेन अर्तेः संयोगादेः ऋदंतस्य च धातोर्गुणः यक्यङोः परयोः कितो लिङ्लिङोश्च । संयोगादेरिति किम् । क्रियात् ॥

तत्त्व०—गुणोर्तिसंयोगाद्योरिति। अर्तिश्च संयोगादिश्च तौ तयोः।ऋदन्तस्य चेति अर्तिसाहचर्यादेवैतल्लभ्यते॥

अत्यर्तिव्ययतीनां थपो नित्यमिट् ॥ १४२ ॥ आरिथ । अर्यात् । अर्ता । अरिष्यति । आरिष्यत् ॥

सुबो०—अत्यर्तिव्ययतीनां थपो नित्यमिट् । अद भक्षणे । ऋ गतौ । व्येञ् संवरणे । स्वरांतादत्वतश्चेति विकल्पे प्राप्ते विधिः ॥

सर्तिशास्त्यर्तिभ्यो ङो लुङि ॥१४३॥ सेरपवादः । स्वरादेः ।

आरत् आरताम्। अर्तेर्ह्वादेरिति केचित्। आर्षीत् आर्ष्टाम्॥ सृ गतौ॥ धावति। अधावत्। शीघ्रगतावेवायम्। अन्यत्र। सरति। ससार सस्रतुः। ससर्थ। सस्रुव सस्रुम॥

सुबो०—सर्तिशास्त्यर्तिभ्यो ङो लुङि। इह लुका निर्देशात् सर्त्यर्ती जौहोत्यादिकावेव गृह्येते। तेन भ्वाद्योर्न ङ इति केचित्। शासु अनुशिष्टौ। अस्यैव ग्रहणं नतु आङः शासु इच्छायामित्यस्य। परस्मैपदिसर्त्यर्तिभ्यां साहचर्यात् परस्मैपदिनः शासेर्ग्रहणात् क्रादेरिति नेट्। ससर्थ। सस्रुव॥

तत्व०—शीघ्र गतावेवेति। एतच्च विदो नवानामित्यतो वेत्यस्यानुवृत्तेर्व्यवस्थया बोध्यम्॥

यादादौ पे॥ १४४॥ यादादौ धातोः ऋतो रिङ् भवति॥ ङो व्यवधानार्थः। तेन ये इति न दीर्घः। स्रियात्। सर्ता। सरिष्यति। असरत् असरताम्॥ स्रु गतौ॥ स्रवति। अस्रवत्। सुस्राव सुस्रुवतुः। सुस्रोथ। स्रुयात्। स्रोता॥

सुबो०—यादादौ पे। धातोर्ऋतोरिङ् स्यात् किति लिङि ङकारोऽन्त्यादेशार्थो न किंतु मध्यव्यवधानार्थः॥

तत्व०—ङो व्यवधानार्थ इति। न त्वन्त्यादेशार्थः। धातोरधिकारात्षष्ठीनिर्दिष्टत्वेनैतल्लाभात् व्यवधानफलमाह। तेनेति॥

श्रिस्रुद्रुभ्यो ङो धातोश्च द्वित्वं लुङि॥ १४५॥ सेरपवादः॥ असुस्रुवत्॥ दु द्रु गतौ॥ दुदविथ दुदोथ। दोता। अदौषीत्। द्रवति। दुद्रोथ। दुद्रुव। अदुद्रुवत्॥ श्रु श्रवणे॥

सुबो०—श्रिस्रुद्रुभ्यो ङो धातोश्च द्वित्वं लुङि। एभ्यो ङप्रत्ययः स्यादेषां द्वित्वं च लुङि। नतु सिः॥

श्रुवः शृ आदेशो नुप्रत्ययश्चाप्विषये॥१४६॥ नूपः॥ शृणोति। शृणोमि। ओर्म्वोर्वा लोपः। शृणुवः शृण्वः। शृणुमः शृण्मः। शृणुयात्। शुश्राव। श्रूयात्। अश्रौषीत्॥ शद्लृ शातने॥

सुबो०—श्रुवः शृ आदेशो नुप्रत्ययश्चाप्विषये। श्रुवो नुप्रत्ययः स्यात् धातोः शृ इत्यादेशश्च चतुर्षु। अपोऽपवादः। शद्लृ शातने। शातनं विशीर्णता॥

तत्व०—शातन इति। विशीर्णतायामित्यर्थः॥

शीयादेशो आत्॥ १४७॥ शीयते। अशीयत। शशाद। शेदिथ शशत्थ। शत्ता। अशदत्॥ षद्लृ विशरणगत्यवसादनेषु॥ सीदति॥

सुबो०—शीयादेशे आत् । शदेरात्मनेपदं भवति शीयादेशे कृते सति । षद्लृ विशरणगत्यवसादनेषु । विशरणमवयवानां विभागः । अवसादो नाशः ॥

सदिस्वञ्जोर्लिटि परस्य न षः ॥ १४८ ॥ निषसाद । सत्ता । सत्स्यति । असदत् ॥ पा पाने ॥ पिबति । पपौ । पेयात् । पाता । पास्यति । दादेः पे । अपात् ॥ घ्रा गन्धोपादाने ॥ जिघ्रति । जघ्रौ । घ्रेयात् । घ्रायात् । घ्रास्यति । अघ्रासीत् । अघ्रात् ॥ ध्मा शब्दाग्निसंयोगयोः ॥ धमति । दध्मौ । ध्मेयात् । ध्मायात् । अध्मासीत् ॥ ष्ठा गतिनिवृत्तौ॥ तिष्ठति । तस्थौ । दादेरे । स्थेयात् ॥ म्ना अभ्यासे॥ मनति । मम्नौ । म्नायात् । म्नेयात् । अम्नासीत् ॥ दाण् दाने ॥ यच्छति । ददौ । देयात् । अदात् ॥ हृ कौटिल्ये ॥ ह्वरति । जह्वार ॥ गुणोऽर्तिसंयोगाद्योः । जह्वरतुः ॥

सुबो०—सदिस्वंजोर्लिटि परस्य सस्य न षः । द्वित्वात्परस्यैतयोः सस्य षो न लिटि । अड्द्वित्वव्यवधानेऽपीति प्राप्तौ निषेधः। लिटि किम् । निषिषत्सति । पिबतीत्यत्र पिबादेशोऽदंतः । अदे इत्यलोपः । अल्लोपस्यासिद्धत्वादुपधाया लघोरिति गुणो न । अकारयुक्तोच्चारणसामर्थ्याद्वा । घ्रा गन्धोपादाने । गंधोपादानं गंधग्रहणम् । शाच्छासेति वा सिलुक् । यमिरमीतीट्सकौ । अघ्रात् । अघ्रासीत् । ध्मा शब्दाग्निसंयोगयोः । शब्दशब्देन तदनुकूलो वायुरिह गृह्यते तेन शंखं धमतीतिवत् मृदंगं धमतीति प्रयोगो न । अग्निसंयोगे सुवर्णं धमति । अग्निना संयुनक्तीत्यर्थः । म्ना अभ्यासे । मनति विद्याम् । अभ्यस्यतीत्यर्थः । अदादित्यत्र दादेः पे इति सिलुक् । गुणोर्तीति गुणः । जह्वरतुः ॥

सत्त्व०—सदिस्वंजोरिति । लिटि परे परस्य सस्येति शेषः । स्वंजेर्ग्रहणं तु भाष्यानतुगुणमपि वृत्त्यादिसमतत्वात्कृतम् ॥

ऋदन्तात्थपो नेट् ॥ १४९ ॥ जह्वर्थ । ह्वर्यात् । ह्वर्ता । ह्वरिष्यति । अह्वरिष्यत् । अह्वार्षीत् ॥ स्वृ शब्दोपतापयोः ॥ स्वरति । सस्वरिथ सस्वर्थ । सस्वरिव । स्वरिता स्वर्ता । स्वरिष्यति । अस्वरिष्यत् । अस्वरीत् अस्वार्षीत् अस्वार्ष्टाम् अस्वार्षुः ॥ बुध अवगमने ॥ बोधति । बोधिता ॥ रुह बीजजन्मनि प्रादुर्भावे च ॥ रोढा । रोक्ष्यति । अरुक्षत् ॥ स्कन्दिर् गतिशोषणयोः॥ स्कन्दति ।

चस्कन्दिथ चस्कन्थ । स्कद्यात् । स्कन्ता । स्कन्त्स्यति । अस्कान्त्सीत् । अस्कदत् ॥ यभ मैथुने ॥ यभति । ययाभ येभतुः येभुः। येभिथ ययब्ध । यभ्यात् । यब्धा । अयाप्सीत् अयाब्धाम् अयाप्सुः ॥ तॄ प्लवनतरणयोः ॥ तरति । ततार तेरतुः । तेरिथ ॥

सुबो०—ऋदंतात् थपो नेट् । ऋदंतात् धातोः परस्य थप इण्न भवति स्वरांतादिति पाक्षिके प्राप्ते निषेधः। हनृत इतीट् । हरिष्यति । स्वृ शब्दोपतापयोः । उपतापो रोगः । स्वरतिसूतीति वेट् । सस्वरिथ सस्वर्थ । गुणोर्तीति गुणः । स्वर्यात् । लृटि हनृत इति नित्यमिट् । स्वरिष्यति । लुङि अस्वारीत् । अस्वारिष्टाम् । इडभावे अस्वार्षीत् । अस्वार्ष्टाम् । स्वरांतादत्वत इति वेट् । चस्कंदिथ । चस्कंथ । आशिषि नो लोप इति नलोपः । स्कद्यात् । लुङि इरितो वेति वा ङः । अस्कदत् । ङाभावे सावनिटो नित्यं वृद्धिः । अनिटो धातोरनुपधाभूतस्यातो वृद्धिः स्यात् सिप्रत्यये । अस्कांत्सीत् । तॄफलेत्येत्वपूर्वलोपौ । तेरतुः ॥

ॠत इर् ॥१५०॥ ॠकारस्य इर् भवत्यगुणवृद्धिविषये ॥ तीर्यात् ॥

सुबो०—ॠत इर् । धातोर्ॠकारस्य इर् भवति गुणवृद्धिनिमित्ताभावे । य्वोरिति दीर्घः । तीर्यात् ॥

ईटो ग्रहाम् ॥ १५१ ॥ ग्रहादीनामिट ईकारो न तु णादौ ॥

सुबो०—ईटो ग्रहाम् । ग्रहादेः परस्येटो दीर्घः स्यान्नतु लिटि । ग्रहामिति बहुवचनेन वक्ष्यमाणव्यवस्था ॥

तत्त्व०—न तु णादावित्यादि । ऊदितो वेत्यतो वानुवृत्तेर्व्यवस्थया लाभः॥

वृङ्वृञॄदन्तानां वा ॥ १५२ ॥ तरिता तरीता ॥

सुबो०—वृङ्वृञॄदंतानां वा ।एभ्यः परस्येटो वा दीर्घः नतु लिटि । नतु लिटि किम् । तेरिथ ॥

पे सेरिटो न दीर्घः सीटश्च ॥ १५३ ॥ अतारीत् अतारिष्टाम् अतारिषुः ॥ दंश दशने ॥

सुबो०—पे सेरिटो न दीर्घः सीटश्च । वृङ्वृञॄदंतात्परस्येटो न दीर्घः। पे सौ सीडादौ च परे । दंश दशने । दशनं दंष्ट्राव्यापारः निपातनान्नस्य लोपः ॥

तत्त्व०—दशन इति । दंश निपातनान्लोपः ॥

अपि रञ्जदंशसञ्जस्वञ्जाम् ॥ १५४ ॥ एषां नस्य लोपोऽपि ॥

दशति । दष्टा । अदाङ्क्षीत् ॥ षञ्ज सङ्गे ॥ ससञ्जिथ ससङ्क्थ । व्यषाङ्क्षीत् ॥ कित रोगापनयने संशये च ॥

सुबो०—अपि रंजदंशसंजस्वंजाम् । रंज रागे । दंश दशने । संज संगे । ष्वंज परिष्वंगे । एषामुपधाभूतस्य नस्य लोपो भवति शप्प्रत्यये । लुङि सावनिट इति वृद्धिः । छशषेति षत्वं षढोरिति कत्वं यमां यमस्येति परसवर्णः । अदाङ्क्षीत् । अट्वृद्धित्वव्यवधानेऽपीति षत्वम् । व्यषाङ्क्षीत् । कित रोगापनयने संशये च । रोगापनयनं व्याधिप्रतीकारः । संशये प्रायेण विपूर्वः । विचिकित्सा तु संशय इत्यमरः ॥

गुब्भ्यः ॥ १८५ ॥ गुप्तिज्कित्मान्बध्दान्शान्भ्यः स्वार्थे सप्रत्ययो भवति धातोश्च द्वित्वम् ॥ चिकित्सति । चिकित्सांचकार । चिकित्सिता । अचिकित्सीत् ॥ पत्लृ पतने ॥ पपात पेततुः ॥

पतेङ् पुम् ॥१८६॥ अपप्तत् ॥ भ्रमु चलने ॥ यो वा । भ्राम्यति भ्रमति ॥

सुबो०—गुब्भ्यः। गुप् गोपने । तिज निशातने । मान पूजायाम् । बंध बंधने । दान आर्जवे । शान तेजने । बहुवचनमाद्यर्थम् । गुपेर्निंदायां तिजेः क्षमायां कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च मानेर्जिज्ञासायां बधेश्चित्तविकारे दानेरार्जवे शानेर्निशाने वाच्ये नित्यं स्वार्थे सप्रत्ययः धातोर्द्वित्वं च । गुपिप्रभृतयः किद्भिन्ना अनुदात्तेतः । दानशानौ स्वरितेतौ । अत्र सप्रत्ययस्य सिसतेत्यनेनेण् न भवति । आगमजमनित्यमित्युक्तत्वात् । नानिटि से इत्युपधाया गुणो न स धातुरिति धातुत्वात्तिबादिः । कितेर्व्याधिप्रतीकारादावेव स इत्युक्तं तदुदाहरति । चिकित्सति । रोगमपनयतीत्यर्थः । शत्रुं चिकित्सति । निगृह्णातीत्यर्थः । क्षेत्रे तृणानि चिकित्सति । अपनयति नाशयति वेत्यर्थः। कासादिप्रत्ययादाम् इत्याम्। यत् इत्यलोपः । चिकित्सांचकार । भ्रमु चलने । मंडलाकारेण चलनमेव धात्वर्थो न । किंतु चलनमात्रम् । भ्राशभ्लाशिति वा यः । भ्राम्यति ॥

तत्त्व०—गुब्भ्य इति । बहुवचनमाद्यर्थमतो गणयति । गुप्तिज इत्यादि । स्वार्थ इति । अन्यार्थानुक्तेरिति भावः । चिकित्सतीति । आगमजस्यानित्यत्वादिडभावस्ततो नानिटि से इति गुणाभावः । भ्रमु इति उदित्त्व क्त्वाप्रत्यये भ्रमित्वा भ्रान्त्वेतीड्विकल्पार्थम् ॥

फणूराज्भ्राज्भ्राश्भ्लाश्स्यम्स्वन्जृष्भ्रम्त्रसाम् ॥ १८७ ॥ एत्वपूर्वलोपौ वा ॥ भ्रेमतुः बभ्रमतुः। अभ्रमीत् ॥ टुवम् उद्गिरणे ॥ वम एत्वपूर्वलोपौ वेति केचित् । वेमतुः ववमतुः। अवमीत् ॥ फण्

गतौ ॥ फेणतुः पफणतुः । अफाणीत् अफणीत् ॥ स्वन स्यमु शब्दे ॥ स्वेनतुः सस्वनतुः । अस्वानीत् अस्वनीत् । स्येमतुः सस्यमतुः । अस्यमीत् ॥ शसु हिंसायाम् ॥ शशसतुः । शशसिथ ॥ तुहिर् दुहिर् उहिर् अर्दने ॥ अतुहत् अतोहीत् । दोहिता । अदुहत् अदोहीत् । उवोह ऊहतुः ॥ वस निवासे ॥

सुबो०–फण्राजृभ्राजृभ्राशृभ्लाशृस्यमुस्वन्जॄपृभ्रमुत्रसाम् । एत्वपूर्वलोपौ वा । फण् गतौ । राजृ दीप्तौ । टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ । स्यमु स्वन शब्दे । जॄष्इर् वयोहानौ । भ्रमु चलने । त्रसी उद्वेगे । एषामेत्वपूर्वलोपौ वा किति लिटि सेटि थपि च । टुवम् उद्गिरणे । केचिदमुमुदितं पठंति । वामनस्तु नोदितम् । गृधातोर्युट्प्रत्यये गुणे कृते तूद्गिरण इति स्यात्ततो निपातनादिरिति सुधाकरः । उद्गिरणं वमनम् । वादित्वादेत्वपूर्वलोपौ न । ववमतुः । वेमुश्च केचिद्रुधिरमित्यादिप्रयोगा माष्यविरुद्धाः ॥

तत्त्व०–अभ्रमीदिति । ह्यन्तेत्यादिना न वृद्धिः । टुवम् उद्गिरण इति । वेमथुरित्यथुप्रत्ययार्थं ट्वित्वम् । इहैव निपातनादुद्गिरणे इत्यत्र गुणाभावः । शशसतुरिति । न शसददेति निषेधः । निमित्त इति क्लिारपरस्येत्यर्थः ॥

णवादौ पूर्वस्य ॥ १५८ ॥ यजादीनां ग्रहादीनां च पूर्वस्य संप्रसारणं णवादौ ॥

सुबो०–णवादौ पूर्वस्य । यजामिति ग्रहामिति चानुवृत्तेः । यद्यपि ग्रहिवृश्चिपृच्छतिभृज्जतीनां पूर्वस्य संप्रसारणे कृते विशेषो नास्ति तथापि पर्जन्यवल्लक्षणं प्रवर्त्तते । जग्राह । वव्रश्च । पप्रच्छ । बभ्रज्ज । लिटि किम् । विवक्षति । पिप्रक्षति ॥

यवराणामिदुदृतः ॥ १५९ ॥ सस्वरस्य संप्रसारणम् । दीर्घस्य दीर्घो ह्रस्वस्य ह्रस्वः । उवास ॥

सुबो०–यवराणामिदुदृतः । यकारवकाररकाराणां स्थाने इकारोकारऋकारा भवंति । ते संप्रसारणसंज्ञकाः स्युः ॥

यजां यवराणां य्वृतः संप्रसारणं किति ॥ १६० ॥ यजादीनां संप्रसारणं किति ॥ यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिस्वपी । वदिवसी श्वयतिर्वंकितरेकादश यजादयः ॥

सुबो०–यजां यवराणां य्वृतः संप्रसारणं किति । यजादिधातूनां यकारवकाररकाराणामिकारोकारऋकाराः संप्रसारणं भवंति किति प्रत्यये परे । यजिर्वपिर्वहिश्चैव

ङ्व्येङ्ह्वेङस्त्वपवदस्तथा ॥ वसिश्च श्वयतिर्वेक्तिरेकादश यजादयः ॥ १ ॥ यज देवपूजादौ । टुवप् बीजतन्तुसंताने । वह प्रापणे । वेञ् तंतुसंताने । व्येञ् संवरणे । ह्वेञ् स्पर्द्धायाम् । ञिष्वप् शये । वद व्यक्तायां वाचि । वस् निवासे । टुओश्विइर् गतिवृद्ध्योः । वच परिभाषणे । एते एकादश धातवो यजादयो ज्ञेयाः ॥

घसादेः षः ॥ १६१ ॥ घसिशासिवसीनां सस्य षो निमित्ते सति ॥ ऊषतुः । उवसिथ उवस्थ । उष्यात् । वस्ता ॥

सुबो०—घसादेः षः । सस्याकृतत्वादप्राप्ते विधिरयम् । घस्ऌ अदने । शासु अनुशिष्टौ । वस् निवासे । कित्परस्यैषां सस्य षः स्वरान्तादत्वत इति वेट् । उवसिथ । उवस्थ ॥

सस्तोऽनपि ॥ १६२ ॥ सस्य तोऽनपि से ॥ वत्स्यति । अवात्सीत् अवात्ताम् ॥ वद व्यक्तायां वाचि ॥ वदति । उवदिथ । उद्यात् । वदिव्रज्योः सौ नित्यं वृद्धिः । अवादीत् ॥ टुओश्विइर् गतिवृद्ध्योः ॥

सुबो०—सस्तोऽनपि । धातोः सस्य तोऽनपि सकारे परे । से किम् । वस्ता । सस्येति किम् । रप्स्यते । धातोः किम् । वेधः । से लुङि णित्पे इति सेर्णित्त्वादत उपधाया इति वृद्धिः । अवात्सीत् । सस्य ते कृते झसादिति सिलोपः । अवात्ताम् । वदिव्रज्योरिति वृद्धिः । अवादीत् । टुओश्विइर् गतिवृद्ध्योः । टु इतीत्संज्ञकः । ट्वितोऽथुरित्येतदर्थः । श्वयथुः । ओरिति ल्वाद्योदितश्चेतदर्थः । इरिदिरितो वेति ङप्रत्ययार्थः ॥

श्वयतेणादौ संप्रसारणं वा ॥ १६३ ॥ ततो द्वित्वम् ॥ शुशाव शुशुवतुः । शुशविथ । शिश्वाय शिश्वियतुः । शिश्वयिथ । शूयात् । श्वयिता । अश्वयीत् ॥

सुबो०—श्वयतेणादौ संप्रसारणं वा । ततो द्वित्वम् । श्वयतेः पूर्वं संप्रसारणं स्याद्वा पश्चाद्द्वित्वम् । लिटि नुधातोरित्युव् । शुशुवतुः । आशिषि यजामिति संप्रसारणे कृते य्रे इति दीर्घः । शूयात् । ह्यंतेति न वृद्धिः । अश्वयीत् । पक्षे इरितो वेति ङप्रत्यये ॥

श्वयतेरितो लोपो ङे ॥ १६४ ॥ अश्वत् ॥

सुबो०—श्वयतेरितो लोपो ङे । श्वयतेरिकारस्य लोपः स्यात् ङप्रत्यये । अश्वत् ॥

श्वयतेङे द्वित्वं वा एरलोपः ॥ १६५ ॥ अशिश्वियत् ॥ घस्ऌ अदने ॥ घसति । घसेत् । जघास जक्षतुः । जघसिथ जघस्थ । घस्ता । घत्स्यति । अघत्स्यत् ॥ इति पंप्रक्रिया ॥

सुबो०—श्वयतेर्ङे द्वित्वं वा एरलोपः । श्वयतेर्वा द्वित्वं भवति इकारस्य लोपाऽभावश्च ङे परे । नुधातोरितीय् । अशिश्वियत् ॥ इति पम् ॥

तत्त्व०—श्रीविद्यानगरस्थायिलोके शंकरशर्मणा । कृतायां दीपिकायां हि परस्मैपदपूरणम् ॥ इति पप्रक्रिया ॥

एध वृद्धौ ॥ एधते । एधांचक्रे ॥

सुबो०—एध वृद्धौ । अकारोऽनुदात्त आत्मनेपदार्थः ॥

तत्त्व०—एध वृद्धाविति । अकारोऽनुदात्त आत्मनेपदार्थः ॥

आमो भ्वसोर्नात्कर्तरि ॥ १६६ ॥ एधामास । एधांबभूव । ऐधिष्ट ॥ ईक्ष दर्शनाङ्कनयोः ॥ ईक्षांचक्रे । ऐक्षिष्ट ॥ ष्वष्क गतौ ॥ ष्वष्कते । ष्वष्किषीष्ट । अवष्किष्ट ॥ वेष्ट वेष्टने ॥ विवेष्टे ॥ चेष्ट चेष्टायाम् ॥ चिचेष्ट । अचेष्टिष्ट ॥ ऋज गतौ स्थैर्ये च ॥ अर्जते । आनृजे । आर्जिष्ट ॥ ष्वञ्ज परिष्वङ्गे ॥ स्वजते ॥

सुबो०—आमो भ्वसोर्नात्कर्त्तरि । आमुप्रत्ययांतात्परयोर्भ्वसोः कर्तर्यर्थे आत्मनेपदं न भवति । भावकर्मणोस्त्वात्मनेपदमेव । नामधातुष्वष्काष्ठिवामिति सत्वाभावः । ष्वष्कते । नानृजे इत्यत्र द्वित्वं हसादिः शेषः र इत्यत्वम् । आभ्वोरित्यात्वं नुगशामिति नुक् । ष्वंज परिष्वंगे । परिष्वंग आलिंगनम् । अपि रंजेति नलोपः ॥

तत्त्व०—नात्कर्त्तरीति । आत आत्मनेपदम् । कर्त्तरीत्युक्तेर्भावादात्मनेपदमेव । ष्वष्केति । नामधातुष्वष्कष्ठिवामिति सत्वनिषेध. । आनृजे इति । द्विरन हसादि. शेषः र इत्यत्वम् । आवनोरीत्यात्वम् । नुगशामिति नुक् ॥

स्वजतेर्णादेर्वा कित्त्वम् ॥ १६७ ॥ सदिस्वञ्ज्योर्लिटि परस्य न षः ॥ परिषस्वजे परिषस्वजे । स्वङ्क्षीष्ट । स्वङ्क्ता । स्वङ्क्ष्यते । अस्वङ्क्त अस्वङ्क्षाताम् । पर्यष्वङ्क्त ॥ पर्यस्वङ्क्त ॥ त्रपूष् लज्जायाम् ॥ त्रपते । त्रेपे ॥ ऊदितो वा । त्रपिषीष्ट त्रप्सीष्ट । अत्रपिष्ट अत्रप्त ॥ तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे ॥ तेपते । तितिपे । तिप्सीष्ट । अतिप्त ॥ तेपृ—तेपते । तितेपे । तेपिषीष्ट । अतेपिष्ट॥ ष्टिपृ—स्तेपते । तिष्टिपे । स्तेपिषीष्ट । ष्टेपृ—स्तेपते । तिष्टेपे । स्तेपिषीष्ट ॥ जभी जृभी गात्रविनामे॥ रधिजभोः स्वरे नुम् । जम्भते । अजंभिष्ट। जृम्भते । जजृम्भे ॥ ष्टुभ स्तम्भे ॥ विष्टोभते । तुष्टुभे । स्तोभिता । स्तोभिषीष्ट ॥ क्षमूष् सहने ॥ क्षमते । चक्षमे । चक्षमिषे चक्षंसे ॥

**मो नो धातोः ॥१६८॥** मान्तस्य धातोर्मकारस्य नः स्यात् झसे पदान्ते वमयोः परयोः ॥ चक्षमिवहे चक्षण्वहे । चक्षमिमहे चक्षण्महे । अक्षमिष्ट । अक्षंस्त ॥ क्नूयी शब्दे उन्दे च ॥ क्नूयते । अक्नूयिष्ट ॥ क्ष्मायी विधूनने॥ क्ष्मायते । चक्ष्माये । अक्ष्मायिष्ट ॥ स्फायी ओप्यायी वृद्धौ ॥ स्फायते । पस्फाये । अस्फायिष्ट । प्यायते ॥

सुबो०—स्वजतेर्णादेर्वा किस्वम् । स्वजतेः परस्य लिटो वा कित्त्वं भवति।सदिस्वंजोरिति परस्य न षः । परिषस्वजे । झसादिति सिलोपः । अस्वंक्त । तॄफलभजत्रपामित्येत्वपूर्वलोपौ । त्रेपे । ऊदितो वेति वेट् । त्रप्सीष्ट । त्रपिषीष्ट । लुङि झसादिति सिलोपः। अत्रप्त । तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे । आद्योऽनिट् । क्षीरस्वामी त्वयं सेडिति बभ्राम । क्रादेर्णादेरिति नित्यमिट् । तितिपिषे । सिस्योः । उपधाभूतस्य नामिनो गुणो नानिटि सिप्रत्यये सीष्टादौ च परे । लुङि झसादिति सिलोपः । अतिप्त । जभि जृभी गात्रविनामे । गात्रस्वेदे इत्यर्थः । ईदित्त्वात् आदीदित इति क्तक्तवत्वोर्नेट् । रधिजभोः स्वरे नुम् । एतयोर्नुमागमः स्यात् स्वरे । धू हिंसायाम् । ञिप्रत्यये तु रंधयतीत्यत्र ञिनिमित्ता परापि वृद्धिर्नित्येन नुमा बाध्यते । स्वरे किम् । रब्धा जब्धा । ष्टुभ स्तंभे । स्तंभो निरोधः । क्षमूष् सहने । षकारः षिद्भिदामङ् इत्यङ्प्रत्ययार्थः। मो नो धातोरिति मस्य नः। अवकुप्वंतरेऽपीति णत्वम् । चक्षण्वहे । क्नूयी शब्दे उंदे च । उंदः क्लेदनमार्द्रीभाव इत्यर्थः ॥

तत्त्व०—परिषस्वजे इति । कित्त्वान्नलोपः । सदिस्वंज्योरिति परस्य षत्वनिषेधः । त्रप्सीष्टेति । ऊदितो वेति वेट् । चक्षण्महे इति । इडभावपक्षे वमयोश्चेति मस्य नत्वम् । क्नूयी शब्दे उदे चेति । ईदित्व क्तक्तवत्वोरिडभावार्थम् ॥

**लिड्यङोः प्यायः पी ॥ १६९ ॥** पिप्ये ॥

सुबो०—लिड्यङोः प्यायः पी । लिटि याङि च प्यायः पी । आदौ परत्वात् पीभावे पश्चात् पीशब्दस्य द्वित्वे कृते नुधातोरिति यः । पिप्ये । यङि पेपीयते ॥

तत्त्व०—पिप्ये इति । आदौ परत्वात्पीभावे पुनः प्रसगाविज्ञानात्पीशब्दस्य द्वित्वम् । ततोऽनेकस्वरपूर्वकत्वाद्यत्वम् ॥

**दीपजनबुधपूरितायिप्यायिभ्यो वा इणू तनि कर्तरि ॥१७०॥** सेरपवादः ॥

सुबो०—दीपजनबुधपूरितायिप्यायिभ्यो वा इणू तनि कर्तरि । दीपी दीप्तौ । जनी प्रादुर्भावे । बुध अवगमने । पूरी आप्यायने । एते दिवादयः । तायृ संतानपालनयोः । ओप्यायी वृद्धौ । एतौ भौवादिकौ । एभ्य इणू प्रत्ययो वा स्यात कर्त्रर्थे तनि परे । । सेरपवादः ॥

तत्त्व०—दीपजनेति । अत्र पण्डितताः दीपपूरादिभिरात्मनेपदिभिः साहचर्यात् । बुध बोधने । बुध जनेने इति परस्मैपदिनो न ग्रहणम् । तेनाभ्यां कर्मव्यतिहारे आत्मनेपदे तनि न भवति ॥

लुक् ॥१७१॥ इणः परस्य तनो लुक् ॥ अप्यायि । अप्यायिष्ट ॥ तायृ संतानपालनयोः ॥ तताये । अतायिष्ट ॥ वल वल्ल संवरणे ॥ वलते । वल्लते ॥ टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ ॥ भ्रेजे बभ्राजे । भ्राश्यते भ्राशते । भ्रेशे बभ्राशे । भ्लाश्यते भ्लाशते । भ्लेशे बभ्लाशे ॥ तिज निशाने क्षमायां च ॥ गुप्भ्यः । तितिक्षते । तितिक्षांचक्रे ॥ गुप् गोपनकुत्सनयोः ॥ जुगुप्सते ॥ मान विचारणे ॥

सुबो०—लुक् । इण्तनीत्यत्र इणिति तनीति चाऽनुवृत्तम् । इणिति पंचम्या विपरिणमनीयं तनीति षष्ठ्या च । अप्यायि । तायृ संतानपालनयोः । संतानः प्रबंधः । टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ । दीप्तिस्तेजः । फणिराजृभ्राजृ इत्येत्पूर्वेलोपौ । भ्रेजे बभ्राजे । भ्राशभ्लाशिति वा यप्रत्ययः । भ्राश्यते । तिज निशाने । निशानं तीक्ष्णीकरणम् । गुप्भ्य इति तिजेः क्षमायां सः । तितिक्षते । क्षमां करोतीत्यर्थः । गुप गोपनकुत्सनयोः । गोपनं रक्षणम् । गुपेर्निंदायां सः । जुगुप्सते । निंदां करोतीत्यर्थः ॥

तत्त्व०—लुक् । अत्रेण् तन्यकर्त्तरीति पूर्वसूत्रादनुवृत्त तनीति षष्ठ्या विपरिणमनीयमिति इणिति पञ्चम्या । तत्र षष्ठीनिर्देशादन्त्यलोपः । आदेरित्वस्यानुवृत्त्या आदेरपि लोप इति सूत्रपाठपक्षे । क्वचित्तु लुगिति पाठः । तत्र सर्वस्य तनो लुग्भवतीति । अत्रेद वक्तव्यम् । अत्र तनीति नानुवर्त्यम् । इणः परस्य लुक् स्यात् इत्येव व्याख्येयम् । तथा चेणः परस्यान्यस्यासंभवात्तन एव लुग्भविष्यति न चाकारितरामित्यत्रातिप्रसगः । तत्रासिद्धत्वेन तनः परत्वात् । तिज निशाने । निशानं तीक्ष्णीकरणम् ॥

यः से ॥ १७२ ॥ पूर्वस्यात इत्से ॥

सुबो०—यः से । इ अः से इति पदच्छेदः । पूर्वस्येत्यनुवृत्तम् । तपरः किम् । पापचिषति । यङंतात्सः ॥

तत्त्व०—यः से । इ अः से इति छेदः ॥

मानादीनां पूर्वस्येतो दीर्घः ॥ १७३ ॥ मीमांसते ॥ वध निन्दायाम् ॥ आदिजबानामिति भः । बीभत्सते ॥ पण व्यवहारे स्तुतौ च । पन च ॥ पणायति । स्तुतावेवायः । पणते । पणायांचक्रे । पेणे । एवं पन् ॥ कसु कान्तौ ॥

सुबो०—मानादीनां पूर्वस्येतो दीर्घः । एषां पूर्वस्येकारस्य दीर्घः स्यात् । मान विचारणे । वध निंदायाम् । दान् आर्जवे । शान् तेजने । इत्यादि । मानेर्जिज्ञा-

सायां सः । मीमांसते । जिज्ञासां करोतीत्यर्थः । बध निंदायाम् । निंदा परापवादः । बधेश्चित्तविकारे सः । आदिजबानामिति भः । खसे चपा इति तः । बीभत्सते । ग्लानिं करोतीत्यर्थः । पण व्यवहारे स्तुतौ च । पन च । क्रयविक्रयरूपो व्यवहारः । पनेति स्तुतावित्यनेन संबध्यते । पृथङ्निर्देशात् पनिसाहचर्यात् पणेरपि स्तुतावेवायप्रत्ययः । स्तुतावनुबंधस्य केवले चरितार्थत्वादायप्रत्ययांतादात्मनेपदं न भवति । पणायति । यत इत्यल्लोपे पणायांचकार । भट्टिस्तु व्यवहारेऽप्यायप्रत्ययं कृतवान् । न चोपलेभे वणिजा पणायामिति व्यवहारमित्यर्थः । आयांतादङ्प्रत्यये आप् । कमु कांतौ । कांतिरिच्छा । णिङाभावे उदित्त्वात् क्त्वायामिङ्विकल्पः । कमित्वा कांत्वा । क्तक्तवत्वोस्तु क्वचिद्वेट् इति निषेधात् । कांतः । कांतवान् ॥

तत्त्व०—पन चेति । व्यवहारे स्तुताविति चार्थः । पणायतीति । व्यवहारे पणते इत्यत्र चरितार्थत्वादनुबंधस्यायप्रत्ययान्तेऽसत्त्वात् ॥

**कमेः स्वार्थे णिङनपि तु वा ॥१७४॥ कामयते । कामयांचक्रे । चकमे ॥**

सुबो०—कमेः स्वार्थे णिङनपि तु वा । कमेर्णिङ् स्याच्चतुर्षु नित्यमनपि वा धात्वर्थे ॥

**णेरङ् द्विश्च ॥ १७५ ॥ ण्यन्ताद्धातोः कर्तरि अङ् लुङि ॥ सेरपवादः । धातोश्च द्वित्वम् ॥**

सुबो०—णेरङ् द्विश्च । णेरित्यस्य प्रत्ययत्वात्तदंतलाभः । अप् कर्त्तरीत्यतो मंडूकप्लुत्या कर्त्तरीत्यनुवृत्तम् । ङकारोऽङि लघाविति विशेषणार्थः । अङि परे चकारात् णंतस्य धातोर्द्वित्वम् । तच्च नित्यत्वात् णिलोपे कृते प्रवर्त्तते । कर्त्तरि किम् । अकारयिषातां घटौ कुलालेन ॥

तत्त्व०—णेरङ् द्विश्च । णेरिति । अस्य प्रत्ययत्वात्तदन्तलाभः अप् कर्त्तरीत्यतो मण्डूकप्लुत्या कर्त्तरीत्यनुवर्त्तते । कर्तरि किम् । अकारयिषातां घटौ कुलालेन । अत्राहुः । ङकारोऽङि लघाविति विशेषणार्थः चकारस्य वा भेदेन व्याख्यानात् । श्रिश्रुद्रुभ्यो ङः क्वचिद्विकल्पेनेत्यादि । अत्रेदं वक्तव्यम् । अशिश्रियदित्यादौ ङकारस्य गणप्रतिषेधार्थतया दृष्टत्वेनान्यार्थताया अन्याय्यत्वात् । अचूचुरदित्यादौ तु ह्रस्वविधिसामर्थ्यादेव न ॥

**णेः ॥ १७६ ॥ अनपि णेर्लोपो न त्विडामन्ताल्वाय्येत्न्विष्णुषु ॥**

सुबो०—णेः । णेरिति णिणिङोः सामान्येन ग्रहणम् । इडादिषु प्रत्ययेषु परेषु णेर्लोपो न अन्यत्र । अनपि णेर्लोपः स्यात् इटि । कामयिता । आमि कामयामास । विशादेरंत इत्यौणादिकेऽन्ते गंडयन्तः । आलुप्रत्यये स्पृहयालुः । चादेराय्य इत्यौणादिके अय्ये स्पृहयाय्यः । इत्नुप्रत्यये औणादिके स्तनयित्नुः । इष्णुप्रत्यये च्छान्दसिके वीरुधः पारयिष्णवः ॥

तत्त्व०—ञेरिति । ञिञिङोः सामान्येन ग्रहणम् न त्विडित्यादिषु । इट् कारयिता । आम् कारयामास । अन्त मण्डयन्तः । औणादिकोऽन्तः । आलु स्पृहयालु । स्पृहीत्यादिनोक्त आलुः । आय्यः स्पृहयाय्यः। औणादिक आय्यः । इत्नु स्तनयित्नुः । औणादिकः । इष्णुः पारयिष्णवः । एषु ञेर्लोपो नेत्यर्थः ॥

अङि लघौ ह्रस्व उपधायाः ॥ १७७ ॥ अङि सत्युपधायाः ह्रस्वो भवति पूर्वस्यातो लघुनि धात्वक्षरे इकारः ॥

सुबो०—अङि लघौ ह्रस्व उपधायाः । येन नाव्यवधानं तेन व्यवहितेऽपीति वचनसामर्थ्यात् धात्वक्षरस्य ककारेण व्यवधानेऽपि पूर्वस्यातोऽत्रेत्वम् । अजजागरदित्यत्र त्वनेकवर्णव्यवधानत्वान्नेत्वम् । उपधायाः किम् । अचकांक्षत् ॥

तत्त्व०—अङि लघौ ह्रस्व उपधायाः । धात्वक्षरस्य ककारेण व्यवधानेऽपि येन नाव्यवधानं संभवति तेन व्यवहितेऽपीति वचनसामर्थ्याद्भवति । अजजागरदित्यत्र त्वनेकवर्णव्यवधानत्वान्न भवति । न चाचिचक्षणदित्यत्राप्यनेकवर्णव्यवधानत्वान्न भविष्यतीति वाच्यम् । अत्स्मृदृत्वरेतीत्वबाधनार्थमत्वेन संयोगव्यवधाने भवतीति ज्ञापितत्वात् । तेन स्वरहससमुदाय एव न भविष्यतीति बोध्यम् ॥

लघोर्दीर्घः ॥१७८॥ अङि सति पूर्वस्य लघोर्दीर्घो भवति लघुनि धात्वक्षरे परे ॥ अचीकमत् । ञेरभावे ॥

सुबो०—लघोर्दीर्घः । अङि लघावित्यतो लघावित्यनुवृत्तम् । लघोः किम् । अचिक्षणत् । ञेरभावे ॥

तत्त्व०—लघोर्दीर्घ । अत्राङि लघावित्यनुवर्तते इत्याह लघुनीत्यादि । अत्र प्राञ्चः । हसादेर्धातोः पूर्वस्य लघोर्दीर्घो भवति । तेनारिरदित्यादावप्रसङ्ग इति । वस्तुतस्तु अत्र दीर्घप्राप्तिरेव लघुधात्वक्षरपरत्वाभावात् ॥

कमेरङ् द्वित्वे ॥ १७९ ॥ अचकमत ॥ अय गतौ ॥ अयते ॥

सुबो०—कमेरङ् द्वित्वे । अञ्यंतात्कमेरङ् स्यात् धातोर्द्वित्वं लुङि । सेरपवादः ॥

अयतौ प्रादे रेफस्य लत्वम् ॥ १८० ॥ प्लायते । अयांचक्रे । आयिष्ट ॥ दय दानगतिरक्षणहिंसादानेषु ॥ दयते । दयांचक्रे ॥ घट चेष्टायाम् ॥ घटते । जघटे । अघटिष्ट ॥ ईह चेष्टायाम् ॥ ईहांचक्रे ॥ ऊह वितर्के ॥ ऊहांचक्रे ॥ कासृ शब्दकुत्सायाम् ॥ कासांचक्रे ॥ षेवृ सेवने ॥ सिषेवे । असेविष्ट ॥ प्रुङ् प्लुङ् च्युङ् गतौ ॥ अप्रोष्ट । अप्लोष्ट । अच्योष्ट ॥ गाङ् गतौ ॥ गाते । अन्तरङ्गत्वात्सवर्णे दीर्घः सह । गाते । गाते । अगे । गावहे गामहे । जगे । अगास्त ॥ रुङ् गतौ भाषणे च ॥ रवते । रुरुवे । अरविष्ट । अनिडयमित्येके ॥ मूङ् बन्धने ॥ मविता । अमविष्ट ॥ पूङ् पवने ॥ अपविष्ट । देङ् त्रैङ् पालने ॥ दयते ॥

सुबो०—अयतौ प्रादे रेफस्य लत्वम् । प्रादिस्थरेफस्य लत्वमयतौ । अयताविति रेफस्य विशेषणं नतु प्रादेः । येन नाव्यवधानमिति वचनादेकव्यवधाने लत्वं पलायते । प्रत्यय इत्यादौ त्वनेकव्यवधानान्न । कासादिप्रत्ययादाम् । अयांचक्रे । आशिषि सेटो हलाद्वेति वा ढः। अयिषीध्वम् अयिषीढ्वं । लुङि आयिष्ट । आयिढ्वम् आयिध्वम् । अथ कथमुदयाति विततोर्ध्वरश्मिरज्जाविति माघः । अत्र शानप्रत्ययेन भाव्यमिति शंकितुराशयः । उच्यते । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं चक्षिङो ङित्करणाज्ज्ञापितम् । दय दानगतिरक्षणहिंसादानेषु । हिंसा हननम् । आदानं ग्रहणम् । कासादिप्रत्ययादित्याम् । दयांचक्रे । ऊह वितर्के । वितर्को विचारः । गाते इत्यत्र पूर्वमप्प्रत्ययेन सह सवर्णे दीर्घे कृते पश्चादादाथ इरिति न आतोऽतोऽदनत इति तु प्रवर्त्तते एव । ते अंते परस्तुल्यं रूपमिति भावः । गतोऽत्र आदादिकोऽयमिति हरदत्तादयः । फले तु न भेदः । रुङ् गतौ रेषणे च । रेषणं हिंसा । देङ् त्रैङ् पालने । पालनं रक्षणम् ॥

तत्त्व०—अयताविति । अयताविति रेफस्य विशेषणं न तु प्रादेरित्यभिप्रेत्याह । प्रादेरेफस्येति । तेन रेफस्याव्यवधानेनायतौ परे लत्वं नान्यत्र प्रत्ययत इत्यादौ । तिशब्देन व्यवधानात् । न च प्लायत इत्यत्राप्यकारेण व्यवधानमेवास्तीति वाच्यम् । येन नाव्यवधानमिति वचनादेकव्यवधानेऽपि प्रवृत्तिसंभवात् । अथ निर्दुरोरव्यवधानसंभवः तदर्थं निर्दुरोरित्येव ब्रूयात् । अन्तरंगत्वादिति गा अ आते इति स्थिते प्रकृत्याश्रयत्वे सवर्णदीर्घे आदाथ इरिति न भविष्यतीति भावः । गैरिति । ए ऐ ऐ इति वृद्धिरेव । यत्तु कैश्चिदालोपे गे इत्युक्तम् । तद्भ्रमसात् ॥

**देङो णादौ दिग्यादेशो द्वित्वाभावश्च ॥१८१॥** दिग्ये । दासीष्ट ॥

सुबो०—देङो णादौ दिग्यादेशो द्वित्वाभावश्च । देङः स्थाने दिगिः स्यात् दिगेर्द्वित्वाभावश्च । लिटि तु धातोरिरिति यत्वम् । दिग्ये ॥

**अपिद्दाधास्थामित्सेर्ङित्त्वमाति ॥ १८२ ॥** न तु दीङः ॥

सुबो०—अपिद्दाधास्थामित्सेर्ङित्त्वमाति । एभ्यः परस्य सेर्ङित्त्वं भवति । एषामात इच्च आत्मनेपदे लुङि ॥

**लोपो ह्रस्वात् ॥ १८३ ॥** ह्रस्वात्परस्य सेर्लोपो झसे ॥ अदित अदिषाताम् । त्रायते । तत्रे । अत्रास्त ॥ ष्मिङ् ईषद्धसने ॥ स्मयते । सिष्मिये । स्मेषीष्ट । स्मेता । अस्मेष्ट ॥ डीङ् विहायसा गतौ ॥ डयते । डिड्ये । अडयिष्ट ॥ द्युत दीप्तौ ॥ द्योतते ॥

सुबो०—लोपो ह्रस्वात् । झसे इति सूत्रमनुवृत्तम् । ह्रस्वात्किम् । अनैष्टाम् । झसे किम् । अकृषाताम् । डीङ् विहायसा गतौ । आकाशेन गमने ॥

तत्त्व०—लोपो ह्रस्वात् । लोपो ह्रस्वझसात्सेरित्येव सूत्रयितुमुचितम् । पृथक्करणस्य व्यर्थत्वात् । डीङ्

विहायसा गतौ । विहायसा आकाशेनेत्यर्थः । वा-तु पुस्याकाशविहायसी इत्यमरोक्तेः । विहायसामिति त्वपपाठः ॥

द्युतेः पूर्वस्य संप्रसारणम् ॥ १८४ ॥ दिद्युते ॥

सुबो०-द्युतेः पूर्वस्य संप्रसारणम् । द्युतेः पूर्वरूपस्य संप्रसारणं भवति । सस्वरयकारस्य इः ॥

द्युतादिभ्यो लुङि वा पम् ॥ १८५॥ पे ङः ॥ अद्युतत् अद्योतिष्ट ॥ श्विता वर्णे ॥ अश्वितत् । अश्वेतिष्ट ॥ ञिष्विदा स्नेहनमोचनयोः ॥ अस्विदत् । अस्वेदिष्ट ॥ ञिक्ष्विदा च ॥ अक्ष्विदत् । अक्ष्वेदिष्ट ॥ ञिमिदा स्नेहने ॥ अमिदत् । अमेदिष्ट ॥ रुच दीप्तावभिप्रीतौ च ॥ अरुचत् । अरोचिष्ट ॥ घुट परिवर्तने ॥ अघुटत् । अघोटिष्ट ॥ रुठ लुठ लुट प्रतिघाते । अरुठत् । अरोठिष्ट । अलुठत् । अलोठिष्ट। अलुटत् । अलोटिष्ट ॥ शुभ दीप्तौ ॥ अशुभत् । अशोभिष्ट ॥ क्षुभ संचलने ॥ अक्षुभत् । अक्षोभिष्ट ॥ णभ तुभ हिंसायाम् ॥ नेभे । अनभत् । अनभिष्ट ॥ स्रंसु ध्वंसु भ्रंसु अवस्रंसने ॥ अस्रसत् । अस्रंसिष्ट ॥ ध्वंसु गतौ च ॥ अध्वसत् । अध्वंसिष्ट ॥ स्रम्भु विश्वासे ॥ अस्रभत् । अस्रम्भिष्ट ॥ वृतु वर्तने ॥ वर्तते ॥

सुबो०-द्युतादिभ्यो लुङि वा पम् । द्युतादयः कृपिपर्यंतास्त्रयोविंशतिधातवस्तेभ्यः परस्मैपदं वा भवति । पक्षे आत्मनेपदं च लुङि पे । पक्षे लित्पुषादेरिति ङप्रत्ययः । अनिट्कारिकायां स्विद्यतिरिति निर्देशादयं सेट् । स्वेदिता । घुट परिवर्त्तने । परिवर्त्तनमितस्ततो भ्रमणम् । णादिः किदिति कित्त्वाद्गुणाभावः । जुघुटे । क्षुभ संचलने । प्रकृतिविपर्यासो मथनं च । क्षोभते । दैवादिकः क्र्यादिश्च । णभ तुभ हिंसायाम् । आद्योऽभावेऽर्थेऽपि । नभंतामन्यके समे । माभूवन्नन्यके सर्वे इति निरुक्तम् । इमौ दिवादौ क्र्यादौ च । स्रंसु ध्वंसु भ्रंसु अवस्रंसने । अवस्रंसनमधःपतनम् । परस्मैपदपक्षे ङः । नो लोप इति नलोपः । अस्रसत् । नास्रसत् करिणां ग्रैवमिति रघुकाव्ये । नास्रंसदित्यपपाठ एव । न चैवं लङो रूपं तत्र परस्मैपदासंभवादिति भावः । भ्रंसु भ्रंसु अधःपतने इति दैवादिकौ च । ऋजिभृजी भर्जने । भर्जनं जलं विना तंडुलादेः संतापविशेषः । ईदित्त्वादादीदित इति क्तक्तवत्वोर्नेट् । भृक्तः भृक्तवान् ॥

तत्त्व०-क्षुभ सञ्चलने । सञ्चलनं प्रकृतिविपर्यासो मथनं च ॥

वृतादिभ्यः स्यसयोर्वा पं पेऽनिट्त्वं च ॥ १८६ ॥ वर्त्स्यति वर्तिष्यते । अवृतत् अवर्तिष्ट ॥ वृधु वृद्धौ ॥ वर्त्स्यति वर्धिष्यते । अवर्त्स्यत् अवर्धिष्यत । अवृधत् अवर्धिष्ट ॥ शृधु शब्दकुत्सायाम् ॥ शर्धते ॥ स्यन्दू प्रस्रवणे ॥ स्यन्दते । स्यन्त्स्यति । स्यन्दिष्यते स्यन्त्स्यते । अस्यदत् अस्यन्दिष्ट अस्यन्त ॥ कृपू सामर्थ्ये ॥

सुबो०—वृतादिभ्यः स्यसयोर्वा पं पेऽनिट्त्वं च । वृतु, वृधु, शृधु, स्यंदू, कृ इति वृतादयः । स्यंदिकृप्वोरूदित्वादिड्विकल्पे प्राप्ते इतरेषां नित्यमिटि प्राप्ते निषेधः । वृतादिभ्यः परस्मैपदं वा स्यात् परस्मैपदे इडभावश्च स्यपि सप्रत्यये च । गणकार्यत्वादुभयोर्यङ्लुक्यप्रवृत्तिः । वर्त्तिष्यति । विवर्त्तिषति । शृधु शब्दकुत्सायाम् । शब्दकुत्सा पर्दनम् । शर्द्धजहा माषाः । अपानशब्दं त्यजंतीत्यर्थः ॥

कृपो रो लः ॥ १८७ ॥ कृपो रेफस्य लः ऋकारस्य ऌकारः ॥ कल्पते । चक्लृपे । कल्पिषीष्ट ॥

सुबो०—कृपो रो लः । कृप उ इति छेदः । कृपेति लुप्तषष्ठीकं पदमावृत्त्याऽत्र वाक्यद्वयं बोध्यम् । उः ऋकारस्येत्यर्थः ॥

तत्त्व०—कृपो रो ल इति । कृप उ रः ल इति छेदः । कृपेति लुप्तषष्ठीकम् । आवृत्त्या वाक्यद्वयसिद्धिरित्याह । ऋकारस्येति । तत्फल तु अकृपदित्यादिसिद्धिः। यद्यपि कृप सामर्थ्ये इति पाठेनैव रूपसिद्धिः सूत्राकरणलाघव च । कृपणादिसिद्धिस्तु क्रप कृपायामित्यस्योणादयो बहुलमिति बहुलग्रहणात्संप्रसारणे । तथापि अचीकृपदिति सिद्ध्यर्थस्तथा पाठः । तथा हि ऋऌवर्णयोः सावर्ण्यादुपधाभूतऌकारस्य ऌदादेशे अचीकृपदिति स्यात् । लत्वविधौ लसिद्धम् । कृपेत्यादौ तु क्रपेः सप्रसारणं चेत्यादि क्रपेर्बोध्यम् ॥

सिस्योः ॥ १८८ ॥ उपधाया गुणो न सिस्योरनिटोः परतः ॥ कॢप्सीष्ट ॥

कृपेस्तादौ पं वा पेऽनिट्त्वं च ॥ १८९ ॥ कल्प्ता । आति—कल्पिता कल्प्ता । कल्प्स्यति । कल्पिष्यते कल्प्स्यते । अक्लृपत् । अकल्पिष्ट अक्लृप्त ॥ एते द्युतादयो वृतादयश्च ॥ व्यथ दुःखसंचलनयोः ॥ व्यथते ॥

सुबो०—कृपेस्तादौ पं वा पेऽनिट्त्वं च । कृपेः परस्मैपदं वा भवति परस्मैपदे इडभावश्च । लुटि कल्प्ता । कल्पिता । लुङि परस्मैपदे लित्पुषादेरिति ङः । अक्लृपत् । ऊदितो वेति वेट् । अकल्पिष्टाम् । इडभावे झसादिति सिलोपे अक्लृप्त । व्यथ दुःखसंचलनयोः । संचलनं प्रकृतिविपर्यासो मथनं च ॥

व्यथेर्णोदौ पूर्वस्य यस्य इः ॥ १९० ॥ विव्यथे। अव्यथिष्ट ॥ ज्युङ् गतौ ॥ ज्यवते। जुज्युवे। अज्योष्ट ॥ रमु क्रीडायाम् ॥ रमते ॥

सुबो०—व्यथेर्णोदौ पूर्वस्य यस्य इः। व्यथतेः पूर्वरूपस्य यकारस्येत्वं भवति लिटि। पूर्वस्य हसादिः शेषः इत्यस्यापवादः। इतस्ततः थस्य हसादिशेषेण निवृत्तिः। विव्यथे। रमु क्रीडायाम्। माधवस्तूदितमाह। पचाऽऽद्यप्रत्यये आप्। रमा। घञि तु रामः॥

व्याङ्पर्युपेभ्यो रमः पम् ॥ १९१ ॥ विरमति। आरमति। परिरमति। उपरमति। रेमे। अरंसीत्। अरंस्त ॥ लोकृ दर्शने ॥ लुलोके ॥ श्लोकृ संघाते ॥ अश्लोकिष्ट ॥ शकि शङ्कायाम् ॥ शशङ्के। अशङ्किष्ट ॥ अकि लक्षणे ॥ आनङ्के ॥ ढौकृ त्रौकृ रघि गतौ ॥ डुढौके। तुत्रौके। अत्रौकिष्ट ॥ लघि भोजननिवृत्तौ ॥ ललङ्घे। अलङ्घिष्ट ॥ बाधृ विलोडने ॥ बाधते। बबाधे। अबाधिष्ट ॥ नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु ॥

सुबो०—व्याङ्पर्य्युपेभ्यो रमः पम्। एभ्यः परस्माद्रमतेः परस्मैपदं भवति। श्लोकृ संघाते। संघातो ग्रंथः। स चेह ग्रथ्यमानस्य व्यापारो ग्रंथितुर्वा। आद्येऽकर्मकः द्वितीये सकर्मकः। अकि लक्षणे। लक्षणं चिह्नम्। नुगशामिति नुक्। आनंके। बाधृ विलोडने। विलोडनं प्रतिघातः। नाथृ नाधृ याच्ञोपतापैश्वर्य्याशीःषु। याच्ञा भिक्षा। उपतापो रोगः॥

नाथ आशिष्येव आत्मनेपदम् ॥ १९२ ॥ नाथते। अन्यत्र नाथति। ननाथे। अनाथिष्ट ॥ दध धारणे ॥ देधे। अदधिष्ट ॥ स्कुदि आप्लवने ॥ चुस्कुन्दे। अस्कुंदिष्ट ॥ वदि अभिवादनस्तुत्योः ॥ वन्दते। ववन्दे। अवन्दिष्ट ॥ भदि कल्याणे सुखे च ॥ बभन्दे ॥ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ मन्दते। ममन्दे। अमन्दिष्ट ॥ स्पदि किंचिच्चलने ॥ पस्पंदे ॥ मुद हर्षे ॥ मुमुदे ॥ दद दाने ॥ दददे ॥ यती प्रयत्ने ॥ येते ॥ ञित्वरा संभ्रमे ॥ त्वरते। तत्वरे। अत्वरिष्ट ॥ षह मर्षणे ॥ सहते। सेहे। सहिता ॥ इषसहलुभरुषरिषामनपि तस्येड्वा ॥

सुबो०—नाथ आशिष्येवात्मनेपदम् । नाथतेरात् स्यादाशीर्वादेऽर्थे एवान्यत्र तु पम् । स्कुदि आप्रवणे । आप्रवणमुत्प्लवनमुद्धरणं च । इदितो नुमिति नुम् । स्कुंदते । वदि अभिवादनस्तुत्योः । अभिवादनं नमस्कारः । मदि स्तुतिमोदमदस्वप्नकांतिगतिषु । मोदः संतोषः । मदो गर्वः । स्वप्नमालस्यम् । कांतिः शोभा । गतिः प्रसिद्धा । यती प्रयत्ने । प्रयत्न उद्यमः । षह मर्षणे । अपराधे सत्यपि कोपाद्यनाविष्करणम् ॥

तत्त्व०—भदि कल्याणे सुखे च । कल्याणं मंगल सुखमात्मगुणम् । मादि । मोदो हर्षः । मदो गर्वः । स्वप्न आलस्यम् । ददंदे इति । न शसददेत्येत्वपूर्वलोपाभावः । षह मर्षणे । मर्षणं क्षमा । सहिता । इषुसहेति वेट् ॥

सहिवहोरोदवर्णस्य ॥ १९३ ॥ ढलोपे सति ॥ सोढा । असोढ असहिष्ट ॥ गाहू विलोडने ॥ गाहते । जगाहिषे जघाक्षे । जगाहिढ्वे जगाहिध्वे जघाढ्वे । गाहिषीष्ट घाक्षीष्ट । गाहिता गाढा । गाहिष्यते घाक्ष्यते । अगाहिष्ट अगाढ । अघाक्षाताम् । अघाढ्वम् ॥ गृहू ग्रहणे ॥ जगृहिषे जघृक्षे । जगृहिध्वे जगृढ्वे । गर्हिषीष्ट घृक्षीष्ट । गर्ढा । गर्हिष्यते घर्क्ष्यते । अगर्हिष्ट अघृक्षत ॥

सुबो०—सहिवहोरोदवर्णस्य । ढलोपे सहिवहोरवर्णस्यौत्वं भवति ढस्य लोपे सति । इषसहेति वेट् । सहिता । इडभावे हो ढ इति ढत्वम् । तथोर्द्ध इति धत्वम् । ष्टुभिः ष्टुरिति ष्टुत्वम् । ढि ढो लोप इति ढलोपः । ततोऽनेन ओत्वे सोढा । गाहू विलोडने । ऊदित्त्वादिड्वा । जगाहिषे । इडभावे तु हो ढ इति ढत्वम् । आदिजबानामिति घः । षढोः कस्से इति कः । कात्परस्य सस्य षत्वम् । जघाक्षे । सेटो हलादिति वा ढः । जगाहिढ्वे-जगाहिध्वे । इडभावे तु आदिजबानामिति घः । ढि ढो लोप इति ढलोपः । जघाढ्वे । लुङि अगाहिष्ट । इडभावे तु ढत्वे कृते झसादिति सिलोपः । ततो धत्वष्टुत्वढलोपाः । अगाढ । गृहू ग्रहणे । ऊदितो वेति वेट् । इडभावे हो ढ इति ढत्वम् । आदिजबानामिति घः । षढोरिति कत्वम् । षत्वं च । जिघृक्षे । सेटो हलादिति वा ढः । जगृहिढ्वे-जगृहिध्वे । इडभावे जगृढ्वे । आशिषि गर्हिषीष्ट । सिस्योरिति गुणाभावे घृक्षीष्ट । लुटि गर्हिता गर्ढा । लृटि गर्हिष्यते घर्क्ष्यते । लृङि अगर्हिष्यत अघर्क्ष्यत । लुङि अगर्हिष्ट । इडभावे हशषांतादिति सक् । हो ढ इति ढत्वम् । आदिजबानामिति घः। षढोरिति कः षत्वं च । अघृक्षत॥

तत्त्व०—सोढेति इडभावपक्षे ॥

आति सको लोपः स्वरे ॥ १९४ ॥ अघृक्षाताम् अघृक्षन्त । अघृक्षध्वम् ॥ इत्यात्मप्रक्रिया ॥

सुबो०-आति सको लोपः स्वरे । स्वरादावात्मनेपदे परे सको लोपः। षष्ठीनिर्दि-
ष्टस्येत्यंतलोपः । अघृक्षाताम् ॥ इत्यात्मनेपदप्रक्रिया ॥

तत्त्व०-आति सक इति । षष्ठीनिर्दिष्टत्वादन्त्यस्य । लोके शंकरसञ्ज्ञेन विद्यानगरवासिना । कृतायामिह
टीकायामगादातो निरूपणम् ॥ इत्यात् ॥

राजृ दीप्तौ ॥ रेजतुः रराजतुः । रेजे रराजे । अराजीत् अराजि-
ष्टाम् । अराजिष्ट ॥ खनु खनने ॥ चखान चख्नतुः चख्नुः ।
खायात् खन्यात् । अखानीत् अखनीत् अखनिष्ट ॥ हृञ् हरणे ॥
जहार । ऋदन्तात्थपो नेट् । जहर्थ । जह्रे । ह्रियात् ॥

सुबो०-राजृ दीप्तौ । दीप्तिस्तेजः । फणराजृइत्येत्वपूर्वलोपौ । रेजतुः रराजतुः । खनु खनने । खननमवदारणम् । उदित्त्वात्क्त्वायां वेट् । खनित्वा, खात्वा । गमां स्वरे इत्युपधालोपः । चख्नतुः । जनसनखनामित्यात्वं वा । खायात् खन्यात् । अतो हसादेरिति वा वृद्धिः । अखानीत् अखनीत् । हृञ् हरणे । हरणं प्रापणं स्वीकारः स्तेयं नाशनं चेति चत्वारोऽर्थाः । भारं-हरति प्रापयतीत्यर्थः । अंशं हरति । स्वीकरोतीत्यर्थः । स्वर्णं हरति । चोरयतीत्यर्थः । पापं हरति । नाशयतीत्यर्थः । ऋदंतात् थप् इति नेट् । ऋादेर्णादेरितीट् । जह्रिव । यादादाविति रिङ् । ह्रियात् ॥

तत्त्व०-राजृ । ऋदित्त्वमटयुक्तोपधाह्रस्वादिनिवृत्त्यर्थम् । हृञ् हरणे । हरणं प्रापणं स्वीकारः स्तेयं नाशनं च । ग्रामं हरति । अंशं हरति । स्वर्णं हरति । पापं हरति ॥

उः ॥१९५॥ ऋवर्णस्य सिस्योरनिटो न गुणः ॥ हृषीष्ट । अहार्षी-
त् । अहृत ॥ दान आर्जवे ॥ गुब्भ्यः । दीदांसति । दीदांसाञ्चकार ॥
शान तेजने ॥ शीशांसते ॥ गुह संवरणे ॥

सुबो०-उः । षष्ठ्येकवचनांतमिदम् । ऋवर्णांतस्य धातोर्गुणो न स्यात् अनिटि सिप्रत्यये सीडादौ च । हनृतः स्यप् इतीट् । हरिष्यति । लोपो ह्रस्वादिति सिलोपः। अहृत । दान आर्जवे । ऋजोर्भाव आर्जवं तस्मिन्नर्थे अस्मात् गुब्भ्यः इति सः। यः से इति पूर्वस्येत्वं मानादीनामिति पूर्वस्य दीर्घः । दीदांसति । शान तेजने । तेजनं तीक्ष्णीकरणम् । शानेर्निशाने सः । अर्थांतरे त्वननुबंधकौ चौरादिकाविमौ । दान-यति । शानयति ॥

तत्त्व०-उ । षष्ठ्येकवचनान्तम् । सिस्योरिति भूते सि० । सीडादि० सीं तयोर्ङित्त्वादेव गुणाप्राप्तौ नियमार्थमिदम् । ऋवर्णस्यैतयोः परतो गुणो न । तेन वेवेष्टीत्यादौ भवत्येव विशेषाप्रतिपादकत्वाभावाद्वर्णमात्रं गृह्यते न गु ऋ इत्यादिरिति । आरम्भसामर्थ्यादुपधायाः न । अथ यासिस्योरित्येव सिद्धे किमनेन ॥

गुहेरुपधाया ऊद्गुणहेतौ स्वरे ॥ १९६ ॥ जुगूहतुः । जुगूहिथ

जुगोढ । जुगुहिषे जुघुक्षे । जुगुहिध्वे जुघुढ्वे । गुहिषीष्ट घुक्षीष्ट । गूहिता गोढा । गूहिष्यति घोक्ष्यति ॥

सुबो०—गुहेरुपधाया ऊद्गुणहेतौ स्वरे । गुह उपधाया ऊत्स्यात् गुणविधायके स्वरादौ प्रत्यये परे । गूहति । ऊदितो वेति वेट् । जुगूहिथ । इडभावे हो ढ इति ढत्वं तथोर्द्ध इति थस्य धः ष्टुत्वं च । जुगोढ । हो ढ इति ढत्वम् । आदिजबानामिति घः । षढोरिति कः षत्वं च । जुघुक्षे । सेटो हलादिदिति वा ढः । जुगुहिढ्वे जुगुहिध्वे । इडभावे हो ढ इति ढत्वम् । आदिजबानामिति घत्वं ष्टुभिः ष्टुरिति ढः ढि ढो लोप इति ढलोपदीर्घौ । जुघुढ्वे । लुङि अगूहीत् । इडभावे हशषांतादिति सक् । आदिजबानामिति घः । अघुक्षत् । आति अगूहिष्ट । इडभावे तु सक् ॥

दुहदिहलिहगुहूभ्यः सको लुग्वा वकारतवर्गयोराति ॥१९७॥ अगूढ अघुक्षत अघुक्षाताम् अघुक्षन्त । अगूढाः अघुक्षथाः अघुक्षाताम् अगूढ्वम् अघुक्षध्वम् । अगुह्वहि अघुक्षावहि अघुक्षामहि । अगूहिष्ट । अघुक्षत् अगूहीत् ॥ भज सेवायाम् ॥ भेजिथ बभक्थ । भेजे । भक्षीष्ट । अभाक्षीत् । अभक्त ॥ श्रिञ् सेवायाम् ॥ शिश्रियतुः । शिश्रिये । श्रीयात् । श्रयिषीष्ट । श्रयिता । अशिश्रियत् । अशिश्रियत ॥ त्विष दीप्तौ ॥ तित्विषे । तित्विक्षीष्ट । त्वेष्टा । त्वेक्ष्यते । अत्विक्षत् ॥ स्पश बाधनस्पर्शनयोः ॥ पस्पाश । पस्पशे । अस्पशीत् । अस्पशिष्ट । अस्पाशीत् ॥ लष कान्तौ ॥ लष्यति लषति । लष्यते लषते । लषिता ॥ रञ्ज रागे ॥ रजति । ररंजिथ ररङ्क्थ । ररञ्जे । रज्यात् । रङ्क्षीष्ट । अराङ्क्षीत् । अरङ्क्त ॥ भृञ् भरणे ॥ भरति । बभर्थ । बभृव । बभृढ्वे । भर्ता ॥ धृञ् धारणे ॥ दधर्थ दध्रिध्वे दध्रिढ्वे । अधार्षीत् । अधृत ॥ णीञ् प्रापणे ॥ निनयिथ निनेथ । निन्ये । अनैषीत् । अनेष्ट ॥ टुयाचृ याच्ञायाम् ॥ याचति । ययाचे । अयाचीत् । अयाचिष्ट ॥ यज देवपूजासंगतिकरणदानेषु ॥ इयाजिथ इयष्ठ । अयाक्षीत् । अयष्ट । अयड्ढ्वम् ॥ डुवप् बीजतन्तुसंताने ॥ उवपिथ उवप्थ । ऊपे । उप्यात् ।

१ सि. च. सु.

वप्सीष्ट । अवाप्सीत् अवाप्ताम् । अवप्त ॥ वह प्रापणे ॥ वहति । उवहिथ उवोढ । ऊहे । उह्यात् । वक्षीष्ट । वोढा । अवाक्षीत् अवोढाम् । अवोढ अवक्षाताम् ॥ वेञ् तन्तुसन्ताने ॥

सुबो०—दुहदिहलिहगुहूभ्यः सको लुग्वा वकारतवर्गयोरात्मि । लोप इत्यनुवर्त्तमाने लुग्ग्रहणं सर्वलोपार्थम् । दुह प्रपूरणे । दिह उपचये । लिह आस्वादने । गुहू संवरणे । एभ्यः सको लुग्वा आत्मनेपदस्थवकारे तवर्गे च परे । अदुग्ध, अधुक्षत । अदिग्ध, अधिक्षत । अलीढ, अलिक्षतेत्यादि । ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ, पक्षे अघुक्षत । आति सको लोप इत्यल्लोपे अघुक्षाताम् । अघुक्षत । तॄफलभजेत्येत्वपूर्वलोपौ । भेजतुः । स्वरांतादत्वत इति वेट् । भेजिथ, बभक्थ । कुत्वषत्वे भक्ष्यति । झसादिति सिलोपः । अभक्त । श्रिश्रुद्रुभ्यो ङ इति ङो द्वित्वं च । अशिश्रियत, अशिश्रियत । त्विष दीप्तौ । दीप्तिस्तेजः । हशषांतादिति सक् कत्वषत्वे । अत्विक्षत् । आति सको लोप इत्यल्लोपे । अत्विक्षाताम् । स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रंथनम् । लष कान्तौ । कांतिरिच्छा । भ्राशभ्लाशिति वा यः। लष्यति लषति । लोपः पचामित्येत्वपूर्वलोपौ । लेषतुः । अपि रंजेति नलोपः । रजति । कुत्वषत्वे । अराङ्क्षीत् । सान्तनिटो नित्यमिति वृद्धिः । अरंक्त । स्याविद इत्यनेन उस् । अरांक्षुः । क्रादेर्णादेरितीण् न । बभर्थ । आशिषि यादादाविति रिङ् । भ्रियात् । उरिति न गुणः । भृषीष्ट । लृटि हनृतः स्यप इट् । भरिष्यति । लोपो ह्रस्वादिति सिलोपः । अभृत । यज देवपूजासंगतिकरणदानेषु । देवपूजा त्विह देवतोद्देशेन विधिबोधितद्रव्यत्यागः । संगतिकरणं मैत्रीकरणम् । णबादौ पूर्वस्येति पूर्वस्य संप्रसारणम् । अत उपधाया इति वृद्धिः । इयाज । यजामिति संप्रसारणम् । ईजतुः । छशषेति षः । षढोरिति कः । यक्षीष्ट । लुङि । अयाक्षीत् अयष्ट । ध्वे चेति सलोपः । अयड्ढ्वम् । डुवप् बीजसंताने । बीजसंतानं क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि । केशान् वपति । ड्वितस्त्रिममिति त्रिमप् प्रत्ययः। उप्त्रिमम् । वहतेर्लिटि हो ढ इति ढः षढोरिति कत्वम् । वक्षीष्ट । लुटि ढत्वं तथोर्द्ध इति धत्वं ष्टुत्वं ढि ढो लोप इति ढलोपः सहिवहोरोदित्योत्वं च । वोढा । लुङि पूर्वं वृद्धिस्ततो ढत्वे कृते झसादिति सिलोपः ढत्वष्टुत्वढलोपाः ओत्वं च । अवोढाम् । ध्वे चेति सलोपः । अवोढ्वम् ॥

स्व०टी०—डुवप् बीजसंताने । बीजसंतानं क्षेत्रे विस्तारण गर्भाधानं च । केशान्वपतीति प्रयोगाच्छेदनेऽपि । [illegible] ॥

वेञो णादौ न सम्प्रसारणम् ॥ १९८ ॥ ववौ । ववे ॥

सुबो०—वेञो णादौ न संप्रसारणम् । वेञः संप्रसारणं न स्यात् लिटि । णादौ

किम् । उतः । उतवान् । संध्यक्षराणामित्यात्वम् । आतो णब् डौ इति णपो डौत्वम् । ववौ ॥

वेञो वा वय् णादौ ॥ १९९ ॥ उवाय ॥

सुबो०—वेञो वा वय् णादौ । वेञो वय् वा स्याल्लिटि । अत उपधाया इति वृद्धिः । उवाय ॥

ग्रहां ङिति च ॥ २०० ॥ ग्रहिज्यावयिव्यधिवष्टिवृश्चतिपृच्छतिविचतिभृज्जतीनां सम्प्रसारणं किति ङिति च ॥ वयो यस्य नेत्वम् । ऊयतुः ऊयुः । ऊवयिथ । ऊये ॥

सुबो०—ग्रहां ङिति च । यजामित्यतः कितीति संप्रसारणमिति चानुवृत्तम् । एषां किति ङिति च संप्रसारणं स्यात् । ग्रह उपादाने । ज्या वयोहानौ । वेञ् तंतुसंताने । व्यध ताडने । वश कांतौ । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । व्यच व्याजीकरणे । भ्रस्ज पाके । ङिति । गृह्णाति । जिनाति । किति गृहीतः । जीनः । ङिति वयेरुदाहरणं न किति तु यजामिति संप्रसारणं सिद्धम् । यजादिषु वेञः पाठात् । अत एव णवादाविति पूर्वसंप्रसारणमपि सिद्धम् । वेञो णादाविति संप्रसारणनिषेधस्तु वयो यस्येति निषेधारंभान्न प्रवर्त्तते । तस्मात् ग्रहिज्यादिषु वयिग्रहणं स्पष्टार्थम् । वयो यस्य नेत्वम् । ग्रहामिति यकारस्य संप्रसारणे प्राप्ते निषेधः । लिटि वयो यस्य संप्रसारणं नेत्यर्थः । वयेस्तादावभावात् थपि नित्यमिदं । ऊवयिथ । स्थानिवद्भावेन ञित्त्वादात्मनेपदम् । ऊये ॥

वयो यस्य किति लिटि वो वा ॥ २०१ ॥ ऊवतुः । ऊवे । ऊयात् । वासीष्ट । अवासीत् । अवास्त ॥ व्येञ् संवरणे ॥

सुबो०—वयो यस्य किति लिटि वो वा । वयो यकारस्य वत्वं वा भवति किति लिटि । ऊवे । वयादेशाभावे । ववे । आशिषि संप्रसारणे कृते । ऊयात् । संध्यक्षराणामित्यात्वे । वासीष्ट ॥

व्येयो लिटि नात्वम् ॥ २०२ ॥ विव्याय । विव्ययिथ । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त ॥ ह्वेञ् स्पर्द्धायां शब्दे च ॥ द्विरुक्तस्य हूयतेः सम्प्रसारणम् । जुहाव । जुहविथ जुहोथ । जुहुवे । हूयात् । ह्वासीष्ट ॥

सुबो०—व्येञो लिटि नात्वम् । व्येञ आत्वं न भवति लिटि । संध्यक्षराणामित्यस्यापवादः । लिटि किम् । व्याता । व्यास्यति । व्येणप् इति स्थिते परत्वात्

हसादिः शेषं बाधित्वा यस्य संप्रसारणम् यजादीनां ग्रहादीनामित्युभयेषां ग्रहणसामर्थ्यात्। यजादीनां धातोर्नामिन इति वृद्धिः। विव्याय। नुधातोरिति यः। विव्यतुः। अत्यर्तिव्ययतीनामिति नित्यमिट्। विव्ययिथ। यमिरमिनमातामितीट्सकौ। अव्यासीत्। अव्यासिष्टाम्। ह्वेञ् स्पर्द्धायां शब्दे च। शब्दे इति सामान्योक्तावपि संबोधनरूपः शब्द एवात्र गृह्यते। तथा च माघे। यांतोऽन्यतः प्लुतकृतस्वरमाशु दूरादुद्बाहुना जुहुविरे मुहुरात्मवर्ग्याः। इति कर्मणि प्रयोगः। द्विरुक्तस्य ह्वयतेः संप्रसारणम्। ह्वेञः पूर्वं द्वित्वं तेन उभयत्र संप्रसारणं स्यात्॥

**लिपिसिचिह्वयतीनां ङो लुङि वा आति ॥२०३॥** अह्वत्। अह्वास्त। अह्वत॥ डुपचष् पाके॥ पचति। पेचिथ पपक्थ। पेचे। अपाक्षीत् अपाक्ताम् अपाक्षुः॥ षच समवाये॥ सेचे। असाचीत्। असचिष्ट॥ शप आक्रोशे॥ शेपे। शप्ता। अशाप्सीत्। अशप्त॥ हिक्क अव्यक्ते शब्दे॥ जिहिक्क। अहिक्कीत्॥ अंचु गतौ याचने च॥ आनंचे। आञ्चीत्॥ रेटृ परिभाषणे॥ रिरेटे। अरेटीत्॥ चते चदे याचने च। चेते। अचेतीत्। चेदे। अचेदीत्। अचेदिष्ट॥ प्रोथृ पर्याप्तौ॥ पुप्रोथ। पुप्रोथे। अप्रोथीत्। अप्रोथिष्ट॥ मिदृ मेदृ मेधाहिंसनयोः॥ मिमिदे। अमेदीत्। अमेदिष्ट। मिमेदे। अमेदीत्। अमेदिष्ट॥ मेधृ संगमे च॥ मिमेधे। मेधिता॥ णिदृ णेदृ कुत्सासन्निकर्षणयोः॥ निनेदे। नेदिता॥ शृधु मृधु क्लेदने॥ शर्द्धति। शशर्द्ध शशृधतुः। शशृधे। मर्द्धति। ममृधे। अमर्द्धीत्। अमर्द्धिष्ट॥ बुधिर् बोधे॥ बोधति बोधते। अबोधीत्। अबुधत्। अबोधिष्ट॥ उबुन्दिर् निशामने। बुन्दति। बुबुन्दे। अबुंदत्। अबुन्दीत्। अबुन्दिष्ट॥ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु॥ वेणति वेणते। विवेण। अवेणीत्। अवेणिष्ट। नान्तोऽप्ययम्। वेनति॥ चीवृ आदानसंवरणयोः॥ चीवति। चिचीव चिचीवे। अचीवीत्। अचीविष्ट॥ चायृ पूजानिशामनयोः॥ चायति। चचाय चचाये। अचायीत्। अचायिष्ट॥ व्यय गतौ॥ व्ययति। वव्याय। वव्यये। अव्ययीत्। अव्ययिष्ट॥ दाशृ दाने॥

दाशति । ददाश ददाशे । अदाशीत् । अदाशिष्ट ॥ भ्रेशृ भ्लेशृ गतौ ॥ भ्रेशति ॥ भ्रेषृ भ्लेषृ गतौ भये च ॥ भ्रेषति । बिभ्रेषे बिभ्रेष । बिभ्लेष । अभ्रेषीत् । अभ्रेषिष्ट ॥ अस गतिदीप्त्यादानेषु ॥ असति । आस आसे । आसीत् । आसिष्ट । अयं षान्तोऽपि । अषति ॥ चष भक्षणे ॥ चचाष चेषतुः । चेषे । अचषीत् । अचषिष्ट ॥ छष हिंसायाम् ॥ छषति छषते । चच्छाष चच्छषे । अच्छाषीत् । अच्छषिष्ट ॥ झष आदानसंवरणयोः ॥ झषति । जझाष जझषे । अझाषीत् अझषीत् । अझषिष्ट ॥ भ्रक्ष भ्लक्ष अदने ॥ बभ्रक्षे । अभ्रक्षीत् । अभ्रक्षिष्ट ॥ दासृ दाने ॥ दासते । ददासे ॥ माहृ माने ॥ ममाह । ममाहिषे । अमाहीत् । अमाहिष्ट ॥ इत्युभयपदप्रक्रिया ॥

सुबो०–लिपिसिचिह्वयतीनां ङो लुङि वा आति । एभ्यो ङप्रत्ययो नित्यं स्यात्परस्मैपदे लुङि । आत्मनेपदे लुङि तु वा । लिप उपदेहे । षिच क्षरणे । अलिपत् । असिचत् । आतोऽनपीत्यालोपः। अह्वत् । षच समवाये । समवायः संबंधः। शप आक्रोशे । आक्रोशो विरुद्धाऽनुध्यानम् । अंचु गतौ याचने च । नुगशामिति नुक् । आनंचे । नो लोप इति नलोपः । अच्यात् । अयमिदिदिति मते तु इदितो नलोपो नेति निषेधात् । अंच्यात् । रेट्ट परिभाषणे । " यः सनिंद उपालंभस्तत्र स्यात्परिभाषणम् " इत्यमरः । ऋदित्त्वात् नेरित इत्युपधाया ह्रस्वो न । अरिरेटत् । प्रोथृ पर्य्याप्तौ । पर्य्याप्तिः समाप्तिः । मिट्ट मेट्ट मेधाहिंसनयोः । थांताविमाविति स्वामी । धांताविति न्यासः । मेधृ संगमे च । चात्पूर्वोक्तेऽर्थे । प्रजायै गृहमेधिनामित्यत्र गृहैर्दारैर्मेधंते संगच्छंते इति विग्रहः णिन्प्रत्ययांतः । णिट्ट णेट्ट कुत्सासंनिकर्षयोः । संनिकर्षः संबंधः । शृधु मृधु उंदने । उंदनं क्लेदनम् । आर्द्रीभाव इत्यर्थः । उदित्त्वात् क्त्वायां वेट् । शर्धित्वा शृद्धा । बुधिर् बोधने । बुध्यतेरेवानिट्कारिकासु पाठादयं सेट् । इरितो वेति वा ङः । अबुधत् । अबोधीत् । दीपजनेतीण् तु न । पूर्वोत्तरसाहचर्येण दैवादिकस्यैव सूत्रे ग्रहणात् । उबुंदिर् निशामने । निशामनं चाक्षुषं ज्ञानमित्यर्थः । वेणृ गतिज्ञानचिंतानिशामनवादित्रग्रहणेषु । गत्यादयः पदार्थाः । वाद्यभांडस्य वादनार्थं ग्रहणं वादित्रग्रहणम् । वेणिः वेणी वेणुरित्यादिरूपाण्यस्यैव धातोः । चीवृ आदानादौ । चीवते औणादिके रप्रत्यये चीवरं वस्त्रम् । ह्म्यंतेति न वृद्धिः। अव्ययीत् । भेषृ भये च । चाद्गतौ ॥ इत्युभयपदप्रक्रिया ॥

तत्त्व०–शप आक्रोशे। आक्रोशो विरुद्धानुध्यानम् । अचदीदिति एदित्त्वान्न वृद्धि । प्रोथृ इत्यादीनामृदित्त्वमङ्युक्ताभावार्थम् । अबोधीदिति । दीपजन इत्यात्मनेपदिभि. साहचर्यात्तथाभूतस्यैव ग्रहणात् । उबुदिर् । इदित्त्वादिट् । बुंदित्वा । बुत्त्वा । निशामनं चाक्षुष ज्ञानम् । वेणृ । वाद्यभाण्डस्य वादनापादनं वादित्रग्रहणम् ॥

ऋत जुगुप्सायां कृपायां च ॥

सुबो०–ऋत जगुप्सायां कृपायां च । " अर्त्तनं च ऋतीया च घृणीया च घृणार्थकाः । " इति । " जुगुप्सा करुणे घृणे " इति चामरः ॥

ऋतेरीयङ् स्वार्थेऽनपि तु वा ॥ २०४ ॥ ऋतीयते । ऋतीयेत । ऋतीयताम् । आर्तीयत । ऋतीयाञ्चक्रे । ऋतीयिषीष्ट । ऋतीयिता । ऋतीयिष्यते । आर्तीयिष्यत । आनर्त । अर्त्यात् । अर्तिता । अर्तिष्यति । आर्तिष्यत् । आर्तीत् । आर्तीयिष्ट ॥ इति भ्वादिप्रक्रिया ॥

सुबो०–ऋतेरीयङ् स्वार्थेऽनपि तु वा । ऋतिः सौत्रस्तस्मादीयङ् स्यात् स्वार्थे अनपि तु वा । स धातुरिति धातुत्वम् आदनुदात्तङित इत्यात्मनेपदम् । ऋतीयते। इयङभावे । परतो यदिति परस्मैपदम् । नुगशामिति नुक् । आनर्त्त ॥

तत्त्व०–रामाश्रमेण विहिता या हि सिद्धांतचद्रिका । तट्टीकायामगादेतद्रूपं भ्वादिनिरूपणम् ॥

इति भ्वादिप्रक्रिया ॥ १ ॥

---

अद भक्षणे ॥ अदादेर्लुक् ॥ २०५ ॥ अदादेः परस्यापो लुक् ॥ अत्ति अत्तः अदंति । अत्सि अत्थः अत्थ । अद्मि अद्वः । अद्यात् ॥

सुबो०–अद भक्षणे । भक्षणं खादनम् । अदादेर्लुक् । अप् कर्त्तरीत्यतः अबित्यनुवृत्तं तच्च षष्ठ्या विपरिणम्यते । अद् आदिर्यस्य सोऽदादिस्तस्माददादेः ॥

तत्त्व०–अदादेर्लुक् । अद आदिर्यस्य सोऽदादिस्तस्मात् । अप् कर्त्तरीत्यतोऽनुवृत्तमाविति षष्ठ्या विपरिणम्यते । चतुर्थीति तु न तत्रापोऽभावात् । तद्गुणसंविज्ञानबहुव्रीहेरदेरप्यपो लुक् ॥

झसाद्धिर्हेः ॥ २०६ ॥ झसाद्धकाराच्च परस्य हेर्द्धिर्भवति ॥ आद्धि अत्तात् अत्तम् अत्त ॥

सुबो०–झसाद्धिर्हेः । झसात् ह् धिः हेरिति पदच्छेदः। हस्य हो झभा इति धत्वे झबे जबा इति दत्वे हसात्परस्य झसस्येति दलोपः । अत्तादित्यत्र स्थानिवद्भावेन तातङो हित्वेऽपि सकृद्गताविति न्यायेन धिरादेशो न ॥

तत्त्व०–झसाद्धिर्हेः । झसात् ह् धि. हेरिति छेद । हस्य हो झभा इति धत्वे झबे जबा इति दत्वे हसात्परस्य झबस्येति लोपेन सिद्धः । इह लुप्तपचमीकपदमित्यभिप्रेत्याह । हकाराच्चेति ॥

अदादेर्दिप्सिपोरट् ॥ २०७ ॥ अदादेश्च परयोर्दिप्सिपोरडागमः॥ आदत् । आदः ॥

सुबो०—अदादेर्दिप्सिपोरट्। अदः परयोर्दिप्सिपोरडागमः स्यात्॥

**सिसयोरदेर्घस्ल लिटि तु वा ॥ २०८॥** जघास। गमां स्वरे। घसादेरिति षः। जक्षतुः। जघसिथ जक्षथुः जक्ष। आद आदतुः आदुः। आदिथ। अत्ता। लृदित्त्वात् ङः। अघसत्॥ प्सा भक्षणे॥ प्साति। प्सायात्। प्सातु। अप्सात्॥

सुबो०—सिसयोरदेर्घस्ल लिटि तु वा। अदो घस्ल इत्यादेशः स्यात् सिप्रत्यये सप्रत्यये च लिटि तु वा। सप्रत्यये जिघत्सति। जघास। गमामित्युपधालोपः। खसे चपा इति घस्य कः। घसादेरिति षत्वं कत्वं च। जक्षतुः। घसस्तादावभावात् थपि नित्यमिट्। जघसिथ। पक्षे अत्यर्त्तिव्ययतीनामिति नित्यमिट्। आदिथ॥

**आदंताद्विषो लङोऽन उस् वा ॥ २०९॥** अप्सुः अप्सान्। पप्सौ। आतोऽनपि। पप्सुः। प्सायात्। प्सेयात्। अप्सासीत्॥ मा माने॥ माति। अमात्। अमुः अमान्। ममौ। मेयात्। अमासीत्॥ या प्रापणे॥ याति। ययौ। अयासीत्॥ वा गतिगन्धनयोः॥ वाति॥ रा दाने॥ राति॥ ला दानग्रहणयोः॥ लाति। ललौ। अलासीत्॥ श्रा पाके॥ श्राति। श्रायात्। श्रेयात्॥ दा लुवने॥ दाति। ददौ। दायात्। अदासीत्॥ ख्या प्रकथने॥ ख्याति। चख्यौ॥

सुबो०—आदंताद्विषो लङोऽन उस् वा। आदंताद्धातोर्द्विषश्च परस्यानो वा उस् स्यात्। उस्यालोप इत्यालोपः। अप्सुः। लिटि आतो णब्डावित्यौ। पप्सौ। संयोगादेरादंतस्येत्येकारो वा। प्सेयात् प्सायात्। यमिरमिनमातामितीट्सकौ। अप्सासीत्। मा माने। अकर्मकः। "तनौ ममुस्तत्र न कैटभद्विषः" इति माघे। उपसर्गवशेनार्थांतरे सकर्मकः। "उदरं परिमाति मुष्टिना" इति नैषधे। या प्रापणे। प्रापणमिह गतिः। रा दाने। ला आदाने। आदानं ग्रहणम्। द्वावपि दाने इति चंद्रः। ख्या प्रकथने। चतुर्ष्वेवास्य प्रयोग इति भाष्यम्॥

तत्त्व०—आदन्तादिति। अत्र स्थानिवद्भावेन तातङो द्वित्वेऽपि सकृद्गताविति न्यायेन न धिरादेशः"

**अस्यतिवक्तिख्यातिभ्यो ङो लुङि ॥ २१०॥** सेरपवादः। अख्यत्॥ द्रा कुत्सायाम्॥ द्राति। द्रेयात्। द्रायात्। अद्रासीत्॥ पा रक्षणे॥ पाति। पपौ। पायात्। अपासीत्॥ भा दीप्तौ॥ भाति।

वभौ ॥ ष्णा शौचे ॥ स्नाति। स्नायात् ॥ वश कान्तौ ॥ वष्टि उष्टः उशन्ति। वक्षि उष्टः उष्ट। वश्मि उश्वः उश्मः। उश्यात्। वष्टु उष्टात् उष्टाम् उशन्तु। उड्ढि उष्टम् उष्ट। वशानि वशाव वशाम ॥

सुबो०—अस्यतिवक्तिख्यातिभ्यो ङो लुङि। असु क्षेपणे। ब्रुवो वचिः। वच परिभाषणे इत्युभयोर्ग्रहणम्। एभ्यो ङप्रत्ययः स्यात् लुङि। सेरपवादः। वश कांतौ। कांतिरिच्छा। छशषेति षत्वम्। वष्टि। ग्रहामिति संप्रसारणम्। उष्टः। वष्टु। उष्टात्। उष्टां। उशंतु। हौ संप्रसारणम्। छशषेति षत्वम्। झसाद्धेर्धिरिति धिः। षो ड इति डत्वम्। ष्टुभिः ष्टुरिति ढत्वम्। उड्ढि ॥

दिस्योर्हसात् ॥२११॥ हसात्परयोर्दिप्सिपोर्लोपः ॥ अवट्, अवड् औष्टाम् औशन्। अवट्, अवड् औष्टम् औष्ट। औश्व औश्म। उवाश ऊशतुः। उवशिथ। उश्यात्। वशिता। अवाशीत् अवशीत् ॥ हन हिंसागत्योः ॥ हन्ति ॥

सुबो०—दिस्योर्हसात्। दिप्सहचरितस्य सेर्ग्रहणान्नेह। अत्सि। ननु संयोगांतलोपेनैव गतार्थमिदम्। सत्यम्। सभिन्नस्य रान्नेति सूत्रमनेन ज्ञाप्यते। तेन अविभर्भवानित्यादौ संयोगांतलोपाभावादस्यारंभः। अवट्। औष्टाम्। औशन्। उवाश। ऊशतुः। उश्यात्। वशिता। वशिष्यति। अवशिष्यत्। अतो हसादेरिति वा वृद्धिः। अवाशीत् अवशीत् ॥

तत्त्व०—दिस्योर्हसात्। दिश्च सिश्च दिसी तयाः अत्र दिसाहचर्य्याल्लङ एव सिप् गृह्यते। न त्वन्यः। तेनात्सीदित्यादौ नातिप्रसङ्गः। संयोगांतलोपेनैव सिद्धे सभिन्नस्य रान्नेति ज्ञापयितुमस्यारंभः। सिग्रहण तूत्तरार्थम्। ननु अरोदीदरोदादित्यत्रातिप्रसङ्गः। यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यत इति न्यायादिति चेन्न। तेन विभक्तिप्रत्ययत्वयोरेव ग्रहणान्न तु दित्वासित्वयोः ॥

लोपस्त्वनुदात्ततनाम् ॥२१२॥ अनुदात्तानां ञमान्तानां तनादीनां वनतेश्च यमस्य लोपो भवति झसे क्ङिति हकारे च ॥ हतः घ्नन्ति। हन्यात्। हन्तु हतात् हताम् घ्नन्तु ॥

सुबो०—लोपस्त्वनुदात्ततनाम्। यमि रमि नमि गमि हनि मन्यतयोऽनुदात्ताः षट्। तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु इति तनोत्यादयो नव। अनुदात्तेति लुप्तषष्ठीकं पदम्। तुशब्देन ञमांतानां ग्रहणम्। वन संभक्तौ। वनति। इह हवक्त्योर्नेडिति इण्निषेधात् किति झसे नस्य लोपः। झसे किम्। गम्यते। क्ङितीति किम्। गता। गमां स्वरे इत्युपधालोपः। हनो घ्ने इति घः। घ्नंति ॥

तत्त्व०—लोपस्त्वनुदात्ततनाम्। यमिरमिनमिगमिहनिमन्यतयोऽनुदात्ता.। तनुक्षणुक्षिणुऋणुतृणुघृणुवनुमनु-

तनोत्यादयः। अनुदात्तेति लुप्तषष्ठीकं पृथक्पदम्। तुशब्दो परलाभार्थं इत्याह। ञमान्तानामिति। लुप्तषष्ठीनिर्दिष्टन्यायेनान्त्यलोप इत्याशयेनाह। ञमस्येति। अन्यथा ञम्यादिष्वन्त्यस्यापि ञमस्य संभवाल्लोपः स्यात्॥

जह्येधिशाधि ॥२१३॥ हन्तेर्जहिरस्तेरेधिः शास्तेः शाधिर्निपात्यते हिविषये॥ जहि। हनानि। अहन् अहताम् अघ्नन्॥

सुबो०—जह्येधिशाधि। हिसहितानां हनाऽसशासीनां यथासंख्यमेते स्युः॥

पूर्वाद्धन्तेर्हस्य घः ॥ २१४ ॥ जघान जघ्नतुः जघ्नुः। जघनिथ, जघन्थ॥

सुबो०—पूर्वाद्धन्तेर्हस्य घः। द्वित्वे सति पूर्वरूपात् परस्य हंतेर्हस्य घत्वं भवति। जघनिथ॥

हनो लुङ्लिङोर्वधो लुङ्यात्मने वा ॥२१५॥ वध्यात्। हनिष्यति॥

सुबो०—हनो लुङ्लिङोर्वधो लुङ्यात्मने वा। लुङ्लिङोः परतो हंतेर्वधः स्यात्। आत्मनेपदे लुङि तु वा। वध्यात्। ऋनृत इतीट्। हनिष्यति॥

तत्त्व०—हन इति। लुङि साहचर्य्यादनाविषय एव लिङ् गृह्यते तेन विधौ नातिप्रसंगः। यत्तु विधावति-प्रसङ्गवारणाय किदिति लिङो विशेषणमुपन्यस्तं तदप्रसत्। द्व्यश्रिकमिथेति न्यायेन कर्मणि पक्षे वधिषीष्टे-स्यत्रातिव्याप्तेरनिवारणात्॥

जनिवध्योर्न वृद्धिः ॥ २१६ ॥ अवधीत्॥ यु मिश्रणे अमिश्रणे च॥

सुबो०—जनिवध्योर्न वृद्धिः। अनयोर्वृद्धिर्न भवति। जन जनने। जनी प्रादुर्भावे च। वध हिंसायाम्। वधादेशोऽदंतः। तेनाद्योच्चारणेनैकस्वरत्वात् नैकस्वरादितीण्निषेधो न प्रवर्त्तते। यत इत्यल्लोपः। अवधीत्॥

ओरौ ॥ २१७ ॥ उकारस्याऽद्विरुक्तस्यौकारो भवत्यबादौ पिति॥ यौति युतः युवन्ति। यौषि। यौमि युवः। युयात्। यौतु। युहि। अयौत्। अयौः। युयाव। युयविथ। यूयात्। यविता। अयावीत्॥

तु गतिवृद्धिहिंसासु॥

सुबो०—ओरौ। अद्विरुक्तस्य धातोरुत औ स्यात् पिति तकारसकारदकारादौ लुग्विषये। उतः किम्। एति। एषि। लुकि किम्। सुनोति। पिति किम्। रुतः। अद्विरुक्तस्य किम्। योयोति। नुधातोरित्युव्। युवंति। ये दीर्घः स्यात्। यूयात्। धातोर्नामिन इति वृद्धिः। अयावीत्। तु इति सौत्रो धातुः गतिवृद्धिहिंसासु। अयं च लुग्विकरण इति वरामः॥

तत्त्व०—ओरौ इति। विदो नत्रानामित्यतो वेत्यनुवर्त्य व्यवस्थया द्विरुक्तस्येति बोध्यम्। तेन जुहोती-त्यादौ नातिप्रसंगः॥

तुरुस्तुभ्योऽद्विरुक्तेभ्यो हसादीनां चतुर्णामीड्वा॥२१८॥ तौति तवीति, तुतः तुवीतः, तुवन्ति। तौषि तवीषि, तुथः तुवीथः, तुथ तुवीथ। तौमि, तवीमि। तुयात्, तुवीयात्। तौतु तवीतु, तुवीतात् तुवीताद्, तुतात् तुताद्। तुहि, तुवीहि। अतौत्, अतवीत्। तुताव। तोता। तोष्यति। अतौषीत्॥ रु शब्दे॥ रौति, रवीति। रुरविथ। अरावीत्॥ णु स्तुतौ॥ नौति नुतः। नुनाव। नुनविथ। अनावीत्॥ टुक्षु शब्दे॥ क्षौति। क्षुयात्। क्षौतु। अक्षौत्। चुक्षविथ। क्षविता। अक्षावीत्॥ क्ष्णु तेजने॥ क्ष्णौति। चुक्ष्णविथ। अक्ष्णावीत्॥ ष्णु प्रस्रवणे॥ स्नौति। सुष्णविथ। अस्नावीत्॥ द्यु अभिगमने॥ द्यौति। दुद्यविथ, दुद्योथ। अद्योषीत्॥ षु प्रसवैश्वर्ययोः॥ सौति। सुषाव। सुषविथ, सुषोथ। असौषीत्॥ कु शब्दे॥ कौति। चुकविथ, चुकोथ। अकौषीत्॥ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु॥ वेति वीतः वियन्ति। वेषि। वेतु। वीहि। अवेत्। अवियन्। विवयिथ, विवेथ। अवैषीत्। एति ईतः। ईयात्। ऐत्। ऐयन्। आयम्। अयांचकार। एता। ऐषीत्॥ इण गतौ॥ एति इतः॥

सुबो०—तुरुस्तुभ्योऽद्विरुक्तेभ्यो हसादीनां चतुर्णामीड् वा। अद्विरुक्तेभ्यः एभ्यः परेषां हसादिचतुर्णामीडागमो वा भवति। क्ष्णु तेजने। तेजनं तीक्ष्णीकरणम्। ष्णु प्रस्रवणे। प्रस्रवणमुत्कंठा। षु प्रसवैश्वर्ययोः। प्रसवोऽभ्यनुज्ञानम्। वी गतिव्याप्तिप्रजनकांत्यसनखादनेषु। प्रजनो गर्भग्रहणम्। असनं क्षेपणम्। अडागमात्प्राग् नुधातोरितीय्। अवियन्। नित्यत्वादडागमे कृते सत्यनेकस्वरत्वाद्य इति केचित्। अव्यन्। अत्र ईकारोऽपि धात्वंतरं प्रश्लिष्यते। तथा च प्रयुंजते। नाहि तरणिरुदीते धिक् पराधीनवृत्तिरिति। व्याख्यातं च मनोरमायाम्। कर्मव्यतिहारेमात्। नच गतिहिंसार्थेत्यात्निषेधः शंक्यः। उत्पूर्वस्याविर्भावार्थत्वादिति। इण् गतौ॥

तत्त्व०—तुरुस्तुभ्य इति। यत्तु माधा तुरुणुस्तुभ्य इत्युक्त यच्च वासुदेवेन व्याख्यातम्। यु मिश्रणे। रु शब्दे। णु स्तुतौ। ष्टुञ् स्तुतौ। एभ्यः पिति सिम ईकारो वक्तव्य इति तत्सर्वं प्रामादिकम्। पुणु एतयोरग्रहणस्य सर्वसमतत्वात्। पिति स्मीति निमित्तोपादानमप्ययुक्तम्। रुचीत इत्यादावव्याप्तेः॥

**इणः क्ङिति स्वरे यः ॥ २१९ ॥** यन्ति । एषि । इयात् । एतु । यन्तु । इहि । आयम् । ऐव ऐम । इयाय ॥

सुबो०—इणः क्ङिति स्वरे यः । इणो यत्वं भवति किति च स्वरे । यंति । लिटि द्वित्वे वृद्धौ च कृतायाम् असवर्णे स्वरे इतीय् । इयाय ॥

**इणः किति णादौ पूर्वस्य दीर्घः ॥ २२० ॥** ईयतुः ईयुः । इययिथ, इयेथ । ईयात् । एता । दादेः पे । इणः सिलोपे गा । अगात् अगाताम् अगुः ॥ इक् स्मरणे ॥ इङिकावध्युपसर्गतो न व्यभिचरतः । अध्येति अधीतः अधियन्ति । अध्यैत्, अध्यैद् ॥

सुबो०—इणः किति णादौ पूर्वस्य दीर्घः । इणः पूर्वरूपस्य दीर्घो भवति किति लिटि । आशिषि ये इति दीर्घः । ईयात् । इक् स्मरणे । ककार इह इण्वदिक इति विशेषणार्थः। अयमधिपूर्वः। तथा च भट्टिः । ससीतयो राघवयोरधीयन् । स्मरन्नित्यर्थः । राघवयोरित्यत्र कर्मणि षष्ठी । इङिकाविति । इङिकावध्युपसर्गं विना प्रयोगं नार्हत इत्यर्थः ॥

**इण्वदिकः ॥२२१॥** अधीयाय । अधीयतु । अधीययिथ, अधीयेथ । अधीयिव । अधीयात् । अध्येता । अध्यगात् ॥ विद ज्ञाने॥ वेत्ति वित्तः विदन्ति । वेत्सि वित्थः वित्थ । वेद्मि ॥

सुबो०—इण्वदिकः । इणो यत् कार्यमुक्तं तदिकोऽपि भवति । कार्यातिदेशोऽयम् । विद ज्ञाने । ज्ञप्तिर्ज्ञानम् ॥

**विदो नवानां त्यादीनां णबादिर्नवको वा ॥२२२॥** विदः परेषां त्यादीनां नवानां णबादिर्नवको वा ॥ वेद विदतुः विदुः । वेत्थ विदथुः विद । वेद विद्व । विद्यात् । वेत्तु । विद्धि ॥

सुबो०—विदो नवानां त्यादीनां णबादिर्नवको वा । वर्तमानार्थकणादियोगे धातोर्द्वित्वं न । उक्तार्थणादियोगे इत्युक्तत्वात् । झसादिति धिः । विद्धि ॥

तत्त्व०—वेदेति । अनन्तरस्येति न्यायादुक्तार्थणादियोग एव द्वित्वं नान्यत्र ॥

**वेत्तेर्लोट्याम्गुणाभावः करोत्यनुप्रयोगश्च वा ॥ २२३ ॥**

सुबो०—वेत्तेर्लोट्याम् गुणाभावः करोत्यनुप्रयोगश्च वा । वेत्तेराम् प्रत्ययो गुणनिषेधः करोतेरनुप्रयोगश्च वा स्याल्लोटि ॥

**तनादेरुप् ॥ २२४ ॥** विदांकरोतु ॥

सुबो०—तनादेरुप् । तन आदिर्यस्य स तनादिस्तस्मात्तनादेरुप् प्रत्ययः स्यात् कर्त्तरि चतुर्षु । नृप इति गुणे कृते विदांकरोतु ॥

ङित्यदुः ॥ २२५ ॥ कृञोऽत उत् ङिति ॥ विदांकुरुतात् विदांकुर्वन्तु । अवेत्, अवेद् । स्याविदः । अविदुः ॥

सुबो०—ङित्यदुः । कृञो ये इत्यतः कृञ इत्यनुवृत्तम् । लङि दिस्योरिति दिप्सिपोर्लोपः स्यात् । अवेत् । आदंतविदेत्यन उस् वा । अविदुः ॥

तत्त्व०—ङित्यदुः । ङिति अत् उरीति छेदः । कृञो ये इत्यतः कृञ इत्यनुवर्त्तते । विदाकुरुतादित्यत्र तपरत्वाद्प्रत्ययनिमित्तो गुणो न कुर्वित्यत्र तु सञ्ज्ञापूर्वकत्वेनानित्यत्वात् य्वोर्विहस इति दीर्घो न । तपरः किम् । अकारार्थः । तपरकरणं मुखसुखोच्चारणार्थमिति वासुदेवः । तन्न । ङित्य उरीति पाठेऽपि सुखोच्चारस्याव्याहतत्वात् ॥

दः सः ॥२२६॥ पदान्ते दस्य सो वा सिपि ॥ अवेः । अवेद् अवेत् ॥

सुबो०—दः सः । पदांते धातोर्दस्य सो वा स्यात् । सिपि किम् । अवेद् । पदांते किम् । वेत्सि ॥

तत्त्व०—दः सः । अत्र रोरात्रिप्वित्यतो मंडूकप्लुत्या र इत्यनुवर्त्तते । अजर्घा इत्यादिसिद्ध्यर्थम् । स इति रत्वव्यवहितमपि न दोषादिकल्पने च गौरवम् । यदि दोषादिकल्पन व्यवहितानुवृत्त्या गौरव समान तदा सानुवृत्तिरप्यस्तु ॥

आमि विदेर्न गुणः ॥ २२७ ॥ विदाञ्चकार । अवेदीत् ॥ अस भुवि ॥ अस्ति ॥

सुबो०—आमि विदेर्न गुणः । वेत्तेर्गुणो न स्यात् आमि । विदद‌रिद्रेत्याम् । विदांचकार । अस भुवि । सत्तायामित्यर्थः ॥

नमसोऽस्य ॥ २२८ ॥ प्रत्ययस्य नमोऽस्तेश्चाकारस्य लोपो ङिति ॥ स्नः संति ॥

सुबो०—नमसोऽस्य । नम् च अस् चानयोः समाहारो नमस् तस्य । नमिति प्रत्ययो गृह्यते प्रतिपदोक्तत्वात् न धातुः लाक्षणिकत्वात् । तस्य हि आदेः ष्णः स्न इति कृते नामिति रूपम् । अस्तेरीडित्यतोऽस्तेरित्यनुवृत्त्याऽस्तेरित्यस्य योऽस् तस्येति व्याख्यानात् । असुप्रत्ययस्य अस दीप्तौ । असु क्षेपणे इत्यादीनां च ग्रहणं न भवति । ङित्यदुरित्यतो ङितीति ओर्वेमोरित्यतो लोप इति चानुवृत्तम् ॥

तत्त्व०—नमसोऽस्य । नम च अस चानयोः समाहार नमस् तस्य । णमधातोरादेः ष्ण स्न इति सूत्रेण [illegible] । अस्तेरीडित्यतोऽस्तेरित्यनुवृत्तेरस्तेरिति रूपस्य प्रकृतिभूतो योऽस् तस्येति [illegible] । [illegible] । अस दीप्तौ । असु क्षेपणे । इत्यादीना न ग्रहणम् । यत्तु वासुदेवेन असा धातुना [illegible] गृह्यते इ युक्तं तन्न । [illegible]स्यापि क्रमेण धातोर्ग्रहणमिति निर्णयाभावात् ॥

सि सः ॥ २२९ ॥ अस्तेः सस्य लोपो भवति सादौ ॥ असि स्थः

स्थ । अस्मि स्वः स्मः। स्यात् । अस्तु स्तात् सन्तु । जह्योधिशाधि। एधि । असानि ॥

सुबो०—सि सः। नमसोऽस्येत्यतोऽसुग्रहणमप्यनुवृत्तं जह्योधीति एध्यादेशः। एधि॥

तत्त्व०—सि सः । अत्र नमः सकारासंभवादस एवानुवृत्तिः ॥

अस्तेरीट् ॥२३०॥ विद्यमानादस्तेः रुदादेश्च परयोर्दिप्सिपोरीट् ॥ आसीत् आस्ताम् । आसीः । आसम् ॥

सुबो०—अस्तेरीट् । दिस्योर्हसादित्यतो दिस्योरित्यनुवृत्तम् । अस्तेरिति तु तंत्रादिना वाख्येयं तेन विद्यमानादस्तेरिति लभ्यते । विद्यमानात्किम् । अस्तेर्भूरित्यादेशेऽभूदित्यादौ मा भूत् । स्थानिवद्भावेन नमसोऽस्येत्यत्र ओर्वमोर्वेत्यतो वानुवृत्त्या व्यवस्थया लोपाभावे स्वरादित्वात् द्वितीयोऽट् । आस्ताम् ॥

तत्त्व०—अस्तेरीट् । अत्राद्रुदादेरिति सूत्रात् रुदादेरित्येकदेशोऽनुवर्त्तते न स्वादिति । क्वचिदेकदेशोऽनुवर्त्तत इति स्वीकारात् । अस्तेरित्यस्य तन्त्रादिना विद्यमानादिति । तेन भ्वादेशे अभूदित्यादौ नातिप्रसङ्गः। आस्तामिति । अत्र ओर्वमोर्वेत्यतो वानुवृत्त्या व्यवस्थया लोपाभावे द्वितीयोऽट् । उपदेशस्वरादिति तु न । अगादित्यत्रातिव्याप्तेः ॥

अस्तेरनपि भूः ॥ २३१ ॥ बभूव । इत्यादि सिद्धम् ॥ मृजू शुद्धौ ॥

सुबो०—अस्तेरनापि भूः । अस्तेर्भूरादेशः स्यादचतुर्षु । मृजू शुद्धौ । अयं न पित् । भिदादिपाठसामर्थ्यात् ॥

मृजेर्वृद्धिः ॥२३२॥ क्ङिति स्वरे वा ॥ मार्ष्टि मृष्टः मृजन्ति, मार्जन्ति । मार्क्षि । मृज्यात् । मार्ष्टु । मृड्ढि । मार्जानि । अमार्ट्, अमार्ड् । ममार्ज । ममृजतुः ममार्जतुः । ममार्जिथ ममार्ष्ठ । मृज्यात् । मार्जिता, मार्ष्टा । अमार्जीत् ॥ वच परिभाषणे । वक्ति । नहिवच्चिरन्तिपरः । वक्षि वक्थः । वच्मि । वच्यात् । वक्तु । वग्धि । अवक्, अवग् । उवाच ऊचतुः । उवचिथ उवक्थ । उच्यात् । वक्ता । वक्ष्यति । अवक्ष्यत् । अस्यतिवक्तीति ङः ॥

सुबो०—मृजेर्वृद्धिः । गुणापवादः । अक्ङिति प्रत्यये परे मृजेर्वृद्धिर्भवति क्ङिति स्वरे वेष्यते । छशषेति षत्वम् । मार्ष्टि । झसादिति हेर्धिः । छशषेति षत्वं ष्टुत्वं झबे जबा इति षस्य डः स्थानैकत्वात् । मृड्ढि । दिस्योरिति दिप्सिपोर्लोपः। अमार्ट् अमार्ड् । लुङि इडभावे षत्वकत्वे । अमार्क्षीत् । झसादिति सिलोपः । अमार्ष्टाम् । स्याविद इत्यन उस् । अमार्क्षुः । वच परिभाषणे । अयमन्तिपरो न प्रयुज्यते

इत्येके । बहुवचनपरो न प्रयुज्यते इत्यपरे । झसादिति हेर्धिः चोः कुरिति कः। झबे जबाः इति गः । वग्धि । दिस्योरिति दिप्सिपोर्लोपः। अवक् । णवादौ पूर्वस्येति संप्रसारणं अत उपधाया इति वृद्धिः । उवाच । अस्यतिवक्तिख्यातिभ्य इति ङः ॥

तत्त्व०—नाह्विवचिरिति । बहुवचनपर इत्येके आतिमात्रपर इत्यन्ये ॥

वचेरुम् ॥ २३३ ॥ अवोचत् अवोचताम् अवोचन् ॥ रुदिर् अश्रुविमोचने ॥

सुबो०—वचेरुम् । वचेरुमागमः स्यात् ङप्रत्यये । अवोचत् ॥ रुदिर् अश्रुविमोचने । अश्रुविमोचनं रोदनम् ॥

रुदादेश्चतुर्णां ह्वसादेः ॥ २३४ ॥ रुदादेः परस्य तिबादिचतुर्णां मध्ये हकारवसादेः प्रत्ययस्येट् । रोदिति रुदितः रुदन्ति । रोदिषि रुदिथः रुदिथ । रुद्यात् । रोदितु । रुदिहि ॥

सुबो०—रुदादेश्चतुर्णां ह्वसादेः । ह् च वसश्च ह्वसौ तौ आदी यस्य स ह्वसादिस्तस्य । रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा । जक्षितिश्चेति विज्ञेयो रुदादिः पंचको गणः॥ ह्वसादेः किम् । रुदंति । चतुर्णां किम् । स्वप्ता । हौ परत्वादिटि कृते धिरादेशो न । रुदिहि ॥

रुदादेर्दिस्योरीडटौ ॥ २३५ ॥ अरोदीत् । अरोदत् अरुदिताम् अरुदन् । इरितो वा । अरुदत् ॥ ञिष्वप् शये ॥ स्वपिति । स्वप्यात् । स्वपितु । अस्वपीत् । अस्वपत् । सुष्वाप । स्वप्ता । अस्वाप्सीत् ॥ श्वस् प्राणने ॥ श्वसिति । श्वस्यात् । श्वसितु । अश्वसत् । अश्वसीत् । शश्वास ॥ अन प्राणने ॥ अनिति ॥

सुबो०—रुदादेर्दिस्योरीडटौ । रुदादेः परयोर्दिप्सिपोरीडटावागमौ भवतः। लुङि इरिति इति वा ङः । अरुदत् । णवादौ पूर्वस्येति संप्रसारणम् । सुषुपतुः । अत उपधाया इति वृद्धौ । अस्वाप्सीत् । ह्यंतेति न वृद्धिः । अश्वसीत् ॥

तत्त्व०—रुदादेरीति । ह् च वसश्च ह्वसौ तौ आदी यस्य स तथा तस्य । रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा । जक्षितिश्चेति विज्ञेयो रुदादि पचको गणः ॥ १ ॥ अरुदत् । आरोदीदिति । अद्गुदादेरडित्यट्। अस्तेरीडिति पक्षे ईट् ॥

प्रादे रेफादनितेर्नस्य णत्वम् ॥ २३६ ॥ प्राणिति । प्राणिहि । आनीत् । आनत् । आन आनतुः। अन्यात् । अनिता । आनीत् ॥ जक्ष भक्षहसनयोः ॥ जक्षिति जाक्षितः ॥

सुबो०—प्रादे रेफादनितेर्नस्य णत्वम्। प्रादिस्थरकारात्परस्यानेर्नस्य णत्वं स्यात्॥

जक्षादेरन्तोऽदन उस् ॥ २३७ ॥ जक्षजागृदरिद्राशास्चकासृभ्यः परस्यान्तोऽत् ॥ जक्षति। जक्ष्यात्। जक्षितु। जक्षिहि। अजक्षीत्। अजक्षत्। जक्षिता ॥ इति रुदादयः ॥ जागृ निद्राक्षये ॥ जागर्ति जागृतः जाग्रति। जागृयात्। जागर्तु। अजागः अजागृताम् ॥

सुबो०—जक्षादेरंतोऽदन उस्। जक्षप्रभृतयः सप्त। उक्तं च। "जक्षजागृदरिद्रातिचकास्तिशास्तयस्तथा। दीधीङ् वेवीङ् च विज्ञेयो जक्षादिः सप्तको गणः॥" दिस्योरिति दिप्सिपोर्लोपः। अजागः॥

उसि गुणः ॥ २३८ ॥ अजागरुः। जजागार ॥

सुबो०—उसि गुणः। नामन्तस्य धातोर्गुणः स्यादनादेशे उसि परे। विददरिद्रेति वाऽम्। जागरांचकार ॥

जागर्तेर्वीण्णबुङिद्भिन्नेषु गुणः ॥ २३९ ॥ जजागरतुः। जजागरुः। जजागरिथ। जागराञ्चकार। जागर्यात्। जागरिता। जागरिष्यति। अजागरिष्यत्। अजागरीत् ॥ दरिद्रा दुर्गतौ ॥ दरिद्राति ॥

सुबो०—जागर्तेर्वीण्णबुङिद्भिन्नेषु गुणः। जागर्तेर्विइण्णबुङिद्भिन्नप्रत्ययगुणः स्यात्। विइण्णबुङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च। विशब्देन वादिप्रत्ययो गृह्यते। इकारस्तु उच्चारणार्थः। क्वसुप्रत्यये जजागृवान्। जजागृवांसौ इति। इणि अजागारि। णपि जजागार। ङिति जागृतः। वृद्धिविषये बुणि जागरकः। घञि जागरः। ञिप्रत्यये। जागरयति। न चैतेषु गुणे कृतेऽप्यत उपधाया इति वृद्धिः स्यादिति वाच्यम्। गुणविधेरिण्णप्प्रतिषेधस्य चानर्थक्यापत्तेः। लुङि जागृ इस् ईदित्यत्र रत्वं प्राप्तं तद्गुणो बाधते। तं णित्प इति सेर्णित्वाद्धातोर्नामिन इति वृद्धिर्बाधते। तां जागर्त्तेरिति गुणो बाधते। तत्र गुणे कृते अतो हसादेरिति विकल्पं बाधित्वा ल्रांतस्येति वृद्धिः प्राप्ता ह्यंतेति सूत्रेण निषिध्यते। अजागरीत्। दरिद्रा दुर्गतौ ॥

दरिद्रातेरिदालोपश्च ङिति ॥ २४० ॥ दरिद्रातेरातो लोपो ङिति स्वरे इकारश्च ङिति हसे ॥ दरिद्रितः दरिद्रति। दरिद्रियात्। दरिद्रातु। अदरिद्रात् अदरिद्रिताम् अदरिद्रुः ॥

सुबो०—दरिद्रातेरिदालोपश्च ङिति। हसे इति स्वरे इति चानुवृत्तम् ॥

तत्त्व०—अदरिद्रुरीति । जक्षादेरित्यनेन उस् दरिद्रातेरिदालोप इत्यनेन परस्मादालोप आदन्तत्वाभावादादन्ताद्विव इत्यादिलक्षणाविकल्पाप्रवृत्तिः ॥

दरिद्रातेरनप्यालोपः सौ वा णञ्बुणनिट्सयुट्सु न ॥ २४१ ॥ ददरिद्रौ ददरिद्रतुः । दरिद्राञ्चकार । दरिद्र्यात् । दरिद्रिता । अदरिद्रीत् अदरिद्रिष्टाम् । अदरिद्रासीत् ॥ शासु अनुशिष्टौ ॥ शास्ति ॥

सुबो०—दरिद्रातेरनप्यालोपः सौ वा णञ्बुणऽनिट्सयुट्सु न । दरिद्रातेरातो लोपः स्यात् अचतुर्थे सिप्रत्यये तु वा णबादिषु परेषु न बुणि । दरिद्रायकः । अनिटि सप्रत्यये दिदरिद्रासति । युटि दरिद्राणः । लुङि आलोपाभावे यपिरमीतीट्सकौ । अदरिद्रासीत् अदरिद्रासिष्टाम् । शासु अनुशिष्टौ । अनुशिष्टिरनुशासनम् ॥

शासेरिः ॥२४२॥ शासेरातो हसे क्ङिति ङे च इन्नवति ॥ घसादेः षः । शिष्टः शासति । शास्सि शिष्टः शिष्ट । शास्मि । शिष्यात् । शास्तु । जह्येधिशाधि । शाधि ॥

दिपि धातोः ॥ २४३ ॥ सस्य तः स्याद्दिपि ॥ अशाद्, अशात् अशिष्टाम् अशासुः ॥

सिपि वा धातोः ॥ २४४ ॥ सस्य वा तः स्यात्सिपि ॥ अशाः । अशाद् अशात् । अशाः । शशास । शिष्यात् । शासिता । अशासिष्यत् । अशिषत् ॥ चकास्ट दीप्तौ ॥ चकास्ति चकास्तः चकासति । झसाद्धिर्हेः । धे सलोपः । चकाधि । अचकात् । अचकासुः । अचकाः । अचकात्, अचकाद् । चकासाञ्चकार । अचकासीत् ॥ इति परस्मैपदम् ॥

सुबो०—शासेरिः । शास उपधाया इत् स्यात् ङप्रत्यये हसादौ क्ङिति च । ह्रस्यानुवर्त्तनात् आङः शासु इच्छायामित्यस्य तु न ग्रहणम् । अर्तिसर्तिसाहचर्यात्परस्मैपदिन एव शासेर्ङविधानात् । तेन पे एवेत्वम् । नेह । आशास्ते । अन्ये तु व्यतिशिष्टे । व्यतिशिड्ढ्वे । इत्यात्मनेपदेऽपि इत्वं स्वीकुर्वंति । हौ जह्येधिशाधीति । शाधि । सर्तिशास्तीति ङः । अशिषत् । चकास्ट दीप्तौ । दीप्तिस्तेजः । जक्षादेरित्यंतोऽत् । चकासति । धे च सलोपः । धातोः सकारस्य लोपः स्यात् धकारे परे । दिस्योरिति दिप्सिपोर्लोपः । दिपि सस्येति तः । अचकात् । सिपि तु वा तः । अचकाः, अचकात् । कामादित्याम् । चकासांचकार ॥ इति परस्मैपदम् ॥

तत्त्व०—शासेरिः। डे चेति। डानुवृत्तेराङः शासु इच्छायामित्यस्य नेत्वम्। अर्तिसाहचर्यात्परस्मैपदिन एव शास्तेर्ङविधानात्। भाष्यसमतमाह। धे सलोप इति॥ कृतायामिह टीकायां लोके शङ्करशर्म्मणा। अगाददादिमध्यस्थं परस्मैपदसाधनम्॥

चक्षिङ् व्यक्तायां वाचि॥ स्कोरादयोश्च। चष्टे चक्षाते। आतोऽन्तोऽदनतः। चक्षते। चक्षे चक्षाथे चड्ढ्वे। चक्षे चक्ष्वहे चक्ष्महे। चक्षीत। चष्टाम्। अचष्ट॥

सुबो०—दीधीङ् दीप्तिदेवनयोः। देवनं शोकः। वेवीङ् वेतिना तुल्ये। वी गतीत्यनेन तुल्येऽर्थे वर्त्तत इत्यर्थः। छांदसाविमौ। अत एव न व्याख्यातौ। चक्षिङ् व्यक्तायां वाचि। अयं दर्शनेऽपि। इकारोऽनुदात्तः। इदितो नुमिति नुम् तु न। अंतेदित इति व्याख्यानात्। ङकारस्तु अनुदात्तत्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः। स्कोरिति कलोपः ष्टुत्वम्। चष्टे। आतोऽन्तोऽदनत इत्यत्। चक्षते। मध्यमे तु स्कोरिति कलोपः। षढोरिति कः। षत्वम्। चक्षे। कलोपे ष्टुत्वे झषे जषा इति डः। चड्ढ्वे। लङि अचष्ट॥

तत्त्व०—चक्षिङ् अनुदात्तत्वलक्षणमात्मनेपदमनित्यमिति ज्ञापनार्थो ङकारः। तेनानुक्तमप्यूहति पंडितो जन इत्यादिसिद्धम्। इदित इति नुम् तु न भवति अन्तेदिति व्याख्यानात्। अकारस्तु वकुमुचितः॥

चक्षिङोऽनपि ख्याञ्क्शाञौ णादौ तु वा ॥ २४९ ॥ चख्यौ चख्यतुः। चख्ये चख्याते। चक्शौ। चक्शे। चचक्षे। ख्येयात् ख्यायात्। ख्यासीत्। क्शायात् क्शेयात्। अख्यत् अख्यत। अक्शास्त॥ ईर् गतौ कम्पने च॥ ईर्ते ईराते। ईर्ताम् ईराताम्। ऐर्त। ईराञ्चक्रे। ईर्षीष्ट। ऐरिष्ट॥ आङःशासु इच्छायाम्॥ आशास्ते। आशशासे। आशासिष्ट॥ कसि गतिशासनयोः॥ कंस्ते कंसाते। अयमनिदिदित्येके। कस्ते। तालव्यान्तोऽप्यनिदित्। कष्टे कशाते। कक्षे कड्ढ्वे। अकशिष्ट॥ णिसि चुम्बने॥ निंस्ते निंसाते। निंस्से। निंसिता॥ णिजि शुद्धौ॥ चोः कुः। निंक्ते। निंक्षे। निंजिता॥ शिजि अव्यक्ते शब्दे॥ शिंक्ते शिंक्षे। शिंजिता॥ पिजि वर्णे सम्पर्चने च। पिङ्क्ते। पिपिञ्जे। पिंजिता॥ पृचि सम्पर्चने॥ पृङ्क्ते। पपृञ्चे। पृचिता॥ पृची सम्पर्चने॥ पृक्ते। पपृचे। अपर्चिष्ट॥ ईड स्तुतौ॥ ईट्टे॥

सुबो०—चक्षिङोऽनपि ख्याञ्क्शाञावादेशौ भवतः अचतुर्षु लिटि परे तु वा । ञित्त्वात्पदद्वयम्। आतो णव् डाविति डौ । चख्यौ । आतोऽनपीत्यालोपः। चख्ये । चक्शौ । चक्शे । चचक्षे । संयोगादेरादंतस्यैकारो वा । ख्यायात् ख्येयात्। क्शायात् क्शेयात्। ख्यासीष्ट क्शासीष्ट । ख्याता क्शाता । ख्यास्यति ख्यास्यते । क्शास्यति क्शास्यते । अख्यास्यत् अख्यास्यत । अक्शास्यत् अक्शास्यत । अस्यतिवक्तीति ङः । आतोऽनपीत्यालोपः । अख्यत् अख्यद्ध । अक्शासीत् अक्शास्त । वर्जने ख्याञ्क्शाञौ नेष्टौ । समचक्षिष्ट । आङःशासु इच्छायाम् । आङ्पूर्वकत्वं प्रायिकम् । तेन नमोवाकं प्रशास्महे इति सिद्धम् । वचेर्घञ् चजोरिति कः । कसि गतिशासनयोः । शासनमाज्ञा । तालव्यांतोऽप्ययनिदित् । छशषेति षत्वं ष्टुत्वम् । कष्टे । षढोरिति कः षत्वं च । कक्षे । षत्वष्टुत्वे । झबे इति डः । कड्ढ्वे । णिजि शुद्धौ । अनिट्केषु णिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेट् । चोः कुरिति जस्य गः । खसे चपा इति कः। निंक्ते । गत्वकत्वषत्वानि । निंक्षे । शिजि अव्यक्ते शब्दे । क्तप्रत्यये शिंजितम् । णिन्यंतादीपि कृते । शिंजिनी । भूषणानां तु शिंजितमित्यमरः । मौर्वी ज्या शिंजिनी गुण इति च । चोः कुरिति जस्य गः । खसे चपा इति कः । शिंक्ते । पिजि वर्णे संपर्चने च । संपर्चनं मिश्रीभावः ॥

**ईडीशिभ्यां सध्वयोरिट् ॥ २४६ ॥** ईडिषे । ईडिध्वे ॥

सुबो०—ईडीशिभ्यां सध्वयोरिट् । आभ्यां परयोः सध्वशब्दयोरिट् स्यात् ॥

**लङो ध्वस्य नेट् ॥ २४७॥** ऐड्ढम् । ईडाञ्चक्रे । ऐडिष्ट ॥ ईश ऐश्वर्ये ॥ ईष्टे । ईशिषे । ईशिध्वे । ईशांचक्रे । ईशितासे ॥ आस उपवेशने ॥ आस्ते । आध्वे । आसांचक्रे ॥वस आच्छादने॥ वस्ते । ववसे । अवसिष्ट ॥ षूङ् प्राणिगर्भविमोचने ॥ सूते । नुधातोः । सुवाते । सूताम् ॥

सुबो०—लङो ध्वस्य नेट् । ईडीशिभ्यां परस्य लङो ध्वशब्दस्य इण्न स्यात् । आस उपवेशने । उपवेशनं स्थितिः । धे चेति सलोपे । आध्वम् । कासादिप्रत्ययादित्याम् । आसांचक्रे । वस आच्छादने । धे चेति सलोपे । वध्वे । शसददेत्येत्वपूर्वलोपौ न । ववसे । षूङ् प्राणिगर्भविमोचने । प्राणिगर्भविमोचनं प्रसवः ॥

**सुवो न गुणश्चतुर्षु ॥२४८॥** सुवावहे । सुषुवे । सविषीष्ट सोषीष्ट । सविता सोता ॥ शीङ् स्वप्ने ॥

सुबो०—सुवो न गुणश्चतुर्षु । स्वरतिसूतीति विकल्पं बाधित्वा किंत इति निषेधे प्राप्ते क्रादिणादिति नित्यमिट् । नुधातोरित्युव् । सुषुविषे । स्वरतिसूतीति वेट् ।

सविषीष्ट सोषीष्ट । शीङ् स्वप्ने । स्वप्नमालस्यं निद्रा च ॥

**शीङो गुणश्चतुर्षु ॥ २४९ ॥** शेते शयाते ॥

सुबो०—शीङो गुणश्चतुर्षु । क्ङित्यद्युसीत्यस्यापवादः ॥

**शीङोऽतो रुट् ॥ २५० ॥** शीङः परस्यातो रुडागमः ॥ शेरते । शेताम् । अशेत अशेरत । शिश्ये । अशयिष्ट ॥ इङ् अध्ययने ॥ अधिपूर्वः । अधीयाते । अधीयीत अधीयीयाताम् । अध्ययै । अध्यैत अध्यैयाताम् ॥

सुबो०—शीङोऽतो रुट् । शीङः परस्यातः प्रत्ययस्य रुडागमः स्यात् । नुधातोरिति यः । शिश्ये । इङ् अध्ययने । अध्ययनं पठनम् । नुधातोरितीय् । अधीयाते । आतोऽतोऽदनत इत्यत् । अधीयते । लोटि उत्तमपुरुषे गुणायादेशयोः कृतयोरुपसर्गस्य इयङ् स्वरे इति यत्वम् । अध्ययै । लङि अध्यैत । प्रथमामिय् ततोऽटौ । अध्यैयाताम् । अध्यैयत । उत्तमे तु अध्यैयि । अध्यैवहि ॥

तत्त्व०—अध्यैयातामिति । परत्वादियादेशे पुनरडागमद्वयेन सिद्धिः ॥

**इङो णादौ गाङ् ॥२५१॥** अधिजगे । अध्येषीष्ट ॥

सुबो०—इङो णादौ गाङ् । इङो गाङादेशः स्याल्लिटि । आतोऽनपीत्यालोपे । अधिजगे ॥

**इङो वा गीर्लुङ्लृङोर्गुणाभावश्च ॥ २५२ ॥** अध्यगीष्यत अध्यैष्यत । अध्यगीष्ट अध्यैष्ट ॥

सुबो०—इङो वा गीर्लुङ्लृङोर्गुणाभावश्च । इङो गी इत्यादेशो वा स्यात् गुणनिषेधश्च लुङ्लृङोः परयोः ॥ इत्यात्मनेपदम् ॥

तत्त्व०—कृतायामिह टीकायां लोके शंकरशर्मणा । अगाददादिमध्यस्थमात्मनेपदसाधनम् ॥

द्विष अप्रीतौ ॥ द्वेष्टि द्विष्टः । द्वेष्टु । द्विड्ढि । अद्वेट् अद्वेड् अद्विष्टाम् अद्विषुः। अद्विषन् । दिद्वेषिथ। द्विक्षीष्ट । अद्विक्षत् ॥ दुह प्रपूरणे। दादेर्घः । तथोर्धः । दोग्धि दुग्धः दुहन्ति । धोक्षि । दुग्धे । दोग्धु । दुग्धि। दोहानि । अधोक् अधोग् । दुदोह। धुक्षीष्ट । अधुक्षत । अदुग्ध अधुक्षत । अधुक्षाताम् । अदुग्धाः अधुक्षथाः । अधुग्ध्वम् अधुक्षध्वम् । अदुह्वहि अधुक्षावहि ॥ दिह उपचये ॥ देग्धि ॥ लिह आस्वादने ॥ लेढि लीढः ॥ ष्टुञ् स्तुतौ ॥ स्तौति स्तवीति, स्तुतः

स्तुवीतः, स्तुवन्ति । स्तौषि, स्तवीषि । स्तुते स्तुवीते । स्तुवीष्व । आस्तोत् । तुष्टोथ । तुष्टुव तुष्टुम । स्तोषीष्ट ॥

सुबो०–द्विष अप्रीतौ। अप्रीतिः शत्रुता। ष्टुत्वम्। द्वेष्टि द्विष्टे। द्विष्यात् द्विषीत। द्विष्टाम् । हौ ष्टुत्वम् । झबे जबा इति डत्वम् । द्विड्ढि । द्वेषाणि द्वेषै । दिस्योरिति दिप्सिपोर्लोपः । वावसाने इति वा टः। अद्वेट् अद्वेड्। आदंतद्विष इत्यंत उस् वा । अद्विषुः अद्विषन् । आति तु । अद्विष्ट । दिद्वेष दिद्विषे । द्विष्यात् । षढोरिति कः । षत्वं च । द्विक्षीष्ट। द्वेष्टा। द्वेक्ष्यति द्वेक्ष्यते। अद्वेक्ष्यत् अद्वेक्षत। हशषांतादिति सक्। अद्विक्षत् अद्विक्षत । आति सको लोप इत्यल्लोपे । अद्विक्षाताम् । दुह प्रपूरणे। प्रपूरणं त्यजनम् । दादेर्घ इति घः । तथोरिति तस्य धः । झबे जबा इति गः । दोग्धि । सिपि तु घत्वम् । आदिजबानामिति घः । खसे चपा इति कः षत्वं च । धोक्षि । लुङि दिस्योरिति दिप्सिपोर्लोपः धत्वढत्वकत्वानि । अधोक् । लुङि हशषांतादिति सक् । ढत्वकत्वषत्वानि । अधुक्षत् । आति तु । अधुक्षत । दुहदिहेति सको लुक्पक्षे तन्थास्ध्वंवहिषु लङ्वत् धत्वं तथोर्ध इति धत्वं झबे जबा इति गः । अदुग्ध । अदुग्धाः। धत्वे । अदुग्धम् । अदुह्वहि । दिह उपचये । उपचयो वृद्धिः। लिह आस्वादने । हो ढ इति ढः तथोर्द्ध इति धः ष्टुत्वं ढि ढो लोप इति ढलोपः । लेढि । सिपि ढत्वं षढोरिति कः षत्वम् । लेक्षि । हौ ढत्वं झसादिति हेर्धिः ष्टुत्वं ढि ढ इति ढलोपपूर्वदीर्घौ । लीढि । लुङि हशषांतादिति सक्। अलिक्षत् । आति तु अलिक्षत । दुहदिहेति सको लुक्पक्षे ढत्वधत्वष्टुत्वढलोपपूर्वदीर्घाः । अलीढ । आति सक इत्यल्लोपे । अलिक्षाताम् । अलिक्षत । अलीढाः अलिक्षथाः। अलोपः । अलिक्षाथाम्। अलीढ्वम् अलीक्षध्वम्। अलिक्षि अलिह्वहि अलिक्षावहि अलिक्षामहि। ओरौ इत्यौ । स्तौति । तुरुस्तुभ्य इतीड् वा । स्तवीति । बुधातोरित्युव् । स्तुवंति ॥

स्तुसुधूञ्भ्यां पे सेरिट् ॥ २९३ ॥ अस्तवीत् । अस्तोत् ॥ ब्रूञ् व्यक्तायां वाचि ॥

सुबो०–स्तुसुधूञ्भ्यां पे सेरिट् । ष्टुञ् स्तुतौ । षुञ् अभिषवे । धूञ् कंपने । एषां परस्मैपदस्य सेरिट् आति तु न । धातोर्नामिन इति वृद्धिः । अस्तवीत् । आति तु गुणः । षत्वष्टुत्वे । अस्तोष्ट ॥

ब्रवादौ पिति त्स्मि ॥२९४॥ ब्रूञ ईप्रत्ययोऽबादौ पिति त्स्मि ॥ ब्रवीति ब्रूतः ब्रुवन्ति ॥

सुबो०–ब्रवादौ पिति त्स्मि । ब्रुवः परेषा पितां तिवादीनां चतुर्णां तकारसकारमकारादिप्रत्ययानामिडागमः स्यात् ॥

तत्त्व०—अबादाविति । अप् आदिः स्थानी यस्य स तथा अलुक् । तेन लुग्विषय इत्यर्थः । त्स्मीत्यत्र हि सतकारको निर्देशः दस्य खसे चपा इति तः । तेनाब्रवीदिति सिध्यति ॥

**ब्रुव आहश्च पञ्चानाम् ॥२५५॥** ब्रुवः परेषां पञ्चानां सिबादीनां णबादयः पंचादेशा वा स्युः । ब्रुव आहश्च ॥ आह आहतुः आहुः ॥

सुबो०—ब्रुव आहश्च पंचानाम् । ब्रुवः धातोराहादेशः अकार उच्चारणार्थः । तिबादीनां पंचानां क्रमेण णबादयः पंचादेशाश्च । अत्र द्विश्चेति द्वित्वं न उक्तार्थ इत्युक्तत्वात् ॥

तत्त्व०—पंचानामिति । आदेशादेशिनोः सख्यासाम्यादादेशा अपि पंचैव ग्राह्याः । द्विश्चेत्यत्र परोक्षार्थणादियोगे द्वित्वविधानादेतद्योगे द्वित्वं न । तथा । आह इत्यनुवर्त्य तच्च षष्ठ्या विपरिणम्य षष्ठीनिर्दिष्टत्वेनान्तस्येत्याह हस्येति ॥

**तस्थे ॥ २५६॥** आहो हस्य तस्थे परे ॥ आत्थ आहथुः । ब्रूते । ब्रवीतु । अब्रवीत् ॥

सुबो०—तस्थे । आह इत्यनुवर्त्तते तच्च षष्ठ्या विपरिणम्यते षष्ठीनिर्दिष्टत्वेनांतस्य हस्येत्यर्थः ॥

**ब्रूभोऽनपि वच् ॥ २५७ ॥** उवाच । ऊचे । अवोचत् । अवोचत । आदाथ इः। अवोचेताम् अवोचन्त । अवोचथाः अवोचेथां अवोचध्वम् । अवोचे अवोचावहि ॥ ऊर्णुञ् आच्छादने ॥

सुबो०—ब्रूभोऽनपि वच् । ब्रूभो वचादेशः स्यादचतुर्षु णबादौ । पूर्वस्येति पूर्वस्य संप्रसारणम् । उवाच । यजामिति संप्रसारणम् । ऊचतुः । अस्यतिवक्तीति ङः । ङे वचेरित्युम् । अवोचत् । ऊर्णुञ् आच्छादने । आच्छादनमावरणम् ॥

**ऊर्णोतेर्वा वृद्धिर्हसादौ पिति चतुर्षु ॥२५८॥** ऊर्णोति ऊर्णौति ऊर्णुतः ऊर्णुवंति । ऊर्णुते । ऊर्णुयात् । ऊर्णुवीत । ऊर्णौतु ऊर्णोतु । ऊर्णुहि ॥

सुबो०—ऊर्णोतेर्वा वृद्धिर्हसादौ पिति चतुर्षु । ओरौ इति नित्ये औत्वे प्राप्ते इयं विभाषा । हसादौ किम् । ऊर्णवानि । पिति किम् । ऊर्णतः । वृद्ध्यभावे गुणः । ऊर्णौति ऊर्णोति । नुधातोरित्युव् । ऊर्णुवंति ॥

तत्त्व०—ऊर्णोतेरिति । श्तिपानिर्देशो यङ्लुग्व्यावृत्त्यर्थः ॥

**ऊर्णोतेर्गुणो दिस्योः॥२५९॥** वृद्धेरपवादः॥ और्णोत्। और्णोः ॥

सुबो०—ऊर्णोतेर्गुणो दिस्योः । ऊर्णोतेर्गुणः स्यात् दिपि सिपि च । ऊर्णोतेर्वा इत्यस्यापवादः ॥

ऊर्णोतेराम्न ॥ २६० ॥

सुबो०–ऊर्णोतेराम्न । अनेकस्वरत्वात्प्राप्त आम् अनेन निषिध्यते ॥

स्वरादेः परः ॥ २६१ ॥ स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तः सस्वरो द्विर्भवति ॥

स्वरात्परास्संयोगादयो वनदरा द्विर्न ॥ २६२ ॥ ऊर्णुनाव ऊर्णुनुवतुः ॥

सुबो०–स्वरात्पराः संयोगादयो वनदरा द्विर्न । संयोगादयो वकारनकाररकारास्तेषां द्वित्वं नेत्यर्थः । यथा उंदी । उंदिदिषति । इदि । ईंदिदिषति । अड्ड । अड्डिडिषति । अर्च्च । अर्चिचिषति । स्वरादेः परः सस्वर आदिरित्यस्यापवादः । अद्विरुक्तेत्युक्तत्वात् इयायेत्यादौ नातिप्रसंगः । आद्योच्चारणनकार एव णत्वं तु ष्ठुनो ण इत्यनेन विधीयते तेन नुशब्दस्य द्वित्वम् ॥

तत्व०–स्वरादेरिति । सस्वर आदिरित्यस्यापवादः । अद्विरुक्त इति । तेन इयाजेत्यादौ नातिप्रसंगः ॥

ऊर्णोतेरिडादिप्रत्ययो वा ङित् ॥ २६३ ॥ ऊर्णुनुविथ ऊर्णुनविथ । ऊर्णुविता ऊर्णविता ॥

ऊर्णोतेर्वा वृद्धिस्सौ पे ॥ २६४ ॥ पक्षे वा गुणः ॥ और्णावीत् और्णाविष्टाम् । और्णवीत् और्णुवीत् और्णुविष्टाम् । और्णविष्ट और्णुविष्ट ॥ इत्यदादयः ॥

सुबो०–ऊर्णोतेरिडादिप्रत्ययो वा ङित् । ङित्त्वपक्षे तु नुधातोरित्युव् । ऊर्णुनुविथ । पक्षे गुणः । ऊर्णुनविथ । और्णावीत् और्णवीत् । और्णवीत ॥ इत्यात्पे ॥

तत्व०–कृतायामिह टीकायां लोके शंकरशर्मणा । गणोऽदादिरगादेष शेषभावितदृग्गः ॥

इति अदादयः ॥ २ ॥

---

हु दानादनयोः ॥ ह्वादेर्द्विश्च ॥२६५॥ हु इत्यादेरुत्पन्नस्यापो लुक् धातोश्च द्वित्वम् ॥ जुहोति जुहुतः ॥

सुबो०–हु दानादनयोः । आदाने चेत्येके । प्रीणनेऽपीति भाष्यम् । दानं चेह प्रक्षेपः । ह्वादेर्द्विश्च । हु आदिर्यस्य स ह्वादिस्तस्य ह्वादेः अदादेरित्यतो लुगित्यनुवृत्तं सप्तम्या विपरिणम्यते । ह्वादेरिति कर्मणि षष्ठी । उच्चारणक्रियायाः कर्मत्वात् । तथा च लुकि सति ह्वादेर्द्विवारमुच्चारणीय इति फलितम् । द्विः प्रयोगो द्विर्वचनमिति सिद्धांतः ॥

तत्त्व०—हु दानादनयोः । दानमिह प्रक्षेपमात्रम् । अग्नौ हविषश्चेति स्वभावाल्लभ्यते । अस्य च नित्यपरस्मैपदित्वात् कुत्रचिद्धोष्यत इत्यादिप्रयोगाः प्रामादिका एव स्मर । अग्नौ जुह्वाना इत्यत्र न शानः किन्तु आनश्प्रत्ययान्तम् । ह्वादेः हु आदिर्यस्य तथा तस्य । द्वौ वाराविति द्विः योग्यतयेहोच्चारणक्रिया लभ्यते तदावृत्तौ द्विशब्दात्सुः लुगित्यनुवृत्तं सप्तम्या विपरिणम्यते । तस्मिन्सतीत्यर्थः ॥

द्वेः ॥ २६६ ॥ द्विरुक्तात्परस्यान्तोऽत् ॥ जुह्वति । जुहोषि जुहुथः जुहुथ । जुहोमि जुहुवः जुहुमः । जुहुयात् ॥

सुबो०—द्वेः । द्वेः किम् । युवंति । हुश्नुवोरिति वः । जुह्वति ॥

तत्त्व०—द्वेः । द्विर्वचनमस्यास्तीति विग्रहे मत्वर्थीय इप्रत्ययोऽव्ययस्य तद्धिते यस्वरयोष्टिलोपश्चास्मादेव लिंगात् द्विस्तस्मात् । आतोऽन्त इति द्वयमप्यनुवृत्तम् ॥

जुहोतेर्हेर्धिः ॥ २६७ ॥ जुहुधि । अजुहोत् ॥

सुबो०—जुहोतेर्हेर्धिः । जुहोतेः परस्य हेर्धिः स्यात् लोडुत्तमे तु परत्वाद्गुणः । जुहवानि ॥

अन उस् ॥२६८॥ द्विरुक्तादन उस् ॥ उसि गुणः। अजुहवुः। जुहाव॥

सुबो०—अन उस् । द्वेरित्यनुवृत्तम् । परत्वादुसि चेति गुणः । अजुहवुः ॥

तत्त्व०—अन उस् । द्वेरित्यनुवृत्तेराह । द्विरुक्तादिति ॥

भीह्रीभृहुवामाम्वा स च लुग्वत् ॥२६९॥ जुहवांचकार । ये । हूयात् । होता । होष्यति । अहौषीत् ॥ ञिभी भये ॥ बिभेति ॥

सुबो०—भीह्रीभृहुवामाम्वा स च लुग्वत् । एभ्यश्चतुर्भ्यो वाम् प्रत्ययो भवति लिटि स चाऽऽम्लुग्वत् । कार्यातिदेशोऽयम् । तेन लुकि सति यत्कार्यं द्वित्वादि तदामि परेऽपि भवतीत्यर्थः । जुहवांचकार । पक्षे जुहाव । ये इति दीर्घः । हूयात् । होता । होष्यति । अहोष्यत् । धातोर्नामिन इति वृद्धिः । अहौषीत् ॥

ङिति हसे भीह्रकोरिद्वा ॥२७०॥ बिभितः बिभितः बिभ्यति । बिभीयात् बिभियात् । बिभेतु बिभीतात् बिभितात् । अबिभयुः। बिभयांचकार । बिभाय । अभैषीत् ॥ ह्री लज्जायाम् ॥ जिह्रेति । अजिह्रयुः। जिह्रयांचकार । जिह्राय । ह्रीयात् । ह्रेता । अह्रैषीत्॥ पॄ पालनपूरणयोः ॥

सुबो०—ङिति हसे भीह्राकोरिद्वा । अनयोः स्वरस्य वेकारो भवति ङिति हसे परे ॥

ऋप्रोरिः पूर्वस्य ॥ २७१ ॥ ऋप्रोः पूर्वस्यात इत् लुकि ॥ पिपर्ति ॥

सुबो०—ऋप्रोरिः पूर्वस्य । ऋ गतौ । पॄ पालनादौ । गुणे कृते । पिपर्ति ॥

पोरुर् ॥२७२॥ पवर्गात् वकाराच्च ऋत उर् अगुणवृद्धौ प्रत्यये ॥

य्वोर्विहसे । पिपूर्तः पिपुरति । पिपूर्य्यात् । पिपूर्ताम् । पिपुरतु । दिस्योर्हसात् । अपिपः । पपार पपरतुः । पपरिथ । पूर्य्यात् । परिता परीता । परिष्यति परीष्यति । अपारीत् ॥ पॄ पालनपूरणयोः । पिपर्ति पिपृतः पिप्रति । पिपृयात् । पिपर्तु पिपृतात् पिपृताम् पिप्रतु । पिपृहि पिपृतात् पिपृतम् पिपृत । पिपराणि पिपराव पिपराम । अपिपः अपिपृताम् । पपार पप्रतुः पप्रुः । पपर्थ । प्रियात् । पर्ता । परिष्यति । अपरिष्यत् । अपार्षीत् अपार्ष्टाम् ॥ ओहाक् त्यागे ॥ जहाति ॥

सुबो०—पोरुर् । पवर्गात् वकाराद्युत्तरस्य ऋत उर् । यथा वुवूर्षति । य्वोर्विहसे इति दीर्घः । पिपूर्त्तः । द्वेरित्यंतोऽत् । पिपुरति । दिस्योरिति दिप्सिपोर्लुक् । अपिपः । उसि तु गुणः । अपिपरुः । ऋसंयोगादित्यकित्वाद्गुणः । पपरतुः । वृङ्वृञिति वेटो दीर्घः । परिता परीता ॥

तत्त्व०—पोरुर् । धात्ववयवात्पवर्गादिति बोध्यम् । तेन समीर्णमित्यादौ नातिप्रसंगः ॥

द्वेस्तौ ॥२७३॥ द्विरुक्तस्य धातोरातो लोपः ङिति स्वरे ईकारश्च ङिति हसे ॥ जहीतः जहितः जहति । जहातेर्यादादावालोपः । जह्यात् ॥

सुबो०—द्वेस्तौ । द्वौ वाराविति द्विरुच्चारणम् । सुप्रत्ययः द्विरकारि इति । ञिडित्करणे इति ञिः । स्वंतस्य टिलोपः । औणादिके इप्रत्यये ञिलोपः । अत्रानुवृत्त्यैव ईलोपयोर्लाभेऽपि अनंतरत्वादीकारस्यैव ग्रहणं मा भूदित्येतदर्थं तावित्युक्तम् । ननु तर्हि द्वेश्चेति पाठ्यं अनंतरत्वादीश्चालोपोऽनुवर्ततां एवं ङिति हसे लोपः । ङिति स्वरे ईरिति विपर्ययस्यापि संभवात् । तावित्युक्ते तु नातः ईहसे अनयोर्यादृशौ दृष्टौ तावेवाऽत्र स्त इति न दोषः । पक्षे मीहाकोरिति इत्वम् । जहितः । हाको यादादावालोपः ॥

तत्त्व०—द्वेस्तौ । द्वेरित्यस्य पूर्ववत्प्रक्रिया । अनुवृत्त्यैव ईलोपयोर्लाभेऽपि अनन्तरत्वादीकारस्यैव ग्रहण मा भूदित्येतदर्थं तावित्युक्तम् । ओर्वमोरितो लोप । ईहसे इत्यत ईकारस्तस्य हसे इत्यनेन योगाद्धसे ईकारः पारिशेषात्स्वरे लोपः ॥

ईर्वा हौ ॥ २७४ ॥ जहातेर्हौ परे इकार ईकारश्च वा ॥ जहिहि जहीहि जहाहि । अजहात् अजहिताम् अजहीताम् अजहुः । जहौ । दादेरे । हेयात् । अहासीत् ॥ ऋ गतौ ॥ असवर्णे स्वरे इय् । इयर्ति इयृतः इय्रति । इयृयात् । इयर्तु । ऐयः ऐयृताम् ऐयरुः । आर

आरतुः आरुः । अत्यर्तिव्ययतीनामितीट् । आरिथ । आरद् ॥ सृ गतौ ॥ ससर्ति । ससर्थ । स्रियात् । अससरत् ॥ इति परस्मैपदम् ॥

सुबो०—ईर्वा हौ । जहातेर्हौ परे इत्वमीत्वमात्वं च भवति । अत एव भट्टिः प्रायुंक्त । जहिहि जहीहि जहाहि राममार्यामिति । दादेरित्येत्वम् । हेयात् । यमिरमिनमातामितीट्सकौ । अहासीत् । ऋप्रोरिति पूर्वस्येत्वम् । असवर्णे स्वरे इतीय् । इयर्ति । लङि अडागमो दिस्योरिति दिप्सिपोर्लोपः । ऐयः । उसि तु गुणः । ऐयरुः । अत्यर्तिव्ययतीनामिति थपि नित्यमिट् । आरिथ । आशिषि गुणोर्त्तीति गुणः । अर्यात् । हनृत इतीट् । अरिष्यति । सर्तिशास्त्यर्त्तिभ्य इति ङः । ऋवर्णदृशोरिति गुणः । आरत् आरतां आरन् ॥ इति परस्मैपदम् ॥

तत्त्व०—ईर्वा हौ । ई इरिति छेदः । तयोरभावपक्षे आकारः स्थित एव ॥ कृतायामिह टीकायां लोके शंकरशर्मणा । अगमद् ह्वादिमध्यस्थपरस्मैपदसाधनम् ॥ इति परस्मैपदम् ॥

ओहाङ् गतौ ॥ भृञां लुकि ॥२७८॥ डुभृञ्हाङ्माङां पूर्वस्यात इत् लुकि ॥ जिहीते जिहाते जिहते । जहे । अहास्त ॥ माङ् माने ॥ मिमीते । ममे । अमास्त ॥ इत्यात् ॥

सुबो०—भृञां लुकि । बहुवचनेन डुभृञ्हाङ्माङामिति त्रयाणां ग्रहणम् । द्वेरित्यतोऽत् । जिहते । आतोऽनपीत्यालोपः । जहे । जहाते ॥ इत्यात्मनेपदम् ॥

तत्त्व०—कृतायामिह टीकायां लोके शंकरशर्मणा । अगमद् ह्वादिमध्यस्थमात्मनेपदसाधनम् ॥ इत्यात् ॥

डुभृञ् धारणपोषणयोः ॥ बिभर्ति बिभृतः बिभ्रति । बिभृयात् । बिभर्तु । अबिभः । बिभरांचकार । बभर्थ । बभृव बभृम । बभ्रे । बभृढ्वे । भृषीष्ट । अभार्षीत् । अभृत ॥ डुदाञ् दाने ॥ ददाति ॥

सुबो०—डुभृञ् धारणपोषणयोः । ड्वितस्त्रिमक् इति त्रिमक् । भृत्रिमम् । भृञां लुकि इति पूर्वस्येत्वम् । बिभर्ति । बिभृते । बिभृयात् । बिभर्तु । बिभृताम् । दिस्योरिति दिप्सिपोर्लोपः । अबिभः । उसि तु गुणः । अबिभरुः । अबिभृत । भीह्रीभृहुवामिति वाम् । बिभरांचकार । बिभरांचक्रे । पक्षे बभार । बभ्रे । यादादौ पे इति रिङ् । भ्रियात् । उरिति न गुणः । भृषीष्ट । भर्त्ता । हनृत इतीट् । भरिष्यते । अभरिष्यत् । अभरिष्यत । धातोर्नामिन इति वृद्धिः । अभार्षीत् । लोपो ह्रस्वादिति सिलोपः । अभृत ॥

तत्त्व०—भृञामिति । कपिञ्जलाधिकरणन्यायेन धातुत्रयमेव लभ्यत इत्याह । डुभृञ्हाङ्माङामिति । डुभृञ् । ड्वितस्त्रिमगर्थो डुः ॥

दादेः ॥ २७६ ॥ द्विरुक्तानामपिद्दाधामातो लोपो ङिति ॥ दत्तः ददति । दत्ते । ददातु ॥

सुबो०—दादेः । द्वेरित्यनुवृत्तम् । द्वे स्त इत्यस्यापवादो येन नाप्राप्तिन्यायात् ॥

तत्त्व०—दादेरिति । द्वे स्तावित्यस्यापवादो येन नाप्राप्तिन्यायात् ॥

दां हौ ॥ २७७ ॥ अपिद्दाधामेत्वं पूर्वस्य च लोपो हौ ॥ देहि । अददात् । ददौ । ददिथ ददाथ । देयात् । अदात् । अदित अदिषाताम् ॥ डुधाञ् धारणपोषणयोः ॥ दधाति ॥

सुबो०—दां हौ । बहुवचनेन धाञो ग्रहणम् । लिटि आतो णवित्यौकारः । ददौ । आतोऽनपीत्यालोपः । ददे । दादेरित्येत्वम् । देयात् । दादेः पे इति सेर्लुक् । अदात् । आति तु अपिद्दाधास्थामितीत्वं स्यो लोपो ह्रस्वादिति सिलोपः । अदित । डुधाञ् धारणपोषणयोः । दानेऽपीत्येके ॥

तत्त्व०—दामिति । बहुवचनेन दारूपाणां ग्रहणं धाग्रहणं च ॥

पूर्वस्य ङिति झसे धः ॥ २७८ ॥ धाञ्पूर्वस्य दकारस्य धो भवति ङिति झसे परे ॥ धत्तः दधति । धत्ते । धेहि । अधात् । धेयात् । अधित । अधिषाताम् ॥ णिजिर् शौचपोषणयोः ॥

सुबो०—पूर्वस्य ङिति झसे धः । धाञ्धातोरेवेत्यर्थः । झसे किम् । दधति, दधाति । दादेरित्यालोपे तथोर्ध इति धत्वं न । दधातेर्नेत्युक्तत्वात् । धत्तः । धत्ते । दादेरित्यालोपः । दध्यात् । दधीत । दधातु । धत्ताम् । अदधत् । अधत्त । दधौ । दधे । धेयात् । धासीष्ट । धाता । धास्यति । धास्यते । अधास्यत् । अधास्यत । दादेः पे इति सिलोपे । अधात् । अपिद्दाधास्थामितीत्वम् । अधित ॥

तत्त्व०—धत्त इति । तथोर्द्ध इत्यत्र वावसान इत्यतो वानुवृत्तेर्व्यवस्थया तथात्वभावः ॥

निजां गुणः ॥ २७९ ॥ णिजिविजिविषां पूर्वस्य गुणो लुकि ॥ नेनेक्ति नेनिक्तः नेनिजति । नेनेक्षि । नेनिक्षे । नेनिज्यात् । नेनेक्तु । नेनिग्धि ॥

सुबो०—निजां गुणः । बहुवचनमाद्यर्थम् । बहुवचनेन त्रयाणां ग्रहणम् । णिजिर् शौचपोषणयोः । विजिर् पृथग्भावे । विष्लृ व्याप्तौ । एषां पूर्वस्य गुणो लुकि ॥

द्वेः स्वरेऽपि नोपधागुणः ॥ २८० ॥ द्विरुक्तस्य धातोः पिति विषये स्वरे परे उपधाया गुणो न ॥ नेनिजानि । अनेनेक् अनेनेग् । निनिजिषे । निनेज निनिजे । निक्षीष्ट । अनिजत् । अनैक्षीत् अने-

क्ताम् । अनिक्त ॥ विजिर् पृथग्भावे ॥ वेवेक्ति । विवेजिथ । विक्षीष्ट । अविजत । अवैक्षीत् । अविक्त ॥ विष्लृ व्याप्तौ ॥ वेवेष्टि । विविषीध्वे । विक्षीष्ट । अविषत् । तनि हशषान्तात्सक् । अविक्षत् अविक्षाताम् अविक्षन्त ॥ इत्युभयपदप्रक्रिया ॥ इति जुहोत्यादयः ॥

सुबो०—द्वेः स्वरेऽपि नोपधागुणः । द्विरुक्तस्य धातोरुपधाया गुणो न चतुर्षु पिति स्वरे । द्विरुक्तस्य किम् । द्वेषाणि । स्वरे किम् । वेवेष्टि । चतुर्षु किम् । निनेज । नेनेक्ति । नेनिक्ते । नेनिज्यात् । नेनिजीत् । नेनेक्तु नेनिक्तां । दिस्योरिति दिप्सिपोर्लोपः। अनेनेक् । अन ऊस । अनेनिजुः। अनेनिक्त । निनेज । निनिजे । निज्यात् । सिस्योगिति न गुणः । निक्षीष्ट । नेक्ता । नेक्ष्यति । नेक्ष्यते । अनेक्ष्यत् । अनेक्ष्यत । इरितो वेति वा ङः । अनिजत । अनिटो नामिति वृद्धिः । अनैक्षीत् । आति तु झसादिति सिलोपः। अनिक्त । अनिक्षाताम् । विजिर् पृथग्भावे । विवेजिथ । अत्र विजेरिडादिप्रत्यय इति ङित्वं न । ओविजी भयचलनयोरित्यस्यैव तत्र ग्रहणात् । णिजिविजी रुधादावपि । विष्लृ व्याप्तौ । व्याप्तिः कात्स्न्र्यम् । लित्पुषादेरिति ङः । अविषत् । अति तु हसषांतादिति सक् । षढोरिति कः । अविक्षत । आति सको लोप इति स्वरे अल्लोपः । अविक्षातां अविक्षंत ॥ इत्युभयपदप्रक्रिया ॥

तत्त्व०—कृतायामिह टीकायां लोके शंकरशर्मणा । सक्षितौ बालबोधार्थ जुहोत्यादिगणोऽगमत् ॥

इति जुहोत्यादयः ॥ ३ ॥

---

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ दिवादेर्यः ॥ २८१ ॥ कर्त्तरि चतुर्षु ॥ अपोऽपवादः । य्वोर्विहसे । दीव्यति । दीव्येत् । दिदेव । दीव्यात् । अदेवीत् ॥ षिवु तन्तुसन्ताने॥ सीव्यति । सिवादेरड्व्यवाये वा षः। न्यषेवीत् न्यसेवीत्॥ सिवु गतिशोषणयोः॥ सीव्यति । सिषेव ॥ ष्ठिवु निरसने ॥ ष्ठीव्यति॥ ष्णुसु अदनादानदर्शनेषु ॥ सुष्णोस ॥ ष्णसु निरसने ॥ ष्णस्यति ॥ क्नसु कौटिल्ये दीप्तौ च ॥ चक्नसिथ । अक्नासीत् अक्नसीत् ॥ व्युषु प्लुषु दाहे ॥ वुव्योष ॥ नृती गात्रप्रक्षेपे ॥ नृत्यति । ननर्त ॥

सुबो०—दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिषु । उदित्करणं क्त्वाप्रत्यये इड्विकल्पार्थं क्तक्तवत्वोरनिडर्थं च । क्ङिति झसे कौ ष्मे

चेत्यूः । द्यूत्वा । देवित्वा । द्यूतेन दीव्यंति माणवकाः । क्रीडंतीत्यर्थः । शत्रुं दीव्यति । विजिगीषतीत्यर्थः । कांतिरिच्छा । द्युतेः पृथग्ग्रहणात् । दिवादेर्यः । दिव आदिर्यस्य स दिवादिस्तस्माद्यप्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु परतः । य्वोरिति दीर्घः । दीव्यति । षिवु तंतुसंताने । आदेः ष्णः स्नः इति सः । सीव्यति । सिवादेरड्व्यवाये वा षः । उपसर्गस्थान्निमित्तात्परस्य सिवादेः सस्याड्व्यवधाने वा षः स्यात् । प्रादेश्चेत्यत्र सिवादिरुक्तः । नृती गात्रविक्षेपे । नर्तने इत्यर्थः । इदित्करणमादीदित इत्यनेन क्तक्तवत्वोरिण्निषेधार्थम् । यद्यपि नृतवृदेतीटो विकल्पितत्वात् क्वचिद्वेट् इत्यनेनैवेष्टं सिद्ध्यति तथापि क्वचिद्वेट् इति सूत्रस्यानित्यत्वज्ञापनार्थमिदित्करणम् । तेन धावु गतिशुद्ध्योरित्यस्मात् क्तप्रत्यये इति च धावितमिभराजधियेत्यादि सिद्धम् ॥

तत्त्व०—दिवोति । व्यवहारः क्रयादिः । उकारः क्तप्रत्यये इड्विकल्पार्थः । दिवादेर्य दिव आदिर्यस्य तथा तस्मात् । अपोऽपवाद इति । अपो गणविशेषाकांक्षाभावात्प्राप्तिः । दीव्यतीति । यत्प्रत्ययस्य ङित्त्वाद्गुणो न ॥

नृततृदछृदचृतकृद्भ्योऽसेस्सादेरिड्वा॥२८२॥ नर्तिष्यति नर्त्स्यति । अनर्तीत् ॥ त्रसी उद्वेगे ॥ भ्राशभ्लाशेति वा यः । त्रस्यति त्रसति । तत्रास तत्रसतुः ॥ कुथ पूतीभावे ॥ कुथ्यति । चुकोथ । चुकोथिथ ॥ पुथ हिंसायाम् ॥ पुथ्यति । अपोथीत् ॥ गुध परिवेष्टने ॥ गुध्यति । अगोधीत् ॥ क्षिप प्रेरणे ॥ क्षिप्यति । क्षेप्ता । अक्षेप्सीत् ॥ पुष्प विकसने ॥ पुष्प्यति । पुपुष्प ॥ तिम तीम ष्टिम ष्टीम आर्द्रीभावे ॥ तिम्यति । तीम्यति । तितेम । तिष्टीम ॥ व्रीड लज्जायाम् ॥ व्रीड्यति । विव्रीड ॥ इष गतौ ॥ इष्यति । इयेष ईषतुः । एषिता एष्टा । ऐषीत् ॥ षह षुह तृप्तौ ॥ सह्यति । ससाह सेहतुः सेहुः। असहीत् । सुह्यति॥ जॄषिर् झॄष वयोहानौ॥ जीर्यति । जजरतुः जेरतुः । जीर्यात् । जरिता जरीता । ऋवर्णदृशोरित्यनेन गुणः। अजरत्। अजारीत् । झीर्यति । जझरतुः। अझारीत् ॥ शो तनूकरणे ॥

सुबो०—नृततृदछृदचृतकृद्भ्योऽसेः सादेरिड्वा । एभ्यः परस्य सिभिन्नस्य सादेः प्रत्ययस्येड्वा स्यात्। उतृदिर् हिंसानादरयोः। उच्छृदिर् दीप्तिदेवनयोः । कृती छेदने । असेरित्युक्तत्वादिह नित्यमिट् । अनर्तीत् । सप्रत्यये निनर्तिषति निनृत्सति । भ्राशभ्लाशेति वा यः । त्रस्यति त्रसति । फण राजृ इत्येत्वपूर्वलोपौ । त्रेसतुः ।

अतो हलादेरिति वा वृद्धिः । अत्रासीत् अत्रसीत् । कुथ पूतीभावे । पूतीभावः पवित्रभवनम् । कुथ्यति भूमिः । पवित्रीभवतीत्यर्थः । पुष्प विकसने । पांतोऽयम्। शतृप्रत्यये पुष्पत्। पचाद्यप्रत्यये पुष्पम् । संज्ञायां कप्रत्यये पुष्पकम् । व्रीड नोदने लज्जायां च । नोदनं प्रेरणम् । गुरोर्हलादित्यङ्प्रत्यये आवत इत्याप् । व्रीडा । घञि तु व्रीडः । अत एव " व्रीडादिवाभ्यासगतैर्विलिल्ये " इति माघः । " व्रीडमावहति मे स संप्रतीति " कालिदासः । सह षुह तृप्तौ । तृप्तिस्तर्पणम् । इषुसहेतीड्विकल्पस्त्वस्य न भवति सहेत्यपा निर्देशात् । नपुंसकभावे क्तप्रत्यये सुहितं तृप्तिः । जॄषिर् वयोहानौ । षित्वात् षिद्भिदामित्यङ्प्रत्यये जरा । ऋत इर् इतीर् । य्वोरिति दीर्घः । जीर्यति । ऋसंयोगाज्जणादीरित्यकित्वाद्गुणे कृते शशददेति गुणशब्देन भावितस्य निषेधाल्लोपः । पचामित्यस्याऽप्रवृत्तौ फणराजृ इत्येत्वपूर्वलोपविकल्पः । जेरतुः जजरतुः । वृङ्वृञृॠदंतानामिति वा दीर्घः । जरिता जरीता । इरितो वेति वाङ् । ऋवर्णदृशोरिति गुणः । अजरत् । पक्षे णित्प इति णित्वाद्धातोर्नामिन इति वृद्धिः । अजारीत् ॥

तत्त्व०—नृतेति । उत्तदिर् हिंसानादरयोः । उच्छृदिर् दीप्तिदेवनयोः । त्रस्यति । भ्राशेति वा यः पक्षेऽप्। पुष्प विकसने । पान्तः । तथा नभः पुष्प्यतु कोरकर्णेति श्रीहर्षः । व्रीडा । व्रीडादिवाभ्यासगतैर्विलिल्ये इत्यत्र घञ् । मदाक्षं ह्रीत्रपा व्रीडेत्यत्र गुरोश्चेत्यः । षह अत्रेपसहेतीड्विकल्पः कस्यचिन्मते न भवति । अवन्तनिर्देशाद्दैवादिकस्यैव तत्र ग्रहणात् । महान्तस्तु विकल्प मन्यंते । अकारस्योच्चारणार्थत्वात् । जॄष् । षकारो जरेत्यत्राङर्थः । अजरत् । ऋवर्णदृशोरिति गुण ॥

**य्योः ॥ २८३ ॥ यप्रत्यये परे धातोरोतो लोपः ॥ श्यति । शशौ । शाता । अशात् । अशासीत् ॥ छो छेदने ॥ छ्यति । अच्छात् । अच्छासीत् ॥ षो अन्तकर्मणि ॥ स्यति । सेयात् । असात् । असासीत् ॥ दोऽवखंडने ॥ द्यति । देयात् । अदात् ॥ राध साध संसिद्धौ ॥**

सुबो०—य्योः । यि ओरिति च्छेदः । धातोरोतो लोपः स्यात् दिवादिविकरणे ये परे । तेन लव्यमित्यादौ न । शाछेति वा सेर्लुक् । अशात् । लुगभावे यमिरमीतीट्सकौ । अशासीत् । षोऽतकर्म्मणि । अंतकर्म नाशः । दादेरे इत्येत्वम् । सेयात् । राघवस्य शरैर्घोरैर्घोरं रावणमाहवे इत्यत्र राघवेति संबोधनम् । स्येति लोटो मध्यमस्यैकवचनांतम् । दादेरित्येत्वम् । देयात् । उपसर्गस्थान्निमित्तान्नेरिति णत्वम् । प्रणिदाता । दादेः पे इति सिलुक् । अदात् ॥

तत्त्व०—य्योरिति । यि ओरिति छेद । विकरणप्रकरणत्वाद्दिवादेर्य इति विहित एव गृह्यते । न त्वन्यः । तेन लव्यामित्यादौ नातिप्रसगः । षो । अन्तकर्म नाशः ॥

**राधोऽकर्मकादेव यः ॥ २८४ ॥ राध्यति । रराधिथ । राद्धा ।**

-रात्स्यति । अरात्सीत् ॥ व्यध ताडने॥ ग्रहां क्ङिति च । विध्यति । विव्याध विविधतुः । विव्यधिथ विव्यद्ध । व्यद्धा । अव्यात्सीत् ॥ पुष पुष्टौ ॥ पुष्यति । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादित्वात् ङः । अपुषत् ॥ शुष शोषणे ॥ शोष्टा । शोक्ष्यति । अशुषत् ॥ तुष तुष्टौ ॥ तोष्टा । तोक्ष्यति । अतुषत् ॥ दुष वैकृत्ये ॥ दोष्टा । अदुषत् ॥ श्लिष् आलिंगने ॥ श्लेष्टा ॥

सुबो०–राधोऽकर्म्मकादिव यः । अकर्म्मकाद्राधेर्यप्रत्ययः स्यात् सकर्म्मकात्तु न । यन्मह्यमपराध्यति । द्रुह्यतीत्यर्थः । विराध्यतं क्षमेत कः । द्रुह्यंतमित्यर्थः । राध्यत्योदनः । सिध्यतीत्यर्थः । अकर्म्मकात् किम् । शत्रुमपराध्नोति । हिनस्तीत्यर्थः। राध संसिद्धौ हिंसायां च । स्वादिश्चुरादिश्चायम् । राधो हिंसायामित्यनेनैत्वपूर्वलोपाविह न । हिंसार्थकस्य सकर्म्मकतया दैवादिकत्वाऽयोगात् । ग्रहामिति संप्रसारणम् । विध्यति । लित्पुषादेरिति ङः । अपुषत् । षढोरिति कत्वं षत्वं च । शोक्ष्यति ॥

आलिङ्गने श्लिषेः सक् ॥ २८९ ॥ ङोऽपवादः ॥ अश्लिक्षत्कन्यां चैत्रः । अनालिंगने तु, समश्लिषज्जतुकाष्ठम् ॥ ञिष्विदा गात्रप्रक्षरणे ॥ स्वेत्ता । अस्विदत् ॥ क्रुध क्रोधे ॥ क्रोद्धा । अक्रुधत् ॥ क्षुध बुभुक्षायाम् ॥ क्षोद्धा । अक्षुधत् ॥ शुध शौचे ॥ शोद्धा । अशुधत् ॥ सिधु संराद्धौ ॥ सेद्धा । असिधत् ॥ रध हिंसायां च ॥ रध्यति । ररन्ध ररन्धतुः । ररन्धिथ ररद्ध । ररन्धिव रेध्व । ररन्धिम रेध्म ॥

सुबो०–आलिंगने श्लिषेस्सक् । अनिटः श्लिषेः सक् प्रत्ययः स्यात् आलिंगनार्थे । नान्यत्र । प्राणिकर्तृकमुपगूहनमालिंगनम् । लित्पुषादेरित्यस्यापवादः । अनिटः किम् । श्लिषां दाहे इति सेटो भौवादिकस्य मा भूत् । अश्लेषीत् । हसषांतादिति सकि सिद्धे पुनः सको विधानं नियमार्थम् । तेन कर्म्मणि आतां प्रभृतिषु परतोऽनालिंगने सेरेव न तु सक् यथा इण्तनीतीण् । अश्लेषि आश्लिक्षातां अश्लिक्षत । अश्लिष्ठाः अश्लिक्षाथाम् अश्लिड्ढ्वम् । अश्लिक्षि अश्लिक्ष्वहि अश्लिक्ष्महि । ञिष्विदा गात्रप्रक्षरणे । गात्रप्रक्षरणं घर्मस्रुतिः । ञीदिति न्यासकारः। नेति हरदत्तः । ञीतां तक् वर्तमानेऽपीति तक् । आदीदिन इति नेट् । स्विन्नः। भावे कर्तरि चादित इतीट् वा । स्विन्नम् । स्वेदितम् । क्षुध बुभुक्षायाम् । भोक्तुमिच्छा बुभुक्षा । अनिडयम् । कथं तर्हि क्षुधित इति । क्विंतादिजो जातार्थे इतीत् प्रत्यय इति माधवः। वस्तुतस्तु वसिक्षुध्योरिडिति वक्ष्यते । षिधु संराद्धौ । संराद्धिर्निष्पत्तिः । उदितः क्त्वा वेति

सुबो०–चह चय परिकल्कने मित् । परिकल्कनं दंभः शाठ्यं च । अदंतेषु कथादिषु वक्ष्यमाणस्य तु अदंतत्वेनाग्लोपित्वान्नाङ्कार्यम् । अचवहत् ॥

तत्त्व०–परिकल्कने इति । परिकल्कनं दंभः शाठ्यं च । कत्थनमित्यन्ये ॥

रह त्यागे मित् ॥ रहयति । अरीरहत् ॥

सुबो०–रह त्यागे मित् । कथादेस्तु अररहत् ॥

बल प्राणने मित् ॥ बलयति । अबीबलत् ॥

चिञ् चयने मित् ॥

सुबो०–चिञ् चयने मित् । रचनायां मिदयम् ॥

चिस्फुरोर्णावात्वं वा ॥ ३४६ ॥

सुबो०–चिस्फुरोर्णावात्वं वा । अनयोरात्वं वा स्यात् णिमत्यये परे ॥

रातो णौ पुक् ॥ ३४७ ॥ ऋधातोरादंतस्य च पुक् णौ ॥ चपयति । अचीचपत् । चययति । अचीचयत् । स्वार्थे णौ ज्ञपादिभ्योऽन्ये मितो न ॥ कॄत संशब्दने ॥

सुबो०–रातो णौ पुक् । आ च आश्चानयोः समाहारो रात् तस्य आत्वे पुकि ह्रस्वे । चपयति । आत्वाभावे चययति । स्वार्थे णौ ज्ञपादिभ्योऽन्ये मितो न । तेन शमादीनाममंतत्वप्रयुक्तं मित्त्वं न । मुख्यमते पंच ज्ञपादयः । मतांतरे सप्त । कॄत संशब्दने ॥

तत्त्व०–रातो णाविति । आ च आश्च रात् तस्य रातः ऋ इत्यनेनोभयोरपि ग्रहणं तेन ऋच्छंतमिति ऋच्छति वा प्रेरयतीति विग्रहे अर्पयतीति भवति । ज्ञपादिभ्य इति । सप्तभ्य इति मतान्तरं बोध्यम् । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न ॥

धातोरुपधाया ऋत इर् ॥ ३४८ ॥ कीर्तयति । अचीकृतत् अचिकीर्तत् ॥

सुबो०–धातोरुपधाया ऋत इर् । ननु ऋत इर् इति सूत्रे धातोर्ऋत इर् व्याख्याने सिद्धमिष्टं किमनेन सूत्रेणेति चेन्मैवं तथाहि सति ऋकारीयति इत्यत्रापि इरः प्रसंगः स्यात् । उपधाऋवर्णस्य ऋद्वेति पक्षे अङि लघौ ह्रस्व इति इत्वे कृते लघोर्दीर्घ इति दीर्घः । अचीकृतत् । पक्षे अचिकीर्तत् ॥

आकुस्मादात्मनेपदिनः ॥ चित् सञ्चेतने ॥ चेतयते । अचीचितत ॥ दंशि दंशने ॥ दंशयते । अददंशत । आकुस्मीयमात्मनेपदं णिसन्नियोगेनैव । दंशति । नलोपो न संजिसाहचर्यात् । भ्वादेरेव तत्र

ग्रहणात् ॥ तत्रि कुटुम्ब धारणे ॥ तन्त्रयते । कुटुम्बयते । अततन्त्रत । अचुकुटुम्बत । अचुकुटुम्बत्॥ मत्रि गुप्तभाषणे॥ मन्त्रयते॥ शम लक्ष आलोचने ॥ शामयते । लक्षयते । अशीशमत । अललक्षत ॥ दिवु परिकूजने ॥ देवयते ॥ गॄ विज्ञाने ॥ गारयते । अजीगरत ॥ विद चेतनाख्याननिवासेषु ॥ वेदयते । अवीविदत ॥

सुबो०–आकुस्मादात्मनेपदिनः । कुस्मनाम्नो वेति वक्ष्यते तमभिव्याप्येत्यर्थः । परगामिफलार्थमिदमात्मनेपदम् । चित संचेतने । संचेतनं मूर्च्छाद्यवस्थानिवृत्त्युत्तरकालकं ज्ञानम् । शम् लक्ष् आलोचने । ननु निशामय तदुत्पत्तिमिति कथं संगच्छते । आकुस्मीयत्वादात्मनेपदे निशामयस्वेति रूपस्य सर्वसंमतत्वादिति । यदि शमु उपशमे इत्यस्मात् ञिप्रत्ययस्तर्ह्यमंतत्वान्मित्वे सति ह्रस्वेन भाव्यम् । अत्राहुः। स्वार्थञ्यंतादस्माद्धातोः प्रेरणे इति ञिप्रत्यये निशामयेति रूपं जानीहि । न चार्थासंगतिरिति वाच्यम् । "निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते ।" इति सिद्धांतात् । स्वार्थे ञौ ज्ञपादिभ्य इति मित्त्वनिषेधः । शामयते । विद चेतनाख्याननिवासेषु । " सत्तायां विद्यते ज्ञाने वेत्ति वित्ते विचारणे । विंदते विंदति प्राप्तौ श्यन्लुक्श्नमुशेष्विदं क्रमात् ॥ "

तत्त्व०–शामयत इति । आकुस्मयित्वादात् । निशामय तदुत्पत्तिमित्यत्र तु निवृत्तप्रेरणात् प्रेरण इति ञौ बोध्यम् । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः ॥

कुस्मनाम्नो वा ॥ ३४९ ॥ कुस्मेति धातुः कुत्सितस्मयने अथवा कुस्मेति नाम ततो ञिः ॥ कुस्मयते । अचुकुस्मत ॥ कण निमीलने ॥ काणयति । अचीकणत् अचकाणत् ॥

सुबो०–कुस्मनाम्नो वा । कुपूर्वात्स्मयतेर्डप्रत्यये टिलोपे समासे च कृते निष्पन्नं कुस्मेति नाम । कण निमीलने । एकनेत्रनिमीलने एवायम् । शब्दस्वभावात् । काण्यादीनां कणरणभणेति सूत्रेण अङि लघौ ह्रस्व इति ह्रस्वो विकल्प्यते । अचीकणत् अचकाणत् ॥

तत्त्व०–निमीलने स्वभावादेकनेत्रस्यैव ॥

नवगण्यामुक्तेभ्यो हिंसार्थेभ्यः स्वार्थे ञिः ॥ ३५० ॥ हिंसि हिंसायाम् ॥ हिंसयति ॥ ज्ञा नियोगे ॥ आज्ञापयति । आजिज्ञपत् ॥ भू मिश्रीकरणचिन्तनयोः ॥ भावयति । अबीभवत् ॥ लोकृ लोचृ परिभाषणे ॥

सुबो०–नवगण्यामुक्तेभ्यो हिंसार्थेभ्यः स्वार्थे ञिः । नवगण्यामुक्ता हिंसार्थाः स्वार्थे ञिप्रत्ययं लभते । घातयति हंतीत्येतौ समानार्थौ । भू मिश्रीकरणचिंतनयोः। भावयति मिश्रीकरोति चिंतति वेत्यर्थः ॥

न रितः॥३८१॥ ऋदितः शासेश्चाङ्ञ्युपधाया ह्रस्वो न ॥ अलुलोकत् । अलुलोचत् ॥ धूञ् कम्पने ॥

सुबो०–न रितः । ऋ इद्यस्य स रित् तस्य । शासु अनुशिष्टौ ॥

धूञ्प्रीञोर्नुक् ञौ॥३८२॥ धूनयति । अदुधूनत् ॥ प्रीञ् तर्पणे ॥ प्रीणयति । अपिप्रीणत् ॥ अथादन्ताः ॥ कथ वाक्यप्रबन्धने ॥ यतः । अल्लोपस्थानित्वेन न वृद्धिः । कथयति ॥

सुबो०–धूञ्प्रीञोर्नुगागमः स्यात् ञिप्रत्यये । धूञ् कंपने । प्रीञ् तर्पणे । धूञ् धातुः स्वादौ क्र्यादौ तुदादौ चुरादौ च स्वादौ ह्रस्वश्च । तथा च कविरहस्ये काव्ये । " धूनोति चंपकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चंपकपुष्परेणून् यत्कानने धवति चंदनमंजरीषु ॥ " अथादंताः । वक्ष्यमाणेषु धातुषु अंत्यावयवोऽकारो विवक्षितो नतूच्चारणार्थ इत्यर्थः । कथ वाक्यप्रबंधे । यत इत्यल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति ॥

तत्त्व०–कथेति । अदन्तप्रयोजनमाह । अल्लोप इति ॥

अग्लोपिनो नाङ्कार्य्यम् ॥ ३८३ ॥ अचकथत् ॥ वर ईप्सायाम्॥ वरयति । अववरत् ॥ गण संख्याने ॥ गणयति । गणेः पूर्वस्य ईद्वाङ्परे ञौ । अजीगणत् ॥ स्तनगदी देवशब्दे । स्तनयति । गदयति । अतस्तनत् । अजगदत् ॥ पत गतौ ॥ वा ञ्यन्तः। पतयति पतति । पताञ्चकार पतयांचकार । अपपतत् । अपतीत् । वादन्त इत्येके। पातयति । अपीपतत्॥ रच प्रतियत्ने॥ रचयति॥ सूत्र वेष्टने ॥ सूत्रयति । असुसूत्रत् ॥ मूत्र प्रस्रवणे ॥ मूत्रयति ॥ कल गतौ संख्याने च ॥ कलयति ॥ स्पृह ईप्सायां च ॥स्पृहयति । अपस्पृहत्॥ भाम क्रोधे ॥ भामयति । अबभामत् ॥ सूच पैशुन्ये॥ सूचयति॥ ऊन परिहानौ ॥ ऊनयति । ञिनिमित्तः स्वरादेशो द्वित्वे कर्तव्ये स्थानिवत् । औननत् ॥ अर्थङ् याचने ॥ अर्थयते । आर्तथत ॥ संग्राम युद्धे ॥ असंसंग्रामत ॥ अन्ध दृष्ट्युपघाते ॥

अन्धयते । अन्धयति । आन्दधत् ॥ अङ्क अङ्ग पदे लक्षणे च ॥ आञ्चकत् । आञ्जगत् ॥ इति चुरादयः ॥

सुबो०–अय्वृलोपिनो नाङ्कार्यम् । अश्च इश्च उश्च ऋ च तेषां समाहारोऽय्वृ अय्वृणो लोपो अस्यास्तीति अय्वृलोपी तस्य अइउऋलोपिनो धातोरङ्गनिमित्तं कार्यं न स्यात् । तत्किम् । अङि लघौ ह्रस्व इत्युपधाह्रस्वत्वं पूर्वस्येत्वं च लघोर्दीर्घ इति दीर्घः अङ्कार्यम् । पत गतौ इति वा ण्यंतः वाऽदंत इत्येके । आद्ये पतयति पतति । अनेकस्वरत्वात्कासादिप्रत्ययादित्याम् । पतांचकार । पत इत्यल्लोपः । अपतीत् । द्वितीये तु । पातयति । अपीपतत् । स्तनगदी देवशब्दे । स्तनादेर्ण्यंतादित्नुरितीत्नुः । " स्तनयित्नुर्बलाहकः " । सप्रत्यये तु तिस्तनयिषति । रच प्रतियत्ने । प्रतियत्नो गुणाधानम् । स्पृह ईप्सायाम् । आप्तुमिच्छा ईप्सा । भाम क्रोधे । अबभामदित्यत्राल्लोपस्य स्थानिवत्त्वात् ञौ अङि लघौ ह्रस्व इति ह्रस्वो न । सूच पैशुन्ये । पिशुनो दुर्जनस्तत्कर्म पैशुन्यम् । लुङि असुसूचत् । ऊन परिहाने । ञिनिमित्तः स्वरादेशो द्वित्वे कर्तव्ये स्थानिवत् । ञिप्रत्ययो निमित्तं यस्य ईदृशः । स्वरस्थाने आदेशः स स्थानिना तुल्यः स्थानिवद्भवति द्वित्वे कर्तव्ये।स्वरादेः पर इत्यनेन नशब्दस्य द्वित्वम् । उत्तरखंडे यत इति अल्लोपः । औननत् । अर्थङ्ग याचने । कथादिषु उपधावृद्धिदीर्घपूर्वत्वविरहेण भामप्रभृतीनामुपधाह्रस्वस्य निषेधेन गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्तनेनादंतत्वं सार्थकम् । इह त्वदंतत्वे प्रागुक्तफलाभावात् । किमर्थमदंतत्वमुच्यते । वोपदेवस्तु धातोर्नामिन इति वृद्धौ कृतायां रातो ञौ पुकि अर्थापयते इति रूपमाह । शाकटायनस्तु कथादीनां सर्वेषां पुकमाह । तन्मते कथापयति । गणापयतीत्यादि ॥ इति चुरादयः ॥

तत्त्व०–प्रयोजनान्तरमाह । अय्वृलोपिन इति । अश्च उश्च इश्च ऋ च ते तथा तान् लोपयति स तथा तस्य अङ्कार्यं न द्वित्वे सतीकारदीर्घत्वादि न । गण सङ्ख्याने । सङ्ख्यानिमित्तो ज्ञानविशेषः अंकपदं सङ्ख्यानमेकत्वादि तेन च तन्निष्ठः क्रियाविशेषो लभ्यते । लक्षणं चिह्नकरणम् ॥ कृतायामिह टीकायां लोके शंकरशर्मणा । इयं दशगुणी पूर्णा माननीया मनीषिभिः ॥

इति चुरादयः ॥ १० ॥

---

धातोः प्रेरणे ॥ ३९४ ॥ धातोः प्रयोजकव्यापारेऽर्थे ञिप्रत्ययः॥ भवंतं प्रेरयति भावयते । भावयाञ्चकार ॥

सुबो०–धातोः प्रेरणे । प्रयोजकः प्रेरकः स च चेतनाचेतनसाधारण्येन विवक्षितः स च क्वचित्सिद्धः क्वचित् फलरूपः। देवदत्तः पाचयति गमयतीत्यादौ सिद्धः । भिक्षा वासयति संग्रामो वासयतीत्यादौ तु फलरूपः । तस्य व्यापारः प्रेरणं भृत्या-

देर्निकृष्टस्य प्रवर्त्तना प्रेरणमाज्ञेत्यर्थः । धातोर्ञिः प्रत्ययः स्यात्प्रेरणेऽर्थे । ननु यदि धातोः प्रेरणे ञिर्भवति लोट् च तदा ञेर्लोटश्च पर्यायता स्यात् ततश्चेदानीं पृच्छतु भवानिति वक्तव्ये प्रच्छयतीति ञिप्रत्ययेनापि प्रयुज्येतेति चेन्नैवम् । प्रयोज्यप्रवृत्त्युपहित, या प्रयोजकनिष्ठप्रवृत्तिः सा ञिप्रत्ययस्यार्थः । प्रयोज्यवृत्त्यनुपहिताद्प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः । उक्तं च । " द्रव्यमात्रस्य तु प्रैषे प्रच्छादेर्लोट् विधीयते । सक्रियस्य यदि प्रैषस्तदा स विषयो णिचः ॥ " भवंतं प्रेरयति भावयति । ञित्स्वरितेत उभे इत्युभयपदम् । भावयते । भावयेत् । भावयेत । भावयतु । भावयताम् । अभावयत् । अभावयत । कासादिप्रत्ययादित्याम् । भावयांबभूव । भावयांचक्रे । ञेरिति ञिलोपः । भाव्यात् । भावयिषीष्ट । भावयिता । भावयिष्यति । भावयिष्यते । अभावयिष्यत् । अभावयिष्यत ॥

तत्त्व०—दशगणीं निरूप्य स्वार्थञिप्रसगात्प्रेरणार्थं ञि दर्शयति । धातो. प्रेरणे इति । प्रेरणं चानेकविधम् प्रेरणाध्येषणा तत्समर्थाचरणभेदात् । तत्र भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेरणमाज्ञेति यावत् । गुर्वादेः प्रवर्त्तनाध्येषण प्रार्थनेति यावत् । तत्समर्थाचरण तदनुकूलव्यापारकरणं तच्चानुमित्यपदेशानुग्रहोन्नदानादिरूपम् । तत्र यस्यानुमिति विनार्थो निवर्त्तते तस्य राजादेरनुमित्या प्रयोजकत्वम् । वैद्यादेस्तूपदेशेन । पलायमानं निरोधेनानुग्रहेण चौरस्यान्नदानेन सर्वश्चायं प्रकरणादिलभ्यः । सर्वत्रानुगतप्रकरणमात्र व्यर्थम् । अथ पृच्छतु मां भवानित्यत्रातिव्याप्ति चेदुच्यते । प्रयोज्यप्रवृत्त्युपहितप्रयुक्तिर्ण्यर्थो । केवला तु लोडर्थो इति । उक्तं च । "द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते । सक्रियस्य यदा प्रैषस्तदा स विषयो णिचः ॥ " इति । अथ कथ भिक्षा वासयन्तीति कारीषो अग्निरध्यापयतीत्यत्र ञिः भिक्षादेश्च चेतनतया प्रेरणस्य च चेतनधर्मत्वात् । इति चेत् शृणु । अत्राप्यानुकूल्याचरणमेव प्रयोजकव्यापारित्वेनाध्यारोप्यते यतो भिक्षा अपि प्रचुरा व्यजनावाप्त्याश्च लभ्यमाना वा समयुज्यते । तथा कारीषो अग्निरेकान्ते निशीते प्रज्वलितः शीतकृतमुपद्रवमध्ययननिरोधिनमपनयनाध्ययनेनानुकूलो भवतीति । ञित्वादुभयपदमाह । भावयतीत्यादि ॥

अङ्गसयोः पूर्वस्योकारस्येत्वं पवर्गयलजकारेष्ववर्णपरेषु परतः ॥ ३९५ ॥ अबीभवत् ॥ मूङ् बन्धने ॥ मावयति । अमीमवत् । यावयति । अयीयवत् । अरीरवत् । लावयति । अलीलवत् । अजीजवत् ॥

सुबो०—अङ्गसयोः पूर्वस्योकारस्येत्वं पवर्गयलजकारेष्ववर्णपरेषु परतः । द्वित्वरूपस्य उत इत्वं भवति । अवर्णः परो येभ्यस्तेऽवर्णपरास्तेषु पवर्गयलजेषु परेषु । अवर्णपरेषु किम् । बुभूषति । पवर्गयलजेषु किम् । ऊर्णुनुविषति । भू सत्तायाम् । एरङ् द्विश्चेति अङि कृते द्वित्वे च भू भू इति जातं तत उत्तरस्य वृद्ध्यावादेशौ ततोऽङि लघौ ह्रस्वे कृते अङ्गसयोरिति पूर्वस्येत्वं ततो दीर्घः । अबीभवत् अबीभवत । मूङ् बंधने । अमीमवत् । यु मिश्रणे । अयीयवत् । रु शब्दे । अरीरवत् । लूञ् छेदने । अलीलवत् । जु गतौ । सौत्रोऽयं धातुः । अजीजवत् ॥

स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनामङ्गसयोः ॥ ३९६ ॥ पूर्वस्येत्वं

वाऽवर्णपरे धात्वक्षरे परे ॥ असिस्रवत् असुस्रवत् । अशिश्रवत् अशुश्रवत् । अदिद्रवत् अदुद्रवत् । अपिप्रवत् अपुप्रवत् । अपिप्लुवत् अपुप्लुवत् । अचिच्यवत् अचुच्यवत् । न रितः । अशशासत् । अडुढौकत् ॥

सुबो०—स्रवतिशृणोतिद्रवतिप्लवतिच्यवतीनामङ्सयोः । पूर्वस्येत्वं वाऽवर्णपरे धात्वक्षरे परे । स्रु गतौ । श्रु श्रवणे । द्रु गतौ । प्लुङ् च्युङ् गतौ । अक्षरशब्दोऽत्रावर्णपरः । आवर्णपरे किम् । शुश्रूषति । अपिप्रवत्, अपुप्रवत् । अचिच्यवत्, अचुच्यवत् ॥

ञ्न्तात् ञिः ॥ ३८७ ॥ चोरयति । अचूचुरत् ॥

सुबो०—ञ्यंतात् ञिः । स्वार्थञ्यंताद्धातोर्ञिः स्यात् प्रेरणे । अपवादत्वाद्वृद्धिं बाधित्वा ञेरिति ञिलोपः । चोरयति । लुङि अङि लघो ह्रस्व इति ह्रस्वः । लघोर्दीर्घ इति दीर्घः । नत्वग्लोपित्वाद् द्वयोरप्यसंभवः । अचुचोरदित्येवरूपं स्यात् । उच्यते । अङ्गाक्षिप्तस्य ञेर्निमित्तत्वेनाश्रयणान्नासंभवः ॥

तत्त्व०—अचूचुरदिति । अत्र ञेरिकारस्य लोपेऽपि अग्वृलोपिनो नाङ्कार्यमिति निषेधो न शक्यः अङ्गाक्षिप्तस्य ञेर्निमित्तत्वेनाश्रयणात् । तथाहि ञिजातिरेका निमित्तत्वेनाश्रिता तथा च तस्या एकत्वाद्गोवलीवर्दन्यायेन व्याकृतेरन्यस्यादेर्ञलोपः प्रतिषेधविषयत्वेनाश्रयत इत्यर्थः । यत्तु कैश्चिदुक्तं परत्वादादौ वृद्धौ सत्यामेकारस्य लोपेऽग्वृलोपित्वाभावादेवाङ्कार्यमिति तन्न । सर्वविधिभ्यो लोपविधिर्बलीयांस्तस्य सर्वसंमतत्वात् ॥

हनो घत् ॥ ३८८ ॥ हन्तेर्घदादेश इण्वर्जिते ञ्णति ॥ घातयति । अजीघतत् ॥

सुबो०—हनो घत् । क्ङिति च प्रत्यये हंतेर्घदादेशः स्यात् इण्प्रत्यये णप्प्रत्यये च परे । घातः घञ् । घातकः वुण् । ञ्णति किम् । हंता ॥

तत्त्व०—हनो घत् इति । हनोर्घदादेश इत्यादिव्याख्यानं तु प्राचामनुरोधेन व्याख्यानं स्वीदृशम् । हश्च न् चानयोः समाहारो हन् तस्य । घश्च त् चानयोः समाहारो घत् हनो घ इत्यतो हन् इत्यनुवृत्तेः हन्तेर्हस्य घ ञ्णति । तस्य तो न् च भवति ञ्णति । न चेति निषेधादिण्वर्जनम् । एतेन हनो घ इत्यतो हनोऽनुवृत्तेर्घत्वसिद्धेश्चोभयं व्यर्थमित्युक्तिरपि परास्ता ॥

शदेरगतौ तो ञौ ॥ ३८९ ॥ शातयति । अशीशतत् । गतौ तु, शादयति । अशीशदत् । रातौ ञौ पुक् ॥

सुबो०—शदेरगतौ तो ञौ । शदेर्ञौ तोऽतादेशः स्यात् नतु गतौ । शातयति । गतौ तु गाः शादयति गोविंदः । गमयतीत्यर्थः । ऋ गतौ । अस्य रातौ ञौ पुगित्यंतरंगत्वादादौ पुक् पश्चाद्गुणः ॥

पुकि गुणः ॥ ३६० ॥ अर्पयति । आर्पिपत् । दापयति अदीदपत् । धापयति । अदीधपत् । स्थापयति ॥

सुबो०-पुकि गुणः । पुगागमे परे गुणो भवति । अर्पयति । लुङि स्वरादेः पर इति पि इत्यस्य द्वित्वे ञेरिति ञिलोपे च आर्पिपत् । डुदाञ् दाने । अङि लघाविति ह्रस्वे इत्वे च कृते लघोर्दीर्घ इति दीर्घत्वम् । अदीदपत् । डुधाञ् धारणादौ । अदीधपत् । ष्ठा गतिनिवृत्तौ । रातो ञाविति पुकि स्थापयति ॥

तिष्ठतेरङ्युपधाया इत् ॥ ३६१ ॥ अतिष्ठिपत् ॥

सुबो०-तिष्ठतेरङ्युपधाया इत् । तिष्ठतेरुपधाया इत्वं स्यात् अङ्प्रत्यये । स्थापीत्यत्रात इत्वं ततो द्वित्वादि । अतिष्ठिपत् । तिष्ठतेरिति तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । तेन यङ्लुकि लुङि । अतिष्ठिपत् ॥

पादेर्युक् ॥३६२॥ पाशोच्छोसोह्वेञ्व्येञ्वेञां युक् ञौ ॥ पाययति ॥

सुबो०-पादेर्युक् । एषां युक् ञौ परे । पा पाने । लुग्विकरणालुग्विकरणेति परिभाषया पा रक्षणे इति नेह गृह्यते । तस्य तु पालयतीति रूपम् । शो तनूकरणे । छो छेदने । षो अंतकर्मणि । ह्वेञ् स्पर्द्धायाम् । व्येञ् संवरणे । वेञ् तंतुसंताने । वाययति ॥

पिबतेरङि पूर्वस्येकार उपधालोपश्च ॥ ३६३ ॥ अपीप्यत् । शाययति । अशीशयत् । छाययति । अचिच्छयत् । साययति । असीषयत् । ह्वाययति ॥

सुबो०-पिबतेरङि पूर्वस्येकार उपधालोपश्च । पिबतेः पूर्वरूपस्य इत्वमुत्तररूपस्योपधाया लोपश्च स्यात् अङि परे । पापीत्यत्र पापशब्दस्य द्वित्वे हसादिः शेषे चेत्वमुत्तरत्राकारलोपः । इहाय्वृलोपित्वादलघुत्वाच्च इत्वदीर्घयोरप्राप्तावीत्वम् । अपीप्यत् । शाययति अशीशयत् । छाययति । ह्रस्वाभावान्न दीर्घः । अचिच्छयत् । शाययति । अशीशयत् । साययति । असीषयत् । ह्वाययति ॥

ह्वयतेर्ण्यन्तस्याङ्सयोस्सम्प्रसारणं युवभावश्च ॥३६४॥ अजूहवत् । अजुहावत् । व्याययति । अविव्ययत् । वाययति । अवीवयत् ॥

सुबो०-ह्वयतेर्ण्यंतस्याङ्सयोः संप्रसारणं युवभावश्च स्यात् अङ् सः परो यस्मात् सोऽङ्सपरस्तस्मिन् ञौ परे ह्वायीत्यत्र पूर्वसंप्रसारणे युगभावे च कृते हू इत्यस्य द्वित्वादि उत्तरत्र उवृद्धौ आवादेशे च कृते कणरणेति ह्रस्वे लघोरिति दीर्घे च अजूहवत् । ह्रस्वाभावे । अजुहावत् ॥

**पातेर्णौ लुक् ॥ ३६५ ॥** पालयति । अपीपलत् ॥

सुबो०—पातेर्णौ लुक् । लुगागमः स्यात् । रातो ञौ युगिति पुकोपवादः । लुगागमस्य पुङ्निवृत्तिरेव फलम् । पालयतीति रूपस्य पाल रक्षणे इति धातुनापि सिद्धेः ॥

तत्त्व०—पातेर्णौ लुक् । कित्त्वादन्ते । पुकोऽपवादः ॥

**प्रयोजकात्स्मये णौ स्मयतेरात्वम् ॥ ३६६ ॥**

सुबो०—प्रयोजकात्स्मये णौ स्मयतेरात्वम् । स्मयजनकः प्रयोजकश्चेत्तस्मिन् आत्वं स्यात् णौ परे ॥

तत्त्व०—स्मयतेरात्वम् । स्मिङ् ईषद्धसने । एवं विस्मापयन्विस्मितमात्मवृत्ताविस्यपपाठः । मनुष्यवाचेति करणादेव विस्मयात् ? अन्यथा शानोऽपि स्यात् । ण्यन्तात् णौ शता वा । विस्माययते मनुष्यवाक् । तथा सिद्धो विस्मापयन्निति ॥

**भीस्मिभ्यां ण्यन्ताभ्यामात् प्रयोजकाच्चेद्भयस्मयौ ॥ ३६७ ॥** जटिलो विस्मापयते । व्यसिष्मयत । भियः स्वरस्यात्वं वा । तदभावे षुक् णौ । हेतोश्चेद्भयम् । मुण्डो भापयते । भीषयते । अबीभयत । अबीभिषत ॥

सुबो०—भीस्मिभ्यां ण्यंताभ्यामात् प्रयोजकाच्चेद्भयस्मयौ । भयस्मययोर्जनकः प्रयोजकश्चेत् ण्यंताभ्याम्भीस्मिभ्यामात्मनेपदं स्यात् । भिय आत्वम् । तदभावे षुक् णौ हेतोश्चेद्भयं भयजनकः प्रयोजकश्चेद्भियो वाऽऽकारः । आत्वाभावे षुगागमश्च स्यात् णौ । ञिभी भये इत्यस्यानेनात्वे रातो ञाविति पुकि च मुंडो भापयते । भीषयते । जटिलो विस्मापयते । प्रयोजकाद्भयस्मयावित्युक्तेर्नेह । कुंचिकयैनं भाययति । विस्माययति ॥

**रुहेर्णौ पो वा ॥ ३६८ ॥** रोपयति । अरूरुपत् । रोहयति । अरूरुहत् । कल्पयति । अचीक्लृपत् अचकल्पत् । वर्तयति । अवीवृतत् अववर्तत् । मार्जयति । अमीमृजत् अममार्जत् ॥

सुबो०—रुहेर्णौ पो वा । रुहेर्हस्य वा पकारः स्यात् णौ परे । रुह बीजजन्मनि प्रादुर्भावे च । रुप विमोहने इति दैवादिकस्य धातूनामनेकार्थत्वाज्जन्मनि वृत्तौ सूत्रं स्पष्टार्थम् । कृपू सामर्थ्ये । उपधावर्णस्येति ऋद्भावे अङि लघौ ह्रस्व इति पूर्वस्येकारः लघोर्दीर्घ इति दीर्घत्वे कृपो रो ल इति लत्वे च अचीक्लृपत् । वृतु वर्त्तने । अवीवृतत् । मृजूष् शुद्धौ । अमीमृजत् । पक्षे मृजेर्वृद्धिरिति वृद्धौ अममार्जत् ॥

तत्त्व०—रुहेः । रुह बीजजन्मनि प्रादुर्भावे च । रुप मोहन इति दैवादिकस्यापि रोपयतीति । धातूनामनेकार्थत्वान्मानिवृत्तिः । सूत्रं तु स्पष्टार्थम् ॥

इङ्क्रीजीनामात्वं णौ ॥ ३६९ ॥ अध्यापयति । अध्यापिपत् ॥

सुबो०–इङ्क्रीजीनामात्वं णौ । इङ् अध्ययने । डुक्रीञ् द्रव्यविनिमये । जि जये । अचिक्रपत् । अजीजपत् ॥

तत्त्व०–इङ्क्रीति । इङ् अध्ययने । डुक्रीञ् द्रव्यविनिमये । जि जये ॥

अङ्सपरे णौ ॥ ३७० ॥ इङो गाङ् वा ॥ अध्यजीगपत् । क्रापयति । अचीक्रपत् । जापयति । अजीजपत् ॥

सुबो०–अङ्सपरे णौ । इङो गाङ् वा । अध्यजीगपत् । पक्षे स्वरादेः पर इति पिशब्दस्य द्वित्वे अध्यापिपत् ॥

ह्रीव्लीरीक्नूयीक्ष्मायीनां णौ पुक् ॥ ३७१ ॥ ह्रेपयति । अजिह्रिपत् । व्लेपयति । अविव्लिपत् । रेपयति । अरीरिपत् ॥

सुबो०–ह्रीव्लीरीक्नूयीक्ष्मायीनां णौ पुक् । एषां पुक् णौ । ह्री लज्जायाम् । व्ली वरणे । रीङ् क्षये । क्नूयी शब्दे उंदे च । क्ष्मायी विधूनने ॥

तत्त्व०–ह्रेपयतीति । उपधाया लघोरित्यत्रोपधाया इत्यस्य योगविभागाद्धातोरुपधाया नामिनो गुणो भवति । तेन गुरोरपि भवति ॥

यवयोर्वसे हकारे च लोपः ॥ ३७२ ॥ क्नोपयति । अचुक्नुपत् । क्ष्मापयति । अचिक्ष्मपत् ॥

सुबो०–यवयोर्वसे हकारे च लोपः । यकारवकारयोर्लोपः स्यात् वस्प्रत्याहारे हकारे च परे ॥

दुषेर्णौ दीर्घः ॥ ३७३ ॥ दूषयति । अदूदुषत् ॥

सुबो०–दुषेर्णौ दीर्घः । दुष्यतेः उपधाया ऊत्स्याद् णौ । दूषयति । वैकृत्ये दिवादिः । णौ किम् । दोषः । वा चित्तविरागे । चिती संज्ञाने । इत्यस्मात् क्तः । चित्तम् । विरागोऽप्रीतिता । दूषयति दोषयति वा चित्तं कामः । चित्तं दुष्यति ज्ञानसंस्थार्द्रं । चित्तं भवति तत् प्रयुंक्ते इत्यर्थः ॥

स्फायो वः ॥ ३७४ ॥ णौ ॥ स्फावयति । अपिस्फवत् ॥ अड्ड उद्यमे ॥ अड्डयति । आड्डिडत् ॥ अर्च पूजायाम् ॥ अर्चयति । आर्चिचत् ॥ उन्दी क्लेदने ॥ उन्दयति । औन्दिदत् ॥ उब्ज आर्जवे ॥ उब्जयति । औब्जिजत् । द्रापयति । अदिद्रपत् ॥

सुबो०–स्फायो वः । स्फायो वत्वं स्याद् णौ परे । अड्ड उद्यमे । स्वरादेः पर इति डिशब्दस्य द्वित्वे । आड्डिडत् । अर्च पूजायाम् । आर्चिचत् । एध वृद्धौ ।

उपधाह्रस्वो द्वित्वात्प्रागेव भवति । ततो धिशब्दस्य द्वित्वे मा भवानिदिधत् । उंदी क्लेदने । दीशब्दस्य द्वित्वे । औंदिदत् । उब्ज आर्जवे । उपदेशे दकारोपधोऽयम् । द्वित्वविषये स्वरात्पर इति निषेधात् जिशब्दस्य द्वित्वे कृते ततो निपातनाद्दस्य वः । द्रा कुत्सायाम् । पूर्वं उपधाह्रस्वः ततो द्वित्वे इत्वे च । अदिद्रपत् ॥

**रभिलभोः स्वरे नुम् न त्वप्लिटोः ॥ ३७५ ॥ रंभयति । अररम्भत् ॥ डुलभष् प्राप्तौ ॥ लम्भयति । लम्भयते । अललम्भत् । हापयति । हापयते । अजीहपत् । स्मारयति । स्मारयते । असस्मरत् । दारयति । दारयते । अददरत् ॥**

सुबो०–रभिलभोः स्वरे नुम् न त्वप्लिटोः । स्वरे किम् । आरब्धम् । अप्लिटोः किम् । रभते । रेभे । रभ राभस्ये । डुलभष् प्राप्तौ । अररंभत् । अललंभत् । हि गतौ वृद्धौ च । पूर्वाद्धिनोतेरिनि सूत्रे न त्वङीत्युक्ते घत्वं न । अजीहयत् । स्मृ चिंतायाम् । अङि लघाविति ह्रस्वः । स्मृदॄत्वरेति पूर्वस्यात् । असस्मरत् । दॄ विदारणे । अत्रापि पूर्वस्यात् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः ॥

**वेष्टिचेष्ट्योः पूर्वस्यात्वं वाङि ॥३७६॥ अविवेष्टत् अववेष्टत् । अचिचेष्टत् अचचेष्टत् ॥ भ्राजृ दीप्तौ ॥ भ्राजयति । भ्राजयते । अबिभ्रजत् अबभ्राजत् ॥**

सुबो०–वेष्टिचेष्ट्योः पूर्वस्याऽत्वं वाऽङि । अनयोः पूर्वरूपस्याऽत्वं वा स्यादङ्प्रत्यये परे । वेष्ट वेष्टने । चेष्ट चेष्टायाम् । भ्राजृ दीप्तौ । भ्राजभ्राशेत्यादिना वा उपधाह्रस्वः । अविभ्रजत् अबभ्राजत् ॥

**कणरणभणश्रणलुपहेठिह्वेभ्बाणिलोटिलोठिलोपीनां वा ह्रस्वोऽङि ॥ ३७७ ॥ अचीकणत् अचकाणत् । व्यशिश्रणत् व्यशश्राणत् । अलूलुपत्, अलुलोपत् । अजीहिठत्, अजिहेठत् । अजूहवत्, अजुहावत् । अबीबणत्, अबबाणत् । अलूलुटत्, अलुलोटत् । अलूलुठत्, अलुलोठत् ॥**

सुबो०–कणरणभणश्रणलुपहेठिह्वेञ्बाणिलोटिलोठिलोपीनां वा ह्रस्वोऽङि । कण निमीलने । रण शब्दे । भण शब्दे । श्रण दाने । लुपॢ छेदने । हेठ विबाधायाम् । ह्वेञ् स्पर्धायां शब्दे च । बाणिर्ण्यंतः शब्दे । लुट प्रतिघाते । लुठ छेदने । लोपीति ण्यंतनिर्देशः । लापीति पाठान्तरम् । लप व्यक्तायां वाचि । अचीकणत्,

अचकाणत्। अरीरणत्, अरराणत्। अबीभणत्, अबभाणत्। अशिश्रणत्, अशश्राणत्। अलूलुपत्, अलुलोपत्। अजीहिठत् अजिहेठत् ॥

**स्वापेः सम्प्रसारणमङि ॥ ३७८ ॥** असूषुपत् ॥

सुबो०—स्वापेः संप्रसारणमङि। ञिष्वप् शये। ण्यंतस्यास्य संप्रसारणं स्यादङि। इह संप्रसारणोत्तरं द्वित्वम्। असूषुपत् ॥

**श्वयतेर्ण्यन्तस्य सम्प्रसारणं वाऽङ्सयोः ॥ ३७९ ॥** अशिश्वयत्, अशूशवत् ॥

सुबो०—श्वयतेर्ण्यंतस्य संप्रसारणं वाङ्सयोः। संप्रसारणं तदाश्रयं च कार्य्यं बलवदिति वचनाद्वृद्धेः पूर्वं संप्रसारणम् अलघुत्वान्न दीर्घः। अशिश्वयत्, अशूशवत् ॥

**जिघ्रतेरुपधाया इद्वाङि ॥ ३८० ॥** अजिघ्रपत्, अजिघ्रिपत् ॥

सुबो०—जिघ्रतेरुपधाया इद्वाऽङि। घ्रापीत्यस्यात इत्वं वा स्यात् अङि परे। ततो द्वित्वादि ॥

**सिध्यतेरैहलौकिकेऽर्थे स्वरस्यात्वं णौ ॥ ३८१ ॥** अन्नं साधयति। असीषधत्। अन्यत्र तपः सेधयति। असीषिधत् ॥

सुबो०—सिध्यतेरैहलौकिकेऽर्थे स्वरस्यात्वं णौ। इह लोके भवः ऐहलौकिकः तस्मिन् ऐहलौकिकेऽर्थे सिध्यतेः स्वरस्यात्वं णौ। अन्नं साधयति। निष्पादयतीत्यर्थः। सिध्यतेरिति श्यनिर्देशात् भौवादिकस्याग्रहणम्। ऐहलौकिके किम्। तापसः सिध्यति। तत्त्वं निश्चिनोति। तत्त्वनिश्चयश्चात्मविषयगः स च परलोके उपयुज्यते। तं प्रेरयति तापसं तपः। लुङि असीषिधत्। आत्वाभावे असीसिधत् ॥

तत्त्व०—सिद्ध्यतेरैहलौकिके इति। इह लोके भव ऐहलौकिकस्तस्मिन्निरित्यर्थः। अन्नं साधयति। निष्पादयतीत्यर्थः। अन्यत्र पारलौकिके इत्यर्थ.। सेधयति तापसः सिद्ध्यति हेयमुपादेय च तत्त्वतो ज्ञातुकामः प्रयते तत्पर. प्रयुक्ते ज्ञानविशेषमन्त करोतीत्यर्थः ॥

**प्रजने वीयतेरात्वं वा णौ ॥ ३८२ ॥** वापयति वाययति वा गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः। चित्तविरागे। दुषेर्दीर्घो वा णौ। चित्तं दूषयति दोषयति वा कामः ॥

सुबो०—प्रजने वीयतेरात्वं वा णौ। वी गतिप्रजनादौ आदादिकस्य यका निर्देशः। अत्र केचिदुत्प्रेक्षयंति। वेत्तेरिति वक्तव्ये यकानिर्देशात् व्येञो न ग्रहणं तस्यापि यकि संप्रसारणे वीधातुना समानरूपत्वात्। अतो द्वयोरपि प्रजनेऽर्थे आत्वं वा स्यात्। तत्राऽन्ये तदभावे च यद्यपि व्येञः व्यापयतीति रूपं तुल्यम्। पादेर्युगिति युकोऽपवादत्वया पुग्विधानात्। तथापि ण्यंतात् क्विपि व्याः व्यौ व्याः मा-

त्वाऽभावपक्षे व्यैः। व्यायौ । व्यायः । इत्यस्ति विशेषः । सूत्रे विभाषाविधानसामर्थ्यात्पक्षेऽपि संध्यक्षराणामित्यात्वं न प्रवर्त्तते । रातो णौ पुगिति पुक् । वापयति । आत्वाऽभावे वाययति गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः ॥

तत्त्व०—प्रजने वीयतेरिति । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्वित्यस्य यका निर्देशः अन्यथादादिकत्वेन यकारासंभवः । प्रजनो गर्भग्रहण तत्रेत्यर्थः । वापयतीति गर्भं ग्राहयतीत्यर्थः । वातेरनेकार्थत्वाद्यदि प्रजनोप्यर्थ उच्यते तदास्य वापयति । वेत्तेस्तु वापयतीति सिद्धौ कृतमेतेन । चित्तविरागे । वाक्यभेदेन व्याख्येयम् । दुषेर्दीर्घो णौ । दूषयति । ततश्चित्तविरागे वा । चित्तविरागोऽप्रीतिता ॥

**इणो णौ वा गमिः ॥३८३॥** गमयति । अजीगमत् । आपयति । आपिपत् । घटादयो मितः ॥ घट चेष्टायाम् ॥ मित्तां ह्रस्वः । घटयति । व्यथयति । अविव्यथत् । प्रथयति । अपप्रथत् ॥ प्रस विस्तारे ॥ प्रसयति ॥ म्रद मर्दने ॥ म्रदयति । अमम्रदत् ॥ स्खद विद्रावणे ॥ स्खदयति । अचिस्खदत् । त्वरयति । अतत्वरत् ॥ ज्वर रोगे ॥ ज्वरयति ॥ नट नृतौ ॥ नटयति । अनीनटत् ॥ चक तृप्तौ ॥ चकयति ॥ लगे संगे ॥ लगयति ॥ ज्वल दीप्तौ ॥ प्रज्वलयति ॥ स्मृ आध्याने ॥ स्मरयति । असस्मरत् ॥ दृ भये ॥ दरयति । अददरत् ॥ नॄ नये ॥ नरयति । अनीनरत् ॥ श्रा पाके ॥ श्रपयति । अशिश्रपत् ॥

सुबो०—इणो णौ वा गमिः । गमिरबोधने । इणो गमिः स्याद्वा णौ अबोधनेऽर्थे । अजीगमत् । बोधने तु प्रत्याययति । प्रतिपूर्वस्येणो ज्ञानार्थता । स्वरादेः पर इति णिसहितस्य द्वित्वम् । प्रत्यायियत् । घटादयो मितः । घट चेष्टायाम् । तत्फलं तु मितां ह्रस्व इति ह्रस्वत्वम् । मितां ण्यंतानामिणि णमि च वा दीर्घ इति च । त्वरत्यंता घटादयः षितश्च । षित्प्रयोजनं तु षिद्भिदामङित्यङ् । आवतः स्त्रियामित्याप् । तेन घटा व्यथेत्यादि रूपसिद्धिः । विघटयति । कथं तर्हि कमलवनोद्घाटनं कुर्वते ये इत्यादि । शृणु । घट संघात इति चौरादिकस्येदम् । व्यथ दुःखसंचलनयोः । अविव्यथत् । प्रथ प्रख्याने । अपप्रथत् । स्मृदृत्वरेति पूर्वस्यात् । प्रस विस्तारे । अपिप्रसत् । अलघुत्वान्न दीर्घः । म्रद मर्दने । अमम्रदत् । स्मृदृत्वरेति पूर्वस्यात् । स्खद विद्रावणे । अचिस्खदत् । ञित्वरा संभ्रमे । अतत्वरत् । स्मृदृत्वरेति पूर्वस्यात् । घटादयः षितः । षित्वादङ् । त्वरा । ज्वर रोगे । अजिज्वरत् । इण्प्रत्यये । अज्वरि, अज्वारि । णमुप्रत्यये ज्वरंज्वरं, ज्वारंज्वारम् । नट नृतौ । गात्रविक्षेपमात्रं नृतिः । अनीनटत् । चक तृप्तौ । अस्य तृप्तिमात्रे

मित्त्वं परस्मैपदं च । अचीचकत् । लगे संगे । अलीलगत । ज्वल दीप्तौ । अजिज्वलत् । ज्वलादेर्ण इति णप्रत्यये ज्वालः । स्मृ आध्याने । उत्कंठापूर्वकं स्मरणमाध्यानम् । दृ भये । दृणंतं प्रेरयति दरयति भयादन्यत्र । दारयति । केचित्तु घटादौ स्मृदृत्वरेति सूत्रे च दृ इति दीर्घस्थाने ह्रस्वं पठंति तन्नेति माधवः । यद्यपं ह्रस्वांतो भवेत् तर्हि शृदृप्रां ह्रस्वो वेति सूत्रे ह्रस्वविकल्पविधायके दृग्रहणमनर्थकं स्यात् । नृ नये । नयादन्यत्र नारयति । श्रा पाके । श्रपयति । विक्लेदयतीत्यर्थः । पाकादन्यत्र श्रापयति । स्वेदयतीत्यर्थः ॥

तत्त्व०—मितः । के के पुनर्मित इत्याह । घटादय इति ॥

**मारणतोषणनिशामनेषु ज्ञा ॥ ३८४ ॥ ज्ञपयति ॥ कम्पने चलिः ॥ चलयति शाखां वायुः । अन्यत्र शीलं चालयति ॥ मदी हर्षदैन्ययोः ॥ मदयति । हर्षदैन्ययोः किम् । मादयति ॥ ध्वन शब्दे ॥ मित् । ध्वनयति । अदिध्वनत् ॥**

सुबो०—मारणतोषणनिशामनेषु ज्ञा । एष्वेवार्थेषु जानातिर्मित् । शम आलोचन इत्यस्मान्निष्पन्नत्वान्निशामनं चाक्षुषज्ञानमिति माधवः । ज्ञापनमात्रमित्यन्ये । निशानेष्विति पाठांतरम् । निशानं तीक्ष्णीकरणम् । पशुं संज्ञपयति । मारयतीत्यर्थः । विष्णुं विज्ञपयति । संतोषयतीत्यर्थः । संज्ञपयति रूपम् । माधवमते दर्शयतीत्यर्थः । मतांतरे तु बोधयतीत्यर्थः । प्रज्ञपयति शरम् । तीक्ष्णं करोतीत्यर्थः । कथं तर्हि विज्ञापना भर्तृषु सिद्धिमेतीति । तज्ज्ञापयत्याचार्य इति च । अत्र ज्ञाधातोर्णौ मित्त्वाद्ध्रस्वेन भवितव्यमिति । शृणु । माधवमतेऽचाक्षुषज्ञाने मित्त्वाऽभावात् । ज्ञापनमात्रे मित्त्वमिति मते तु ज्ञा नियोगे इति चौरादिकस्य धातूनामनेकार्थत्वाद्बोध्यम् । कंपने चलिः । चलयति शाखाम् । कंपनादन्यत्र तु शीलं चालयति । अन्यथाकरोतीत्यर्थः। हरतीत्यर्थः इति स्वामी । सूत्रं चालयति । क्षिपतीत्यर्थः । मदी हर्षदैन्ययोः। मदयति । हर्षयति ग्लेपयति वा । दैन्यं करोतीत्यर्थः । अन्यत्र मादयति । चित्तविकारमुत्पादयतीत्यर्थः । ध्वन शब्दे । ध्वनयति घंटाम् । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥

तत्त्व०—मारणेति । मारण हिंसन निशामन चाक्षुषज्ञानम् । तज्ज्ञापयत्याचार्य. । विज्ञापना भर्तृषु सिद्धिमेतीत्यादौ ज्ञापनसामान्ये मित्त्वाभावान्न ह्रस्वः । कम्पने । चलयतीति शाखामिति शेषः । अन्यत्र शीलं चालयति अन्यथा करोतीत्यर्थः । मदयतीति । अन्यत्र मादयति चित्तविरागमुत्पादयतीत्यर्थ. । ध्वनयतीति । घंटामिति शेष' । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥

**जनीजॄष्क्नसुरंजोऽमन्ताश्च ॥ ३८५ ॥ जनयति । जरयति ॥ क्नसु कौटिल्ये दीप्तौ च ॥ क्नसयति ॥**

सुबो०—जनीजॄष्क्नसुरंजोऽमन्ताश्च । जनी प्रादुर्भावे । जॄष् वयोहानौ । क्नसु ह्वरणदीप्त्योः । त्रयोऽपि दिवादयः । रञ्ज रागे । दैवादिको भौवादिकश्च । अमंताः क्रमिगम्यादयः । जॄषिति षित्निर्देशाज्जीर्यतेर्ग्रहणम् । जृणातिस्तु जारयति ॥

तत्त्व०—अमंताच्च । अम् अन्ते येषां ते अमादय इत्यर्थः ॥

**रंजेर्णौ मृगरमणे नलोपः ॥ ३८६ ॥** रजयति मृगान् । अरीरजत् । अन्यत्र वस्त्रं रंजयति । अररञ्जत् । शमयति । दमयति ॥

सुबो०—रंजेर्णौ मृगरमणे नलोपः । रंजेर्नस्य लोपः स्यात् णौ परे आखेटेऽर्थे । रजयति मृगान् । मृगेति किम् । रंजयति पक्षिणः । रमणादन्यत्र तु रंजयति मृगान् तृणदानेन । शमु दमु उपशमे । दैवादिकौ । अशीशमत् । अदीदमत् ॥

तत्त्व०—रंजेर्णावित्यादि । मृगरमणमाखेटः । मृगेति किम् । रजयति पक्षिणः । रमणे किम् । रंजयति मृगान् तृणदानेन । सक्रामयतीति तु चित्तविराग इत्यतो वेत्यनुवृत्तेर्व्यवस्थया बोध्यम् ॥

**ज्वलह्वलह्मलनमामनुपसर्गाद्वा ॥ ३८७ ॥** ज्वलयति ज्वालयति ॥ ह्वल ह्मल चलने ॥ ह्वलयति ह्वालयति । ह्मलयति ह्मालयति । नमयति नामयति । उपसर्गे तु । प्रह्वलयति ॥

सुबो०—ज्वलह्वलह्मलनमामनुपसर्गाद्वा । ज्वल दीप्तौ । ह्वल ह्मल संचलने इति त्रयाणां पूर्वं घटादौ पठितत्वात् नमेस्तु अमंतत्वान्नित्यं प्राप्ते विभाषेयम् । उपसर्गेषु नित्यं मित्त्वम् । प्रज्वलयति । कथं तर्हि प्रज्वालयति उन्नामयतीति । घञंतात् नाम्नो णिर्डित्करणे इति णौ बोध्यम् । कथं संक्रामयति विश्रामयतीति च । मान्तस्य सेटो न वृद्धिरिति वृद्धिनिषेधात् । घञि क्रमः श्रमः इत्येव भवति । न तु क्रामः श्राम इति । पूर्वोक्तसमाधानस्यात्रासंभवात् पृथक् प्रश्नः । शृणु । घञंताभ्यां क्रमश्रमाभ्यां स्वार्थेऽणि क्रामश्रामशब्दौ स्वीकृत्य ताभ्यां णिर्डिदिति णिप्रत्यये संक्रामयति । विश्रामयतीति सिद्धम् ॥

तत्त्व०—अनुपसर्गाद्वेति । तेनोपसृष्टे मित्त्वमेव । प्रज्वालयत्युन्नामयतीति तु घञन्तात्करोतीति णौ ॥

**ग्लास्नावनुवमां च ॥ ३८८ ॥** ग्लापयति ग्लपयति । स्नापयति स्नपयति । वानयति वनयति । वामयति वमयति ॥

सुबो०—ग्लास्नावनुवमां च । अनुपसर्गादेषां मित्त्वं वा । आद्ययेः प्राप्ते वनेर्घटादित्वात्प्राप्ते वमेरमंतत्वाच्च प्राप्ते विभाषा । ग्लापयति ग्लपयति । स्नापयति स्नपयति । वानयति वनयति । वामयति वमयति ॥

**न कम्यमिचमाम् ॥ ३८९ ॥** कामयति ॥ अम गत्यादौ ॥ आमयति । आमिमत् । चामयति ॥

सुबो०—न कम्यामिचमाम् । अमंतत्वात्प्राप्तं मित्त्वमेषां न स्यात् ॥

**शाम्यतिर्दर्शने मिन्न ॥ ३९० ॥ निशामयति रूपम् ॥**

सुबो०—शाम्यतिर्दर्शने मिन्न । निशामयति रूपम् । अन्यत्र, प्रणयिनो निशमय्य वधूः कथाः । कथं तर्हि, निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति । शृणु । शम आलोचने इति चौरादिकस्यैव । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः । यथा शाम्यतिर्निशामयतीत्यादौ दर्शने प्रयुज्यते तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीति ॥

तत्त्व०—दर्शने मिन्नेति । निशामय तदुत्पत्तिमित्यादि तु शम लक्ष आलोचन इत्यस्य धातूनामनेकार्थत्वाच्छ्रवणार्थतापि ॥

**यच्छतिर्भोजनतोऽन्यत्र मिन्न ॥३९१॥ आयामयति । भोजने तु । यमयति विप्रान् ॥**

सुबो०—यच्छतिर्भोजनतोऽन्यत्र मिन्न । यम उपरमे । इत्ययं धातुर्भोजने मित् । अन्यत्र तु न । आयामयति । द्राघयति । व्यापारयति वेत्यर्थः । भोजने तु । यमयति ब्राह्मणान् । भोजयतीत्यर्थः ॥

तत्त्व०—आयामयतीति । द्राघयति व्यापारयति वेत्यर्थः । भोजने तु यमयति । विप्रं भोजयतीत्यर्थः ॥

**स्खदिरवपरिभ्यां मिन्न ॥ ३९२ ॥ अवस्खादयति । परिस्खादयति ॥ ईर्ष्य अक्षान्तौ ॥ ईर्ष्ययति ॥**

सुबो०—स्खदिरवपरिभ्यां मिन्न । घटादित्वात्प्राप्तं मित्त्वं न । अवाचिस्खदत् ॥

**ईर्ष्यतेस्तृतीयो द्विः ॥ ३९३ ॥ तृतीयो हस एकस्वरो वा ॥ ऐर्ष्यियत् । अङि तु स्वरादेः परः । ऐर्षिष्यत् । द्वितीयपक्षे सान्ते । ईर्ष्यिषिषति । तृतीय एकस्वरपक्षे सान्ते प्रवर्तते । ञ्यन्ते तु तृतीय एकस्वराभावादित्यर्थः ॥ इति ञ्यन्तप्रक्रिया ॥**

सुबो०—ईर्ष्यतेस्तृतीयो द्विः । तृतीयव्यंजनस्येति पक्षे सस्वरस्य यकारस्य द्वित्वम् । ऐर्ष्यियत् । तृतीयैकस्वरस्येति पक्षे तृतीयाभावेन प्रकृतवार्तिकाऽप्रवृत्तेः । स्वरादेः पर इति द्वित्वे षकार एव पूर्वं श्रूयते । हसादिः शेषात् । ऐर्षिष्यत् । तृतीयहसपक्षे षस्य द्वित्वं वारयितुमिदम् । तृतीयैकस्वरस्येति पक्षे तु स्वरादेः पर इत्यस्यापवादत्वेन सांते प्रवर्तते ॥ इति ञ्यंतप्रक्रिया ॥

तत्त्व०—ईर्ष्यतेरिति । तृतीयः कः इत्याकांक्षायां मतभेदेन व्याचष्टे । तृतीयो हसः । स्वरसहित इत्यर्थः। अस्मिन् पक्षे षस्य न द्वित्वम् । मतान्तरमाह । एकस्वरो वेति । तृतीय इत्येव । ईर्ष्यतेर्यस्तृतीय एकस्वरः स द्विर्वाच्य इत्यर्थः । अत्र पक्षे सान्ते ईर्ष्यिषयतीति सस्य द्वित्वम् । आद्यपक्षे ईर्ष्यिषिषयतीति सान्तेऽपि

रूपद्वयम् । ईर्ष्यतेः सेपि सयोर्वा द्वित्वमिति । द्वितीयव्याख्यायां ञ्यतादडि द्वितीयस्य द्वित्वे हसादिशेषेण पूर्वत्र षस्यैव श्रवणात्तृतीयाभावेनैतद्वार्तिकाप्राप्ते । ऐर्ष्यियदिति । प्रथमपक्षे । ऐर्षिष्यादिति तु द्वितीयपक्षे एतद्वीज तूक्तमेव । अत्र पण्डिताः क्वचित्तु ऐर्ष्यिष्यदिति षकारादेरपि द्वित्वमुदाह्रियते तद्भ्रान्तप्रक्षिप्तत्वादुपेक्ष्य तस्मादेर्ष्यियदित्येकमेवात्र रूपं साधनीयं नत्वैर्ष्यिष्यादीति ण्यन्ते तृतीयस्यैकाचोऽसंभवादित्याहुः । तत्स्वमतिभ्रमोद्भावनायेति मन्यामहे । तथाहि ञ्यन्ते द्वितीयव्याख्यायां तृतीयस्यैकाचोऽसंभवात् द्वितीयद्वित्वं केन निर्धार्य्यमिति । स्वयमेवोहनीयमिति दिक् । निवृत्तप्रेरणात् धातोर्ञौ केवलेन तुल्योऽर्थः । तेन प्रार्थयन्ति शयनोत्थितमित्यादि सिद्धम् ॥

कृतायामिह टीकायां लोके शकरशर्मणा । बाधनं दुष्टबुद्धीनामगमञ्ञ्यन्तसाधनम् ॥

इति ञ्यन्तप्रक्रिया ॥ १ ॥

---

**इच्छायामात्मनः सः ॥३९४॥** धातोरात्मनः इच्छायां सप्रत्ययो भवति ॥

सुबो०—इच्छायामात्मनः सः । इच्छायाः क्रियारूपत्वेन कर्त्तारं विनाऽनुपपन्नत्वात् कर्तुराक्षेपात् इच्छाकर्त्ता इष्यमाणं वस्तु यदि स्वसंबंधित्वेनैव इच्छति तदा धातोः सप्रत्यय इत्यर्थः । तेन शिष्याणां पठनमिच्छति गुरुरित्यादौ सो न ॥

तत्त्व०—इच्छायामात्मनः स इति। धातोरित्यधिकारात् । इष्टिरिच्छा इषेरिच्छेत्यत एव निपातनात् आत्मशब्दोऽत्र स्ववाची । न तु चेतनद्रव्यवाची । आत्मन इत्यस्य व्यर्थत्वापातात् । इच्छायामात्मकर्त्तृकत्वाव्यभिचारात् । तच्चेदिष्यमाणमिच्छाकर्त्तृसंबंधि भवति । आङुवि कर्मणीत्यतः कर्मणीत्यनुवर्त्य पञ्चम्या विपरिणम्य कर्मणो धातोरिति सामानाधिकरण्येन व्याख्येयम् । इच्छायां किम् । कर्तुं याति। आत्मनः किम् । शिष्याणां पठनमिच्छति गुरुः । स्वसंबंधित्व वेच्छायाः साक्षादेव तेन शिष्याणां स्वसंबंधित्वेऽपि न । धातोः किम् । प्रतिष्ठासते इत्यत्र प्रसाहितस्थाधातोर्नाभूत्तथा सत्यङ्द्वित्वयोर्वैषम्य स्यात् । कर्मणः किम् । गमनेनेच्छतीति करणान्मा भूत् । यत्तु वासुदेवेन व्याख्यातम् । इच्छा चेत्स्वसंबंधिनीति । तन्न । शिष्याणां पठनमिच्छति गुरुरित्यत्रातिव्याप्तेरनिवारणात् । तथा हि । अत्र पठनस्य धात्वर्थत्वे तत्संबंधिन्या इच्छायाः सत्त्वात् ॥

**द्विश्च ॥ ३९५ ॥** आत्मनः भवितुमिच्छति । बुभूषाञ्चकार । अबुभूषीत् ॥

सुबो०—द्विश्च । सप्रत्ययांतस्य धातोर्द्वित्वं स्यात् । भवितुमिच्छति कर्म्मनियतत्वादिषुकर्मेति लब्धम् । धातोः प्रत्ययविधानात् तदर्थत्वं लब्धम् । तेन इषिकर्म्मार्थवाचकाद्धातोरिच्छायां सप्रत्ययः स्यात् । तुम् तु स्वार्थिकः । साध्यावस्थां क्रियामाह । स च लौकिके वाक्ये प्रयुज्यते । केवलस्य धातोः प्रयोगानर्हत्वात् । अलौकिके तु धातुमात्रं प्रयुज्यतेऽतः तुमः कथं लोप इति नो शंक्यम् । अत्रात्मशब्दस्तु स्वशब्दस्य पर्यायः । संबंधसामान्ये षष्ठी । आत्मनः स्वस्येत्यर्थः । स्वशब्दे हि इषिकर्तैव गृह्यते ॥

तत्त्व०—भवितुमिच्छतीति । साध्यावस्थायाः क्रियावाचकस्य तुमः स्वार्थत्वेन लौकिक एव वाक्यप्रयोग० । केवलस्य धातोः प्रयोगानर्हत्वात् । न त्वलौकिकेऽपि । तेन तुमः कथं लोप इति नाशंकनीयम् ।

द्विश्चेत्यतो द्विरित्यनुवृत्त भिन्नवाक्य तेन सप्रत्ययप्रकृतिभूतस्य धातोर्न द्वित्वं किन्तु सांतस्य । तथा च प्रतीपिषतीत्यादि सिद्धम् ॥

**वुस्से ॥२९६॥ उवर्णान्तादृवर्णांताद्ग्रहिगुहिभ्यां च परस्य सस्य नेट् ॥**

सुबो०—वुः से । उश्च आ चेति वृ तस्मात् वुः । सौत्रं पुंस्त्वम् । ऋवर्णोवर्णाताभ्यां ग्रहिगुहिभ्यां च सस्य नेट् । गृहेर्नित्यं प्राप्ते गुहेर्विकल्पेन प्राप्ते निषेधोऽयम् । भू सत्तायाम् । सप्रत्यये द्वित्वे च ह्रस्वे षत्वे च । बुभूषति ॥

तत्त्व०—वुः से इति । उश्च आ च वृ तस्मात् । सौत्र पुस्त्वम् ॥

**नाऽनिटि से ॥२९७॥ इड्वर्जिते सप्रत्यये गुणो न ॥ दीर्घः । ऋत इर् । तितीर्षति । जुघुक्षति । चिकीर्षति । चिचीषति चिकीषति । जिगीषति । यस्से । पिपक्षति । पिपासति । मुमूर्षति ॥**

सुबो०—नाऽनिटि से । न इट् यस्य सोऽनिट् तस्मिन् । से इत्यस्य विशेषणम् । बुभूषेत् । बुभूषतु । अबुभूषत् । कासादिप्रत्ययादित्याम् । बुभूषांचकार । बुभूष्यात् । सिसतासीस्यपामितीट् । बुभूषिता । बुभूषिष्यति । अबुभूषिष्यत् । अबुभूषीत् । तॄ प्लवनतरणयोः । ऋत इर् इतीर् । य्वोर्विहसे इति दीर्घः । तरितुमिच्छति तितीर्षति । गुहू संवरणे । सप्रत्यये द्वित्वे च हो ढ इति ढत्वम् । आदिजबानामिति घत्वम् । षढोः कस्से इति कत्वं किलात्षः स इति षत्वम् । जुघुक्षति । से दीर्घः स्यान्तस्य धातोर्दीर्घः स्यात् सप्रत्यये । आदौ दीर्घस्तत इर् । चिकीर्षति । चिनोतेः सणादौ किर्वेति किः । चिकीषति चिचीषति । सपरोक्षयोर्जेर्गिरिति गिः से दीर्घ इति दीर्घः । जिगीषति । पूञ् पवने । पुपूषति । वुः से इतीड् न । डुपचष् पाके । पक्तुमिच्छति पिपक्षति । यः से इति पूर्वस्यैकारः । पा पाने । पातुमिच्छति पिपासति । मृ हिंसायाम् । पोरुरित्युर् य्वोर्विहते इति दीर्घः । मुमूर्षति । पॄ पालनादौ । पुपूर्षति । भृ भर्त्सनभरणयोः । बुभूर्षति ॥

तत्त्व०—नानिटीति । न इट् यस्मिम् स तथा तस्मिन् । से इत्यस्य विशेषणम् । अपित्तादिर्ङिदित्यनेन ङित्वे सिद्धे नियमार्थमिदम् । अनिट एव ङित्व यथा स्यात् । चिकीर्षतीति । आदौ दीर्घस्तत इर् । शिक्षतीति । शकुमिच्छतीति वाक्ये स्वरस्य सादेशपूर्वलोपसलोपषत्वानि ॥

**रुदविदमुषग्रहिस्वपिप्रच्छिभ्यः सः कित् ॥२९८॥ रुरुदिषति । विविदिषति । मुमुषिषति । हो ढः । आदिजबानामिति षढोः कः से ॥ ग्रह उपादाने ॥ ग्रहीतुमिच्छति जिघृक्षति । सुषुप्सति ॥**

सुबो०—रुदविदमुषग्रहिस्वपिप्रच्छिभ्यः सः कित् । रुदसाहचर्याद्वित्तेरेव ग्रहणम् । रुदविदमुषाणां त्रयाणामिवर्णोपधादिति विकल्पे प्राप्ते ग्रहिस्वपिप्रच्छीनां तु सस्य कित्त्वस्याप्राप्तौ वचनम् । अत्र गुणाभावः संप्रसारणं च कित्त्वस्य फलम् । ग्रहा-

मिति संप्रसारणम् । ग्रहीतुमिच्छति जिघृक्षति । ञिष्वप् शये । यजां यवराणामिति संप्रसारणम् । सुषुप्सति ॥

**कॄगॄदृधृप्रच्छिभ्यः सस्येट् ॥३९९॥** चिकरिषति । जिगरिषति । जिगलिषति । दिदरिषते । दिधरिषते । पिपृच्छिषति । अत्तुमिच्छति जिघत्सति ॥

सुबो०—कॄगॄदृधृप्रच्छिभ्यः सस्येट् । कॄ हिंसायाम् । गॄ निगरणे । दृङ् आदरे । धृङ् अवस्थाने । एतौ तुदादी । प्रच्छ ज्ञीप्सायाम् । एभ्यः सप्रत्ययस्येट् । चिकरिषति । वुः से इति निषेधे प्राप्ते विधानम् । इह वृङ्वृञृकॄदंतानामितीटो दीर्घो नेष्टो भाष्यकारेणानुक्तत्वात् । जिगरिषति । जिगलिषति । गिरतेः स्वरे रस्य लो वेति वा लः । आदनुदात्तेत्यात्मनेपदम् । दिदरिषते । दिधरिषते । कथमुद्दिधीर्षुरिति भौवादिकयोर्धृङ्धृञोरिति गृहाण । से दीर्घ इति दीर्घे ऋत इरितीर् य्वोर्विहसे इति दीर्घे । उद्दिधीर्षुः । ग्रहामिति संप्रसारणं रुदविदेति सस्य कित्त्वात्पिपृच्छिषति । अद भक्षणे । सिसयोरदेर्घस्लृ लिटि तु वेति घस् । नैकस्वरादनुदात्तादिति नेट् । सस्तोऽनपीति सस्य तकारः । अत्तुमिच्छति जिघत्सति ॥

**हनि ङोः से दीर्घः ॥ ४०० ॥** जिघांसति ॥

सुबो०—हनि ङोस्से दीर्घः । पूर्वार्द्धंतेर्हस्य घत् इति घत्वम् । जिघांसति । सूत्रे स्वरादेशस्य गमेर्दीर्घ इति वक्तव्यम् । तेन गच्छतेर्न दीर्घः । जिगंस्यते । समोगमृच्छीत्यात् । संजिगंसते । तेन इणइकुइङां स्थाने यो गमिस्तस्य दीर्घः स्यात् । इणिकोस्तु कर्मोक्तौ जिगांस्यते अधिजिगांस्यते इत्यादि । अत इङ्स्थाने उक्तव्याख्येयम् ॥

**इङस्से गम् ॥ ४०१ ॥**

सुबो०—इङः से गम् । इङो गमिः स्यात्सप्रत्यये । इङ् अध्ययने ॥

**सान्तात्पूर्ववदात् ॥ ४०२ ॥** अधिजिगांसते ॥

सुबो०—सांतात् पूर्ववदात् । सप्रत्ययात्पूर्वो यो धातुस्तेन तुल्यं सांतादप्यात्मनेपदं स्यात् । तेन ङित्त्वादात्मनेपदम् । हनि ङोरिति दीर्घः । अधिजिगांसते ॥

**गमेः सस्येड् नाति ॥ ४०३ ॥** जिगमिषति ॥

सुबो०—गमेः सस्येड् नाति । आति किम् । इण् गतौ । जिगांस्यते । कर्म्मण्यात् । यः से इति पूर्वस्यात इत् षत्वम् । जिगमिषति ॥

**इस्से ॥ ४०४ ॥** अपिदाधारभलभशकपतपदामिमीमाङ्मेङां स्व-

रस्येस् अनिटि से परे पूर्वस्य च लोपः ॥ दित्सति । धित्सति ॥ रभ राभस्ये ॥ स्कोराद्योश्च । खसे चपा झसानाम् । रिप्सते । लिप्सते । शिक्षति । पित्सते ॥

सुबो०–इस्से । अपिद्दाधारभलभशकपतपदामिमीमाङ्मेङाम् एषां स्वरस्येस् स्यात् पूर्वस्य च लोपः अनिटि से । दैपृ शोधने । दापृ लवने । आभ्यां विना । दाण् दाने भ्वादौ पम् । देङ् पालने भ्वादावात् । डुदाञ् दाने ह्वादावात्पे । दो अवखंडने दिवादौ पम् । एषां दारूपम् । धेट् पाने भ्वादौ पम् । डुधाञ् धारणे ह्वादावात्पे । अनयोर्धारूपम् । रभ राभस्ये । डुलभष् प्राप्तौ । शक्ल शक्तौ स्वादौ पम् । शक मर्षणे दिवादावात्पे । पदे गतौ । पत्लृ पतने । डुमिञ् प्रक्षेपणे । मिङ् प्राणवियोगे । दिवादावात् । मीञ् हिंसायां क्र्यादावात्पे । मा माने अदादौ पम् । माङ् माने ह्वादौ दिवादौ चात् । मेङ् प्रणिदाने भ्वादावात् । दोदाणोः सस्तोऽनपीति सस्य तः । दित्सति । देङ् दित्सते । दाञ् दित्सति । दित्सते । धेट् धित्सति । धाञ् धित्सति, धित्सते । रभ् स्कोरिति सलोपः खसे चपा इति भस्य पत्वम् । रिप्सते । शक्ल स्कोरिति सलोपः षत्वं शिक्षति । शक् शिक्षति । पित्सते । पत्लृ पतने ॥

पततनदरिद्राभ्यः सस्येड्वा ॥ ४०५ ॥ पिपतिषति पिपत्सति ॥ डुमिञ् प्रक्षेपणे ॥ मित्सति मित्सते ॥ मीञ् हिंसायाम् ॥ मित्सति मित्सते ॥ मा माने ॥ मित्सति ॥ मेङ् प्रणिदाने ॥ माङ्मेङोः। मित्सते॥

सुबो०–पततनदरिद्राभ्यः सस्येड् वा । एभ्यः परस्य सप्रत्ययस्य वा इड् भवति । स्कोरिति सलोपः । पित्सति । इट्पक्षे यः से इति पूर्वस्येट् । पिपतिषति । डुमिञ्मीञोः सस्तोऽनपीति सस्य तः । मित्सति । मित्सते । माङ्मेङोर्मित्सते । मा मित्सति । आप्लृ व्याप्तौ ॥

आप्नोतेरात ईस्से पूर्वलोपश्च ॥ ४०६ ॥ ईप्सति ॥

सुबो०–आप्नोतेरात ईस्से पूर्वलोपश्च । आपेरात ईत्वं पूर्वलोपश्च स्यात् सप्रत्यये । आप्तुमिच्छति ईप्सति । अश् भोजने ॥

अशेरनायो वा ॥ ४०७ ॥ अशेरिच्छायां वानायप्रत्ययः ॥ अशनायति । अशिशिषति । तितनिषति । तनेरनिटि से वा दीर्घः । तितांसति तितंसति । दिदरिद्रिषति दिदरिद्रासति ॥

सुबो०–अशेरनायो वा । सस्यापवादः । पक्षे सस्येट् । स्वरादेः पर इति शिस्-

शब्दस्य द्वित्वं इस इति सप्रत्ययस्यावयवः पूर्वस्य हसादिः शेषः । अशिशिषति । तनु विस्तारे । पततनेति सस्य वेट् । तितनिषति । पक्षे तनेरनिटि से वा दीर्घः । तनेः सादौ से वा दीर्घः । तितांसति । दरिद्रा दुर्गतौ । पततनेति वेट् दरिद्रातेरनप्यालोपः सौ वेत्यालोपे षत्वे च । दिदरिद्रिषति ॥

**दम्भिज्ञपिभ्यां सस्य वेट् ॥ ४०८ ॥** दम्भु दम्भे ॥ दिदंभिषति । जिज्ञपयिषति । ज्ञपेस्स्वरस्यानिटि से ईत्पूर्वलोपश्च । ज्ञीप्सति ॥

सुबो०–दंभिज्ञपिभ्यां सस्य वेट् । यः से इति पूर्वस्येत् । दिदंभिषति । इडभावे ॥

**दम्भेरिच्च ॥ ४०९ ॥** धिप्सति धीप्सति ॥

सुबो०–दंभेरिच्च । दंभेः स्वरस्य इस् स्यात् ईच्च पूर्वस्य लोपश्च । अनिटि से उपधानस्य लोप इति न लोपः । आदिजबानामिति धत्वम् । धिप्सति धीप्सति । ज्ञा अवबोधे पुगंतो मित्संज्ञको ञ्यंतो जानातेर्ज्ञपिः पकारांतश्चौरादिको वा दंभिज्ञपिभ्यामिति वेट् । जिज्ञपयिषति । इडभावे नानिटि से इति न गुणः । से दीर्घ इति दीर्घस्तु परत्वात् ञेरिति ञिलोपे न बाध्यते । ज्ञपेः स्वरस्य सादौ से ईत् पूर्वस्य लोपश्च । अनिटि से । ज्ञीप्सति ॥

**इवन्तऋधभ्रस्जश्रिस्वृयूर्णुभृसनिभ्यः सस्येड्वा ॥ ४१० ॥** दिदेविषति ॥

सुबो०–इवन्तऋधभ्रस्जश्रिस्वृयूर्णुभृसनिभ्यः सस्येड् वा । इवंतेभ्यः ऋधादिभ्यश्च सस्येड् वा स्यात् । दिवु क्रीडादौ । सिसतासीस्यपामितीट् । दिदेविषति । इडभावे नानिटि से इति न गुणः ॥

**वस्यानिटि से उः ॥ ४११ ॥** दुद्यूषति । अर्दिधिषति ॥

सुबो०–वस्यानिटि से उः । धातोर्वस्य उत्वं स्यात् अनिटि से यत्वं द्वित्वं च । दुद्यूषति । ऋध वृद्धौ । अर्द्धितुमिच्छति स्वरादेः पर इति धिस्शब्दस्य द्वित्वे । अर्दिधिषति । इडभावे ॥

**ऋधेरनिटि से स्वरस्य इर्द्वित्वलोपश्च ॥ ४१२ ॥** ईर्त्सति । बिभ्रज्जिषति बिभर्जिषति । बिभ्रक्षति बिभर्क्षति । शिश्रयिषति शिश्रीषति । सिस्वरिषति सुस्वूर्षति । यियविषति युयूषति । ऊर्णुनुविषति ऊर्णुनविषति ऊर्णुनूषति । बिभरिषति बुभूर्षति ॥

सुबो०–ऋधेरनिट् से स्वरस्य इर् द्वित्वलोपश्च । ऋकारस्य इर् । य्वोर्विहसे इति दीर्घः । खसे चपा झसानामिति तः । ईर्त्सति । भ्रस्ज पाके । इट् पक्षे भ्रस्जोरसो-

रीति अर् राद्यपो द्विरिति द्वित्वम्। बिभर्जिषति। अरभावे श्रुत्वं झभे जबा इति सजः। बिभ्राजिषति। इडभावे स्कोरिति सलोपः छशषेति षत्वं षढोः कः से इति कत्वम्। बिभ्रक्षति बिभर्क्षति। श्रिञ् सेवायाम्। शिश्रयिषति। इडभावे से दीर्घ इति दीर्घः। शिश्रीषति। स्वृ शब्दोपतापयोः। सिस्वरिषति। इडभावे से दीर्घ इति दीर्घे पोरुर् इत्युर् द्वित्वम्। सुस्वूर्षति। यु मिश्रणे। अङ्सयोरिति पूर्वोकारस्येत्। यियविषति। इडभावे से दीर्घ इति दीर्घे। युयूषति। ऊर्णुञ् आच्छादने। ऊर्णोतेरिडादिप्रत्ययो वा ङिदिति ङित्त्वाद्गुणाभावे नुधातोरित्युव्। ऊर्णुनुविषति। ङित्त्वाभावे। ऊर्णुनविषति। अतः पूर्वं द्वित्वं पश्चाद्गुणावादेशौ इडभावे से दीर्घ इति दीर्घः। ऊर्णुनूषति। भृ भर्त्सनभरणयोः। बिभरिषति। इडभावे पोरुरित्युर् य्वोर्विहसे इति दीर्घे द्वित्वे च। बुभूर्षति॥

**स्तौतिण्यन्तयोरेव षे पूर्वात् सस्य षः॥ ४१३॥ तुष्टूषति। साधयितुमिच्छति सिषाधयिषति सिषेधयिषति। सुष्वापयिषति। स्तौतिण्यन्तयोरिति किम्। सिसनिषति। षे इति किम्। सिषासति। तिष्ठासति॥**

सुबो०—स्तौतिण्यंतयोरेव षे पूर्वात्सस्य षः। पूर्वादित्वात्परस्य स्तौतिण्यंतयोरेव सस्य षः स्यात्षभूते से नान्यस्य। ष्टुञ् स्तुतौ। षत्वे से दीर्घः इति दीर्घे च। तुष्टूषति। वुः से इति नेट्। साध संसिद्धौ। ण्यंतः द्वित्वे यः से इति पूर्वस्येत्वे षत्वे च। सिषाधयिषति। स्तौतिण्यंतयोः किम्। षिचु क्षरणे। सेसिक्षति। उपसर्गात्तु मादेश्च तथा तौसुनमाम् इति अड्द्वित्वव्यवधानेऽपीति च षत्वम्। परिषिषिक्षति। वन् षण संभक्तौ। इडभावे जनसनखनामित्यात्वं वा। सिसनिषति सिषासति। किलादिति षत्वम्॥

तत्त्व०—स्तौतिण्यन्तयोरेव षे इति। षे इति कृतषत्वनिर्देशात्से स्तौतिण्यन्तस्यापि पूर्वात्षत्वम्। सिषासतीति। जनसनेत्यात्त्वविकल्पः। षे इति निर्देशादत्र न षत्वनिषेधः॥

**अनिटि से उपधाया नस्य लोपः॥ ४१४॥ तृहू हिंसायाम्॥ तितृंहिषति तितृक्षति॥**

सुबो०—अनिटि से उपधाया नस्य लोपः। धातोरुपधाभूतस्य नस्य लोपः स्यात् अनिटि सप्रत्यये। तृहु तृहू तृंहू हिंसार्थास्तुदादौ ऊदितो वेति वेट् इडभावे नलोपः ढत्वे कत्वषत्वे च। तितृक्षति तितृंहिषति॥

तत्त्व०—अनिटि से उपधाया नस्येति। णादिः किदित्यतः किदित्यनुवर्त्य वाक्यभेदेन व्याख्येयम्। लक्ष्यानुसारेण सस्य कित्त्वाकित्त्वे बोध्ये। ततो गुणाभावसम्प्रसारणनलोपाः सिद्धाः। विवृत्सति। वृताद्भ्यः स्यसयोर्वा पमिति परस्मैपदम्। षेऽनिट्त्वं चेति इडभावः॥

**इणः से गमबोधने ॥४१५॥** एतुमिच्छति जिगमिषति । बोधने तु । प्रतीषिषति । इण्वदिकः । अधिजिगमिषति । बोधने तु । अधीयिषति ॥

सुबो०—इणः से गमबोधने । इणेर्गम् स्यात् सप्रत्यये परे बोधनेऽर्थे तु न । एतुमिच्छति गमेः सस्येडितीट् । जिगमिषति । बोधने तु यः से इति सरूपस्य पूर्वस्येत्वम् । प्रतीषिषति । इण्वदिकः । इक् स्मरणे । गमेः सस्येतीट् । अधिजिगमिषति ॥

**इवर्णोवर्णोपधाद्धसादेरसान्ताद्धान्ताच्च क्त्वासौ सेटौ वा कितौ ॥४१६॥** दिद्युतिषते दिद्योतिषते । रुरुचिषते रुरोचिषते । लिलिखिषति लिलेखिषति । सिस्निहिषति सिस्नेहिषति सिस्निक्षति ॥ राधो हिंसायाम् ॥ इस् से द्वित्वलोपश्च । रित्सति । अन्यत्र । आरिरात्सति गुरुम् ॥

सुबो०—इवर्णोवर्णोपधाद्धसादेरसांताद्धांताच्च क्त्वासौ सेटौ वा कितौ । द्युत दीप्तौ । द्युतेः पूर्वस्येति संप्रसारणम् । कित्त्वाद्गुणो न । दिद्युतिषते दिद्योतिषते । एवं रुच दीप्तौ । लिख अक्षरविन्यासे । ष्णिह प्रीतौ । राधो हिंसायां इस्से द्वित्वलोपश्च राधस्वरस्येत्यर्थः । राध संसिद्धौ । स्कोरिति सलोपे खसे चपा इति धस्य तः । रित्सति । हिंसायां किम् । देवमारिरात्सति । यः से इति पूर्वस्येत् खसे चपा इति धस्य तः ॥

**मुचोऽकर्मकस्य गुणो वा से द्वित्वलोपश्च ॥४१७॥** मोक्षते मुमुक्षते वा वत्सः स्वयमेव । अकर्मकेति किम् । मुमुक्षति वत्सं कृष्णः । विवर्तिषते । विवृत्सति । निनर्तिषति । निनृत्सति । वृङ्वृञ्ऋदन्तात्सस्येड्वा । तितरिषति तितरीषति तितीर्षति । विवरिषते विवरीषते वुवूर्षते । विवरिषति विवरीषति वुवूर्षति ॥ ध्वृ कौटिल्ये ॥ दुध्वूर्षति ॥

सुबो०—मुचोऽकर्म्मकस्य गुणो वा से द्वित्वलोपश्च । मुच्लृ मोक्षणे । चोः कुरिति कः । मोक्षते मुमुक्षते । अकर्म्मकस्य किम् । मुमुक्षति । नानिटि से इति गुणाभावः । वृतु वर्त्तने । वृतादिभ्यः स्यसचोरिति वा परं पेऽनिट्त्वं च नाऽनिटि से इति न गुणः । विवृत्सति । विवर्तिषते । नृती गात्रविक्षेपे । नृततृदेति वेट् नानिटि

से इति न गुणः। निनृत्सति निनर्त्तिषति। वृङ्वृञ्ऋदंतस्येड् वा। तॄ प्लवनसंतरणयोः। वृङ्वृञिति वेटो दीर्घः। तितरिषति तितरीषति। इडभावे ऋत इरितीर्। य्वोर्विहसे इति दीर्घः। विवरिषति विवरीषति। इडभावे पोरुरित्युर्। वुवूर्षति। एवं वृञ् संभक्तौ। विवरिषते विवरीषते वुवूर्षते। ध्वृ कौटिल्ये। दुध्वूर्षति॥

तत्त्व०–दुध्वूर्षतीति। प्रथम दीर्घस्ततः पोरुर् ततो य्वोर्विहस इति दीर्घः॥

स्मिङ्पूङ्रञ्ज्वशूभ्यः सस्येट्॥ ४१८॥ सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते। उचिच्छिषति। अधिजिगापयिषति। अध्यापिपयिषति। शिश्वाययिषति। शुशावयिषति। जुहावयिषति। पुस्फारयिषति। पुस्फोरयिषति। पिपावयिषति। बिभावयिषति। यियावयिषति। रिरावयिषति। लिलावयिषति। सिस्रावयिषति। सुस्रावयिषति॥

सुबो०–स्मिङ्पूङ्रंज्वशूभ्यः सस्येट्। स्मिङ् ईषद्धसने। अस्यानिट्त्वादिडागमस्याप्राप्तिः। स्तौतिण्यंतयोरेवेति नियमान्न षः। सिस्मयिषते। पूङ् पवने। नुः से इति निषेधे प्राप्ते अङ्सयोरिति पूर्वोवर्णस्येत्। पिपविषते। ऋ गतौ। अस्याप्यनिट्त्वादिडागमस्याप्राप्तिः। सस्य इटि गुणे च कृते अरि स इति स्थिते। स्वरादेः पर इति रिस्शब्दस्य द्वित्वे। अरिरिषति। अंजू व्यक्तिलक्षणादौ। अशूङ् व्याप्तौ। अनयोरुदित्त्वादिड्विकल्पे नित्यमित्। अश् भोजने इति क्र्यादिस्तु नित्यं सेडेव। अंजिजिषति। अशिशिषते। उछ उंछे। अत्र छ इति छस्य द्वित्वे खसे चपा झसानामिति चकारे कृते च्छसहितसेटो द्वित्वे हसादिशेषे च उचिच्छिषति। इङ् अध्ययने। अध्यापयितुमिच्छति अङ्सपरे णौ इङो गाङ् वेति वा गाङ्। गतो णौ पुगिति पुक्। अधिजिगापयिषति। पक्षे इङ्क्रीजीनामित्यात्वं स्वरादेः पर इति पिशब्दस्य द्वित्वे अध्यापिपयिषति। टुओश्वि गतिवृद्ध्योः। श्वयतेर्ण्यंतस्येति वा संप्रसारणम्। शिश्वाययिषति शुशावयिषति। ह्वेञ् स्पर्द्धायाम्। ह्वयतेरङ्सपरे इति संप्रसारणे पुगभावे च कृते। जुहावयिषति। स्फुर विकसने। णौ चिस्फुरोरित्यात्वे कृते णिनिमित्तः स्वरादेश इति वचनेन तस्य स्थानिवद्भावादुकारविशिष्टस्य द्वित्वम्। पुस्फारयिषति। आत्वाभावे पुस्फोरयिषति। टुक्षु शब्दे। चुक्षावयिषति। पूङ् पवने। अङ्सयोरिति पूर्वोवर्णस्येत्वम्। पिपावयिषति। भू सत्तायाम्। भावयितुमिच्छति पूर्वस्येत्वम्। बिभावयिषति। यु मिश्रणे। अत्रापीत्वम्। यियावयिषति। रु शब्दे। पूर्वस्येत्वम्। रिरावयिषति। लूञ् छेदने। लिलावयिषति। स्रु गतौ। स्रवतिशृणोतिद्रवतीतीत्वं वा। सिस्रावयिषति। सुस्रावयिषति॥

तत्त्व०—स्मिङ्पूङिति । स्मिङ् ईषद्धसने । पूङ् पवने । ऋ गतौ । ऋ गतिप्रापणयोश्च । अंजू व्यक्तिम्रक्षणकान्तिगतिषु । अशूङ् व्याप्तौ । रंज रागे । वशकान्ताविल्येतयोर्भ्रमो न कार्यः । स्मिङोऽनिट्त्वादप्राप्ते ऋपूङोस्तु वु' से इति निषेधः। अंजश्वोस्तूदित्त्वाद्विकल्पे प्राप्ते वचनम् । किर इत्यादीनां ग्रहणादृकारान्ता न ग्राह्याः । सिस्मयिष इति । ञ्यन्तयेरेत्रेति नियमान्न षः । ङानुबन्धग्रहणात्तु पूञः पुपूर्षतीत्येव । अरिरिषतीति । ऋ इ स इति स्थिते इति गुणे अरिस इति स्थिते । स्वरादेः पर इति रिशब्दस्य द्वित्वम् । पिपावयिषतीत्यादि । व्यंतात्से अङ्सयोः पूर्वस्येति इकारः । नदी वृक्षमुन्मूलयिषति । वृष्टिराजिमभिषिषिचतीत्यादि तु चेतनत्वारोपात्सः । पाषाणादीनां संबोधनवत् ॥

**सान्तात्सो न ॥ ४१९ ॥ चिकीर्षितुमिच्छति । स्वार्थसान्तात्तु स्यादेव । जुगुप्सिषते ॥ इति सान्तप्रक्रिया ॥**

सुबो०—सांतात् सो न । "शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नंतान्न सनिष्यते ।" शैषिकाच्छैषिकः सरूपः प्रत्ययो नेष्टः । शालीये भव इति वाक्यमेव । न तु ईयंतात् पुनरीयः । सरूपः किम् । आहिच्छत्रे भवः आहिच्छत्रीयः । अण्णंतादीयः । तथा मत्वर्थीयात् मतुवर्थिकः सरूपः प्रत्ययो न भवति । धनवानस्यास्ति । वत्वंतात् न वतुः । विरूपस्तु स्यादेव । दंडिमति शाला । सरूप इत्यनुसंबध्यते । सरूपः सादृश्यं तत्तु अर्थद्वारा । तेनेच्छासन्नंतादिच्छासन् न भवति । स्वार्थसांतात्तु स्यादेव । गुप्भ्य इति स्वार्थे सप्रत्ययः । तदंतादिच्छासः । जुगुप्सिषते । यः से इतीत्वे मानादीनामिति दीर्घे च । मीमांसिषते । गुप् गोपने । मान विचारणे ॥ इति सान्तप्रक्रिया ॥

तत्त्व०—सान्तात्सो नेति । अतिशये हसादेर्यङ् द्विश्चेत्यतश्चकारानुवृत्तेरेतद्बोध्यम् ॥

कृतायामिह टीकाया लोके शंकरशर्मणा । बाधनं दुष्टबुद्धीनामगमत्सान्तसाधनम् ॥

इति सान्तप्रक्रिया ॥ २ ॥

---

**अतिशये हसादेर्यङ् द्विश्च ॥ ४२० ॥ हसादेरेकस्वराद्धातोर्भृशार्थे पौनःपुन्ये च यङ्प्रत्ययो भवति द्वित्वं च ॥**

सुबो०—अतिशये हसादेर्यङ् द्विश्च । हस आदिर्यस्य स हसादिस्तस्मादेकस्वराद्धातोर्यङ् स्यात् । यङंतस्य धातोर्द्वित्वं च अतिशयेऽर्थे । अतिपूर्वात् शीङो भावे स्वराद इत्यः । अतिशयो द्विविधः । पौनःपुन्यं भृशार्थश्च । अतिशये किम् । पठति । एकस्वरात्किम् । पुनः पुनर्जागर्ति । हसादेः किम् । भृशमीक्षते भृशं शोभते । भृशं रोचते इत्यादौ यङ् नेति भाष्यं पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते ॥

तत्त्व०—अतिशये हसादेर्यङ् द्विश्चेति । अतिशयनमतिशयः । अतिपूर्वात् शीङोऽभावे स्वराद इत्यप्रत्ययः। स च द्विविधः । पौनःपुन्यं भृशार्थश्च । स चार्थो यङो द्योत्य एव । हस आदिर्यस्य स तथा तस्मात् द्विरित्यपरं वाक्यं धातोर्द्विवचनम् । धातुश्च यङन्त एव नतु यङः प्रकृतिभूतः अटाट्यत इत्याद्यसिद्धेः ॥

यङि ॥ ४२१ ॥ यङि यङ्लुकि च पूर्वस्य नामिनो गुणः ॥ स धातुः । ङित्त्वादात् । भृशं पुनःपुनर्वा भवति । बोभूयते । बोभूयाञ्चक्रे । बोभूयिषीष्ट । अबोभूयिष्ट । बोभुज्यते ॥

सुबो०—यङि । यङ्प्रत्यये लुकि च पूर्वस्येत्यनुवृत्तम् । भू सत्तायाम् । स धातुरिति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् । पुनःपुनरतिशयेन वा भवति बोभूयते । बोभूयेते । बोभूयताम् । अबोभूयत । कासादिप्रत्ययादित्याम् । यत इत्यलोपः । बोभूयांचक्रे । बोभूयिषीष्ट । बोभूयिता । बोभूयिष्यते । अबोभूयिष्यत । अबोभूयिष्ट । भुज पालनादौ । अतिशयेन भुनक्ति बोभुज्यते ॥

तत्त्व०—ङित्त्वादादिति । अत्र केचित् । कथ यटतादात् ङितो धातोरात्विधानात् । अत्र च यो ङित् स न धातुः यो धातुः स च न ङित् । किं च । टस्य गुणनिषेधादिप्रयोजनत्वेन चरितार्थत्वादात्मनेपदप्रयोजकत्वासंभवः । अवयवे कृत लिंगमचरितार्थं समुदायविशेषक भवतीत्युक्तेः । अत्रोच्यते । स धातुरित्यनेन यटतस्य धातुत्वेन धातोर्ङित्त्वसत्त्वात् । गुणनिषेधार्थं च ङकारप्रश्लेषस्य कर्तव्यत्वात् । बोभूयत इति । भवनानुकूल एकाभिन्नाश्रयको वर्त्तमानोऽतिशयविशिष्टो व्यापारः ॥

अनपि च हसात् ॥ ४२२॥ हसादुत्तरस्य यस्य लोपो भवत्यनपि विषये ॥ बोभुजाञ्चक्रे । बोभुजिता । मोमुह्यते । मोमुहाञ्चक्रे । लेलिह्यते । जोहूयते । वेविद्यते ॥

सुबो०—अनपि च हसात् । हसात्परस्य शब्दस्य लोपोऽनपि । हसात्किम् । लोलूयिता । पोपूयिता । आदेः परस्य । परस्य यद्विहितं तत्तस्यादेर्बोध्यमिति । यलोपः यत इत्यलोपः । बोभुजांचक्रे । बोभुजिषीष्ट । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः । एवं मुह वैचित्ये । लिह आस्वादने । हु दानादानयोः । ये इति दीर्घः । जोहूयते । विद ज्ञानादौ । वेविद्यते । डुपचष् पाके ॥

आतः ॥ ४२३ ॥ यङि यङ्लुकि च पूर्वस्यात आकारः ॥ पापच्यते । पापठ्यते ॥

सुबो०—आतः । आ अत इति च्छेदः पूर्वस्येत्यनुवृत्तम् । पापच्यते । पठ व्यक्तायां वाचि । पापठ्यते ॥

सिचो यङि न पः ॥ ४२४ ॥ सेसिच्यते ॥

सुबो०—सिचो यङि न पः । सिचेः सस्य पत्वं न स्यात् यङ्प्रत्यये परे । षिच क्षरणे । सेसिच्यते ॥

सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् ॥ ४२५ ॥ सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते ॥

**नमान्तस्योपधाया दीर्घः ॥ ४७१ ॥ कौ झसादौ क्ङिति हे च ॥ इदमिवाचरति । इदामति । राजेवाचरति । राजानति । राजायते । मन्था इवाचरति । मथीनति । ऋभुक्षा इवाचरति । ऋभुक्षीणति । द्यौरिवाचरति । द्यवति । दुद्याव । द्यूयात् । द्यविता । क इवाचरति । कति । चकौ । चके इत्यन्ये । स्व इवाचरति । स्वति । सस्वौ । सस्व इत्यन्ये ॥**

सुबो०—नमांतस्योपधाया दीर्घः । कौ झसादौ हकारे च क्ङिति । झसादौ किति शांतो दांत इत्युदाहरणम् । ङिति तु यङ्लुकि तस्प्रत्यये । शंशांतः । दंदांतः । पंथा इवाचरति । पथीनति । अत्रांतरंगत्वाद्दीर्घस्ततो न गुणः । द्यौरिवाचरति क्ङिति झसे क्वाविति वस्य उत्वे गुणावादेशौ । द्यवति । को ब्रह्मा तद्वदाचरति । कति । लिटि धातोर्नामिन इति वृद्धौ आतो णब् डावित्यौ । चकाविति हरदत्तः । माधवस्तु णपि वृद्धिं बाधित्वा यत इत्यलोपात् चक इति रूपमाह ॥

तत्त्व०—द्यवतीति । कौ झसादाविति वस्योत्वे गुणावादेशौ । चकाविति । आत इत्यत्र आ अत इति छित्त्वा अदतादपि डौ ॥

**आचार उपमानात् ॥४७२॥ कर्मधारये उपमानादाचारेऽर्थे यप्रत्ययोऽस्य चेकारः॥ पुत्रमिवाचरति । पुत्रीयति शिष्यमुपाध्यायः। प्रासाद इवाचरति । प्रासादीयति कुट्यां भिक्षुः ॥**

सुबो०—आचार उपमानात् । नाम्नो य ई चास्येत्यनुवृत्तम् । आचरणमाचारः । चरेर्भावे घञ् । ज्ञानं व्यवहारो वा । उपमीयते अनेनेत्युपमानम् । माङः करणे युट् । कर्मण उपमानादाचारादुपमानाच्च नाम्नो यः स्यात् आचारार्थे तस्मिन् ये परे पूर्वस्यावर्णस्य इत्वं च । राजानमिवाचरतीत्यत्र नाम्नो न इति नलोपे कृते इत्वम् । राजीयति ॥

तत्त्व०—आचार उपमानादिति । आचरणमाचारः चरेर्भावे घञ् । व्यवहारो ज्ञान वा उपमीयतेऽनेनेत्युपमानम् । पुत्रीयति शिष्यमुपाध्याय इति । पुत्रविषयकं यज्ज्ञानं व्यवहारो वा तत्सदृश शिष्याभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तदनुकूलो वर्त्तमान एकगुर्वभिन्नाश्रयको व्यापारः। प्रासादाभिन्नाश्रयं यज्ज्ञान व्यवहारो वा तत्सदृशं कुट्यभिन्नाश्रय यज्ज्ञानं व्यवहारो वा तदनुकूल एकाभिन्नाश्रयो वर्त्तमानकालिको व्यापार. ॥

**भृशादिभ्योऽभूततद्भावे यङ् अन्त्यहसलोपश्च॥४७३॥ अभृशो भृशो भवति भृशायते । अशश्वत् शश्वद्भवति शश्वायते ॥**

सुबो०—भृशादिभ्योऽभूततद्भावे यङ् अंत्यहसलोपश्च । भृशादिभ्यो यङ् स्यात् तस्मिन् परे भृशादीनामंत्यस्य हसस्य लोपश्चाभूततद्भावेऽर्थे । ये इति दीर्घः । भृशायते ॥

क्विपपि ॥ ४७४ ॥ भृशति ॥

सुबो०–क्विपपि । भृशादिभ्यः क्विप् स्यादभूते तद्भावेऽर्थे ॥

च्विरपि ॥४७५॥ भृशीभवति । भृश्यभूत् । सुमनायते । उपसर्ग-समानाकारं पूर्वपदं धातुसंज्ञाहेतौ प्रत्यये चिकीर्षिते पृथक् क्रियते । स्वमनायत । उदमनायत ॥

सुबो०–च्विरपि । भृशादिभ्यः च्विः स्यादभूततद्भावेऽर्थे कृभ्वस्तियोगे एव । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाहेतौ प्रत्यये चिकीर्षिते पृथक् क्रियते । धातु-संज्ञाविधायके प्रत्यये कर्तुमिष्टे सति उपसर्गतुल्यं पूर्वपदं भिन्नं कर्त्तव्यमित्यर्थः । चुरादौ संग्राम युद्धे इति संविशिष्टपाठोऽस्य ज्ञापकः । तेन मनस्शब्दात्प्राग् अद् भवति । स्वमनायत ॥

तत्त्व०–उपसर्गसमानाकारमित्यादि । अत्र ज्ञापक तु चुरादिषु सग्राम युद्ध इति विशिष्टपदम् । अन्यथा ग्रामयुद्ध इत्येवापठिष्यत् ॥

सुखादिभ्यो यङ्॥४७६॥ कर्तुरनुभवे ॥ सुखं वेदयते सुखायते । दुःखायते ॥

सुबो०–सुखादिभ्यो यङ् । कर्तुरनुभवे सुखादिभ्यः कर्म्मभ्योऽनुभवकर्तुरेव चेत् सुखादीनि स्युः । अनुभवशब्दो ज्ञानवाची । तदपेक्षमेव कर्तृत्वं कर्ता चेत्सुखादि-भिरन्वेति सुखं वेदयते । ये इति दीर्घः । सुखायते । कर्तुरिति किम् । सुखं वेदयते परस्य । इह यन्निष्ठं सुखं तद्भिन्नोऽनुभवः ॥

तत्त्व०–सुख वेदयत इति । स्वगत सुखमनुभवतीत्यर्थः ॥

पुच्छादुदसने व्यसने पर्य्यसने च णिङ् ॥४७७॥ उत्पुच्छयते । उदपुच्छत । विपुच्छयते । परिपुच्छयते ॥

सुबो०–पुच्छादुदसने व्यसने पर्यसने च णिङ् । पुच्छान्नाम्नो णिङ् स्यात् उत् ऊर्ध्वमसनं क्षेपणं उदसनम् । विविधं विरुद्धं वाऽसनं व्यसनम् । परि समंतादसनं पर्यसनम् । तस्मिन्नर्थे । ङित्त्वादात् । पुच्छमुदस्यति उत्पुच्छयते । उदपुच्छत ॥

तत्त्व०–पुच्छादुदसन इत्यादि । उदसनमुत्क्षेपणम् । विविध विरुद्ध वा क्षेपणं व्यसनम् । परितः पर्यसनम् ॥

भाण्डात्समाचयने ॥ ४७८ ॥ सम्भाण्डयते ॥

सुबो०–भांडात्समाचयने । भांडात् णिङ् स्यात् राशीकरणेऽर्थे । संभांडयते । लुङि । समबभांडत ॥

तत्त्व०–समानयन राशीकरणम् ॥

चीवरादर्ज्जने परिधाने च ॥४७९॥ चीवराणि अर्जयति परिधत्ते वा संचीवरयते भिक्षुः । नाम्नो णिराचष्टे ॥

सुबो०—चीवरादर्जने परिधाने च । णिङ् । चीवराण्यर्जयति परिधत्ते वा । संचीवरयते । लुङि । समचिचीवरत ॥

तत्त्व०—संचीवरयते इति । अर्जयति परिधत्ते वेत्यर्थः ॥

अर्थवेदसत्यानामापुग् णौ ॥४८०॥ अर्थापयति । आर्तीथपत् । वेदापयति । सत्यापयति । अससत्यपत् । एतयते । ऐतत् । पृथुम् । प्रथयति । वृद्धौ सत्यां पूर्वं वा टिलोपः । अपप्रथत् अपिप्रथत् । मृदुम् । म्रदयति । अमम्रदत् अमिम्रदत् । भृशम् । भ्रशयति । अबभ्रशत् । कृशम् । क्रशयति । अचक्रशत् । दृढम् । द्रढयति । अदद्रढत् । परिव्रढयति । पर्य्यवव्रढत् । त्वादयति । अतित्वदत् । मादयति । अमीमदत् । युष्मयति । अयुयुष्मत् । अस्मयति । आसिस्मत् । विद्वांसम् । विद्वयति । अविविद्वत् । विदावयति इत्यपरे । अविविदावत् । विदयति इत्यन्ये । अविविदत् । एवं श्वानमाचष्टे श्वयति । अशिश्वत् । शावयत्यपरे । अशुशावत् । शुनयतीत्यन्ये । अशुशुनत् । उदञ्चम् । उदीचयति । उदैचिचत् । प्रत्यञ्चम् । प्रतीचयति । प्रत्यचिचत् । सम्यञ्चम् । समीचयति । सम्यचिचत् । तिर्य्यञ्चम् । तिरायति । अतितिरायत् । सध्र्यञ्चम् । सध्रायति । अससध्रायत् । अन्तिकम् । नेदयति । अनिनेदत् । बाढम् । साधयति । वृद्धम् । ज्यापयति । अजिज्यपत् । वृद्धम् । वर्षयति । स्फिरम् । स्फापयति । अपिस्फपत् । उरुम् । वरयति । बहुलम् । बंहयति । तृप्रम् । त्रपयति । दीर्घम् । द्राघयति । अदद्राघत् । वृंदारकम् । वृन्दयति । अववृन्दत् ॥ इति नामधातुप्रक्रिया ॥

सुबो०—अर्थवेदसत्यानामापुग् णौ । एषामापुगागमः स्यात् णिप्रत्यये परे । अर्थमाचष्टे करोति वा अर्थापयति । एनीमाचष्टे णिप्रत्यये टिलोपः । ततो निमित्ताभावे नैमित्तिकस्याप्यभाव इतीपोऽभावे नस्याप्यभावः । एतयति । पृथुमाचष्टे । ऋ रसनीति रभावे टिलोपे च । प्रथयति । लुङि वृद्धौ सत्यां टिलोपः । अग्वृलोपित्वाभावादङि लघाविति पूर्वस्येत्वम् । अपिप्रथत् । वृद्धेः पूर्वं टिलोपे त्वग्वृलोपित्वादित्वं न । अपप्रथत् । मृदुं आचष्टे णाविष्ठवद्भावात् ऋ रसनीति रभावे टिलोपे

च । म्रदयति । एवं भृशकृशदृढादयः । त्वां मां वाऽऽचष्टे टिलोपे त्वन्मदेकत्वे इति त्वन्मदादेशे च कृते अत उपधाया इति वृद्धौ । त्वादयति । मादयतिं । युवामावां युष्मानस्मान् वाचष्टे विभक्तिपरत्वाभावान्न युवावौ । टिलोपे सति । युष्मयति । अस्मयति । श्वानमाचष्टे आविष्ठवद्भावात् शुनो वस्य उर्वा च दीर्घ इत्युत्वे टिलोपाभावे च शुनयतीति रूपं केचिदाहुः । टिलोपे उत्वे च वृद्धौ सत्याम् । शावयति । लुङि अग्ग्लोपित्वान्न ह्रस्वः । अशुशावत् । विद्वांसमाचष्टे टिलोपे । विद्वयति । टिलोपे कृते वसोर्वे उरित्युत्वे वृद्धावायादेशे च दिवायतीत्यन्ये । नित्यत्वात्पूर्वमुत्वं पश्चाट्टिलोपः । विदयतीत्यपरे । उदंचमाचष्टे आविष्ठवद्भावात् तिरश्चादय इत्युदीच् । उदीचयतीत्यत्रोपसर्गं पृथक्कृत्य अचशब्दादेव णिः बहुलग्रहणाट्टिलोपो न । लुङि उपसर्गसमानाकारमितीकारात्पूर्वमटि चिशब्दस्य द्वित्वे पश्चात् णेरिति णिलोपः । उदैचिचत् । प्रत्यंचमाचष्टे अंचेर्दीर्घश्चेत्यलोपपूर्वदीर्घौ । प्रतीचयति । लुङि चिशब्दात्प्रागटि कृते पूर्वस्य यत्वम् । प्रत्यचिचत् । ऋृणामसवर्णे स्वर इति प्रकृतिभावपक्षे तु । प्रतिअचिचत् । सम्यंचमाचष्टे अंचेर्दीर्घश्चेत्यलोपपूर्वदीर्घौ । समीचयति । लुङि । सम्यचिचत् । प्रकृतिभावपक्षे समिअचिचत् । तिर्यंश्चमाचष्टे अंचेष्टिलोपेनापहारेऽपि तस्य बहिरंगत्वेनासिद्धत्वात्तिरीत्यस्य सद्भावः । वृद्धौ सत्यां तिगयति । उपसर्गसमानाकारत्वाभावादिह तिरसः पृथक्करणं नास्ति । अतितिरायत् । अङि लघाविति ह्रस्वस्तु नाग्ग्लोपित्वात् । सध्र्यञ्चमाचष्टे टिलोपेनांचेरपहारे वृद्धौ सत्यां सध्राययति । अंतिकमाचष्टे गुर्वादेरित्यंतिकस्य नेदाष्टिलोपश्च । यस्येत्यलोपः । नेदयति । लुङि । अनिनेदत् । बाढमाचष्टे बाढस्य साधः । साधयति । अससाधत् । वृद्धमाचष्टे वृद्धस्य ज्यादेशः । रातो आविति पुक् । ज्यापयति । अजिज्यपत् । वृद्धस्य वर्षोऽपि । वर्षयति । अववर्षत् । स्फिरमाचष्टे स्फिरस्य स्फः । वृद्धौ सत्यां रातो आविति पुक् । स्फापयति । अपिस्फपत् । उरुमाचष्टे उरुशब्दस्य वर् संज्ञापूर्वकविधेरनित्यत्वाद्बाहुलकाद्वा माधवेन विकल्पेन वृद्धिरुदाहृता । वरयति । अवीवरत् । बहुलमाचष्टे बहुलस्य बंहः । बंहयति । नो लोप इति नलोपो न । अग्ग्लोपित्वात् न इत्वदीर्घौ । अबबंहत् । तृप्रमाचष्टे तृप्रस्य त्रप् । त्रपयति । अतित्रपत् । दीर्घमाचष्टे दीर्घस्य द्राघः । द्राघयति । अदद्राघत् । वृंदारकमाचष्टे वृन्दारकस्य वृन्दः । वृन्दयति । अववृन्दत् ॥ इति नामधातुप्रक्रिया ॥

तत्त्व०—अर्थवेदेत्यादि । अत्र करण इत्यनुवृत्त क्रियाविशेषोपलक्षण तेनार्थमाचष्ट इत्यादिविग्रहः आत्वेनैव सिद्धं आपुक्करणमन्यतोऽपि विधानार्थम् । तेन लिखापयतीत्यादि सिद्धम् । अपिप्रथदिति । वृद्धौ ओकारे कृते ततः लोप. अग्ग्लोपित्वाभावादङ्कार्यम् । त्वादयाति मादयतीति । नो वेत्यत्र वा इत्यस्य व्यवस्थितत्वात्क्वचिन्न टिलोप. । विद्वयतीति आदौ टिलोपः पुनरङ्गवृत्तपरिभाषया सप्रसारण न । विद्वयतीति । संप्रसारणे कृते टिलोप इति पक्षे विदावयति टिलोपे कृते सप्रसारणे वृद्ध्यावादेशौ सकृत्प्रवृत्तत्वात्पुनष्टिलो-

पाप्रसंगः । उदीचयतीति । टिलोपो न व्यवस्थितत्वात् । तिरायतीति । आदौ टिलोपस्ततस्तिर्यादेशस्ततो वृद्ध्यायादेशौ पुनष्टिलोपस्त्वसकृत्प्रवृत्तत्वान्न । अतितिरायदिति अग्वृलोपित्वादुपधाह्रस्वोऽपि न ॥

कृतायामिह टीकायां लोके शंकरशर्मणा । समासेनेदमभवन्नामधातुसमापनम् ॥

इति नामधातुप्रक्रिया ॥ ५ ॥

---

कण्ड्वादिभ्यो धातुभ्यो यक् स्वार्थे ॥ ४८१ ॥ कण्डूञ् गात्रविघर्षणे ॥ कण्डूयति । कण्डूयते ॥ मन्तु अपराधे रोषे च ॥ मन्तूयति । ञिदित्येके । मन्तूयते ॥ वल्गु पूजामाधुर्य्ययोः ॥ वल्गूययति ॥ अस् असु असूञ् उपतापे ॥ अस्यति । अनपि च हसात् । असाञ्चकार । असूयति । असूयते ॥ लेला दीप्तौ ॥ लेलायति ॥ मेधा आशुग्रहणे ॥ मेधायति ॥ सुख दुःख तत्क्रियायाम् ॥ सुख्यति । दुःख्यति ॥ सपर् पूजायाम् ॥ सपर्य्यति । सपराञ्चकार ॥ भिषज् चिकित्सायाम् ॥ भिषज्यति ॥ इषुध् शरधारणे ॥ इषुध्यति । ऐषुधीत् ॥ गद्गद् वाक्स्खलने ॥ गद्गद्यति ॥ एला खेला विलासे ॥ एलायति । खेलायति ॥ हृणीङ् रोषणे लज्जायां च ॥ हृणीयते ॥ महीङ् पूजायाम् ॥ महीयते ॥ अगद् नीरोगत्वे ॥ अगद्यति । आगदीत् ॥ इति कण्ड्वादयः ॥

सुबो०—कंड्वादिभ्यो धातुभ्यो यक् स्वार्थे । एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे । कंड्वादयो द्विधा । धातवः प्रातिप्रदिकानि च । नाम्नां तु विग्रह एव । सपर् पूजायाम् । यगंतात् षिद्भिदामङ् इत्यनेनाङ्प्रत्यये आप् । सपर्या । महीङ् पूजायाम् । महीयते । पूजां लभते इत्यर्थः । आकृतिगणोऽयम् ॥ इति कंड्वादयः ॥

तत्त्व०—कड्वादिभ्यो यगिति । कंड्वादयो हि द्विविधाः । धातवो नामानि च । तत्र धातुभ्यो नित्य यक् । नाम्ना तु कंडू करोतीति विग्रह एव ॥

कृतायामिह टीकायां लोके शंकरशर्मणा । बाधूनं दुष्टबुद्धीनामगात्कंड्वादिसाधनम् ॥

इति कंड्वादिप्रक्रिया ॥ ६ ॥

---

प्रत्ययमाला—कंडूयतेः सप्रत्यये द्विश्चेति प्रथमस्य द्वित्वे प्राप्ते कंड्वादेस्तृतीयस्य द्वित्वम् । कंडूयियिषति । यप्रत्ययान्तात् सप्रत्यये तु यथेष्टं नामधातुषु द्वित्वमित्याद्यानां त्रयाणामन्यतमस्य द्वित्वं भवति । स्वरादेस्त्वाद्येतरस्य द्वित्वम् । पुत्रीयितुमिच्छति पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति । अशिश्वीयिषति ।

अश्वीयियिषति । आत्मन इंद्रमिच्छति । इन्द्रीयति । इन्द्रीयतेः सप्रत्यये द्रीशब्द-यीशब्दयोरन्यतरस्य द्वित्वम् । इंदिन्द्रीयिषति । इन्द्रीयियिषति । ण्यंतात्सप्रत्यये तु प्रियशब्दात् णाविष्ठवद्भावेन प्रिशब्दस्य प्रादेशस्ततो द्वित्वादि । प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति पिप्रापियिषति प्रापिपयिषति प्रापयियिषति । यङ्सन्ण्यंतात्सप्रत्यये तु । बोभूयिषयिषति । यङ्णिसातात् णिप्रत्यये तु । बोभूययिषति ॥ इति प्रत्ययमाला ॥

**निविशादेः ॥ ४८२ ॥ न्यादिपूर्वाद्विशादेर्धातोरात् ॥ निविशते ॥**

सुबो०–निविशादेः । निपूर्वो विशः नेः परो विश इति वा निविश आदिर्यस्य स निविशादिस्तस्मादात्स्यात् । आदिशब्दः प्रकारे विश इत्यत्र अकार उच्चारणार्थः । " निविशते यदि शूकशिखापदः " इति श्रीहर्षः । नि किम् । प्रविशति । अर्थवद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणम् । तेनेह न । मधुनि विशंति भ्रमराः ॥

तत्त्व०–निविशादेरिति ॥ निपूर्वो विशः नेः परो विश इति वा विशोऽकार उच्चारणार्थः असंदेहार्थं वा । अकारोच्चारणे त्वन्यथा निविडादेरित्युक्ते विश वा विड भेदेन वेति संदेहः स्यात् । निविश आदिर्यस्येति स तथा तस्मात् आदिशब्दः प्रकारे तेन निविशसदृशादिति बोध्यं साम्यं चोपसर्गपूर्वत्वम् । निविशादिगणाभावाद्यन्नस्वावाचिन आदिशब्दस्य ग्रहणं तेन नयतीति कुलं विशतीत्यत्र न भवति । एवं वेति विजयतीत्यत्र ( १ ) न । परा जयति दुरात्मनोत्तमाः पराः ॥

**परिव्यवेभ्यः क्रियः ॥ ४८३ ॥ परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।**

सुबो०–परिव्यवेभ्यः क्रियः । परगामिफलार्थमिदमात्मनेपदम् ॥

**विपराभ्यां जेः ॥ ४८४ ॥ विजयते । व्यजेष्ट । पराजयते ॥**

सुबो०–विपराभ्यां जेः । आभ्यां परो जयतिरात्वान् ॥

**आङो दाणो नतु विकसने ॥ ४८५ ॥ विद्यामादत्ते । आदित । विकसने तु । व्याददाति मुखं कृष्णः । पराङ्गकर्म्मकान्नवत्येव । व्याददते पिपीलिकाः पतंगस्य मुखम् ॥**

सुबो०–आङो दाणो नतु विकसने । परगामिफलार्थमिदम् । आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्त्तमानादात्मनेपदं स्यात् । विद्यामादत्ते ॥

**क्रीड आङनुसम्परिभ्यः ॥ ४८६ ॥ आक्रीडते । अनुक्रीडते । परिक्रीडते ॥**

सुबो०–क्रीड आङनुसंपरिभ्यः । तृतीयार्थस्यानोर्योगे नात्मनेपदम् । माणवकमनुक्रीडति । तेन सहेत्यर्थः ॥

समोऽकूजने ॥४८७॥ संक्रीडते । कूजने तु । संक्रीडति रथचक्रम्॥

सुबो०—समोऽकूजने । समः परः क्रीडतिरात्वान् अकूजनेऽर्थे ॥

आगमेः क्षमायाम् ॥ ४८८ ॥ आगमयस्व तावत् ॥

सुबो०—आगमेः क्षमायाम् । आङ्पूर्वात् ण्यंताद्गमेरात्स्यात् क्षमायामर्थे । आगमयस्व तावत् । मा त्वरिष्ठा इत्यर्थः ॥

तत्त्व०—आगमेः क्षमायाम् । गमेरिति ण्यंतस्य ग्रहणम् । क्षमा प्रतीक्षा । आगमयस्वेति । मा त्वरिष्ठा इत्यर्थः ॥

शिक्षेर्जिज्ञासायाम् ॥ ४८९ ॥ धनुषि शिक्षते ॥

सुबो०—शिक्षेर्जिज्ञासायाम् । शिक्ष विद्योपादाने इत्यस्य नेह ग्रहणम् । अनुदात्तत्वादेवात्मनेपदसिद्धेः । किंतु शकेः सांतस्येह ग्रहणम् । धनुषि शिक्षते । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ॥

तत्त्व०—धनुषि शिक्षत इति । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ॥

हरतेर्गतताच्छील्ये ॥ ४९० ॥ पैतृकमश्वा अनुहरन्ते मातृकं गावः ॥

सुबो०—हरतेर्गतताच्छील्ये । गतं प्रकारः सादृश्यमिति यावत् । पैतृकमश्वा अनुहरंते मातृकं गावः । पितुर्मातुश्च सादृश्यं सततं परिशीलयंतीत्यर्थः । ताच्छील्ये किम् । मातुरनुहरति । इह सादृश्यमात्रं विवक्षितम् । नतु प्रकारताच्छील्यम् ॥

तत्त्व०—गतताच्छील्य इति । गतं प्रकारः । पैतृकमश्वा अनुहरन्त इति । पितुः प्रकारं सततं परिशीलयन्तीत्यर्थः । गतं गमनं तस्य । ताच्छील्य इति व्याख्याने तु अयकः संबन्धो यदनुहरते तस्य कुमुद्वमित्यादावव्याप्तिः स्यात् ॥

किरतेर्हर्षजीविकाकुलायकरणेषु ॥ ४९१ ॥

सुबो०—किरतेर्हर्षजीविकाकुलायकरणेषु । किरतेरात्स्यात् एषु वाच्येषु । हर्षादयो विषयाः तत्र हर्षो विक्षेपस्य कारणमितरे फले ॥

तत्त्व०—किरतेरिति । कॄ विक्षेपे । हर्षादयो विषयत्वेनोपादीयंते । तत्र हर्षो विक्षेपकरणम् । इतरे फलम् ॥

अपात्किरतेः सुट् चतुष्पाच्छकुनिकर्तृके आलेखने ॥४९२॥
अपस्किरते वृषो हृष्टः । कुक्कुटो भक्षार्थी । श्वाऽऽश्रयार्थी च ।
हर्षादिष्विति किम् । अपकिरति कुसुमं वायुः ॥

सुबो०—अपात्किरतेः सुट् चतुष्पाच्छकुनिकर्तृके आलेखने । अपात्किरतेः सुट् स्यात् हर्षादिष्वेव चतुष्पाच्छकुनिकर्तृके आलेखने सति । अपस्किरते वृषो हृष्टः । हर्षेण भूमिं विलिखतीत्यर्थः । हर्षादिष्विति किम् । अपकिरति कुसुमम् । इहासुटौ न हर्षादिमात्रविवक्षायां यद्यप्यात्मनेपदे प्राप्ते तथापि सुडभावे नेष्यत इत्याहुः । गजोऽपकिरति । अत्र हर्षे सत्यप्यालेखनाभावात् सुटोऽप्राप्तिः ॥

तत्त्व०—अपस्किरते वृषो हृष्ट इति । हर्षेण भूमिं विलिखतीत्यर्थः ॥

**आङो नुप्रच्छोः ॥ ४९३ ॥** आनुते । आपृच्छते ॥

सुबो०—आङो नुप्रच्छोः । आङः परावेतावात्वंतौ भवतः । णु स्तुतौ । अदादिः । प्रच्छ ज्ञीप्सायाम् । तुदादिः ॥

तत्त्व०—आङ इति । णु स्तुतौ अदादिः । प्रच्छ ज्ञीप्सायां तुदादिः । आनुत इति उत्कण्ठापूर्वकशब्दं करोतीत्यर्थः ॥

**शप उपालम्भे ॥ ४९४ ॥** विप्राय शपते ॥

सुबो०—शप उपालंभे । आक्रोशार्थे स्वरितेतः शपः परगामिफले शपथरूपेऽर्थे आत्मनेपदं भवति । कृष्णाय शपते । श्लाघह्नुङिति संप्रदानसंज्ञा ॥

तत्त्व०—उपालम्भ इति । शपथ इत्यर्थः । स च वाचा शरीरस्पर्शनरूपः । विप्राय शपत इति । त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येव शपथेन विप्रस्य स्वाभिप्राय प्रकाशयतीत्यर्थः । सख्यः शपामि यदि किंचिदिह स्मरामीत्यत्र तु स्वाशयप्रकाशनमात्रं विवक्षित नतु शपथरूपमपीत्यदोषः ॥

**समवप्रविभ्यः स्थः ॥४९५॥** संतिष्ठते । समस्थित । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ॥

सुबो०—समवप्रविभ्यः स्थः। लुङि। अपिद्वाधास्थामिदितीत्वम्। समस्थिषाताम्॥

**आङः प्रतिज्ञायाम् ॥ ४९६ ॥** शब्दं नित्यमातिष्ठते ॥

सुबो०—आङः प्रतिज्ञायाम्। शब्दं नित्यमातिष्ठते। नित्यत्वेन प्रतिजानीते इत्यर्थः॥

**स्वाभिप्रायाविष्करणे निर्णेत्राख्यायां च ॥ ४९७ ॥** गोपी कृष्णाय तिष्ठते । अस्थित । संशय्य कर्णादिषु तिष्ठते यः ॥

सुबो०—स्वाभिप्रायाऽऽविष्करणे निर्णेत्राऽऽख्यायां च । स्वाशयस्य प्रकाशने विवादस्य निराकरणकर्त्ता निर्णेता तस्मिन्नर्थे च तिष्ठतेरात्स्यात् । गोपी कृष्णाय तिष्ठते । स्थित्या नेत्रादिविकाराद्वा स्वाभिप्रायं ज्ञापयति । संशय्य कर्णादिषु तिष्ठते यः । संशयं विधाय निर्णेतृत्वेन कर्णादीनाश्रयते इत्यर्थः ॥

तत्त्व०—निर्णेत्राख्यायामिति । निर्णेता विवादस्य निराकरणकर्त्ता लोके प्रसिद्धः । कृष्णाय तिष्ठते इति । स्वस्थित्या नेत्रादिविकारद्वारा स्वाभिप्रायविशेषं ज्ञापयतीत्यर्थः । संशय्य कर्णादिष्विति । संशयं निर्णेतुं कर्णादिषु तिष्ठतीत्यर्थः । अन्ये तु संशयस्य कर्णादय एव निर्णेतार इत्येवार्थ इति ॥

**उदोऽनूर्ध्वकर्म्मणीहायाम् ॥ ४९८ ॥** मुक्तावुत्तिष्ठते । उदस्थास्तम्भोस्सलोपः । उत्थासीष्ट । उत्थासीयास्ताम् । उदस्थास्यत । उदस्थित । अनूर्ध्वकर्म्मणि किम् । पीठादुत्तिष्ठति । ईहायां किम् । ग्रामाच्छतमुत्तिष्ठति ॥

सुबो०—उदोऽनूर्ध्वकर्मणीहायाम् । इच्छापूर्विका चेष्टा ईहा तस्यामेव । नेह । ग्रामाच्छतमुत्तिष्ठति । उत्पद्यते इत्यर्थः ॥

तत्त्व०—उद इति । कर्मक्रिया ईहा परिस्पंदः । मुक्तावुत्तिष्ठत इति । मुक्त्यर्थं घटत इत्यर्थः । ईहायां किम् । ग्रामाच्छतमुत्तिष्ठति । उत्पद्यत इत्यर्थः । उत्पत्तिः क्रिया नतु परिस्पंदात्मिकेत्यादभावः ॥

**उपान्मंत्रकरणदेवपूजासंगतिकरणमित्रकरणपथिषु ॥ ४९९ ॥** आग्नेय्याऽऽग्नीध्रमुपतिष्ठते । मंत्रकरणे किम् । भर्तारमुपतिष्ठति यौवनेन । आदित्यमुपतिष्ठते । गंगा यमुनामुपतिष्ठते । रथिकानुपतिष्ठते । स्रुघ्नमुपतिष्ठते पन्थाः ॥

सुबो०—उपान्मंत्रकरणदेवपूजासंगतिकरणमित्रकरणपथिषु । एष्वर्थेषु उपात्तिष्ठतेरात्स्यात् । मंत्रः करणं यत्र तत् मंत्रकरणं स्तुतिः । आग्नेय्याऽऽग्नीध्रमुपतिष्ठते । अग्निदेवताकया ऋचाऽऽग्नीध्रमग्निविशेषं स्तोतुं तत्समीपे तिष्ठतीत्यर्थः । अग्निमिंधे इति अग्नीत् क्विबंतः । अग्नीधः स्थानमग्नीध्रं तत्स्थोपाग्नीध्रः । निपातनात्तद्धितो रणप्रत्ययः । मंत्रकरणे किम् । भर्त्तारमुपतिष्ठति यौवनेन । आदित्यमुपतिष्ठते । आदित्यं स्तोतुं तदभिमुखतया तिष्ठतीत्यर्थः । गंगा यमुनामुपतिष्ठते । उपश्लिष्यतीत्यर्थः । रथिकान् उपतिष्ठते । मैत्रीकरोतीत्यर्थः । पंथाः स्रुघ्नो देशस्तमुपतिष्ठते । प्राप्नोतीत्यर्थः ॥

तत्त्व०—उपान्मंत्रकरणं कारक देवानां पूजा संगतिः संश्लेषः मित्रस्य करण पथा मार्गः स च कर्तृत्वेः संबध्यते । आदित्यमुपतिष्ठत इति । पूजयतीत्यर्थः । यमुनेति । उपश्लिष्यतीत्यर्थः । रथिकानिति । मित्रीकरोतीत्यर्थः । पंथा इति । प्राप्नोतीत्यर्थः ॥

**वा लिप्सायाम् ॥ ५०० ॥** भिक्षुः प्रभुमुपतिष्ठते उपतिष्ठति वा ॥

सुबो०—वा लिप्सायाम् । प्रभुमुपतिष्ठते । लिप्सयोपगच्छतीत्यर्थः ॥

तत्त्व०—वा लिप्सायामिति । लब्धुमिच्छा लिप्सा तस्यां गम्यमानायामित्यर्थः ॥

**अकर्मकाच्च ॥ ५०१ ॥** भोजनकाले उपतिष्ठते ॥

सुबो०—अकर्मकाच्च । उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् । भोजनकाले उपतिष्ठते । सन्निहितो भवतीत्यर्थः ॥

तत्त्व०—अकर्मकर्मकारक न तु क्रियाज्ञानम् । उपतिष्ठत इति । सन्निधत्त इत्यर्थः ॥

**उद्विभ्यां तपोऽकर्मकात्स्वाङ्गकर्मकाच्च ॥ ५०२ ॥** उत्तपते । वितपते पाणिं शिरो वा । स्वांगकर्मकात्किम् । सुवर्णमुत्तपति ॥

सुबो०—उद्विभ्यां तपोऽकर्मकात्स्वांगकर्मकाच्च । स्वमंगं स्वांगं न त्वद्रवमिति परिभाषितम् । उत्तपते । वितपते । दीप्यते इत्यर्थः । नेह । सुवर्णमुत्तपति । संतापयति विलापयति वेत्यर्थः । चैत्रो मैत्रस्य पाणिमुत्तपति । संतापयति वेत्यर्थः ॥

तत्त्व०—उत्तपत इति । दीप्यत इत्यर्थः ॥

**आङो यमहनिभ्यामकर्मकाभ्यां स्वांगकर्मकाभ्यां च ॥ ५०३ ॥**

आयच्छते। आहते। पाणिं शिरो वा। आघ्नाते। आहसे। अन्यत्र। शत्रुमायच्छति। आहन्ति वा॥

सुबो०—आङो यमहनिभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्यां च। यमहनिभ्यामात्। नेह। परस्य शिर आहंति। कथं तर्हि "आजघ्ने विषमविलोचनस्य वक्षः" इति भारविः। आहध्वं मा रघूत्तममिति भट्टिश्च। प्रमाद एवायमिति। समीपमेत्येत्यध्याहारो वा बोध्यः। विषमविलोचनस्य समीपमेत्य वक्ष आजघ्ने। स्वकीयमेव वक्षो मल्ल इव संतोषातिशयादास्फोटनं चक्रे इत्यर्थः॥

तत्त्व०—आङ इति। अकर्मकस्वांगकर्मकयोरनुवृत्तिरत्रापि। आयच्छत इति दीर्घो भवतीत्यर्थः। आहत इति नलोपः। आघ्नाते। आजघ्ने विषमविलोचनस्य वक्ष इत्यादौ तु प्राप्येत्यध्याहारो बोध्यः॥

हनस्सिः कित्॥ ८०४॥ वधो वाति। आवधिष्ट। आवधिषाताम्। आहसाताम्॥

सुबो०—हनः सिः कित्। हंतेः परः सिः प्रत्ययो वा कित् स्यात्। हनो लुङ्लिङोरिति वधादेशः। आवधिष्ट। आवधिषाताम्। पक्षे कित्वात् लोपस्त्वनुदात्ततनामिति नलोपः। लोपो ह्रस्वादिति सिलोपः। आहत। आहसाताम्। आहसत॥

यमस्सूचने सिः कित् ॥८०५॥ उदायत उदायसाताम् उदायसत॥

सुबो०—यमः सूचने सिः कित्। सूचनं परदोषाविष्करणम्। कित्त्वाल्लोपस्त्वनुदात्ततनामिति मलोपः। लोपो ह्रस्वादिति सिलोपः। उदायत। सूचने किम्। उदायंस्त पादः। मा कृष्टवानित्यर्थः॥

तत्त्व०—सूचन इति। परेणाच्छाद्यमानस्याविष्करण इत्यर्थः। उदायते इति। परावद्य प्रकाशयति स्मेत्यर्थः॥

समो गमृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिदृशिभ्यः॥८०६॥ अकर्मकेभ्यः॥ सङ्गच्छते॥

सुबो०—समो गमृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिदृशिभ्यः। समुपसर्गादकर्मकेभ्यो गमृच्छ्यर्तिश्रुदृशिभ्यः प्रच्छिस्वरतिविदिभ्यः सकर्मकेभ्यश्चात्स्यात्। संगच्छते। संगतं भवतीत्यर्थः॥

तत्त्व०—समो गमृच्छीति। ऋच्छ गत्यादौ। आदेशस्तु न। अर्तेः पृथग्ग्रहणात् वित्तेरेव ग्रहणम्। गम्यादिपरस्मैपदिसाहचर्यात् संगच्छत इति युज्यत इत्यर्थः। अकर्मकादित्येव। रक्षासीति। पुरापि संगृणुमहे इति। मुरारिप्रयोगस्तु इति कथयद्भ्य इत्यध्याहारेण समाधेयः। अर्थान्तरे वृत्तेरकर्मकत्व सकर्मकाणामपि।

गमेस्सिस्यौ कितौ वा॥ ८०७॥ सङ्गसीष्ट संगंसीष्ट। समगत समगंस्त। समृच्छिष्यते। समानृच्छे। समार्च्छिष्ट। संस्वरते। संसस्वरे। संस्वरिषीष्ट संस्वृषीष्ट। समस्वरिष्ट समस्वृत। सम्पृच्छते।

समप्रष्ट । समप्रक्षाताम् । संशृणुते । संश्रोता । समश्रोष्ट । संविते । संविदाते ॥

सुबो०—गमेः सिस्यौ कितौ वा । गमेरनिटौ सिस्यौ वा कितौ स्तः । आशिषि लिङि कित्त्वाल्लोपस्त्वनुदात्ततनामिति मलोपः । संगसीष्ट । लुङि पक्षे संगंसीष्ट । कित्त्वान्मलोपे लोपो ह्रस्वादिति सिलोपः । समगत । समगसाताम् । समगसत । कित्त्वाभावे । समगंस्त समगंसातां समगंसत । तौदादिकस्य ऋच्छेरत्र ग्रहणं नतु ऋच्छादेशस्येति ध्वननार्थं लटः प्रयोगः । समृच्छिष्यते । ग्रहामिति संप्रसारणम् । संपृच्छते । स्वृ शब्दोपतापयोः । संस्वरते । अर्तीति भौवादिकजौहोत्यादिकयोर्ग्रहणम् । तत्र भ्वादेः । समृच्छते । लिटि । समाराते । समारिरे । लिङि उरिति न गुणः । संमृषीष्ट । समर्त्ता । हनृत इतीट् । समरिष्यते । समारिष्यत । लुङि मेऽट इत्यटोऽभावः । उरिति न गुणः लोपो ह्रस्वादिति सिलोपे । मासमृत । मासमृषाताम् । मासमृषत । माङभावे । समार्त्त । समार्षाताम् । समार्षत । इयर्त्तेस्तु ऋभ्रोरिः पूर्वस्येति पूर्वस्येत्वे असवर्णे स्वरे पूर्वस्येतीय् । समियृते । लुङि सर्तिशास्त्यर्तिभ्य इति ङः । ऋवर्णदृशोरिति गुणः वेट इत्यडभावः । मासमरत । मासमरेताम् । मासमरंत । माङभावे । समारत । समारेताम् । समारंत । श्रुवः श्नुआदेश इति श्नुर्नुप्रत्ययश्च । संशृणुते । परस्मैपदसाहचर्याद्विदज्ञाने इत्यस्यैव ग्रहणं न तु स्वरितेतो विदॢ लाभे इत्यस्य सत्ताविचारणार्थस्य । विदेस्त्वनुदात्तत्वादात्मनेपदं सिद्धमेव ॥

वेत्तेरन्तो वा रुट् ॥५०८॥ संविदते संविद्रते । सम्पश्यते । समदृष्ट । समियृते । समारे । समियरते । ऋभ्रोरिः पूर्वस्य । समियरीत । समियरीयाताम् । स्वरादेः । अइ ए । एऐ ऐ । समैयृत । समैयराताम् । अकर्मकात्किम् । ग्रामं सङ्गच्छति ॥

सुबो०—वेत्तेरन्तो वा रुट् । विदेः परस्यात्प्रत्ययस्य रुड् वा स्यात् । दृशादेरिति पश्यः । संपश्यते । कथं तर्हि सकर्मकस्य रक्षांसीति पुरापि संशृणुमहे इति मुरारिप्रयोगः । ग्रामादिकोऽयमिति कथयद्भ्य इत्यध्याहारो वा । अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेच्छृणु । धातोरर्थांतरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेत्युक्तत्वादकर्मकत्वं बोध्यम् ॥

उपसर्गादस्यत्यूह्योर्वा ॥५०९॥ निरस्यते निरस्यति । निरास्यत् । समूहति समूहते । समुह्यात् ॥

सुबो०–उपसर्गादस्यत्यूह्योर्वा। अकर्मकादिति निवृत्तम्। असु क्षेपणे। ऊह वितर्के। बंधं निरस्यति। दिवादित्वादः। उपसर्गादूहतेर्ह्रस्वो यादौ क्ङिति। ब्रह्म समुह्यात्। अग्निं समुह्यति॥

**निसमुपविभ्यो ह्वः॥ ५१०॥ निह्वयते॥**

सुबो०–निसमुपविभ्यो ह्वः। एभ्यः परस्मात् ह्वेञ आत् स्यात्॥

**स्पर्द्धायामाङः॥ ५११॥ कृष्णश्चाणूरमाह्वयते॥**

सुबो०–स्पर्द्धायामाङः। आङः परात् ह्वेञ आत् स्यात्। पराभिभवेच्छा स्पर्द्धा तस्यामर्थे॥

तत्त्व०–स्पर्द्धायामिति। पराभिभवेच्छा स्पर्द्धा। कृष्ण इति। स्पर्द्धतया तस्याह्वानं करोतीत्यर्थः॥

**अप्रतिबन्धोत्साहस्फीततासु क्रमः॥ ५१२॥ ऋचि क्रमते बुद्धिः। अध्ययनाय क्रमते। क्रमन्तेऽस्मिन्शास्त्राणि॥**

सुबो०–अप्रतिबन्धोत्साहस्फीततासु क्रमः। ऋचि क्रमते बुद्धिर्न प्रतिहन्यत इत्यर्थः। अध्ययनाय क्रमते। उत्सहत इत्यर्थः। क्रमंतेऽस्मिन् शास्त्राणि। स्फीतानि प्रवृद्धानि भवंतीत्यर्थः॥

तत्त्व०–ऋचि क्रमत इति। न प्रतिहन्यत इत्यर्थः। अध्ययनाय क्रमत इति। उत्सहत इत्यर्थः। क्रमन्त इति। स्फीतानि भवन्तीत्यर्थः॥

**उपपराभ्याम्॥ ५१३॥ उपक्रमते। पराक्रमते॥**

सुबो०–उपपराभ्याम्। अप्रतिबंधादिषु वाच्येष्वाभ्यां क्रम आत् स्यात्। नेह। संक्रामति॥

**आङो ज्योतिरुद्गमने॥ ५१४॥ आक्रमते आक्रम्यते सूर्यः॥**

सुबो०–आङो ज्योतिरुद्गमने। आक्रमते सूर्य्यः। उदयते इत्यर्थः। नेह। आक्रामति धूमो हर्म्यस्थलात्॥

तत्त्व०–ज्योतिरुद्गमन इति। ज्योतिर्नक्षत्रादिः। आक्रमते सूर्य इति। उदयत इत्यर्थः। नभः समाक्रामति चंद्रमाः। क्रमादित्यत्र तु प्राप्नोतीत्येवार्थो न तूद्गमनम्॥

**वेः पादविहरणे॥ ५१५॥ साधु विक्रमते वाजी॥**

सुबो०–वेः पादविहरणे। क्रमेः पादविक्षेप एवार्थस्तथापि धातूनामनेकार्थत्वादेवमुक्तम्। पादविहरणे किम्। विक्रामति संधिर्द्विधा भवति। स्फुटतीत्यर्थः॥

तत्त्व०–वेरिति। विहरणं विक्षेपणम्। यद्यपि धातुरयमस्मिन्नेवार्थे प्रसिद्धस्तथापि धातूनामनेकार्थत्वाद्विशेषणम्। नेह। विक्रामति संधि.। द्विधाभवतीत्यर्थः॥

**प्रोपाभ्यां प्रारम्भार्थाभ्याम्॥ ५१६॥ प्रक्रमते। उपक्रमते॥**

सुबो०–प्रोपाभ्यां प्रारंभार्थाभ्याम्। प्रक्रमते। आरंभं करोतीत्यर्थः। 'प्रारंभा-

र्थाभ्यां किम् । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामत्यागच्छतीत्यर्थः । उपपराभ्यामिति नात्रात्मनेपदं शंक्यम् । अप्रतिबंधादिष्वेवेत्युक्तत्वात् ॥

**अनुपसर्गाद्वा ॥५१७॥** क्रमते क्रम्यते । क्राम्यति क्रामति ॥

सुबो०—अनुपसर्गाद्वा । अप्राप्तविभाषेयमप्रतिबंधादिषु तु नित्यमेव ॥

**अपह्नवे ज्ञः ॥ ५१८ ॥** शतमपजानीते ॥

सुबो०—अपह्नवे ज्ञः । अपनयनेऽर्थे ज्ञ आत् ॥

तत्त्व०—शतमपजानीत इति । अपलपतीत्यर्थः ॥

**अकर्म्मकाच्च ॥ ५१९ ॥** सर्पिषो जानीते ॥

सुबो०—अकर्मकाच्च । सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तते इत्यर्थः ॥

तत्त्व०—सर्पिष इति । सर्पिष उपायेन प्रवर्त्तते इत्यर्थः ॥

**अनुपसर्गाज्ज्ञः ॥ ५२० ॥** गां जानीते ॥

सुबो०—अनुपसर्गाज्ज्ञः । अकर्मकाच्चेत्येव सिद्धे सकर्मकार्थमारंभः । अनुपसर्गात् किम् । स्वर्गलोकं न प्रतिजानाति । कथं तर्हि, इत्थं नृपः पूर्वमवालुलोचे । ततोऽनुजज्ञे गमनं सुतस्येति भट्टिः । कर्मणि लिट् । नृपेणेति विपरिणामः ॥

**सम्प्रतिभ्यामनाध्याने ॥ ५२१ ॥** शतं सञ्जानीते । शतं प्रतिजानीते । अनाध्याने किम् । मातरं सञ्जानाति ॥

सुबो०—संप्रतिभ्यामनाध्याने । उत्कंठापूर्वकं स्मरणमाध्यानम् । शतं संजानीते अवेक्षते इत्यर्थः । शतं प्रतिजानीते । अंगीकरोतीत्यर्थः ॥

तत्त्व०—शतं सजानीते । अवेक्षत इत्यर्थः । प्रतिजानीते । अंगीकरोतीत्यर्थः ॥

**अनुपसर्गाद्वा ॥ ५२२ ॥** गां जानाति जानीते वा ॥

सुबो०—अनुपसर्गाद्वा । अनुपसर्गात् परस्य ज्ञो वात् स्यात् ॥

**वेः शब्दकर्मणः ॥ ५२३ ॥**

सुबो०—वेः शब्दकर्मणः । कृञः । शब्दं विकुरुते । उच्चारयतीत्यर्थः । शब्दकर्मणः किम् । चित्तं विकरोति कामः ॥

**अकर्मकाच्च ॥ ५२४ ॥**

सुबो०—अकर्मकाच्च । वेरकर्मकात् कृञ आत् स्यात् । विकुर्वते सैंधवाः । वाजिनो विकारं लभंते इत्यर्थः ॥

**भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषु वदः ॥५२५॥** शास्त्रे वदते । भृत्यानुपवदते । शास्त्रे वदते । क्षेत्रे वदते । गृहे वदते । उपवदते ब्राह्मणः परदारान् ॥

सुबो०–भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषु वदः। वदतेरात् स्यादेष्वर्थेषु। शास्त्रे वदते। भासमानो ब्रवीतीत्यर्थः। उपसंभाषोपसांत्वनम्। भृत्यानुपवदते। सांत्वयतीत्यर्थः। शास्त्रे वदते। ज्ञानं वदतीत्यर्थः। क्षेत्रे वदते। क्षेत्रप्रयत्नं वदतीत्यर्थः। गृहे वदते। विवादं विवदतीत्यर्थः। उपवदते प्रार्थयते। उपमंत्रणमुपच्छंदनम्। एषु किम्। किंचिद्वदति॥

तत्त्व०–भासनेत्यादि। भासन दीप्तिः। उपसभाषा सांत्वनम्। शास्त्रे वदत इति। भासमानो ब्रवीतीत्यर्थः। भृत्यानिति। सांत्वयतीत्यर्थः। शास्त्रे वदत इति। वदितु सम्यगवबुध्यत इत्यर्थ। क्षेत्रे वदत इति। क्षेत्रविषयकमुत्साहमाविष्करोतीत्यर्थः। गृहे वदत इति। विविध भाषत इत्यर्थ। परदारानुपवदते इति। भद्रे भजस्व मामिद ते दास्यामीत्येव रहसि प्रचोद्य स्वाभिलषिते प्रवर्त्तयतीत्यर्थः॥

**मनुष्यादीनां संभूयोच्चारणे॥ ५२६॥ सम्प्रवदन्ते ब्राह्मणाः॥**

सुबो०–मनुष्यादीनां संभूयोच्चारणे। वदतेरात्स्यात् मनुष्यादीनां समूहोच्चारणेऽर्थे॥

तत्त्व०–सभूयोच्चारणे इति। समूहोच्चारण इत्यर्थः॥

**व्यक्तवाग्विषयादनुपूर्वादकर्मकात्॥ ५२७॥ अनुवदते कठः कलापस्य॥**

सुबो०–व्यक्तवाग्विषयादनुपूर्वादकर्मकात्। एतादृशाद्वदतेरात्स्यात्। व्यक्तः वाग्विषयो यस्य स व्यक्तवाग्विषयस्तस्मात्। अनुवदते कठः कलापस्य। वेदशाखावाचकावपि कठकालापशब्दावत्र तदध्येतरि वर्तेते। अनु सादृश्यम्। कलापस्येति संबंधे षष्ठी। अकर्मकात् किम्। उक्तमनुवदति। व्यक्तवागिति किम्। अनुवदति वीणा॥

तत्त्व०–व्यक्तेति। व्यक्ता परिस्फुटा वाणी अर्थावगतिहेतुश्च वाग्येषां ते व्यक्तवाचस्ते च यद्यपि शुका अपि मनुष्या एवात्र बोध्याः प्रसिद्धतरत्वात्। अत एव ह्येतदुपात्तम्। अन्यथा वेदः स्वभावादिवत्तदर्थकरवारुतमनेन अनुवदत इत्यादि शाखावचनावपि कठकलापशब्दौ तदध्येतरि वर्त्तेते। कलापेन सदृशं कठोऽधीयानो वदतीत्यर्थ। अकर्मकात्किम्। उक्तमनुवदति। व्यक्तवाचा किम्। अनुवदति वीणा॥

**वा विरुद्धोक्तौ॥ ५२८॥ विप्रवदन्ति विप्रवदन्ते वा वैद्याः॥**

सुबो०–वा विरुद्धोक्तौ। विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणेऽर्थे वदेर्वात्। अप्राप्तविभाषेयम्॥

तत्त्व०–विप्रवदन्तीत्यादि। युगपत्परस्पर विरुद्ध वदन्तीत्यर्थः॥

**अवाद्गिरतेः॥ ५२९॥ अवगिरते॥**

सुबो०–अवाद्गिरतेः। गिरतेरिति तौदादिकस्यैव ग्रहणम्। गृणातेरवपूर्वस्य प्रयोगो नास्तीति भाष्योक्तेः॥

तत्त्व०–अवादिति। गिरतेरिति निर्देशात्तौदादिकस्यैव ग्रहणम्। गृणातेस्त्ववपूर्वस्य प्रयोगो नास्तीति भाष्योक्ते. क्रैयादिकस्याग्रह। अतो गिर इत्युक्तावप्यदोषः॥

**समः प्रतिज्ञाने॥ ५३०॥ शब्दं नित्यं सङ्गिरते॥**

सुबो०—समः प्रतिज्ञाने । समो गिरतेरात्स्यात् प्रतिज्ञानेऽर्थे । संगिरते । प्रतिजानीते इत्यर्थः । प्रतिज्ञाने किम् । संगिरति ग्रासम् ॥

तत्त्व०—संगिरत इति । प्रतिजानीत इत्यर्थः ॥

**उदश्चरस्सकर्मकात् ॥ ५३१ ॥ धर्ममुच्चरते ॥**

सुबो०—उदश्चरः सकर्मकात् । धर्ममुच्चरते । उल्लंघ्य गच्छतीत्यर्थः । सकर्मकात्किम् । बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ॥

तत्त्व०—धर्ममुच्चरत इति । उल्लंघ्य गच्छतीत्यर्थः ॥

**समस्तृतीयायुक्तात् ॥ ५३२ ॥ रथेन सञ्चरते ॥**

सुबो०—समस्तृतीयायुक्तात् । तृतीयांतयुक्तात् समश्चरेरात्स्यात् । रथेन संचरते । व्यवधानेऽपि । रथेन समुच्चरते ॥

**दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५३३ ॥ दास्या संयच्छते कामुकः ॥**

सुबो०—दाणश्च सा चेच्चतुर्थ्यर्थे । तृतीयांतयुक्तात् समो यच्छतेरात्स्यात् सा तृतीया चेच्चतुर्थ्यर्थे भवति । दास्या संयच्छते । दास्यै धनं ददातीत्यर्थः । दास्येति संप्रदाने तृतीया ॥

तत्त्व०—दास्येत्यादि । कामितया दास्यै ददातीत्यर्थः ॥

**उपाद्यमस्स्वीकारे ॥ ५३४ ॥ भार्यामुपयच्छते ॥**

सुबो०—उपाद्यमः स्वीकारे । उपाद्यमेरात्स्यात् स्वीकारो विवाहस्तस्मिन्नर्थे ॥

तत्त्व०—स्वीकार इति । स्वीकारो विवाहः । अगीकारमात्रमिति तु भाष्यम् ॥

**यमस्सिः किद्वा विवाहे ॥५३५॥ रामस्सीतामुपायत उपायंस्त वा ॥**

सुबो०—यमः सिः किद्वा विवाहे । यमेः परः सिप्रत्ययो वा कित् स्यात् विवाहेऽर्थे । लोपस्त्वनुदात्ततनामिति मलोपः । उदायत । पक्षे उदायंस्त ॥

**ज्ञाश्रुस्मृदृशां सान्तानामात् ॥ ५३६ ॥ जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ॥**

सुबो०—ज्ञाश्रुस्मृदृशां सांतानामात् । सप्रत्ययान्तेभ्य एभ्य आत् स्यात् । अपह्नवे ज्ञ इत्यादिना ज्ञाधातोः समो गमृच्छीत्यनेन श्रुदृशिभ्यां चात्मनेपदे कृते ततः सप्रत्यये सांतात् पूर्ववदादित्यनेन तदात्मनेपदं सिद्धमेव पुनर्ग्रहणं विषयांतरेऽप्यात्मनेपदार्थम् ॥

**अनोर्ज्ञानातेर्न ॥ ५३७ ॥ अनुजिज्ञासति पुत्रम् ॥**

सुबो०—अनोर्ज्ञानातेर्न । अनोः सांताज्ज्ञानातेर्नात् स्यात् ॥

**प्रत्याङ्भ्यां श्रुवः ॥ ५३८ ॥ प्रतिशुश्रूषति । आशुश्रूषति ॥**

सुबो०–प्रत्याङ्भ्यां श्रुवः । आभ्यां सांताच्छृणोतेर्नोत् ॥

**स्वराद्यन्तोपसर्गाद्युजेरयज्ञे ॥५३९॥** प्रयुङ्क्ते । उद्युंक्ते । अयज्ञे किम् । पात्राणि प्रयुनक्ति ॥

सुबो०–स्वराद्यंतोपसर्गाद्युजेरयज्ञे । स्वरादेः स्वरांताच्चोपसर्गाद्युजेरात् न तु यज्ञपात्रेऽर्थे ॥

तत्त्व०–स्वराद्यंतोपसर्गादिति । स्वर आदिरतोऽवयवो यस्य स तथा तेन समादयो व्यावृत्ताः ॥

**समः क्ष्णुवः ॥ ५४० ॥** संक्ष्णुते शस्त्रम् ॥

सुबो०–समः क्ष्णुवः । समः क्ष्णोतेरात्स्यात् ॥

तत्त्व०–संक्ष्णुते शस्त्रमिति । समो गम्रित्यादौ न पठितः । अस्यात्र सकर्मकस्य ग्रहणात् ॥

**भुजोऽपालने ॥ ५४१ ॥** ओदनं भुङ्क्ते । पालने तु महीं भुनक्ति ॥

सुबो०–भुजोऽपालने । अभ्यवहारे इति वक्तव्ये अपालन इति पर्युदासग्रहणं प्रयोजनद्वंद्वार्थम् । संयोगवद्विप्रयोगस्यापि विशेषावधारणहेतुत्वात् रौधादिकस्यैव भुजेर्ग्रहणमित्येके । अभ्यवहारादर्थांतरे उपभोगादावप्यात्मनेपदं भवतीति । द्वितीये निषेधस्य निषेधः । पर्य्युदासः भुजेरात्र स्यात् पालनेऽपालनत्वात् । उपभोगार्थे तु, वृद्धो जनो दुःखशतानि भुंक्ते इतीह भुजेरुपभोगोऽर्थः । उपभोग इत्युपलक्षणम् । तेन बुभुजे पृथिवीपालः पृथिवीमेव केवलामित्यत्रात्मसात्करणमर्थः । पृथिवीं बुभुजे । स्वाधीनां चकारेत्यर्थः । भुजो कौटिल्ये इति तुदादेस्तु पमेव । पाणिं विभुजति । अपालने किम् । महीं भुनक्ति ॥

तत्त्व०–भुजो इति । रुधादेरेव ग्रहण तौदादिकस्य अनवन इति प्रतिषेधात् । तेन विभुजति पाणिमित्यादावदोप । बुभुजे पृथिवीपाल इत्यादौ तु भुजेरुपभोगार्थः । अन्यथा भुजो भक्षण इत्येवाकारिष्यत् ॥

**गृधिवंचिभ्यां ण्यन्ताभ्यां प्रतारणे ॥५४२॥** माणवकं वञ्चयते । गर्द्धयते ॥

सुबो०–गृधिवंचिभ्यां ण्यन्ताभ्यां प्रतारणे । परगामिफलार्थमिदमात्मनेपदम् । प्रतारणे किम् । श्वानं गर्द्धयति । अस्याभिकांक्षामुत्पादयति । अहिं वंचयति । वर्ज्जयतीत्यर्थः ॥

**अपाद्वदः ॥ ५४३ ॥** न्यायमपवदते ॥

सुबो०–अपाद्वदः । अपाद्वदतेरात्स्यात् । अनुपसर्गाज्ज्ञः पूर्वं व्याख्यातम् ॥

**समुदाङ्भ्यो यमो ग्रन्थे ॥५४४॥** व्रीहीन् संयच्छते । धान्यान् स्वीकरोतीत्यर्थः । भारमुद्यच्छते । भारं वहतीत्यर्थः । वस्त्रमुद्य-

च्छते । वस्त्रमादधातीत्यर्थः । अग्रन्थे किम् । वेदमुद्यच्छति । अधिगन्तुमुद्यमं करोतीत्यर्थः ॥

**कर्मव्यतिहारे धातोरात् ॥ ५४५ ॥** व्यतिभवते । व्यतिराते ॥

सुबो०—कर्मव्यतिहारे धातोरात् । क्रियाविनिमयेऽर्थे धातोः कर्तर्यात्मनेपदं स्यात् । व्यतिभवते । अन्यस्य योग्यं भवनमन्यतरः तं करोतीत्यर्थः । रा दाने । व्यतिराते ॥

तत्त्व०—कर्मव्यतिहारे धातोरिति । कर्म क्रिया तस्य व्यतिहारो विनिमयो व्यत्यासस्तस्मिन्नर्थे वर्त्तमानाद्धातोरादित्यर्थः । व्यतिभवत इति । अन्यस्य योग्य भवनमन्यतरः करोतीत्यर्थः । परस्परकरणमपि कर्मव्यतिहारः । संप्रहरते राजान इति यथा । अत्र च यदानेकस्य कर्तृत्वे सहविवक्षा तदा द्विवचन च भवति । सहविवक्षाभावे त्वेकवचनमपि तेन कर्मव्यतिहारस्यानेककर्तृकत्वादेकवचन न सभवतीति न शंकनीयम् ॥

**न गतिहिंसार्थपठजल्पहसात् ॥५४६॥** व्यतिगच्छन्ति । व्यतिपठन्ति । व्यतिघ्नन्ति । व्यतिजल्पन्ति । व्यतिहसन्ति ॥

**इतरेतरान्योऽन्यपरस्परोपपदाच्च ॥५४७॥** इतरेतरस्य अन्योऽन्यस्य परस्परस्य वा व्यतिलुनन्ति ॥ इत्यात्मनेपदप्रक्रिया ॥

सुबो०—न गतिहिंसार्थपठजल्पहसात् । इतरेतरान्योन्यपरस्परोपपदाच्च । न गतिहिंसार्थेभ्यः पठजल्पहसेभ्यः इतरेतरान्योन्यपरस्परोपपदेभ्यश्च धातुभ्यः आन्न स्यात् ॥

**अनुपराभ्यां कृञः पम् ॥ ५४८ ॥** अनुकरोति । पराकरोति ॥

सुबो०—अनुपराभ्यां कृञः पम् । आत्मगामिफले परस्मैपदार्थमिदम् ॥

**अभिप्रत्यतिभ्यः क्षिपः ॥५४९॥** पम् ॥ अभिक्षिपन्ति । प्रतिक्षिपन्ति । अतिक्षिपन्ति ॥

सुबो०—अभिप्रत्यतिभ्यः क्षिपः । क्षिप प्रेरणे स्वरितेत् तस्यात्मगामिफलेऽपि परस्मैपदार्थमिदम् ॥

**प्राद्वहः ॥ ५५० ॥** प्रवहन्ति ॥

सुबो०—प्राद्वहः । प्राद्वहतेः पं स्यात् ॥

**परेर्मृषश्च ॥५५१॥** परिमृष्यति । परिवहति ॥ इति परस्मैपदप्रक्रिया ॥

सुबो०—परेर्मृषश्च । परेर्मृषेः पं स्यात् । स्वरितेत्त्वात् परेर्मृषेः पदद्वये प्राप्ते आरम्भः । मृष आमर्षणे । दिवादिः । परिमृष्यति । ञेरभावे परिमर्षति । चकाराद्वहेरपि पं भवति । परिवहति । व्याङ्पर्युपेभ्यो रमः । भ्वादौ व्याख्यातमिदम् । अकर्मकाद्वा । अकर्मकाद्रमतेर्वा पं स्यात् । उपादित्येव । उपरमति उपरमते वा ।

निवर्त्तते इत्यर्थः । बुधयुधनशजनेङ्प्रद्रुस्रुभ्यो ण्यंतेभ्यः पम् । इङ्क्रीजीनामित्यात्वे । अध्यापयति । प्रावयति । प्रापयति । मापयतीत्यर्थः । द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्पंदयतीत्यर्थः ॥

तत्त्व०–कृतायामिह टीकायां लोके शकरशर्मणा । पदव्यवस्थेयमगात्समाप्तिं शुभलक्षणा ॥

इति पदव्यवस्था ॥ ७ ॥

---

**यक् चतुर्षु ॥५५२॥** धातोर्भावे कर्मणि च यक् प्रत्ययस्तिबादिषु चतुर्षु परतः ॥

सुबो०–अथ भावकर्मणोर्लिडादयः । यक् चतुर्षु । भुवि कर्मणीति चाद्भुवीत्यतोऽनुवृत्तम् । अव्यवहितमपि कर्त्तरीति नानुवर्त्तते उत्तरसूत्रे कर्तृग्रहणात् । आख्यातप्रकरणादादितश्चतुर्विधेष्वाख्यातेषु चतुरशब्दोऽस्ति तेन भावार्थकेषु कर्मार्थकेषु च चतुर्षु परतो धातोर्यक् स्यात् ॥

तत्त्व०–यक् चतुर्षु ॥

**आद्भुवि कर्मणि ॥ ५५३ ॥** अकर्मकाद्भावे सकर्मकाच्च कर्मण्याद्भवति । भावस्यैकत्वादेकवचनमेव । युष्मदस्मदोः सामानाधिकरण्याभावात्प्रथमः । नामाद्यविषयत्वेऽपि प्रथमातिक्रमे करणाभावात्प्रथमः । भूयते । भूयते । भूयताम् । अभूयत । बभूवे ॥

सुबो०–आद्भुवि कर्मणि । भवनं भूः संपदादित्वाद्भावे क्विप् । तस्यां भुवि शुद्धे धात्वर्थे साध्यरूपे स्वार्थे इति फलितम् । घञर्थो भावस्तु सिद्धरूपः । उक्तं च । " क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्त्तिता । सिद्धता द्रव्यमिच्छंति तत्रैवेच्छति घञ्विधिम् ॥" भावो भावना उत्पादना क्रिया सा च धातुत्वेन सकलधातुषु वाच्या वर्त्तते । उक्तं च । " व्यापारो भावना सैवोत्पादना सैव च क्रिया । " इति उत्पत्त्यनुकूलो व्यापार इत्यर्थः । तत्र सिद्धरूपो भावो घञादिवाच्यः तस्य तु सत्त्वरूपत्वमिष्टमेवेति । उक्तं च भाष्यकृता । " कृदभिहितो भावो द्रव्यवत् प्रकाशते " इति । द्रव्यधर्मान् लिंगसंख्याकारकादीन् गृह्णातीत्यर्थः । लिंगसंख्याकारकान्वितं द्रव्यमित्युक्तेस्तेन पाकं पाकेनेत्यादौ द्वितीयादयः प्रवर्त्तते । साध्यरूपो भावस्त्वाख्यातवाच्यस्तस्या सत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि । भाष्ये तु आस्यंते शय्यंते इत्यत्र भावेऽपि बहुवचनं कृतं न च कर्मण्येवाख्यातप्रत्ययोऽस्त्विति शंक्यं धातुद्वयस्याप्यकर्मकत्वात् । आस्यंते इत्यासिकाः । शय्यंते इति शायिका इत्यत्र धात्वर्थनिर्देशे वुण्प्रत्ययः । उष्ट्रासिका आस्यंते हतशायिकाः शय्यंत इत्यत्र उष्ट्राणां यादृशान्यासनानि हतानां यादृशानि शयनानि तादृशानि देवदत्ता-

दिकर्तृकान्यासनादीनीत्यर्थः । फलाश्रयं कर्म फलं च धातुनैवोक्तमित्याश्रयमात्रमाख्यातार्थः । अनन्यलभ्यत्वात् । अकर्मकेभ्यो धातुभ्यो भावे आत् । सकर्मकेभ्यस्तु कर्मण्यात् स्यात् । साध्यरूपस्वभावस्योत्सर्गत एव संख्यानपेक्षत्वेन स्वस्यैकत्वादेकवचनमेव भवति । तत्तु प्रथमस्यैव न मध्यमोत्तमयोः । युष्मदस्मदोराख्यातवाच्यकारकवाचित्वाभावात् । नाम्नोऽप्याख्यातवाच्यकारकवाचित्वाभावस्तथापि प्रथमो भवति तस्यानिष्पादने वचनाभावात् । तत्रैकवचनस्वीकारः । प्रथमपुरुषमंतरा कथं संभवेदित्यर्थः । भावे यथा भूयत इत्यादि ॥

तत्त्व०—आद्भावि कर्मणि । भवनं भूः तस्यां भुवि शुद्धे धात्वर्थे साध्यरूपभावे घञर्थस्तु सिद्धरूपो भाव इति भेदः । तत्र सिद्धरूपो भावो द्रव्यवत्प्रकाशते लिंगसंख्यादीन्गृह्णातीत्यर्थः । अतो द्विवचनादिसाध्यरूपस्य स्वसत्त्वरूपत्वान्न सख्याद्यन्वयः । उक्तं च । "क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्त्तिता । सिद्धता द्रव्यमिच्छंति तत्रैवेच्छंति घञ्विधिम् ॥" इति । कर्म तु पारिभाषिकमेव पुनर्भावग्रहणात् । फलाश्रयः कर्म । फलस्य च धातुवाच्यत्वादाश्रयमात्रमाख्यातार्थः । अथ सकर्मकादपि भावे स्यादिति चेन्न । द्विश्चेत्यतश्चेत्यनुवर्त्तते । स चावधारणार्थः । सकर्मकात्कर्मण्येव न भावे कर्त्तर्य्यपि न स्यादिति चेत् शृणु । मध्येऽपवादन्यायेन भावस्यैव बाधनात् । एकवचनामिति । एकवचनमुत्सर्गतः करिष्यत इति वचनादिति भावः । तर्हि मध्यमोत्तमयोरपि न चेत्याशंकायामाह । युष्मदस्मदोरिति ॥

**स्वरान्तानां हनग्रहदृशां च भावकर्मणोस्सितासीस्यपामिड्वा स इण्वच्च ॥ ८८४ ॥ भाविषीष्ट भविषीष्ट । भाविता भविता । भाविष्यते भविष्यते । अभाविष्यत अभविष्यत ॥**

सुबो०—स्वरांतानां हनग्रहदृशां च भावकर्मणोः सितासीस्यपामिड्वा स इण्वच्च । स्वरांतेभ्यो हनिग्रहिदृशिभ्यश्च परेषां भावे कर्मणि चार्थे स्थितानां सितासीस्यपां प्रत्ययानामिडागमो वा भवति स इट् इणीवेतीण्वत् सप्तम्यंताद्वत् । कार्यातिदेशोऽयम् । इणि परे यद्वृद्ध्यादिकार्यं भवति तदिण्वदिति परेऽपीत्यर्थः । यथा भविता । भाविष्यते । इत्यादौ वृद्धिः । दायिता । दायिष्यते । इत्यादौ युक् । घानिता घानिष्यते । इत्यादौ घत्वम् । प्रयोजकञ्यंतात् शमः कर्मण्याख्याते कृते शामिता शमिता । शामिष्यते शमिष्यते । इत्यादौ मितां ञ्यंतानामित्यनेन मितामुपधाया वा दीर्घ इत्यादि ॥

**इण् तन्यकर्तरि ॥ ८८५ ॥** धातोस्तनि परे भावे कर्मणि च इण् प्रत्ययस्सेरपवादः ॥ लुङ् । अभावि । अकर्मकोऽप्युपसर्गवशात्सकर्मको भवति । सुखमनुभूयते स्वामिना ॥ लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् । शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥ १ ॥ फलव्यापारयोरेकनिष्ठतायामकर्मकः । धातु

स्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ २ ॥ धातोरर्थान्तरे वृत्तेर्धात्वर्थे-
नोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ ३ ॥

सुबो०—इण् तन्यकर्त्तरि । कर्तुरन्योऽकर्ता तस्मिन्नकर्तरि भावे कर्मणि चार्थे तन्-प्रत्यये परे धातोरिण् स्यात् । अकर्तरीति किम् । अकृत घटं कुलालः । लुगिति तनो लुक् । अभावि । अकर्मकोऽपि धातुः कुत्रचिदर्थांतरे सकर्मको भवति धातूनामनेकार्थत्वेनार्थान्तरस्योपसर्गेण द्योतनाद्धेतोः । यथा । कर्मण्यात् । स्वामिना सुखमनुभूयते । आत्मसात् क्रियते इत्यर्थः । लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् । शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥ अकर्मकधातुलक्षणमाहुः । आचार्यास्तं धातुगणमकर्मकमाहुर्ब्रुवंति । तं कं लज्जासत्तास्थितिजागरणान्यर्थाः संति यस्य स लज्जासत्तास्थितिजागरणस्तं पुनः वृद्धिक्षयभयजीवितमरणस्तं पुनः शयनक्रीडारुचिदीप्तयोऽर्थो यस्य स शयनक्रीडारुचिदीप्त्यर्थस्तम् । फलव्यापारयोरेकनिष्ठतायामकर्मकः । धातुस्तयोर्द्धर्मिभेदे सकर्मक उदाहृतः ॥ सकर्मकाकर्मकधातुलक्षणमाह । आचार्यैरकर्मको धातुरुदाहृतः । क सत्यां उत्पत्त्यनुकूलो व्यापारो धात्वर्थः । तत्रोत्पादनव्यापारः उत्पत्तिः फलम् । यथा पचेः फूत्करणैधोदकोपस्करणादिलक्षणो व्यापारः विक्लित्त्यादि फलं तयोः फलव्यापारयोरेकनिष्ठतायाम् । एकस्मिन् धर्मिण्याश्रये स्थितौ सत्यामित्यर्थः । धातुः सकर्मक उदाहृतः । क सति तयोः फलव्यापारयोर्धर्मिभेदे आश्रयभेदे सति एकस्मिन् धर्मिणि फलमन्यस्मिन्धर्मिणि व्यापार इत्यर्थः । धातोरर्थांतरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकार्मिका क्रिया ॥ कुत्रचित्सकर्मकस्यापि धातोः क्रिया धात्वर्थोऽकार्मिका कर्मरहिता भवतीत्यर्थः । कुतः अन्योऽर्थ इत्यर्थांतरं तस्मिन्नर्थांतरे वृत्तेर्वर्त्तनाद्धेतोः । यथा नदी वहति । स्यंदते इत्यर्थः । पुनर्द्धात्वर्थेन कर्मण उपसंग्रहाद्धेतोः । जीवति । प्राणान् बिभर्तीत्यर्थः । पुनः कर्मणः प्रसिद्धेर्हेतोः । मेघो वर्षति । जलमिति कर्म प्रसिद्धमेव । पुनः । कर्मणोऽविवक्षातो वक्तुरिच्छाया अभावाद्धेतोः । यथा । हितान्न यः संशृणुते स किंप्रभुः । कुत्सितप्रभुरित्यर्थः । वचनमिति कर्म विवक्षितमत्र ॥

तत्त्व०—अकर्मकोऽपि इति । यो यदाऽकर्मकक्रियावाच्यप्यनेकार्थत्वात्सकर्मकक्रियामुत्थापयति तदा तदर्थपरत्वे सकर्मको भवति । तत्परत्व च तस्योपसर्गेण द्योत्यते इत्यनुपसर्गवशादित्युक्त नतु सोपसर्ग एव सकर्मकः । उपसर्गस्तु द्योतक एव । अनुभूय इति । उपालेभेऽय सकर्मक. सुखे कर्मण्यात् । फलव्यापारयोरित्यादि । फल विक्लित्त्यादि । व्यापारः फूत्कारादिलक्षणः । एकनिष्ठतायाम् एकस्मिन् धर्मिणि स्थितौ तयोः फलव्यापारयो. धर्म्मिभेदे एकस्मिन् धर्मिणि फलमन्यस्मिन् व्यापार इति भेदे धातुः सकर्मको बोध्यः । धातोरर्थांतरे वृत्तेरित्यादि । अन्योऽर्थोऽर्थान्तर तस्मिन् वृत्तेर्वर्त्तमानात् । उदाहरणानि यथा । नदी वहति । स्पन्दत इत्यर्थ. । नृत्यति चैत्रः । गात्रविक्षेप करोतीत्यर्थः । मेघो वर्षति । जलमित्यर्थः । गच्छति । ग्राममिति शेषः ॥

शीङोऽयङ् ये क्ङिति ॥ ५५६ ॥ शय्यते । शिश्ये । शायिषीष्ट शयिषीष्ट । अशायि । अयकि ऋतोरिङ् भवत्यकारप्रत्यये यकि च । घटः क्रियते । त्वं दुःखीक्रियसे रागैर्विरागैस्सुख्यहं क्रिये । चक्रे । भाव्यते । भावयाञ्चक्रे । भावयामासे । भावयांबभूवे ॥

सुबो०–शीङो यङ् ये क्ङिति । शेतेरयङादेशः स्यात् किति ङिति च यप्रत्यये परे । ङित्त्वादंतादेशः । यत इत्यलोपः । शय्यते । नुधातोरिति यः । शिश्ये । इण्वद्भावाद्वा वृद्धिः । शायिषीष्ट शयिषीष्ट । करोतेः कर्म्मण्यात् । उरिति न गुणः। कृषीष्ट । चौरादिकात् ञ्यंताद्भावयतेः कर्मण्यात् । ञेरिति ञिलोपः । भाव्यते ॥

इण्वदिटि ञेर्लोपः ॥ ५५७ ॥ भाविता भावयिता । भाविष्यते भावयिष्यते । अभावि । अभाविषाताम् अभावयिषाताम् । सान्तात्तु । बुभूष्यते । बुभूषाञ्चक्रे । अबुभूषि । यङन्तात्तु । बोभूय्यते । बोभूयाञ्चक्रे । यङ्लुगन्तात्तु । बोभूयते । बोभवाञ्चक्रे । बोभाविषीष्ट बोभविषीष्ट । स्तूयते विष्णुः । अस्तावि । अस्ताविषाताम् अस्तोषाताम् । अर्यते । आरे । आरिषीष्ट ऋषीष्ट । आरिष्ठाः आर्थाः। स्मर्यते । स्मरिता स्मर्ता । इज्यते । ईजे । यक्षीष्ट । यष्टा ॥

सुबो०–इण्वदिटि ञेर्लोपः । ञिलोपो वा स्यात् इण्वदिटि परे । ञिलोपे । भाविता । पक्षे सिसतेतीटि । भावयिता । सप्रत्ययांताद्बुभूषतेर्भावे आत् । यत इत्यलोपः । बुभूष्यते । यङ्प्रत्ययांतात्तु यत इत्यलोपे । बोभूयते । यङ्लुगंताद्भावे आत् । बोभूयते । स्तौतेः कर्मण्यात् । ये इति दीर्घः । स्तूयते । ऋ गतौ । कर्मण्यात् गुणोर्तीति गुणः । अर्य्यते । इण्वदिटि तु धातोर्नामिन इति वृद्धिः । आरिता । स्मृ चिंतायाम् । गुणोर्तीति गुणः । स्मर्य्यते । यजतेः कर्मण्यात् । यजामिति संप्रसारणम् । इज्यते । लिटि । ईजे । आशिषि लिङि । यक्षीष्ट ॥

तनोतेर्वा आत्वं यकि ॥ ५५८ ॥ तायते तन्यते । तनिषीष्ट । अतानि । जायते जन्यते ॥

सुबो०–तनोतेर्वा आत्वं यकि । तनेराकारांताऽऽदेशो वा स्यात् यक्प्रत्यये परे । जनेर्वा यकि जनेराकारांतादेशो वा स्यात् यकि परे ॥

तपो नेणू कर्मकर्तर्यनुतापे च ॥ ५५९ ॥ अन्वतप्त देवदत्तः पापेन । दादेरिः । दीयते । ददे ॥

सुबो०–तपो नेण् कर्मकर्त्तर्यनुतापे च । तपेरिण् प्रत्ययो न स्यात् अनुतापेऽर्थे कर्मकर्त्तर्यर्थे च । अन्वतप्त देवदत्तः पापेन । पापेन कर्त्राऽभ्याहत इत्यर्थः । भावेऽपीदं बोध्यम् । पापेन पापवता पुंसाऽविचार्य्य कृत्वा पश्चादशोचीत्यर्थः । कर्मकर्त्तरि तु अतप्त तपस्तापस इत्यत्र तपस्तपःकर्मकस्येत्यनेन कर्तुः कर्मवद्भावः । डुदाञ् दाने । दादेरित्वं ये इति दीर्घः । दीयते । आतोऽनपीत्यालोपे । ददे ॥

तत्त्व०–तपो नेण् कर्मकर्त्तरि अनुतापे च । तप सतापे इत्यस्मादिण् न । तपो नेति । पूर्वं कृतं यत्पापं कर्म तेनाभ्याहतो देवदत्त इत्यर्थ. । पापेनेति । कर्त्तरि तृतीया । यदा तु कर्म न विवक्ष्यते शोकार्थावातिस्तदाभावे लः । पापेनेति । कर्त्तरि तृतीयाकरणे पुरुषधर्मयोरनभिधानात् । अभ्याहननार्थस्य तु कर्मकर्तृविवक्षाया हेतौ तृतीयेति बोध्यम् ॥

**आतो युक् ॥५६०॥ इणि ञिणति कृति च ॥ दायिषीष्ट दासीष्ट । अदायि । अदायिषाताम् अदिषाताम् । धीयते । स्थीयते । अग्लायि । हन्यते । हनो घ्ने । घानिषीष्ट वधिषीष्ट । घानिता हन्ता । अघानि । अघानिषाताम् अहसाताम् । अवधि । अवधिषाताम् ॥**

सुबो०–आतो युक् । आदंतस्य धातोर्युक् स्यात् इणि प्रत्यये परे ञिति णिति कृत्प्रत्यये च परे । घञि । दायः । वुणि । दायकः । इण्वदिटि । दायिषीष्ट । इण्वदिटोऽभावे । दासीष्ट । लुङि । अदायि । इण्वदिटि । अदायिषाताम् । तदभावे अपिद्दाधास्थामितीत्वम् । अदिषाताम् । एवं धास्थाधातू । ग्लै हर्षक्षये । इण्वदिटि युक् । अग्लायिषाताम् । हंतेः कर्मण्यात् । हन्यते । पूर्वार्द्धंतेरिति घः। जघ्ने । हनो लुङ्लिङोरिति वधः यत इत्यल्लोपः। वधिषीष्ट। हनो घत् इति घः। अत उपधाया इति वृद्धिः । घानिषीष्ट । इण्वद्भावो वधादेशस्य बाधको ज्ञेयः । अत्र हनो घादित्यनेन घदादेशो न । इण्वर्जिते इत्युक्तत्वात् । ऌटि इण्वदिटि । घानिष्यते । पक्षे हनृत इतीट् । हनिष्यते । लुङि इण्वदिडभावे हनः सिः किदिति किस्वात् लोपस्त्वनुदात्ततनामिति नलोपः । अहसाताम् । गृह्णातेः कर्मण्यात् । ग्रहामिति संप्रसारणं गृह्यते ॥

तत्त्व०–वधिषीष्टेति । इण्वदभावे वधादेशो बोध्यः । वध हिंसायामिति । प्रकृत्यन्तरम् । अवधीदिति । जनिवध्योरिति वृद्धिनिषेधः । हनादेशस्य त्वदन्तत्वान्न वृद्धिः । तथा च प्रयोगः । ' भक्षकश्चेन्न विद्येत वधकोऽपि न विद्यते । ' इति ॥

**इण्वदिटो न दीर्घः ॥५६१॥ ग्राहिता ग्रहिता । दर्शिषीष्ट दृक्षीष्ट । दर्शिता द्रष्टा । अदर्शि । अदर्शिषाताम् अदृक्षाताम् । शम्यते मुनिना ॥**

सुबो०–इण्वदिटो न दीर्घः । ईटो ग्रहामिति सूत्रेण सिसतेत्यादिलक्षणेन विधीयमानस्यैवेटो दीर्घो भवति नेण्वदिट इत्यर्थः । दृशेः कर्मण्यात् । लुङि इण्वदिटि परे उपधाया लघोरिति गुणः । अदर्शिषाताम् । पक्षे छशषेति षत्वं षढोरिति कः।

इशषांतादिति सक् तु न । नतु इशेरित्युक्तत्वात् । सिस्योरिति न गुणः । अदक्षाताम् । शमेर्भावे आदकर्मकत्वात् ॥

**मान्तस्य सेटो न वृद्धिरिणि ञ्णिति कृति च न त्वाचमिकमिवमीनाम् ॥ ५६२ ॥** अशमि । अदमि । आचामि । अकामि । अवामि । ञ्यन्तात्तु । शम्यते मोहो मुनिना । शमयाञ्चक्रे ॥

सुबो०–मांतस्य सेटो न वृद्धिरिणि ञ्णिति कृति च न त्वाचमिकमिवमीनाम् । सेटो मांतस्य धातोः वृद्धिर्न स्यात् इणि ञिति णिति कृत्प्रत्यये च परे । आचमिकमिवमीनां तु वृद्धिर्भवतीत्यर्थः । घञि । शमः । दमः । वुणि । शमकः । दमकः । कथं तर्हि हरेर्यदक्रामि पदैककेन खमिति श्रीहर्षप्रयोग इति चेदुच्यते । "निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते । " इति प्राकृते ञिस्तत इण् बोध्यः । सेटः किम् । अगामि । कमु कांतौ । कमेः स्वार्थे ञिङिति ञिङ् । वा ञेरिति ञिलोपः । काम्यते । लुङि ञिङभावे । अकामि । ञिञिङोरप्येवम् । ञ्यंतात् शमेः कर्मण्यात् । ञेरिति ञिलोपः । शम्यते । कासादिप्रत्ययादित्याम् । शमयांचक्रे ॥

**मितां ञ्यन्तानामिणि णमि च वा दीर्घः ॥ ५६३ ॥** शामिता शमिता शमयिता । अशामि । अशामिषाताम् अशमियिषाताम् ॥

वध हिंसायाम् ॥ वध्यते । जनिवध्योर्न वृद्धिः । अवधि ॥

सुबो०–मितां ञ्यंतानामिणि णमि च वा दीर्घः । मित्संज्ञकानां ञ्यंतानां धातूनां वा वृद्धिर्भवति इण्प्रत्यये णमुप्रत्यये च परे । इण्वदिटि ञेरिति ञिलोपो वृद्धिश्च वा । शामिता । पक्षे शमिता । पक्षे सिसतेतीटि गुणः । शमायिता । यङंतप्रकृतिकञिप्रत्ययान्तात् । शंशमे । कर्मण्यात् ञौ परतोऽनपि च हसादिति यलोपः यत इत्यल्लोपः । ततो यकि ञेरिति ञिलोपः । शंशम्यते । लुटि । शंशामिता शंशमिता शंशमयिता । लुङि । अशंशामि अशंशमि । णमु प्रत्यये तु । शंशामं शंशमम् । वध हिंसायाम् । हसांतः ॥

**भञ्जेरिणि नलोपो वा ॥५६४॥** अभाजि अभञ्जि ॥

सुबो०–भञ्जेरिणि नलोपो वा । भञ्जो आमर्दने इत्यस्य नस्य लोपो वा स्यादिणि प्रत्यये परे ॥

**लभेरिणमोर्नुम्वा ॥ ५६५ ॥** अलम्भि अलाभि ॥ गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया । प्रयोज्यकर्मण्यन्येषां ञ्यन्तानां लादयो मताः ॥ गौ-

दुह्यते पयः । धुक्षीष्ट । अजा ग्रामं नीयते । ह्रियते । कृष्यते । उह्यते । बोध्यते माणवकं धर्म्मः । माणवको धर्ममिति वा । भोज्यते माणवकमोदनः । ओदनं माणवको वा । पाठ्यते माणवकं वेदः । माणवको वेदमिति वा । देवदत्तो ग्रामं गम्यते ॥

सुबो०–लभेरिण्णमोर्नुम् वा । डुलभष् प्राप्तावित्यस्य नुमागमो वा स्यात् इणि प्रत्यये णमि प्रत्यये च परे । प्रादेर्नित्यं नुम् प्रपूर्वस्य लभेर्नित्यं नुम् स्यात् णमि प्रत्यये । प्रलंभम् । अथ ये द्विकर्मकधातवस्तेभ्य आत् कृत्यक्तखलर्थप्रत्ययाः किं मुख्ये कर्मणि उत गौणे । किं चोभयोरिति संदेहे व्यवस्थामाह । गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया । प्रयोज्यकर्मण्यन्येषां ण्यंतानां लादयो मताः ॥ दुह्याचिति कारके उक्तं दुह्यादेर्द्वादशसंख्यस्य धातोर्गौणे कर्मणि लादयः प्रत्यया मताः । नीप्रभृतीनां चतुर्णां प्रधाने कर्मणि लादयो मताः । बुद्धिभक्षार्थयोर्ण्यंतयोः शब्दकर्मकण्यंतानां च प्रयोज्यप्रधानयोरन्यतरकर्मणि निजेच्छया लादयो मताः । अन्येषां ण्यन्तानां तु प्रयोज्यकर्मणि लादयो मताः । कारके गतिबुद्धीत्यनेन कर्तुर्यत्कर्मकारकं कृतं तद्योज्यं कर्म ज्ञातव्यम् । लादय इत्यत्रादिशब्देन कृत्यक्तखलर्थाः प्रत्यया ग्राह्याः । दुह्यादेर्गौणे कर्मण्यात् । उदाहरणमाह । गौर्दुह्यते पय इत्यत्र गौरिति गौणं कर्म तत्राख्यातेनोक्तत्वादन्योक्ते इत्यनेन प्रथमा । पय इति तु मुख्यं कर्म तत्र कर्मणि द्वितीया । कर्त्तरि इत्यनुक्तत्वात्तृतीया । देवदत्तेनेति । न्यादीनां प्रधानकर्मण्यात् । उदाहरणमाह । अजा ग्रामं नीयते इत्यत्राजेति मुख्यं कर्म । तत्रोक्तत्वात्प्रथमा । ग्राममिति गौणं कर्म । कर्त्ता तु तृतीयांतोऽध्याहार्य्यः । बुद्धिभक्षार्थयोः शब्दकर्मकाणां च ण्यंतानां प्रयोज्ये मुख्ये च कर्मण्यात् । उदाहरणमाह । बोध्यते माणवकं धर्म इत्यत्र धर्म इति मुख्यं कर्म माणवकमिति प्रयोज्यं कर्म । तत्र निजेच्छयाऽऽख्यातादिः कर्तव्यः । भोज्यते माणवकमोदन इत्यत्रौदन इति मुख्यं कर्म माणवकमिति प्रयोज्यं कर्म तत्र निजेच्छयाऽऽख्यातादिः । पाठ्यते माणवकं वेद इत्यत्र वेद इति मुख्यं कर्म माणवकमिति प्रयोज्यं कर्म तत्र निजेच्छयाऽऽख्यातादिः । तृतीयांतः कर्ताऽध्याहार्य्यः । ण्यंतस्य प्रयोज्यकर्मण्यात् । उदाहरणमाह । देवदत्तो ग्रामं गम्यते इत्यत्र ग्राममिति मुख्यं कर्म देवदत्त इति प्रयोज्यं कर्म तत्राख्यातादिः । कर्मण उक्तत्वात् प्रथमा । कर्त्ता तु तृतीयांतोऽध्याहार्य्यः ॥

तत्त्व०–द्विकर्मकाणां तु । गौणे कर्मणीत्यादि । गौर्दुह्यत इति । गौरिति गौणं कर्म । अजेत्यादि । अजात्र प्रधानम् । निजेच्छयेति । गौणप्रधानयोरात्मेच्छयेत्यर्थः । अन्येषामिति । पूर्वोक्तव्यतिरिक्तानामित्यर्थः ॥

## अकर्मकाणां कालादिकर्मकाणां भावे कर्मणि च लकारः

**सम्पदायोगे च ॥ ६५७ ॥ जलसात्सम्पद्यते ॥**

सुबो०–संपदायोगे च । नाम्नः संपद्धातुयोगे सात्प्रत्ययो वा भवति । अजलं जलं संपद्यते इति । लवणं जलसात्संपद्यते । पक्षे संपदायोगे वाक्यमेव ॥

**अधीने च ॥ ६५८ ॥ राजसात्सम्पद्यते ॥**

सुबो०–अधीने च । नाम्नस्तदधीनेऽर्थे सात् स्यात् कृभ्वस्तिसंपद्योगे । राजाधीनं संपद्यते इति नाम्नो नो लोपशिति नलोपः । राजसात्संपद्यते । राजाधीनं करोतीति राजसात्करोति ॥

**देये त्रा च ॥ ६५९ ॥ विप्राधीनं देयं करोति विप्रत्राकरोति । विप्रत्रासम्पद्यते । विप्रसात्करोति ॥**

सुबो०–देये त्रा च । नाम्नस्तदधीने देयेऽर्थे त्रा प्रत्ययः स्यात् चात्सादपि कृभ्वस्तिसंपद्योगे । त्राप्रत्ययमाह । अव्ययत्वाद्विभक्तेर्लुक् । विप्राधीनं देयं करोतीति विप्रत्राकरोति । विप्राधीनं देयं संपद्यते इति विप्रत्रासंपद्यते । देये किम् । राजसाद्भवति राष्ट्रम् ॥

**देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्यन्तेभ्यो वा त्रा ॥ ६६० ॥ देवत्रा वन्दे । देवं वन्दे ॥**

सुबो०–देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्यंतेभ्यो वा त्रा। द्वितीयांतेभ्यः सप्तम्यंनेभ्यश्चभ्यस्त्रा वा स्यात् । देवान् इति देवत्रा वंदे । देवेषु इति देवत्रा रमे । मनुष्यान् इति मनुष्यत्रा गच्छति । मनुष्येषु इति मनुष्यत्रा वसति । पुरुषान् इति पुरुषत्रा गच्छति । पुरुषेषु इति पुरुषत्रा वसति । पुरून् इति पुरुशब्दोऽत्र बहुशब्दपर्यायः । " पुरुः परागे प्रचुरे स्वर्लोकनृपभेदयोः । " इति हैमः । पुरुत्रा गच्छति । पुरुषु इति पुरुत्रा वसति । मर्त्यान् इति मर्त्यत्रा गच्छति । मर्त्येषु इति मर्त्यत्रा वसति ॥

**ख्युट् करणे ॥ ६६१ ॥ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेषु पदेषु कृञः करणेऽर्थे ख्युट्प्रत्ययः ॥ अनाढ्यमाढ्यं करोत्यनेनाढ्यंकरणम् । सुभगंकरणम् । स्थूलंकरणम् । दधि । पलितंकरणम् । नग्नंकरणं । द्यूतम् । अन्धंकरणम् । प्रियंकरणम् ॥**

सुबो०–ख्युट् करणे । ख्युट्प्रत्ययमाह । खः खिति पदस्येति मुमर्थः ट ईबर्थः युवोरिन्यन । आढ्यंकरणम् । एवं सुभगंकरणम् । स्थूलंकरणम् । पलितंकरणम् । नग्नंकरणम् । अंधंकरणम् । प्रियंकरणम् ॥

तत्त्व०—च्व्यर्थेष्विति । अभूततद्भावविषयेष्वित्यर्थः । आढ्यंकरणमिति खित्त्वान्मुम् ॥

**भुवः खिष्णुखुकञौ कर्तरि ॥ ६६२ ॥** अनाढ्य आढ्यो भवति आढ्यम्भाविष्णुः । आढ्यंभावुकः ॥

सुबो०—भुव. खिष्णुखुकञौ कर्त्तरि । आढ्यादिषु च्व्यर्थेषूपपदेषु भवतेरेतौ स्तः । खिष्णुप्रत्ययमाह । खित्त्वान्मुम् । आढ्यंभविष्णुः । एवं सुभगंभविष्णुः । स्थूलंभविष्णुः । पलितंभविष्णुः । नग्नंभविष्णुः । अंधंभविष्णुः । प्रियंभविष्णुः । खुकञ्प्रत्ययमाह । खित्त्वान्मुम् । ञित्त्वाद्वृद्धिः । अनाढ्य आढ्यो भवतीति आढ्यंभावुकः । एवं सुभगंभावुकः । स्थूलंभावुकः । पलितंभावुकः । अंधंभावुकः । प्रियंभावुकः ॥

**आतो मनिप्क्वनिब्वनिपः ॥ ६६३ ॥** नाम्न्युपपदे आदन्ताद्धातोरेते प्रत्ययाः स्युः ॥ सुदामा । अश्वे तिष्ठतीति अश्वत्थामा । निपातात्सस्य तः ॥

सुबो०—आतो मनिप्क्वनिब्वनिपः । प्रत्ययानाह । पित्त्वात्तुक् । कित्त्वान्न गुणः । इकार उच्चारणार्थः । सुष्ठु ददातीति नोपधाया इति दीर्घः । नाम्नो नो लोपशिति नलोपः । सुदामा ॥

**स्थामिः ॥ ६६४ ॥** तादौ किति दोसोमास्थामिर्भवति ॥

सुबो०—स्थामिः । दोऽवखंडने । षोऽन्तकर्म्मणि । मा माने । माङ् माने । मेङ् प्रणिदाने । इति त्रयाणां ग्रहणम् । ष्ठा गतिनिवृत्तौ । एषामित्वं स्यात् तादौ किति ईत्वदत्वयोरपवादः ॥

तत्त्व०—स्थामिः । स्थाम् इति छेदः इत्यभिप्रेत्याह । दो सो इत्यादि ॥

**शाछोर्वा ॥ ६६५ ॥**

सुबो०—शाछोर्वा । शो तनूकरणे । छो छेदने । अनयोरित्वं वा तादौ किति ॥

**अपिद्राधागैहाक्पिबतीनामीः ॥ ६६६ ॥** किति हसे क्वि़पि वा न तु क्यपि ॥ सुपीवा । घृतपीवा । भूरिदीवा । अनादन्तादपि । अपिशब्दान्निरुपपदेभ्योऽपि । सुकर्मा । ह्रस्वस्य पिति कृति तुक् । प्रातरित्वा । वनिपि ॥

सुबो०—अपिद्राधागैहाक्पिबतीनामीः । दो अवखंडने । देङ् पालने । दाण् दाने । डुदाञ् दाने । एषां चतुर्णां ग्रहणम् । धेट् पाने । डुधाञ् धारणपोषणयोरि- । गै शब्दे । ओहाक् त्यागे । पा पाने । एषामीत्वं स्यात् किति

हसे । क्विपि तु इत्वं वा क्यपि इत्वं न । सुष्ठु पिबतीति कित्त्वान्न गुणः । सुपीवा । घृतं पिबतीति घृतपीवा । अनादंतादपि एते प्रत्ययाः स्युः । शॄ हिंसायाम् । सुष्ठु शृणातीति ह्वल्योरितीण् न । सुशर्मा । ह्रस्वस्य पिति कृति तुक् । ह्रस्वस्य तुगागमः स्यात् पिति कृति । इण् गतौ । प्रातरेतीति प्रातरित्वा । वनिपि ॥

**अमस्यात्वम् ॥ ६६७ ॥ विशेषेण जायते विजावा । ओणृ । ओणतीत्यवावा । पारदृश्वा । राजयुध्वा । सुत्वा । धीवा । पीवा ॥**

सुबो०—अमस्यात्वम् । अमांतस्य धातोरात्वं स्यात् वनिपि । षष्ठीनिर्दिष्टस्येत्यंतस्यादेशः। जनी प्रादुर्भावे । विजायते इति विजावा । ओणृ अपनयने । ओणतीति अनुनासिकस्यात्वे अवादेशे च । अवावा । कर्मण्युपपदे दृशेः क्वनिप् । भूते इति केचित् । पारं दृष्टवान् इति पारदृश्वा । वर्त्तमानेऽपि स्यात् । विश्वदृश्वनयनावयमित्यत्र विश्वं पश्यंतीति विश्वदृश्वानि नयनानि येषां ते विश्वदृश्वनयना इति वर्त्तमानेन विग्रहेऽपि न क्षतिः । युध संप्रहारे । राजानं युध्यते इति राजयुध्वा । षुञ् अभिषवे । सुनोतीति ह्रस्वस्येति तुक् । सुत्वा । दधातीति अपिद्दाधेतीत्वम् । धीवा । पिबतीति पीवा ॥

तत्त्व०–अवावेति । ओणस्यात्वे ओतोऽवादेशे रूपम् । पारदृश्वेति। पारं दृष्टवान् । राजयुध्वेति । अन्तर्भावितण्यर्थो युधिः । राजानं योधितवान् ॥

**क्विप् ॥ ६६८ ॥ धातोः क्विप्स्यात् ॥ कर्मकृत् । मो नो धातोः । प्रशान् । प्रदान् । अग्निचित् । सोमसुत् । सोमपाः । सर्वदृक् । दिश् अतिसर्जने । दिक् ॥**

सुबो०—क्विप् । सर्वधातुभ्यः क्विप् स्यात् । क्विप्प्रत्ययमाह । कित्त्वान्न गुणः पित्त्वात्तुक् वेरिति विलोपः । कर्म करोतीति कर्मकृत् । प्रशाम्यतीति अमांतस्येति दीर्घः । मो नो धातोरिति नत्वम् । प्रशान् । सोमं सुनोतीति सोमसुत् । अग्निं चिनोतीति अग्निचित् । सोमं पिबतीति अपिद्दाधेति क्विपि वेत्वम् । सोमपाः। सर्वं पश्यतीति सर्वदृक् । दिशामिति कः । दिश अतिसर्जने । दिशतीति दिक् ॥

**क्विपिवचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च ॥६६९॥ वाक् । क्लिति झसे कौ अमे चेति छस्य शो वस्य ऊः ॥ तत्त्वप्राट् तत्त्वप्राशौ । आयतस्तूः । कटप्रूः । जु गतौ । जूः। श्रीः ॥**

सुबो०—क्विपिवचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च । एषां दीर्घः संप्रसारणाभावश्च स्यात्क्विपि । वच परिभाषणे । प्रच्छ ज्ञीप्सायाम् । आयतपूर्वः ष्टुञ् स्तुतौ । कटपूर्वः प्रुङ् गतौ । जु गतौ । श्रिञ् सेवायाम् । वक्तीति चोः कुरिति

कः । वाक् । तत्त्वं पृच्छतीति क्विङति ह्रसे कौ नमे चेति छस्य शः। छशषेति षः। षो ड इति डः। तत्त्वप्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते इति कटप्रूः। जवतीति जूः । हरिं श्रयतीति हरिश्रीः । वचिप्रच्छ्योः संप्रसारणाभावः ॥

तत्त्व०—वागिति । वक्तीति विग्रहः । तत्त्वप्राडिति । तत्त्वं पृच्छति । एवमन्यदपि कर्त्तरि ॥

ध्यायतेः क्विपि सम्प्रसारणम् ॥ ६७० ॥ सुधीः ॥

सुबो०—ध्यायतेः क्विपि संप्रसारणम् । ध्यै चिन्तायाम्। सुष्ठु ध्यायतीति सुधीः॥

गमादीनां ञमस्य लोपः॥६७१॥ क्विपि क्यपि वा ॥ अङ्गगत् । परीतत् । संयत् । सुनत् ॥

सुबो०—गमादीनां ञमस्य लोपः । क्विपि क्यपि वा । गम् तनु यम् णम् इत्यादीनामनुनासिकस्य लोपः स्यात्क्विपि तु वा । अङ्गं गच्छतीति ह्रस्वस्य पितीति तुक् । अंगगत् । परितनोतीति परीतत् । नहिवृतिवृषिव्यधीति पूर्वस्य दीर्घः । संयच्छतीति संयत् । सुनमतीति सुनत् ॥

ऊङ् च ॥ ६७२ ॥ अग्रेगूः । अग्रेभ्रूः ॥

सुबो०—ऊङ् च । गम्यादीनामूङादेशो ञमस्य लोपश्च स्यात्क्विपि । ङित्त्वादंत्यस्यादेशः । अग्रे गच्छतीति अग्रेगूः। अग्रे भ्रमतीति अग्रेभ्रूः। सप्तम्या अलुक् ॥

तत्त्व०—अग्रेगूः । अग्रे गच्छतीति ॥

द्युतिगमिजुहोतीनां क्विपि द्वित्वम् ॥ ६७३ ॥ दिद्युत् । जगत् ॥

सुबो०—द्युतिगमिजुहोतीनां क्विपि द्वित्वम् । द्योतते इति द्युतेः पूर्वस्येति संप्रसारणम् । दिद्युत् । गच्छतीति गम्यादीनामिति मलोपः ह्रस्वस्येति तुक् । जगत् ॥

जुहोतेर्दीर्घः ॥ ६७४ ॥ जुहूः ॥

सुबो०—जुहोतेर्दीर्घः । अस्य दीर्घः स्यात्क्विपि । जुहोत्यनयेति जुहूः । करणस्य कर्तृत्वविवक्षायां क्विप् ॥

पदान्तस्यानितेर्नस्य णत्वमुपसर्गस्थान्निमित्तात् ॥ ६७५ ॥ अन प्राणने । हे प्राण् । मित्राणि शास्तीति मित्रशीः ॥

सुबो०—पदांतस्यानितेर्नस्य णत्वमुपसर्गस्थान्निमित्तात् । उपसर्गस्थान्निमित्तात् परस्य पदांतस्यानितेर्नस्य णत्वं स्यात् । अन प्राणने । प्रकर्षेण अनितीति संबोधने हे प्राण् । अत्र ञमांतस्येति दीर्घो नाम्नो नो लोपशिति सूत्रे अधावित्युक्तत्वान्नलोपो न । शासु अनुशिष्टौ । क्विपो लोपे प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायेन हसादिकित्प्रत्ययपरत्वात् शासेरिरितीकारः घसादेरिति षः । दोषामिति रः । र्वोर्विहसे इति दीर्घे । मित्रशीः ॥

तत्त्व०–हे प्राणिति । नाम्नो नो लोपशधावित्यत्राधाविति निषेधाद्धावेव नलोपाभावोऽन्यत्र भ्यामादौ भवत्येवेति सूचनाय संबोधनान्तमेवोदाहृतम् ॥

आशासः क्वावुपधाया इत्वम् ॥ ६७६ ॥ आशीः । गीः । पूः ॥

सुबो०–आशासः क्वावुपधाया इत्वम् । आङःशासु इच्छायामित्यात्मनेपदी । शासेरिति सूत्रेणेत्वे सिद्धे आशास उपधाया इत्वं क्वावेव नान्यत्रेति नियमार्थमिदं सूत्रं तेनाऽऽशास्ते इत्यत्रेत्वं न भवति । आशास्ते इति आशीः । गॄ निगरणे । गिरतीति ॠत इरितीर् य्वोर्विहसे इति दीर्घः । गीः । पॄ पालनादौ । पिपर्त्तीति पोरुरित्युर् य्वोर्विहसे इति दीर्घः ॥

इस्मन्त्रन्क्विषु च्छादेर्ह्रस्वः ॥ ६७७ ॥ छदः अपवारणे । चुरादिः । तनुं छादयतीति तनुच्छत् । अक्षद्यूः । रेफाच्छ्वोर्लोपः क्वौ झसादौ हे च प्रत्यये । मूः मुरौ । धूः धुरौ ॥

सुबो०–इस्मन्त्रन्क्विषु च्छादेर्ह्रस्वः। छद अपवारणे । ण्यंतस्य अस्य ह्रस्वः स्यात् एषु परेषु । इसि प्रत्यये छादेः मन्प्रत्यये छद्म । त्रप्रत्यये छत्रम् । क्विपि तु तनुं छादयतीति ञेगिति ञिलोपः । तनुच्छत् । दिवु क्रीडादौ । अक्षैर्दीव्यतीति क्विडति झसे क्वौ अमे चेति वस्य ऊः । अक्षद्यू । मुर्छा मोहसमुच्छ्राययोः । मूर्छतीति रेफाच्छ्वोरिति छलोपः । य्वोर्विहसे इति दीर्घः । मूः । धुर्वी हिंसायाम् । धूर्वतीति रेफाच्छ्वोरिति वलोपः । धूः ॥

तत्त्व०–तनुच्छदिति । तनु च्छादयतीति विग्रहः । अक्षैर्दीव्यतीति अक्षद्यू' । मूरिति । मूर्छतीति विग्रहः ॥

दुहः को घोऽन्तादेशश्च ॥ ६७८ ॥ कामदुघा ॥

सुबो०–दुहः को घोऽन्तादेशश्च । दुहः कप्रत्ययो हस्य घश्च स्यात् । कप्रत्ययमाह । कित्त्वाद्गुणो न । कामं दोग्धीति कामदुघा धेनुः ॥

दृशेष्टक्सकौ चोपमाने कार्ये ॥ ६७९ ॥ उपमाने कर्मण्युपपदे दृशेष्टक्सकौ चात्क्विप् ॥

सुबो०–दृशेष्टक्सकौ चोपमाने कार्य्ये । टक्सकौ प्रत्ययावाह । टित्त्वादीप् । कित्त्वाद्गुणो न ॥

आसर्वादेः ॥ ६८० ॥ एषु परेषु सर्वादेष्टेरात्वम् ॥ अन्यादृशः अन्यादृक्षः अन्यादृक् । तादृशः तादृक्षः तादृक् ॥

सुबो०–आसर्वादेः । सर्वादेष्टेरात्स्यात् । दृक्दृश्दृक्षेषु परेषु । अन्यमिव पश्यतीति अन्यादृशः। ईपि अन्यादृशी । छशषेति षत्वं षढोरिति कत्वम् । अन्यादृक्षः। क्विपि अन्यादृक् । तमिव पश्यतीति तादृशः । ईपि तादृशी । तादृक्षः तादृक् ॥

तत्त्व०—एषु परेष्विति । एवं चोपमाने कर्मोपपदनिमित्तकटक्सक्क्विपि एषु परेषु सर्वादेष्टेरात्वं नान्यत्र । तेन सर्वं पश्यतीति सर्वदृगित्यत्र न उपमानाभावात् । अन्यादृश इति । अन्य इव दृश्यते इति विग्रहः । एवमन्यत्रापि । अत्राहुः कर्त्तरि कृतोविधानात् कर्मार्थताऽयुक्ता । तमिव पश्यतीति चेन्न कर्मण्यणूबाधात् । अपेक्षितार्थानुपस्थितेश्च । अत्र भाष्यं स इव भवति तादृशेति कर्मकर्त्तरि व्युत्पत्तिः । बाहुलकात्कर्मण्यपीति तु बहवः ॥

किमिदमः कीश् ॥ ६८१ ॥ कीदृशः कीदृक्षः कीदृक् । ईदृशः ईदृक्षः ईदृक् । भवादृशः भवादृक्षः भवादृक् । यादृक् । अदसोऽमूस्स्याद्दृक्दृशदृक्षेषु । अमूदृशः अमूदृक्षः अमूदृक् । मादृशः मादृक्षः मादृक् । त्वादृशः त्वादृक्षः त्वादृक् । युष्मादृशः युष्मादृक्षः युष्मादृक् । अस्मादृशः । समानस्य सः । सदृशः सदृक्षः सदृक् ॥

सुबो०—किमिदमः कीश् । किम्शब्दस्य इदम्शब्दस्य च की ईश् आदेशौ स्तः । कमिव पश्यतीति कीदृशः । ईपि कीदृशी । कीदृक्षः कीदृक् । इदमिव पश्यतीति ईदृशः । ईपि ईदृशी । ईदृक्षः ईदृक् । भवंतमिव पश्यतीति भवादृशः । ईपि भवादृशी । भवादृक्षः भवादृक् । यमिव पश्यतीति यादृशः । ईपि यादृशी । यादृक्षः यादृक् । अमुमिव पश्यतीति अदसष्टेरात्वे कृते दस्य म इति मः । मादु इत्यूत्वम् । अमूदृशः । ईपि अमूदृशी । अमूदृक्षः अमूदृक् । मामिव त्वामिव च पश्यतीति त्वन्मदेकत्वे इति त्वन्मदौ टेरात्वे च । मादृशः । ईपि मादृशी । मादृक्षः मादृक् । त्वादृशः । ईपि त्वादृशी । त्वादृक्षः त्वादृक् । अस्मानिव युष्मानिव च पश्यतीति अस्मादृशः । ईपि अस्मादृशी । अस्मादृक्षः अस्मादृक् । युष्मादृशः । ईपि युष्मादृशी । युष्मादृक्षः युष्मादृक् ॥

णिनिरतीते ॥६८२॥ धातोरतीते काले शीले च णिनिः ॥ अग्निष्टोमेनायाक्षीत् । यजनशीलो वा । अग्निष्टोमयाजी । पितृव्यघाती । उष्णभोजी ॥

सुबो०—णिनिरतीते । नाम्न्युपसर्गे चोपपदे धातोरतीते काले ताच्छील्ये णिनिः स्यात् कर्त्तरि । णिनिप्रत्ययमाह । णित्त्वाद्वृद्धिः । इकार उच्चारणार्थः । यज देवपूजादौ । अग्निष्टोमेनेष्टवान् इति इनामिति दीर्घः । अग्निष्टोमयाजी । स्तोत्रेण समाप्यमानो यो यागः सोऽग्निष्टोमः । पितृव्यं हतवानिति हनो घत् इति घत् । पितृव्यघाती । शीले तु उष्णं भोक्तुं शीलमस्येति उष्णभोजी । शीले किम् । उष्णं भुंक्ते कदाचित् ॥

तत्त्व०—णिनिरतीते । शीले टमित्यतः शीले इत्यनुवर्त्तते । अग्निष्टोमेनायाक्षीदिति । नन्वग्निष्टोमस्य कर्मणामध्येयत्वेनाभेदात्कथं करणत्वमस्येति चेत्सत्यभ्यासोऽपि फलोत्पादनायां करणं संभवतीत्याकरे समाहित-

स्वात् अग्निष्टोमः फलभावनायां करणं भवत्येव । उष्णभोजीति । उष्ण भोक्तुं शीलमस्येति विग्रहः ॥

**व्रते च ॥ ६८३ ॥ स्थण्डिलशायी ॥**

सुबो०—व्रते च । व्रतेऽर्थे णिनिः स्यात् । स्थंडिले शेते व्रतार्थमिति स्थंडिलशायी। बहुलमाभीक्ष्ण्ये णिनिः । आभीक्ष्ण्यं पौनःपुन्यम् । क्षीरपायिन उशीनराः । एतत्सर्वमनुक्तसमुच्चयार्थकचशब्दानुवृत्तेर्लभ्यते ॥

**क्विब्वनिब्डाः॥६८४॥ धातोरतीते शीले चैते ॥ ब्रह्महा । भ्रूणहा । वृत्रहा । सुकृत् । धर्मकृत् । पापकृत् । अग्निचित् । सोमसुत् । यज्वा । सरसिजम् । सरोजम् । संस्कारजः । प्रजा । अजः । द्विजः । परितः खाता परिखा ॥**

सुबो०—क्विब्वनिब्डाः । पुनः क्विब्वनिब्डप्रत्ययानाह । कित्त्वाद्गुणो न पित्त्वात्तुक् डित्त्वाट्टिलोपः इकार उच्चारणार्थो वेरिति विलोपः । ब्रह्मभ्रूणवृत्रेषु कर्मसूपपदेषु हंतेः क्विप् नान्यत्र । ब्रह्माणं हतवानिति इनामिति दीर्घः । ब्रह्महा । भ्रूणं गर्भं हतवानिति भ्रूणहा । वृत्रं दैत्यं हतवानिति वृत्रहा इन्द्रः । कर्म कृतवानिति कर्मकृत् । पापं कृतवानिति पापकृत् । अग्निं चितवानिति अग्निचित् । षुञ् अभिषवे । सोमं सुतवानिति सोमसुत् । वनिपि तु यज देवपूजादौ । इष्टवानिति नोपधाया इति दीर्घः । यज्वा । डप्रत्यये तु जनी प्रादुर्भावे । सरसि जातमिति सरसिजम् । सरोजम् । सप्तम्या अलुग्वा । संस्काराज्जात इति संस्कारजः । प्रकर्षेण जातेति प्रजा । आबत इत्याप् । "प्रजा स्यात् संततौ जने" इत्यमरः । न जात इति अजः । ना इत्यदादेशः द्वाभ्यां जन्यसंस्काराभ्यां जात इति द्विजः । खन् खनने । परितः खातेति आबत इत्याप् । परिखा ॥

तत्त्व०—क्विब्वनिब्डाः । क्विपः सिद्धावपि पुनरुपादानं नियमार्थम् । तेन हन्तेर्भूते ब्रह्मभ्रूणवृत्रेष्वेवेति । वनिपोऽपि पूर्वं वर्त्तमानार्थत्वात्पुनर्ग्रहणं भूतेऽपि यथा स्यादित्येवमर्थम् । यज्वेति । इष्टवानिति वाक्यं प्रजा प्राणिजातस्य सञ्ज्ञा । द्विज इति । मातुर्यदग्रे जायेत इति स्मृतेः ॥

**क्तक्तवतू ॥ ६८५ ॥ धातोरतीते काले क्तक्तवतू एतौ स्तो भावकर्मणोः॥ क्तः। स्नातम् । कृतः । कटः । क्तवतुः । विष्णुर्विश्वं कृतवान् ॥**

सुबो०—क्तक्तवतू । कित्त्वाद् गुणो न । उकारो त्रितो नुमिति नुमर्थः क्तप्रत्ययो भावकर्मकर्तृषु भवति । क्तवतुः कर्तर्येव । ष्णा शौचे । त्वयाऽस्नायि इति स्नातम् । अकारीति कृतः कटस्त्वया । अकार्षीदिति कृतवान् । अत्वसोः साविति दीर्घः ॥

तत्त्व०—क्तक्तवतू । भावकर्मणोरिति । मण्डूकप्लुत्येह भावकर्मेत्यनुवृत्तं क्तवतुः कर्त्तरि परिशेषात् । स्नातमिति । अस्नायीति विग्रहः । कृत इति अकारीति । कृतवानिति । अकार्षीदिति । एवमन्यो विग्रहो यथावदवगन्तव्यः ॥

**गत्यर्थादकर्मकाच्च कर्तरि क्तः ॥ ६८६ ॥** भावकर्मणोरपि ॥ गङ्गां गतः । स्थितः । ञमान्तस्योपधाया दीर्घः क्ङिति झसे क्वौ च । शान्तः । दान्तः ॥

सुबो०—गत्यर्थादकर्मकाच्च कर्त्तरि क्तः । गत्यर्थादकर्मकाच्च धातोः क्तः स्यात् भावकर्मकर्तृषु अगमदिति गतो गंगां सः । लोपस्त्वनुदात्ततनामिति मलोपः । अस्थादिति स्थितः सः स्थामीतीत्वम् । शमु दमु उपशमे । अशमददमदिति ञमांतस्योपधाया इति दीर्घः । शान्तः । दान्तः ॥

तत्त्व०—गत इति । अगमदिति ॥

**श्लिषशीङ्स्थाआसवसजनरुहजीर्यतिभ्यश्च ॥ ६८७ ॥** रामः सीतामाश्लिष्टः । शेषमधिशयितः । स्वर्गमधिष्ठितः । हरिमुपासितः । हरिदिनमुपोषितः । तमनुजातः । वृषमारूढः । जगदनुजीर्णः ॥

सुबो०—श्लिषशीङ्स्थाआसवसजनरुहजीर्यतिभ्यश्च । एभ्यः कर्त्तरि क्तः भावकर्मणोश्च । श्लिष आलिंगने । शीङ् स्वप्ने । ष्ठा गतिनिवृत्तौ । आस उपवेशने । वस निवासे । जनी प्रादुर्भावे । रुह बीजजन्मनि प्रादुर्भावे च । जॄ वयोहानौ । अधिपूर्वाणां शीङ्स्थासामित्याधारस्य कर्मसंज्ञा । उपान्वध्याङ्पूर्वस्येति वस आधारस्य कर्मसंज्ञा । आश्लिक्षदिति आश्लिष्टो रामः सीताम् । अध्यशयिष्टेति अधिशयितो हरिः शेषम् । अध्यष्ठादिति अधिष्ठितः स स्वर्गम् । स्थामीतीत्वम् । उपासिष्टेति उपासितः सः हरिम् । उपावात्सीदिति वसिक्षुधोरितीट् यजामिति संप्रसारणं घसादेरिति षः । उपोषितः स हरिदिनम् । अन्वजनिष्टेति जनसनखनामित्यात्वम् । अनुजातः सः रामम् । आरुक्षदिति हो ढ इति ढत्वम् । तथोर्द्ध इति तस्य धत्वं ष्टुत्वं च ढि ढो लोप इति ढलोपपूर्वदीर्घौ । आरूढः स वृषम् । अन्वजारीदिति ॠत इरितीर् य्वोर्विहसे इति दीर्घः र इति तस्य नत्वम् । अनुजीर्णः स विश्वम् । कर्मणि तु गता प्राप्ता गंगा । तेन आश्लिष्टा सीता रामेण । अधिशयितः शेषो हरिणा । अधिष्ठितः स्वर्गस्तेन । उपासितो हरिस्तेन । उपोषितं हरिदिनं तेन । अनुजातो रामस्तेन । आरूढो वृषस्तेन । अनुजीर्णो विश्वस्तेन ॥

तत्त्व०—श्लिषेति । सकर्मकत्वादप्राप्तौ वचनम् । अधिशयित इति । अध्याशयिष्ट इति ॥

**क्तो वा सेट् ॥ ६८८ ॥** उदुपधात्सेट् क्तो वा कित् ॥ द्युतितं द्योतितम् । प्रमुदितः प्रमोदितः साधुः ॥

सुबो०—क्तो वा सेट् । उदुपधादविकरणादिट्भावकर्मणोः सेट् क्तो वा कित्संज्ञः स्यात् । कित्त्वाभावे गुणः । द्युत दीप्तौ । अद्योति इति द्युतितं द्योतितम् । तेन ।

मुद हर्षे । प्रामोदि इति प्रमुदितः साधुस्तेन । उदुपधात्किम् । विदितम् । भावकर्मणोः किम् । रुचितं वनम् । गत्यर्थादकर्मकादिति कर्त्तरि क्तः । सेटि किम् । कुष्टम् । कुष निष्कर्षे । आबविकरणात्किम् । गुध्यतेर्गुधितम् ॥

**शीङ्स्विदिमिदिक्ष्विदिधृषमृषपूङस्सेटौ क्तक्तवतू कितौ न ॥ ६८९ ॥** शयितः शयितवान् । प्रस्वेदितः प्रस्वेदितवान् । क्ष्वेदितः क्ष्वेदितवान् । धर्षितः धर्षितवान् ॥

सुबो०—शीङ्स्विदिमिदिक्ष्विदिधृषमृषपूङः सेटौ क्तक्तवतू कितौ न । अकित्त्वाद्गुणः । अशयिष्टेति शयितः । शयितवान् सः । कृत इतीट् अनुबंधनिर्देशो यङ्लुग्निवृत्त्यर्थः । शेशियितः । शेशियितवान् । नुधातोरिति यः । किंच । स्विदादीनामादीदित इतीण्निषेधे प्राप्ते भावे कर्त्तरि चादित इति सेट्कत्वम् । पूङः कित इतीण्निषेधे प्राप्ते पूङो वा कित इति सेट्कत्वम् । ञिष्विदा स्नेहनमोचनयोरिति भ्वादिरत्र गृह्यते न तु ञिष्विदा गात्रप्रक्षरणे दिवादिः । भ्वादिसाहचर्यात् प्रास्वेदिष्टेति प्रस्वेदितं तेन प्रस्वेदितवान् । ञिधृषा प्रागल्भ्ये । प्रधर्षितवान् प्रधर्षितस्तेन ॥

**मृषः क्षान्तौ ॥ ६९० ॥** मर्षितः मर्षितवान् ॥

सुबो०—मृषः क्षांतौ । मृषः सेटौ क्तक्तवतू कितौ न स्तः क्षमायामर्थे । मर्षितः मर्षितवान् । क्षमायां किम् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः ॥

**पूङो वा कितस्तस्येट् ॥ ६९१ ॥** पवितः पूतः । पवितवान् पूतवान् ॥

सुबो०—पूङो वा कितस्तस्येट् । पूङः परस्य कितस्तस्येट् वा स्यात् । पूङ् पवने कितः वुः से इत्यतो वुरित्यनुवृत्तम् ॥

**कितः ॥ ६९२ ॥** उवर्णान्तादृवर्णान्तात् श्रिश्रिभ्यां च परस्य कितस्तस्य इण्न ॥ भूतः । वृतः । श्रितः । श्वयतेस्सम्प्रसारणस्य दीर्घः किति ते ॥ शूनः । वेञो ह्रस्वः । किति ते । उतम् ॥

सुबो०—कितः । श्विश्रिऋवर्णोवर्णांतेभ्यः परस्य कितः प्रत्ययस्येण्न । अभूदिति भूतः । वृङ् संभक्तौ । वृञ् वरणे च । वृतः । श्रिञ् सेवायाम् । श्रितः । टुओश्विइर् गतिवृद्ध्योः । यजामिति संप्रसारणम् । श्वयतेः संप्रसारणस्य दीर्घः । शूनः । वेञ् तंतुसंताने । यजामिति संप्रसारणे वेञो ह्रस्वः । उतम् ॥

तत्त्व०—कित इति । वु. सेरित्यतो वुरित्यस्यानुवृत्तेरुवर्णादित्यादि । नैकस्वरादित्यतो नेति योगविभागात् श्विश्रिभ्यामिति च लभ्यते ॥

**आदीदितः ॥ ६९३ ॥** आदित ईदितश्च क्तक्तवत्वोर्नेट् ॥

सुबो०—आदीदितः । आच्च ईच्च आदीतौ आदीतौ इतौ यस्य आदीदित् तस्मादादीदितो धातोः क्तक्तवत्वोरिण्न स्यात् कृत इत्यस्यापवादः ॥

तत्त्व०—आदीदित इति । आच्च ईच्च आदीतौ इतौ यस्य तथा तस्मात् । कृत इति प्राप्तस्यापवादः ॥

ञीतां क्तवर्तमानेऽपि ॥ ६९४ ॥ ञीतां धातूनां मतिबुद्धिपूजार्थानां च वर्तमानेऽपि क्तः ॥ राज्ञां मतः । बुद्धः । इष्टः ॥

सुबो०—ञीतां क्तवर्त्तमानेऽपि । ञिरिद्येषां ते ञीतस्तेषां मतिबुद्धिपूजार्थेभ्यश्च क्तः स्यात् वर्त्तमानेऽर्थे मतिरिहेच्छा बुद्धेः पृथग्ग्रहणात् । राज्ञां मतः । इष्टः तैरिष्यमाण इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्चितः ॥

तत्त्व०—ञीतामिति । ञिरिद्येषां ते ञीतस्तेषाम् ॥

दस्तस्य नो दश्च ॥ ६९५ ॥ दकारात्परस्य कितस्तस्य नत्वं दकारस्य च ॥ भेदितं भिन्नम् ॥

सुबो०—दस्तस्य नो दश्च । दात्परस्य कितस्तस्य नत्वं स्यात् ॥

भावे कर्तरि चादितः क्तक्तवत्वोरिड्वा ॥६९६॥ मेदितः मिन्नः । प्रस्वेदितः प्रस्विन्नः । क्ष्वेदितः क्ष्विन्नः ॥

सुबो०—भावे कर्त्तरि चादितः क्तक्तवत्वोरिड्वा । आकारेतो धातोर्भावकर्तृस्थितयोः क्तक्तवत्वोरिड्वा स्यात् । ञिमिदा स्नेहने । मिद्यते इति मिन्नम् । तेन शीङ्स्विदिमिदीति क्तस्याकित्त्वाद्गुणः । मेदते इति मेदितः सः । ञिष्विदा स्नेहनमोचनयोः । प्रस्विद्यते इति प्रस्विन्नं तेन । प्रस्वेदते इति प्रस्वेदितः सः । ञिक्ष्विदा स्नेहनमोचनयोः । क्ष्विन्नं तेन । क्ष्वेदितः सः ॥

तत्त्व०—आदित इति । आत् इद्यस्य स तथा ॥

अदो जघुः ॥६९७॥ किति तकारे ॥ जग्धम् ॥

सुबो०—अदो जघुः । अदो जघुरादेशः स्यात् किति तादौ प्रत्यये । उकार उच्चारणार्थः । तथोर्द्ध इति तस्य धः । झबे जबा इति घस्य गः । जग्धम् ॥

रः ॥ ६९८ ॥ रेफात्कितस्तस्य नत्वम् ॥ विकीर्णम् । जीर्णम् ॥

सुबो०—रः । रात्कितस्तस्य नत्वं स्यात् । कॄ विक्षेपे । जॄ वयोहानौ । ऋत इरितीर् । ष्वोर्विहसे इति दीर्घः । विकीर्णः । जीर्णम् ॥

तत्त्व०—र इति । कृतस्यापत्यं कार्तिरित्यत्र वृद्धेरसिद्धत्वान्न स्वरांतो वेत्यस्यानुवृत्तेर्व्यवस्थया क्वचिन्न क्वचिद्वेति बोध्यम् । तेन पूर्त इत्यादौ न । दस्तस्येति सुवचम् ॥

ल्वाद्योदितश्च ॥ ६९९ ॥ ल्वादेरोदितश्च धातोः कितस्तस्य नो भवति ॥ लूनः लूनवान् । ज्या वयोहानौ । जीनः ॥

सुबो०—ल्वाद्योदितश्च । ल्वादेरेकविंशतेर्द्धातोरोदितश्च कितस्तस्य नत्वं स्यात् । क्र्यादेस्तगणोल्वादिः । लूञ् । १ । स्तृञ् । २ । कॄञ् । ३ । वृञ् । ४ धूञ् । ५ । शॄञ् । ६ । दॄ । ७ । पॄ । ८ । भॄ । ९ । मॄ । १० । दॄ । ११ । जॄ । १२ । नॄ । १३ । कॄ । १४ । ॠ । १५ । गॄ । १६ । ज्या । १७ । री । १८ । ली १९ । व्री । २० । प्ली । २१ । इति ल्वादिः । लूञ् छेदने । लूयते स्म इति लूनः । लुनाति स्मेति लूनवान् । ज्या वयोहानौ । ग्रहामिति संप्रसारणे । जीनः ।

तत्त्व०—ल्वाद्योदित इति । लू आदिर्यस्य स ल्वादिः । ओदित् यस्य स ओदित् । ल्वादिश्च ओदिच्च ल्वाद्योदित् तस्मात् । लून इति लूयते स्म इति । लूनवानिति । लुनाति स्मेति ॥

**प्यायः पीति किति ॥ ७०० ॥** पीनः । भुजो कौटिल्ये । भुग्नः । हीनः । स्वादय ओदितः । षूङ् प्राणिप्रसवे । सूनः सूनवान् ॥ दूङ् परितापे । दूनः । मीनः । डीङ् । उड्डीनः । दीनः । लीनः । व्रीणः । रीणः । धीनः ॥

सुबो०—प्यायः पीति किति । प्यायः पी आदेशः स्यात् तादौ किति । ओप्यायी वृद्धौ । पीनः । भुजो कौटिल्ये । नत्वस्य सिद्धत्वेन झसपरत्वात् चोः कुरिति गः । भुग्नः । ओहाक् त्यागे । अपिद्याधेतीत्वम् । हीनः । षूङ् प्राणिप्रसवे । स्वादय ओदित इत्योदित्त्वान्नत्वम् । सूनः सूनवान् । दिवादेरंतर्गणोऽयं स्वादिः । षूङ् । १ । दूङ् ।२। दीङ् । ३ । डीङ् ।४। धीङ् । ५ । मीङ् । ६ । रीङ् । ७ । लीङ् । ८ । व्रीङ् । ९ । स्वादयो नव । दूङ् परितापे । दूनः दूनवान् । डीङ् विहायसा गतौ । ओदिन्मध्ये डीङः पाठसामर्थ्यादिण्न । उड्डीनः । दीङ् क्षये । दीनः । लीङ् श्लेषणे । लीनः । रीङ् स्रवणे । रीणः । धीङ् आधारे । धीनः ॥

तत्त्व०—उड्डीन इति । ओदिन्मध्ये पाठसामर्थ्यान्नेट् । एवमन्यत्रापि कर्त्राद्यर्थभेदेन वाक्यभेदः ॥

**दुग्वोर्दीर्घश्च ॥ ७०१ ॥** दूनः । गूनः ॥

सुबो०—दुग्वोर्दीर्घश्च । दुगुभ्यां परस्य कितस्तस्य नत्वमनयोर्दीर्घश्च स्यात् । गु पुरीषोत्सर्गे । दु गतौ । टुदु उपतापे अयं तु न गृह्यते । सानुबंधकत्वात् । मृदुतया दुतया इति माघः । दूनः । गूनः ॥

तत्त्व०—दुग्वोरिति । दु गतावित्येव गृह्यते । नतु टुदु उपताप इत्यपि सानुबंधकत्वात् । मृदुतया दुतयेति माघोऽपि ॥

**क्षियो दीर्घः कर्त्तरि क्तक्तवत्वोर्नत्वं च ॥ ७०२ ॥** क्षीणः क्षीणवान् । कर्त्तरि किम् । क्षितम् ॥

सुबो०—क्षियो दीर्घः कर्त्तरि क्तक्तवत्वोर्नत्वं च । क्षियः परयोः कर्त्तरि स्थितयोः क्तक्तवत्वोस्तस्य नत्वं क्षियो दीर्घश्च स्यात् । क्षि क्षये । क्षि निवासगत्योश्च । क्षयति

स्मेति क्षीणः । क्षीणवान् । कर्त्तरि किम् । क्षीयते स्मेति क्षितं कामेन ॥

**यलसंयोगादेरादन्तात्कितस्तस्य नत्वम् ॥ ७०३ ॥** द्राणः । ग्लानः । म्लानः ॥

सुबो०–यलसंयोगादेरादंतात्कितस्तस्य नत्वम् । यलप्रत्याहारः संयोगादेरा-कारांताद्धातोः परस्य कितस्तस्य नत्वं स्यात् । द्रा कुत्सायाम् । द्राणः । ग्लै म्लै हर्षक्षये । ग्लानः । म्लानः ॥

**नुदविदोन्दत्राघ्राह्रीनिर्वाभ्यो वा ॥ ७०४ ॥** त्राणः त्रातः । घ्राणः घ्रातः । ह्रीणः ह्रीतः । नुत्तः नुन्नः । विद विचारणे । वित्तः विन्नः । उन्दी क्लेदने । उत्तः उन्नः । निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिले ॥

सुबो०–नुदविदोंदत्राघ्राह्रीनिर्वाभ्यो वा । एभ्यः कितस्तस्य नत्वं वा स्यात् । आद्यानां त्रयाणां दस्तस्येति नित्यं नत्वे प्राप्ते त्राघ्रा अनयोर्यलसंयोगादेरिति नत्वे प्राप्ते ह्री वा अनयोरप्राप्ते सति विभाषेयम् । नुद प्रेरणे । नुत्तः नुन्नः । विद विचारणे । रौधादिक एव गृह्यते । उन्दिना परेण साहचर्यात् । वित्तः विन्नः। तथा च भाष्यम् । "वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । विन्तेर्विन्तेश्च विन्नश्च भोगे वित्तश्च विंदतेः॥" इति । उन्दी क्लेदने । आदींदित इतीण्न । नोलोप इति नलोपः । उन्नः उत्तः । त्रैङ् पालने । त्राणः त्रातः । घ्रा गंधोपादाने । घ्राणः घ्रातः । ह्री लज्जायाम् । ह्रीतः ह्रीणः । वा गतिगंधनयोः । अवाते कर्त्तरि सति नत्वं स्यात् । निर्वाणोऽग्निर्मुनिर्वा । मुक्तिं गत इत्यर्थः । वाते कर्त्तरि तु निर्वातो वातः । नितरां वातो गत इत्यर्थः । गत्यर्थादिति कर्तरि क्तः ॥

**दो दत्ति ॥ ७०५ ॥** दा इत्यस्य दथ् किति तकारे न तु पितः ॥ दत्तः दत्तवान् ॥

सुबो०–दो दत्ति । ददातेर्दथादेशः स्यात्किति तकारे । दाप् लवने अस्य तु न । व्याख्यानात् प्रयोगाभावाच्च । थांतोऽयमादेशः । किंच यदि तांत आदेशस्तदा विदत्तमित्यादौ आद्यंतवदेकस्मिन्निति न्यायेन नाम्यंतोपसर्गस्येति दीर्घः स्यात् । यदि दान्तस्तदा दस्तस्येति नत्वं स्यात् । यदि धांतस्तदा तथोर्द्ध इति क्तस्य धः स्यात् । थांते तु खसे चपा इति थस्य तः । दत्तः दत्तवान् । पितस्तु दातः ॥

**स्वरांतो वा ॥ ७०६ ॥** स्वरान्तादुपसर्गादुत्तरस्य दा इत्यस्य तो वा किति तकारे न तु पितः ॥ प्रत्तः प्रदत्तः । अवत्तः अवदत्तः ॥

सुबो०—स्वरान्तो वा । पक्षे दथादेशः ॥

तत्त्व०—स्वरपदं स्वरान्तोपसर्गोपलक्षकमित्याह । स्वरान्तोपसर्गादिति । तेन देवदत्त इत्यादौ न ॥

**नाम्यन्तोपसर्गस्य दीर्घो दादेशे तकारे ॥ ७०७ ॥** सुष्ठु अदायि सूत्तम् । नीत्तम् ॥

सुबो०—नाम्यंतोपसर्गस्य दीर्घो दादेशे तकारे । नाम्यंतस्योपसर्गस्य दीर्घः स्यात् दास्थाने आदेशो यस्तकारस्तस्मिन् परे ॥

**धाञो हिः किति ते ॥ ७०८ ॥** निहितः ॥

सुबो०—धाञो हिः किति ते । दधातेर्हिरादेशः स्यात् किति तकारे ॥

**ध्याख्यापॄमूर्छिमदिभ्यो न नत्वम् ॥ ७०९ ॥** ध्यातः । ख्यातः । पूर्तः । मूर्तः । मत्तः । यज । इष्टम् । उप्तम् । ऊढः । व्येञ् । वीतः । ह्वेञ् । हूतः । उदितः । उक्तः ॥

सुबो०—ध्याख्यापॄमूर्छिमदिभ्यो न नत्वम् । आद्ययोर्यल्संयोगादेरिति नत्वे प्राप्ते । पॄ इत्यस्य तु ल्वादिषु पाठात् ल्वाद्योदित इति नत्वे प्राप्ते मूर्छेतेस्तु छस्य लोपे कृते र इति नत्वे प्राप्ते माद्यतेस्तु दस्तस्येति नत्वे प्राप्ते निषेधः । ध्यै चिंतायाम् । ध्यातः । ख्या प्रकथने । ख्यातः । पॄ पालनादौ । पोरुरित्युर् । य्वोर्विहसे इति दीर्घः । कित इतीण्न । पूर्तः । मुर्छा मोहसमुच्छ्राययोः । रेफाच्छ्वोरिति छलोपः। आदीदित इतीण्न । मूर्त्तः । मदी हर्षे । आदीदित इतीण्न । मत्तः । यज देवपूजादौ । छशषेति षत्वम् । ष्टुत्वम् । यजादित्वात् यजामिति संप्रसारणम् । इष्टम् । टुवप् बीजतंतुसंताने । उप्तम् । वह प्रापणे । हो ढ इति हस्य ढः तथोर्ध इति तस्य धः ष्टुत्वं ढि ढ इति ढलोपपूर्वदीर्घौ । ऊढम् । व्येञ् संवरणे । वीतः । ह्वेञ् स्पर्द्धायाम् । हूतः । वद व्यक्तायां वाचि । कृत इतीट् । उदितः । वच परिभाषणे । उक्तः ॥

**वसतिक्षुधोरिट् क्त्वाक्तक्तवतूनाम् ॥ ७१० ॥** उषितः । क्षुधितः । सुप्तः ॥

सुबो०—वसतिक्षुधोरिट् क्त्वाक्तक्तवतूनाम् । वस निवासे । यजामिति संप्रसारणम् । घसादेरिति षः । उषितः । क्षुध बुभुक्षायाम् । क्षुधितः । ञिष्वप् शये । यजामिति संप्रसारणम् । सुप्तः ॥

**क्वचिद्वेटः क्तक्तवत्वोर्नेट् ॥ ७११ ॥** व्रश्चू । वृक्णः वृक्णवान् ॥

सुबो०—क्वचिद्वेटः क्तक्तवत्वोर्नेट् । यस्य धातोः कुत्रचित्स्थले विकल्पेनेड्विहितस्तस्माद्धातोः परयोः क्तक्तवत्वोरिण्न स्यात् । ओव्रश्चू छेदने । ऊदितो वेति वेट्त्वादिण्न । ग्रहामिति संप्रसारणम् । ल्वाद्योदित इति नत्वम् । नत्वस्यासिद्धत्वात्

झसे परतः छशषेति षत्वे प्राप्ते क्तक्तवत्वोरादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्य इति चोः कुरिति कुत्वं स्कोरिति सलोपः । वृकणः वृक्णवान् ॥

अञ्चेः पूजायामिट् ॥ ७१२ ॥ अञ्चितः । जातः ॥

सुबो०—अंचेः पूजायामिट् । पूजार्थादंचतेः परयोः क्तक्तवत्वोरिट् स्यात् । उदितः क्त्वो वेडिति अंचेः क्त्वायां वेट्कत्वात् क्वचिद्वेट इति निषेधे प्राप्ते सति विधिः । पूजार्थांचतेर्नेति नलोपो न । अंचितः । गतौ तु नो लोप इति नलोपः । चोः कुरिति कः । अक्तः । जनी प्रादुर्भावे । जनसनेत्यात्वम् । जातः ॥

पचो वः ॥ ७१३ ॥ क्तक्तवत्वोस्तस्य ॥ पक्वः पक्ववान् ॥

सुबो०—पचो वः । पचतेः परस्य क्तक्तवत्वोस्तस्य वः स्यात् । डुपचष् पाके । वस्यासिद्धत्वाच्चोः कुरिति कः । पक्वः ॥

क्षायो मः ॥ ७१४ ॥ क्षामः क्षामवान् ॥

सुबो०—क्षायो मः । क्षायतेः परस्य क्तक्तवत्वोस्तस्य मः स्यात् । क्षै क्षये । संध्यक्षराणामित्यात्वम् । क्षामः ॥

तत्त्व०—क्षाम इति । क्षै क्षये इत्यस्यात्वे ॥

प्रस्त्यस्सम्प्रसारणं किति तस्य मो वा॥७१५॥ प्रस्तीमः प्रस्तीतः॥

सुबो०—प्रस्त्यः संप्रसारणं किति तस्य मो वा । प्रपूर्वस्य स्त्यायतेः संप्रसारणं स्यात् । किति क्तक्तवत्वोस्तस्य मश्च वा । स्त्यै शब्दसंघातयोः । प्रस्तीमः प्रस्तीतः ॥

तत्त्व०—प्रस्त्य इति । प्रस्त्यः संप्रसारणं नित्यं तस्य तु मो वेत्यर्थः । प्रस्त्यायति स्म प्रस्तीमः । आदौ संप्रसारणे कृते यलसंयोगादित्वाभावान्न नत्वमनुपसर्गादिति ॥

शुषेः कः ॥ ७१६ ॥ शुष्कः शुष्कवान् ॥

सुबो०—शुषेः कः । शुषेः परस्य क्तक्तवत्वोस्तस्य कः स्यात् । शुष शोषणे । शुष्कः ॥

स्फायस्स्फीति किति ॥ ७१७ ॥ स्फीतः । धेट् । धीतम् । गीतम् । पीतम् । दो । दितम् । सो । सितम् । मितम् ॥

सुबो०—स्फायः स्फीति किति । स्फायतेः स्फीरादेशः स्यात् तादौ किति । स्फायी वृद्धौ । स्फीतः । धेट् पाने । गै शब्दे । पा पाने । एषां त्रयाणामपिद्माधेतीत्वम् । धीतम् । गीतम् । पीतम् । दो अवखंडने । षोऽन्तकर्मणि । मा माने । माङ् माने । मेङ् प्रणिदाने । एषां स्थामितीत्वम् । दितम् । सितम् । मितम् ॥

सेटोः क्तक्तवत्वोर्णिलोपः ॥ ७१८ ॥ चोरितः चोरितवान् । पाचितः पाचितवान् ॥

सुबो०–सेटोः क्तक्तवत्वोर्ञिलोपः। ञिप्रत्ययस्य लोपः स्यात् सेटोः क्तक्तवत्वोः परयोः। चुर स्तेये। कृत इतीट्। ञिलोपे। चोरितः। डुपचष् पाके। ण्यंतः कृत इतीट्। पाचितः॥

**ऊर्णोतेर्नेट्॥ ७१९॥ ऊर्णुतः॥**

सुबो०–ऊर्णोतेर्नेट्। ऊर्णोतेरिण्न स्यात् तादौ किति। ऊर्णुञ् आच्छादने। ऊर्णुतः ऊर्णुतवान्॥

**द्रवस्य काठिन्ये स्पर्शे चार्थे श्यैङस्सम्प्रसारणं कितस्तस्य नत्वं च न तु स्पर्शे॥७२०॥ शीनं घृतम्। स्पर्शे तु। शीतं जलम्॥**

सुबो०–द्रवस्य काठिन्ये स्पर्शे चार्थे श्यैङस्संप्रसारणं कितस्तस्य नत्वं च न तु स्पर्शे। श्यैङः संप्रसारणं स्यात् द्रवरूपस्य द्रव्यस्य। कठिनस्य भावः काठिन्यं तस्मिन् काठिन्येऽर्थे च पुनः द्रवस्यास्पर्शेऽर्थे श्यैङः परस्य कितस्तस्य नश्च स्यात् स्पर्शेऽर्थे नत्वं न। श्यैङ् गतौ। शीनं घृतम्। स्पर्शे किम्। शीतं जलम्। काठिन्ये स्पर्शे च किम्। संश्यानो वृश्चिकः। शीतात्संकुचित इत्यर्थः। यलसंयोगादेरिति नत्वम्॥

**अंचेः कितस्तस्य नत्वं न त्वपादाने॥ ७२१॥ समक्नः। अन्यत्रोदक्तमुदकं कूपात्॥**

सुबो०–अंचेः कितस्तस्य नत्वं नत्वपादाने। अंचु गतिपूजनयोः। नत्वस्यासिद्धत्वात् चोः कुरिति कः। उदितः क्त्वो वेडिति क्त्वायां वेट्कत्वात्। क्वचिद्वेट इतीण्न। समक्नः। अनपादाने किम्। उदक्तमुदकं कूपात्॥

**दिवोऽविजिगीषायाम्॥७२२॥ आद्यूनः। विजिगीषायां तु। द्यूतम्॥**

सुबो०–दिवोऽविजिगीषायाम्। दिवः क्तक्तवत्वोस्तस्य नः स्यात्। विजेतुमिच्छा विजिगीषा। तस्यां वाच्यायां नत्वं न। दिवु क्रीडाविजिगीषादौ। क्ङिति झसे इति वस्य ऊः। द्यूनः। क्षीण इत्यर्थः। "आद्यूनः स्यादौदरिकः" इति हैमः। विजिगीषाया तु द्यूनम्। द्यूते विजिगीषयाऽक्षाः पात्यंते इति॥

**अनुपसर्गात्फुल्लक्षीबकृशोल्लाघा निपात्यन्ते॥ ७२३॥ फुल्लः फुल्लवान्। क्षीवृ मदे। क्षीबो मत्तः। कृशस्तनुः। लाघ शोषणालमर्थयोः। उल्लाघो नीरोगः। उपसर्गात्तु॥**

**चरफलोरत उति किति॥ ७२४॥ प्रफुल्तः। प्रक्षीवितः। प्रकृशितः। प्रोल्लाघितः। चर। चूर्णः॥**

सुबो०—अनुपसर्गात् फुल्लक्षीबकृशोल्लाघा निपात्यंते । ञिफला विशरणे । क्तक्तवत्वोस्तस्य लत्वं निपात्यते चरफलोरत उति किति । एतयोरस्य उत्स्यात् तादौ किति । आदीदित इतीण् न । फुल्लः । क्षीबृ मदे । कृश तनूकरणे । लाघृ शक्तौ एषां त्रयाणां क्तस्य तलोपो निपात्यते । तलोपस्यासिद्धत्वात् । प्राप्तस्येटोऽभावश्च निपात्यते । ननु फुल्ल विकसने लाघृ शक्तौ आभ्यां पचादेर इत्यप्रत्यये इतराभ्यां नाम्युपधात् क इति कप्रत्यये फुल्लोल्लाघक्षीबकृशाः शब्दाः सिद्ध्यंति किमनेन । उच्यते । फुलतादिनिवृत्त्यर्थं सूत्रम् ॥

तत्त्व०—फुल्ल इति । तस्य लत्वं निपात्यते । लोध्रद्रुमं सानुमतः प्रफुल्लम् । प्रफुल्लराजीवांकमध्ये । इत्यादौ तु फुल्ल विकसने इत्यस्मात्पचाद्ये बोध्यम् । यद्वा प्रफुल्लेन समासे ॥

## उत्फुल्लसंफुल्लौ च ॥ ७२५ ॥

सुबो०—उत्फुल्लसंफुल्लौ च । उत्संपूर्वकावप्येतौ निपात्येते । कथं तर्हि लोध्रद्रुमं सानुमतः प्रफुल्लमिति रघुः । आह । फुल्ल विकसने अस्मात् पचादेरित्यप्रत्यये प्रफुल्ल इति । यद्यपि प्रफुल्लवदुत्फुल्लसंफुल्लावपि पचादेरित्यनेन सिद्धौ तथापि उत्फुल्त संफुल्त इति प्रयोगनिवृत्त्यर्थं सूत्रम् ॥

तत्त्व०—उत्फुल्लेति । यद्यपि प्रफुल्लपदे तयोरपि सिद्धिस्तथापि उत्फुल्त इत्यादि रूपनिवृत्त्यर्थमिदम् ॥

## वित्तो भोगप्रतीतयोः ॥ ७२६ ॥ वित्तं धनम् । वित्तः पुरुषः । अन्यत्र । विन्नः । भित्तं शकलम् । भिन्नमन्यत्र ॥

सुबो०—वित्तो भोगप्रतीतयोः । भुज्यते इति भोगस्तस्मिन् भोगेऽर्थे प्रतीतः प्रसिद्धः तस्मिन्प्रतीतेऽर्थे च विंदतेः परस्य क्तस्य नत्वाभावो निपात्यते । दस्तस्येति नत्वे प्राप्ते निषेधः । विदॢ लाभे । वित्तः । विद्यतेर्विन्नः । विन्दतेर्वित्तः विन्नश्च । वेत्तेर्विदितः । विद सत्तायाम् । विद विचारणे । दैवादिकरौधादिकावेतावनिटौ । विद ज्ञाने । विदॢ लाभे आदादिकतौदादिकावेतौ सेटौ । विदॢ लाभे । अस्य तु गमहनविदेति क्वसुप्रत्यये वेट्कत्वात् क्वचिद्वेट् इतीण्न । भित्तं शकलम् । भिदेः परस्य क्तस्य नत्वाभावो निपात्यते शकलेऽर्थे । दस्तस्येति प्राप्ते निषेधः । " भित्तं शकलखंडे वा " इत्यमरः । अन्याद्भिन्नम् । विदीर्णमित्यर्थः ॥

## ऋणमाधमर्ण्ये ॥ ७२७ ॥ ऋतमन्यत्र ॥

सुबो०—ऋणमाधमर्ण्ये । ऋ गतौ अस्मात् क्तस्य नत्वं निपात्यते । अधमं दुःखप्रदमृणमस्य सोऽधमर्णस्तस्य भाव आधमर्ण्यं तस्मिन्नाधमर्ण्येऽर्थे । " अधमर्णस्तु ग्राहकः " इत्यमरः ॥

तत्त्व०—ऋणमाधमर्ण्ये इति । अधमर्ण्य इति अधमस्य ऋणे अधममृणं यस्येति वाऽधमर्णस्तस्य भावस्तत्ता तस्मिन् तेन वाधमर्ण्यव्यवहारो लक्ष्यते तथा चोत्तमर्णेऽपि प्रयोगः सिध्यति ॥

क्षुब्धस्वान्तध्वांतलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु ॥७२८॥ क्षुब्धो मन्थः। स्वन शब्दे। स्वान्तं मनः। ध्वान्तं तमः। लगे संगे। लग्नं सक्तम्। म्लिष्टमविस्पष्टम्। रेभृ शब्दे। विरिब्धः स्वरः। फाण्टमनायाससाध्यः कषायविशेषः। बाहृ प्रयत्ने। बाढं भृशम्। अन्यत्र तु। क्षुभितम्। स्वनितम्। ध्वनितम्। लगितम्। म्लेच्छितम्। विरेभितम्। फणितम्। बाहितम् ॥

सुबो०—क्षुब्ध-स्वांत-ध्वांत लग्न-म्लिष्ट-विरिब्ध-फांट-बाढानि मन्थ-मन-स्तमः-सक्ता-विस्पष्ट-स्वरा-नायास-भृशेषु। क्षुब्धादीन्यष्टावनिट्कानि निपात्यंते मंथादिष्वर्थेषु। क्षुभ संचलने। तथोर्द्ध इति तस्य धः। झभे जबा इति भस्य बः। क्षुब्धः। स्वन ध्वन शब्दे। अमां तस्येति दीर्घः। स्वान्तम्। ध्वांतम्। लगे नत्वमपि निपात्यते। [illegible]ग्नम्। म्लेच्छ अव्यक्ते शब्दे। रेभृ शब्दे। अनयोरुपधाया इत्वमपि निपात्यते छशषेति षत्वं ष्टुत्वम्। म्लिष्टम्। तथोर्द्ध इति धः। झभे इति भस्य बः। विरिब्धः। फण गतौ। अमां तस्येति दीर्घः ष्टुत्वं णस्यानुस्वारो निपात्यते। फांटम्। बाहृ प्रयत्ने। हो ढ इति ढः। तथोर्द्ध इति तस्य धः। ष्टुत्वं ढि ढ इति ढलोपे। बाढम्। कथं तर्हि क्षुब्धो राजेति। आगमजमनित्यमित्यागमस्यानित्यत्वादिडभावः ॥

तत्त्व०—क्षुब्धमित्यादि। क्षुब्धमित्यादीन्यष्टौ निपात्यते मथादिष्वर्थविशेषेषु वाच्येष्वित्यर्थः। मथ इति द्रवद्रव्यसंपृक्तः सक्तवो मथः मथनदण्डश्च ॥

धृष्टविशस्तावविनये ॥ ७२९ ॥ धृष्टः। विशस्तः। अन्यत्र। धर्षितः। विशसितः ॥

सुबो०—धृष्टविशस्तावविनये। अविनयेऽर्थे एतावनिटौ स्तः। ञिधृषा प्रागल्भ्ये अस्य आदीदित इतीण्णिषेधे सिद्धे शसु हिंसायामस्य उदितः क्त्वो वेडिति क्त्वायां वेट्कत्वात्कचिद्वेट इतीण्णिषेधे सिद्धे अनयोरविनये एवानिट्त्वं नान्यत्रेति नियमार्थं सूत्रम्। विनये तु धर्षितः। शीङ्स्विदिमिदीति क्तस्याकित्त्वाद्गुणः ॥

तत्त्व०—अन्यत्रेति। अविनयादन्यत्रेत्यर्थः। धृषेरादित्वं चिन्त्यमिति कश्चित्। अन्यस्तु अविनयादन्यत्र भावकर्मणो धृष्टं धर्षितमित्यादौ विकल्पेट्त्वार्थमाह ॥

दृढः स्थूलबलयोः ॥७३०॥ दृंहितो दंहितोऽन्यः। दृह दृहि वृद्धौ ॥

सुबो०—दृढः स्थूलबलयोः। स्थूलो मांसलस्तस्मिन्नर्थे। बलमस्यास्तीति बलः। अर्शआद्यच् तस्मिन् बलवत्यर्थे च आभ्यां परस्य क्तप्रत्ययस्य ढत्वं धातोरिड-

भावहलोपौ च इदितो नलोपश्च निपात्यते । दृढः । ननु हो ढ इति ढत्वं तथोर्द्ध इति धत्वे ष्टुत्वे च ढि ढ इति ढलोपे कृते दृढेति रूपसिद्धौ सत्यां किमर्थं ढत्वहलोपयोर्निपातनम् । उच्यते । तथाहि सति ढलोपस्यासिद्धत्वेन अलघुत्वात् द्रढिमेत्यत्र ऋ र इमनीति रभावो न स्यात् । परिद्रढय्य इत इत्यत्र परिद्रढीत्यस्मान्नामधातोः क्यप्रत्यये क्यपि लघुपूर्वात्परस्य णेरिति णेरयादेशो न स्याच्च । अतोऽसिद्धत्वनिवृत्तये निपातनम् ॥

तत्त्व०—स्थूलबलयोरिति । बलमस्यास्तीति बलः । अइकावित्यः । मांसलो निर्बलो दृढः ॥

**प्रभौ परिवृढः ॥७३१॥ परिबृहितः । परिबृंहितोऽन्यः ॥**

सुबो०—प्रभौ परिवृढः । प्रभौ वाच्ये बृह बृहि वृद्धौ आभ्यां परस्य क्तस्य ढत्वं धातोरिडभावहलोपो च । इदितो नलोपश्च निपात्यते । "प्रभुः परिवृढोऽधिपः" इत्यमरः । अत्रापि ढत्वहलोपयोर्निपातनम् । व्रढिमा परिव्रढय्येत्यादिसिद्ध्यर्थं प्राग्वदेव ॥

**कृच्छ्रगहनयोः कषः ॥ ७३२ ॥ कष्टम् । कष्टो मोहः । कष्टं शास्त्रम् । कषितमन्यत् ॥**

सुबो०—कृच्छ्रगहनयोः कषः । एतयोरर्थयोः कषः परस्य क्तस्येण्न स्यात् । "स्यात् कष्टं कृच्छ्रमाभीलम्" इत्यमरः। अत्र कष्टशब्देन दुःखं तत्कारणं च गृह्यते । कष हिंसायाम् । कष्टो मोहः दुःखहेतुरित्यर्थः । कष्टं शास्त्रम् । दुरवगाहमित्यर्थः॥

**घुष्टोऽविशब्दने ॥ ७३३ ॥ घुष्टा रज्जुः । अविशब्दने किम् । घुषितं वाक्यम् ॥**

सुबो०—घुष्टोऽविशब्दने । विशब्दनं प्रतिज्ञानं न विशब्दनमविशब्दनं तस्मिन्नर्थे घुषेः परस्य क्तस्येण् न स्यात् । घुषिर् शब्दार्थे । भ्वादिः । घुषिर् अविशब्दने । चुरादिः । द्वयोरप्यत्र ग्रहणम् । ननु विशब्दनेऽर्थे इण्निषेधाभावात् ञिप्रत्यये उपधागुणे कृते सेटोः क्तक्तवत्वोरिति ञिलोपे च घोषितमित्यपि स्यात् । अत्राहुः । विशब्दनेऽर्थे चुरादेर्ञिरेवानित्य इति ॥

तत्त्व०—घुषितमिति । शब्देन प्रकटीकृताभिप्रायमित्यर्थः ॥

**अभ्यर्णमाविदूर्ये ॥ ७३४ ॥ अभ्यर्दितमन्यत् ॥**

सुबो०—अभ्यर्णमाविदूर्ये । अर्देः परस्य क्तस्येण्न स्यात् आविदूर्येऽर्थे । विशेषेण दूरं विदूरं न विदूरमविदूरम् अविदूरस्य भावः आविदूर्यम् । अर्द गतौ याचने च । रदस्तस्येति तदयोर्नत्वम् । अभ्यर्णम् । नातिदूरमासन्नं वा ॥

तत्त्व०—आविदूर्य इति । विशेषेण दूरं विदूरं ततोऽन्यदविदूरं नातिदूरमासन्नं वा सामीप्य इति तत्रनेन नोक्तं सङ्कोचात् ॥

**क्षीरहविषोः पाके शृतम् ॥ ७३५ ॥ अन्यत्र । श्राणं श्रपितं वा ॥**

सुबो०—क्षीरहविषोः पाके शृतम् । श्रायतेः शृ आदेशो निपात्यते । श्रा पाके अदादौ चुरादौ च घटादावपि पठ्यते । श्रै पाके भ्वादौ । अस्यापि कृतात्वस्येह ग्रहणम् । निपातनसामर्थ्याल्लक्षणप्रतिपदोक्तयोरिति परिभाषा नाश्रीयते । शृतं क्षीणम् । स्वयमेव विक्लिन्नं पक्वं वेत्यर्थः । क्षीरहविर्भ्यामन्यत्तु श्राणं यलसंयोगादेरिति नत्वम् । श्रपितं शाकादि । मितां ह्रस्व इति ह्रस्वः ॥

तत्त्व०—शृतमिति । श्राश्रपयत्योर्निपातनम् । श्राणमिति शाकादि ॥

**दान्तादयो वा निपात्यन्ते ॥ ७३६ ॥ दान्तः दमितः । शान्तः शमितः । पूर्णः पूरितः । दसु उपक्षये । दस्तः दासितः । स्पष्टः स्पाशितः । छन्नः छादितः । ज्ञप्तः ज्ञपितः । रुष्टः रुषितः । आन्तः अमितः । तूर्णः त्वरितः । संघुष्टः संघुषितः । आस्वांतः आस्वनितः । हृषु तुष्टौ । हृष्टं हृषितम् । अपचायितः अपचितः । प्यानः पीनः । ह्लादी सुखे ॥**

सुबो०—दान्तादयो वा निपात्यंते । दांतादयः सप्त णिप्रत्यये कृते सति क्तप्रत्ययान्ता निपात्यन्ते । शमु दमु उपशमे । जनीजॄषिति मित्त्वादुपधाया ह्रस्वः । एषां सप्तानां निपातनादिडभावः । णेरिति णिलोपश्च अमांतस्येति दीर्घः । दांतः । शांतः । पूरी आप्यायने । दिवादौ चुरादौ च । र इति तस्य नत्वम् । पूर्णः । दसु उपक्षये । स्पश बाधने । छद अपवारणे । एषां त्रयाणां वृद्ध्यभावो निपात्यते । दस्तः । छशांपेति पत्वं ष्टुत्वम् । स्पष्टः । दस्तस्येति तदयोर्नत्वम् । छन्नः । ज्ञप ज्ञानज्ञापनयोश्च । [illegible]मित्त्वादुपधाया ह्रस्वः । ज्ञप्तः । पक्षे कृत इतीट् क्तक्तवत्वोरिति निषेधात् । शमित इत्यादि । रुषादिभ्यः पंचभ्यः क्तस्येडागमो वा निपात्यते । रुष [illegible] । इषुसहेति वेट्कत्वात् क्वचिद्वेट इति निषेधे प्राप्ते विकल्पो निपात्यते । रुष्टः रुषितः । अम गत्यादिषु । अम रोगे इति चौरादिकस्तु न गृह्यते । एकस्वरा[illegible] । अमांतस्येति दीर्घः । आंतः । अमितः । ञित्वरा संभ्रमे । [illegible] निषेधे प्राप्ते इड्विकल्पो निपात्यते । ज्वरत्वरेत्यूः । र इति क्तस्य नत्वम् । तूर्णः । त्वरितः । घुषिर् अविशब्दने । घुषेरविशब्दने इति विशब्दनेऽर्थे [illegible] प्राप्ते विकल्पो निपात्यते । संघुष्टः । संघुषितः । स्वन शब्दे । अमांतस्येति दीर्घः । आस्वांतः आस्वनितः । आङ्पूर्वस्य स्वनेर्मनोभिधानेऽप्ययं विकल्पः पर[illegible] । आस्वांतम् । आस्वनितं वा मनः । हृषु अलीके अस्योदित इति क्त्वायां [illegible] निषेधे प्राप्ते । हृष तुष्टौ सेट्त्वादस्य नित्यमिति प्राप्ते

विकल्पो निपात्यते । उभयोरिह ग्रहणम् । हृष्टं हृषितम् । लोम । हृष्टो हृषितो मंत्रः । विस्मितः । प्रतिहतो वेत्यर्थः । चायृ पूजानिशामनयोः । अस्य च आदेशो निपात्यते वा क्ते । अपचितः अपचायितः । ओप्यायी वृद्धौ । अस्य पीति निपात्यते वा क्ते । आदीदित इतीण्णिषेधः । यवयोर्वसे इति यत इति वा यूलोपः। ल्वाद्योदित इति नत्वम् । प्यानः पीनः । स्वेदः । स्वांगे नित्यम् । पीनं मुखम् । सोपसर्गस्य न । प्रप्यानः। आङ्पूर्वस्य तु स्यादेव । आपीनः कूपः। आपीनमूधः ॥

तत्त्व०—दान्तादय इति । ण्यता इत्यर्थः । तूर्ण इति त्वरा सम्भ्रम इत्यस्य । आदित्वमस्य मदफलमात्मनेपदस्यादित्वेनैव सिद्धेः ॥

**ह्लादेर्ह्रस्वः क्तिति ते ॥ ७३७ ॥ प्रह्लन्नः ॥**

सुबो०—ह्लादेर्ह्रस्वः क्तिति ते । ह्लादी सुखे । आदीदित इतीण्न । दस्तस्येति नत्वम् । प्रह्लन्नः ॥

तत्त्व०—प्रल्हन्न इति । ल्हादी सुखे । ईदित्त्वान्नेट् ॥

**निनदीभ्यां स्नातेस्सस्य षः कौशले ॥ ७३८ ॥ निष्णातः । नदीष्णातः ॥**

सुबो०—निनदीभ्यां स्नातेः सस्य षः कौशले । आभ्यां स्नातेः सस्य षः स्यात् कौशले गम्ये । शास्त्रेषु निष्णातः कुशलः । नद्यां स्नातो नदीष्णातः नदीस्नाने कुशलः । नाम्नि चेति डः ॥

तत्त्व०—निनदीभ्यामिति । नदीष्णात इति नदीस्नाने कुशल इत्यर्थः ॥

**स्थैर्यगतिभक्षणार्थेभ्योऽधिकरणेऽपि क्तः ॥ ७३९ ॥ तथा च मुकुंदस्यासितमिदमिदं यातं रमापतेः । भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥**

सुबो०—स्थैर्यगतिभक्षणार्थेभ्योऽधिकरणेऽपि क्तः । एभ्य आधारेऽर्थे क्तः स्यात् । अपिशब्देन यथाप्राप्ते " मुकुंदस्यासितमिदमिदं यातं रमापतेः । भुक्तमेतदनंतस्येत्यूचुर्गोप्यो दिदृक्षवः ॥ " द्रष्टुमिच्छति दिदृक्षति इति दिदृक्षवो गोप्य इत्यूचुः । इतीति किम् । मुकुंदस्य कृष्णस्येदमासितं आस्यतेऽस्मिन्नित्यासितमासनम् । रमापतेर्विष्णोरिदं यातं यायतेऽस्मिन्निति यातं मार्गः । अनन्तस्य हरेरेतद्भुक्तम् । भुज्यतेऽस्मिन्निति भुक्तम् । भाजनम् । मुकुन्दस्येत्यादित्रिषु वर्तमानाधारार्थक्तस्य योगे इति कर्त्तरि षष्ठी । पक्षे आसेरकर्मकत्वात् कर्तरि भावे च क्तः । आसित आसितं तेन । गत्यर्थेभ्यः कर्तरि कर्मणि च क्तः । ग्रामं यातः सः । ग्रामो यातस्तेन । भुजेः कर्मणि क्तः । तेन भुक्तमन्नम् । कथं तर्हि भुक्ता ब्राह्मणाः । पीता गाव इति । उच्यते । भुक्तमस्त्येषामिति अस्त्यर्थे अः ॥

तत्त्व०—मुकुंदस्येत्यादि । आस्यतेऽस्मिन्नित्यासितमासनमित्यर्थः । जायतेऽस्मिन्निति जातम् । भुज्यतेऽस्मिन्निति भुक्त भाजनमित्यर्थः । त्रिष्वपि अधिकरणार्थक्तस्येति कर्त्तरि षष्ठी ॥

**जीर्यतेरतृ ॥ ७४० ॥ जरन् । जरन्तौ ॥**

सुबो०—जीर्यतेरतृ । जॄष् वयोहानौ । अस्माद्भूतेऽर्थे अतृप्रत्ययः स्यात् । अतृप्रत्ययमाह । ऋदित्त्वात् त्रितो नुमिति नुम् । ऋतौ गुणे कृते नामत्वात्स्यादौ संयोगांतस्येति तलोपः तलोपस्यासिद्धत्वान्नोपधाया इति दीर्घो न भवति । ना जरन् । स्त्री जरती । क्तक्तवत्वोः । जीर्णः जीर्णवान् ॥

**क्वसुकानौ णबेवत् ॥ ७४१ ॥ धातोरतीते काले एतौ भवतः तौ च यथाक्रमं णबेवत् ॥ द्वित्वम् । संयोगान्तस्य लोपः । चकृवान् । वसोर्व उः । चक्रुषः चक्रुषा । वसां रसे । चकृवद्भ्याम् । चक्राणः । बभज्वान् । जजागृवान् । द्वित्वे सत्येकस्वरादादन्ताद्धसेश्च वसोरिट् नान्यस्मात् ॥**

सुबो०—क्वसुकानौ णबेवत् । भूतसामान्ये क्वसुकानौ प्रत्ययावाह । क्वसोः ककारो गुणनिषेधार्थः । उकारस्तु पुंसि त्रितो नुमिति नुमर्थः । स्त्रियां तु ङ्त्रितः इतीबर्थः । कानप्रत्ययस्य कित्करणमस्ति । राण इत्यत्र ऋसंयोगादिति कित्त्वाद्गुणस्य निषेधार्थम् । णबादिपरे यत् कार्य्यं द्वित्वादि तत्सर्वमनयोः परयोरपि स्यात् । डुकृञ् करणे द्वित्वादि । चकृवसिति जातम् । नामसंज्ञायां स्यादिः । न्सम्महत इति पुंसि पंचसु दीर्घः क्लीबे तु शौ दीर्घः । संयोगांतस्येति सलोपः । चकृवान् । चकृवांसौ । चकृवांसः । चकृवांसम् । चकृवांसौ । शसादौ तु वसोर्व उरित्युत्वे ऋ रमिति रः । चक्रुषः । चक्रुषा । वसोरसे इति सस्य दत्वम् । चकृवद्भ्याम् । चकृवद्भिरित्यादि । स्त्रियां तु ङ्त्रित इतीप् । वसोर्व उरित्युत्वे षत्वे चचक्रुषी । क्लीबे तु चकृवत् चकृवांसि । भज सेवायाम् । बभज्वान् । बभंजुषी स्त्री । जागृ निद्राक्षये । जजागृवान् । जजागुषी स्त्री । द्वित्वे सत्येकस्वरादादंताद् घसेश्च वसोरिट् नान्यस्मात् । द्वित्वे कृते सति एकस्वराद्धातोरादंताद्धातोः घसेश्च परस्य वसोरिट् स्यात् नान्येभ्यः परस्य वसोः । कृतेऽपि द्वित्वे एकस्वरा ये धातवोऽवशिष्यन्ते तेभ्य इत्यर्थः । हवत्त्योरिति निषेधं बाधित्वा क्रादेरिति नियमात्सर्वत्र प्राप्तस्येटो नियमः ॥

तत्त्व०—णबेवदिति । यथा परस्मैपदिभ्यो णप् तथा क्वसुः । यथात्मनेपदिभ्य ए तथा कानः द्वित्वे सतीति । द्वित्वे कृते सति एकस्वरो यस्तस्मादित्यर्थः ॥

**गमहनविदविशदृशां वा ॥ ७४२ ॥ बभूवान् । भूवो वुक् । बभूवुषः । बभूवुषा ॥ अद भक्षणे ॥ आदिवान् ॥ ऋ गतौ ॥**

आरिवान् ॥ डुदाञ् दाने ॥ ददिवान् । ददरिद्रिवान् । वस्योत्वे इडभावः । आदुषः । जज्ञिवान् । जक्षिवान् । जग्मिवान् जगन्वान् जग्मुषः । जघ्निवान् जघन्वान् जघ्नुषः । विविदिवान् विविद्वान् विविदुषः । विविशिवान् विविश्वान् । दद्दशिवान् दद्दश्वान् । ईयिवान् । सेदिवान् । ऊषिवान् । शुश्रुवान् शुश्रुवुषः ॥

सुबो०—गमहनविदाविशदशां वा । एभ्यः परस्य वसुप्रत्ययस्येड्वा स्यात् । विशिना साहचर्यात् विद्लृ लाभे इत्यस्य ग्रहणम् । भू सत्तायाम् । बभूवान् । बभूवांसौ । शसादौ तु वसोर्वे उरित्युत्वे कृते भुवो वुगिति वुक् । बभूवुषः । बभूवुषा । बभूवद्भ्यामित्यादि । बभूवुषी स्त्री । अद भक्षणे । द्वित्वहसादिशेषपूर्वदीर्घसवर्णदीर्घेषु कृते द्वित्वेऽप्ययमेकस्वर एवेति इट् च भवति । आदिवान् । वस्योत्वे कृते इडभावो भवति । निमित्ताभावे नैमित्तिकस्याप्यभाव इत्युक्तत्वात् । आदुषी स्त्री । ऋ गतौ । गुणोर्तीति गुणे कृते द्वित्वादिषु कृतेषु अप्येकस्वरः इट् च भवति । आरिवान् । आरुषी स्त्री । डुदाञ् दाने । कृते द्वित्वे नायमेकस्वरः । अनेकस्वरत्वादिण्निषेधे प्राप्ते सूत्रे आदंतग्रहणादिट् भवति आतोऽनपीत्यालोपः । ददिवान् । ददुषी स्त्री । दरिद्रा दुर्गतौ । आदंतग्रहणादिट् । आतोऽनपीत्यालोपः । ददरिद्रिवान् । ददरिद्रुषी स्त्री । अद भक्षणे । सिसंयोगादेरदघस्लृ इति लिटि वा घस्लृ आदेशः । द्वित्वे कृते नायमेकस्वरः । सूत्रे घसेर्ग्रहणादिट् । उपधालोपात्प्रागेव द्वित्वम् । पश्चाद्गमां स्वरे इत्युपधालोपः । घसादेः ष इति षत्वम् । खसे चपा इति घस्य कः । जक्षिवान् । जक्षुषी स्त्री । गम्लृ गतौ । गमादीनां चतुर्णामिड् वा द्वित्वादि । गमामित्युपधालोपः । जगामेति जग्मिवान् । इडभावे मो नो धातोरिति मस्य नः । जगन्वान् । जग्मुषी स्त्री । "श्रेयांसि सर्वाण्यधिजग्मुषस्ते" इति रघुः । हन हिंसागत्योः । द्वित्वादि गमामित्युपधालोपः । हनो घ्न इति हस्य घः । जघ्निवान् । इडभावे पूर्वाद्धंतेरिति परस्य हस्य घः । जघन्वान् । जघ्नुषी स्त्री । विद्लृ लाभे । विविदिवान् । इडभावे । विविद्वान् । विविदुषी स्त्री । विश प्रवेशने । विविशिवान् विविश्वान् । विविशुषी स्त्री । इण् गतौ । द्वित्वं इणः परस्य वसोरिट् निपात्यते द्वित्वे सत्येकस्वराभावाद्विधिरयम् । इणः कितीति णादाविति पूर्वदीर्घः । सवर्णे दीर्घ इति सूत्रं बाधित्वा नित्यत्वादिणः क्ङिति स्वरे इति यः । वसोरिडागमस्य कित्स्वरस्य परत्र सत्त्वात् । ईयिवान् । ईयुषी स्त्री । षद्लृ विशरणादौ । द्वित्वादि । लोपः पचामित्येत्वपूर्वलोपौ इट् । सेदिवान् । सेदुषी स्त्री । "निषेदुषीमासनबंधधीरः" इति रघुः । वस निवासे । द्वित्वादि । णवादौ दूर्वस्येति पूर्वस्य संप्रसारणम् । यजा-

मिति परस्य संप्रसारणं सवर्णे दीर्घे इति दीर्घे कृते एकस्वरत्वादिट् । घसादेरिति षः । ऊषिवान् । ऊषुषी स्त्री । " अध्यूषुषस्तामभवज्जनस्य " इति माघः । श्रु श्रवणे । शुश्रुवान् । शुश्रुषी स्त्री ॥

तत्त्व०–बभूवानिति । केवलस्यैकस्वरत्वे कृतद्वित्वस्य तदभावात् । एतौ छंदस्येवेति पाणिनीयानुसारिणः भाषायामपीत्यन्ये ॥

**शतृशानौ तिप्तेवत्क्रियायाम् ॥ ७४३ ॥** क्रियायां गम्यमानायां धातोः शतृशानौ भवतस्तौ च तिप्तेवत् ॥ पचन्नास्ते । पठंस्तिष्ठति । गायन्नागच्छति ॥

सुबो०–शतृशानौ तिप्तेवत् क्रियायाम् । शतृशानप्रत्ययावाह । उभयोः शित्त्वाच्चतुर्वत्कार्य्यम् । ऋदित्त्वात् पुंसि ञितो नुमिति नुम् । स्त्रियां तु ङ्वित इतीप् । पचतीति अप् । पचन् विक्लित्त्यनुकूलवर्त्तमानव्यापाराश्रयश्चैत्रः ॥

तत्त्व०–शतृशानाविति । परस्मैपदिभ्यः शतृ आत्मनेपादिभ्यः शान उभयपदिभ्यस्तूभयम् ॥

**मुगानेऽतः ॥ ७४४ ॥** अकारस्याने मुगागमः स्यात् ॥ पचमानः पठति । मन्वानः । कुर्वाणः । दादेरिः । पीयमानस्सोमो भवता । दीयमाना गौः ॥

सुबो०–मुगानेऽतः । अदंतस्य मुगागमः स्यादाने परे । पचते इति पचमानः । मनुते इति मन्वानः । कुरुते इति कुर्वाणः । उभयत्र उप् । ङित्यद्वुरित्यत उत् । पीङ् पाने । दीङ् क्षये । दैवादिकाविमौ । अथवा पा पाने । डुदाञ् दाने । आभ्यां कर्मणि शानप्रत्यये कृते यक् चतुर्ष्विति यक् । दादेरिरितीत्वम् । ये इति दीर्घः । दीयमानः । पीयमानः ॥

**आसेरान ईः ॥ ७४५ ॥** आसेः परस्यान ईः स्यात् ॥ आसीनः ॥

सुबो०–आसेरान ईः । आनस्य आतेः ईत्वम् । आस उपवेशने । आस्ते इति आसीनः ॥

तत्त्व०–आसेरान ईः । आनस्य आ तस्य ॥

**वा दीपोः शतुः ॥ ७४६ ॥** अवर्णात्परस्य शतुर्वा नुमीकारे ईपि च परे ॥ तुदन् सः । तुदती तुदन्ती । कुले स्त्री वा ॥

सुबो०–वा दीपोः शतुः । अवर्णात्परस्य शतृप्रत्ययस्य नुम् वा स्यात् ईपि ईकारे च । तुदतीति तुदन् । तुदंतौ । तुदंतः । स्त्रियां तु तुदती तुदंती । क्लीबे तु तुदत् । तुदती तुदंती । तुदंति ॥

**अप्ययोरान्नित्यम् ॥७४७॥** अप्प्रत्यययप्रत्ययसम्बन्धिनोऽवर्णा-

तपरस्य शतुर्नुम्नित्यमीकारे ईपि च । भवन् सः भवन्ती । दीव्यत् । दीव्यन्ती । दीव्यन्त्यौ गंगायमुने । द्विरुक्तानां जक्षादीनां च परस्य शतुर्नुम्न शौ वा । ददत् । दधत् ॥

सुबो०—अप्ययोरान्नित्यम् । अप्प्रत्यययप्रत्ययाभ्यां परस्य शतुर्नित्यं नुम् स्यात् ईपि ईकारे च । भवतीति पुंसि भवन् । भवंतौ । स्त्रियां तु भवंती । क्लीबे तु भवत् । भवती । भवंति । दीव्यतीति य्वोर्विहसे इति दीर्घः । दीव्यन् दीव्यन्तौ । स्त्रियां तु दीव्यंती । क्लीबे तु दीव्यत् । दीव्यती । दीव्यंति । ददतीति दधातीति च ह्वादेर्द्विश्चेति द्वित्वादि । दादेरित्याल्लोपः । ददत् सः । ददती ददंती स्त्री । ददत् । ददती । ददति ददंति । दधन् सः । दधती दधंती स्त्री । दधत् दधती । दधति दधंति ॥

विदेर्वा वसुः ॥७४८॥ वेत्तेः परस्य शतुर्वा वसुरादेशः ॥ विद्वान् । विदन् ॥

सुबो०—विदेर्वा वसुः । वसोरुदित्करणं वसोर्व उदित्करणं वसोर्व उरित्युत्वार्थम् । नुम् तु स्थानिवत्त्वेनैव सिद्धः । वेत्तीति अपित्तादेर्ङिदिति वसुशत्रोर्ङित्त्वम् । ङित्त्वाद्गुणो न । विद्वान् । विदन् । विदुषी स्त्री ॥

तत्त्व०—विदेर्वेति । शतृवदेव ऋदित्त्वेन नुमि सिद्धे वसोरुदित्करण वसुग्रहणेन क्वसोरपि ग्रहणार्थम् ॥

माङ्याक्रोशे ॥ ७४९ ॥ माजीवन् ॥

सुबो०—माङ्याक्रोशे । माङि उपपदे निंदायामर्थे धातोः शतृप्रत्ययः स्यात् । माङि सिरेवेति लुङि प्राप्ते लड्विधिः । जीव प्राणधारणे । माजीवन् ॥

लक्षणहेत्वोः क्रियायाः ॥७५०॥ शयाना भुञ्जते यवनाः ॥ अर्ज प्रतियत्ने ॥ चुरादिः । अर्जयन्वसति ॥

सुबो०—लक्षणहेत्वोः क्रियायाः । चिह्ने हेतौ चार्थे वर्त्तमानाद्धातोः शतृशानौ स्तः । अत्र हेतुशब्देन फलं कारणं चोच्यते । शेरते इति शीङो गुण इति गुणः । शयाना भुंजते यवनाः । यवनकर्तृकभोजनस्य शयनं लक्षणम् । अर्ज प्रतियत्ने चुरादिः । अर्जयतीति अर्जयन् वसति । अर्जनार्थो वास इत्यर्थः ॥

तत्त्व०—शयाना इति । अत्र शयन भोजनस्य लक्षणम् । अर्जयन्निति । अर्ज प्रतियत्ने चुरादिः । अर्जनार्थो वास इत्यर्थः । लक्षणहेत्वोः किम् । पचति पठति च । क्रियायाः किम् । यः कंपते सोऽश्वत्थपत्रप्लवते तल्लघुद्रव्यगुणयोर्लक्षणं माभूत् । हन्तीति पलायते । वर्षतीति धावतीत्यत्र इतिना हेतुत्वस्य द्योतितत्वान्न ॥

भविष्यति स्यपूशतृशानपरः ॥ ७५१ ॥ हन्नृतस्य पः । करिष्यन् । करिष्यमाणः ॥

सुबो०—भविष्यति स्यप्रशतृशानपरः । भविष्यत् । स्यवंताद्धातोः परयोरात्पर्योः स्थाने शतृशानौ वा स्तः । करिष्यतीति करिष्यन् । सिसतेतीट् । करिष्यते इति करिष्यमाणः ॥

**ताच्छील्यवयोवचनशक्तिष्वानश् ॥ ७९२ ॥ भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रून्निघ्नानः ॥**

सुबो०—ताच्छील्यवयोवचनशक्तिष्वानश् । ताच्छील्यं तत्स्वभावता वयो यौवनादिः शक्तिः सामर्थ्यम् । एषु द्योत्येषु धातोः कर्त्तरि आनश् स्यात् । आनश्प्रत्ययमाह । शित्त्वाच्चतुर्वत्कार्य्यम् । परस्मैपदिभ्योऽप्यानश् स्यात् । एतदर्थमिदं भुनक्तीति रुधादित्वान्नम् । नमसोऽस्येत्यलोपः । भुंजानः । बिभर्तीति बिभ्राणः । हंतीति गमामित्युपधालोपः । हनो घ्न इति हस्य घः । निघ्नानः ॥

तत्त्व०—ताच्छील्य इति । ताच्छील्य तत्स्वभावता । वयो यौवनादि । शक्तिः सामर्थ्यम् । पदानियमोऽत्र ॥

**इङ्धार्योरकृच्छ्रिणि कर्तरि शतृ ॥ ७९३ ॥ इङ् अध्ययने ॥ अधीयन् ॥ धृञ् धारणे ॥ ञ्यन्तः । धारयन् ॥ द्विष अप्रीतौ ॥**

सुबो०—इङ्धार्योरकृच्छ्रिणि कर्त्तरि शतृ । अकृच्छ्रः सुखसाध्यो धात्वर्थः आभ्यां शतृप्रत्ययः स्यात् अकृच्छ्रिणि कर्त्तरि । पुनः शतृप्रत्ययमाह । इङ् । आत्मनेपदित्वात् शतृप्रत्ययो न सिद्ध्यति धारयतेरपि आत्मगामिनि क्रियाफले शतृप्रत्ययो न सिद्ध्यति तदर्थोऽयमारंभः । इङ् अध्ययने । अधीते इति अदादित्वादपो लुक् नु धातोरितीय् । अधीयन् । धारयते इति अप् । धारयन् ॥

तत्त्व०—ईङ् । अकृच्छ्रः सुखसाध्यो धात्वर्थः सोऽस्यास्तीत्यकृच्छ्री । ञ्यन्तत्वादुभयपदित्वेनोभयप्राप्तौ शत्रेव यथा स्यादित्येतदर्थमिदम् ॥

**द्विषश्शत्रौ ॥ ७९४ ॥ द्वेष्टीति द्विषन् ॥**

सुबो०—द्विषः शत्रौ । द्विष् अप्रीतावस्मात् शत्रौ वाच्ये शतृप्रत्ययः स्यात् । द्वेष्टीति द्विषन् ॥

**अर्ह पूजायाम् ॥ ७९५ ॥ अर्हन् ॥**

सुबो०—अर्ह पूजायाम् । अस्मात् शतृप्रत्ययः स्यात् पूजायामर्थे । अर्हतीति अर्हन् ॥

तत्त्व०—अर्ह इति । पूजाया किम् । अर्हयति चौरो वधम् ॥

**शीले ॥ ७९६ ॥ तृन् ॥ कटंकर्ता । हृञ् हर्ता ॥**

सुबो०—शीले । तृन्प्रत्ययमाह । नकारः स्वरार्थः । इतः परं वक्ष्यमाणाः प्रत्ययाः ताच्छील्यादिषु बोध्याः । करोतीत्येवंशीलः कर्त्ता कटम् ॥

**इष्णुस्नुक्नु शीले ॥७५७॥ अलंकरिष्णुः । निराकरिष्णुः । जनी । प्रजनिष्णुः ॥**

सुबो०—इष्णुस्नुक्नु शीले । धातोरेते प्रत्ययाः शीलेऽर्थे । इष्णुस्नुक्नुप्रत्ययानाह । क्नु ककारो गुणनिषेधार्थः । अलं करोतीत्येवंशीलोऽलंकरिष्णुः । निराकरोतीत्येत्वंशीलो निराकरिष्णुः । जनी प्रादुर्भावे । प्रजायते इत्येवंशील: प्रजनिष्णुः ॥

तत्त्व०—इष्णुस्नुक्नु । इष्णुश्च स्नुश्च क्नुश्च एषां समाहारः ण्यन्तभाजभूसहन्वचरवृधक्षतप्रजनश्च यत्त्रयम् । अलंकृञ् निराकृञ् उकणच् । जल्पभिक्षकुट्टलुठवृङः षाकः सान्ताः शंसुभिक्ष उः लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकण् ॥

**जिभुवोर्नैङ्गुणौ स्नौ ॥ ७५८ ॥ जि जये ॥ जिष्णुः । भूष्णुः । ग्लास्नुः । त्रस्नुः । त्रैङ् । त्रस्नुः । गृध्नुः । ञिधृषा । धृष्णुः । क्षिपः । क्षिप्नुः ॥**

सुबो०—जिभुवोर्नैङ्गुणौ स्नौ । जयतीत्येवंशीलो जिष्णुः । भवतीत्येवंशीलो भूष्णुः । ग्लायतीत्येवंशीलो ग्लास्नुः । त्रसी उद्वेगे । क्नुः । ह्वक्त्योरितीण्न । त्रस्नुः । गृधु अभिकांक्षायाम् । गृध्नुः । ञिधृषा प्रागल्भ्ये । धृष्णुः । क्षिप प्रेरणे । क्षिप्नुः ॥

**षाकोकणः ॥ ७५९ ॥ शीलार्थे षाक उ उकण् प्रत्यया भवंति ॥ जल्पाकः ॥ भिक्ष याच्ञायाम् ॥ भिक्षाकः ॥ कुट्ट च्छेदे ॥ कुट्टाकः दुष्टः ॥ लुण्ठ चौर्य्ये ॥ लुण्ठाकः ॥ वृङ् संभक्तौ ॥ वराकः भिक्षुः ॥ शसि वाक्यप्रबन्धे ॥ इदितो नुम् । आशंसुः । चिकीर्षुः ॥ लष् कान्तौ ॥ लाषुकः ॥ पत्लृ पतने ॥ पातुकः । आतो युक् । स्थायुकः । भावुकः ॥ वृषु सेचने ॥ वर्षुकः । घातुकः । कामुकः ॥**

सुबो०—षाकोकणः । षाक उ उकण् प्रत्ययानाह । षाकस्य षः ङ्घिन इतीवर्थः । उकणो णो वृद्ध्यर्थः । जल्पतीत्येवंशीलः । जल्प व्यक्तायां वाचि । जल्पाकः । भिक्ष भिक्षायाम् । भिक्षाकः । कुट्ट च्छेदने । लुंठ स्तेये । चौरादिकाविमौ । कुट्टाकः । लुंठाकः । वृञ् वरणे । वृङ् संभक्तौ । वराकः । सांताऽऽशंसभिक्षिभ्य उः । सः प्रत्ययः तदंतो धातुः सांत उच्यते । आङः शंसु इच्छायामयमेव गृह्यते । न तु शंसु स्तुतौ । आङा सह निर्देशात् । भिक्ष भिक्षायाम् । भिक्षुः । आशंसुः । कर्तुमिच्छति चिकीर्षतीति सप्रत्यये द्वित्वाद्यः से इतीत्वं से दीर्घ इति दीर्घः ऋत इरितीर् य्वोर्विहसे इति दीर्घः षत्वं चिकीर्षति जातम् । यत इत्यक्लोपः ।

चिकीर्षुः । लष कांतौ । उकण् । लाषुकः । पत्लृ पतने । पातुकः । पद गतौ । पादुकः । ष्ठा गतिनिवृत्तौ । आतो युगिति युक् । स्थायुकः। भू सत्तायाम् । भावुकः। वृष सेचने । उपधाया लघोरिति गुणः । वर्षुकः । हन हिंसागत्योः । हनो घदिति घत् । घातुकः । कमु कांतौ । कामुकः । गम्लृ गतौ । गामुकः । शॄ हिंसायाम् । शारुकः ॥

तत्त्व०—जल्पाक इति । जल्पनशीलः । एव सर्वत्र शीलार्थप्रत्यये वाक्यम् । ष ईवर्थः । तेन वराकी ॥

शॄवंद्योरारुः ॥ ७६० ॥ शॄ हिंसायाम् ॥ शरारुः । वदि । वन्दारुः ॥

सुबो०—शॄवंद्योरारुः । शॄ हिंसायाम् । वदि अभिवादनस्तुत्योः । आभ्यामारुः । आरुप्रत्ययमाह । शरारुः । वंदारुः । " शरारुर्घातुको हिंस्रो वंदारुरभिवादके । " इत्यमरः ॥

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाशीङ्भ्य आलुः ॥ ७६१ ॥ स्पृहयालुः ॥ गृहु ग्रहणे ॥ चुरादिः । गृहयालुः । पतयालुः ॥ दय दाने ॥ दयालुः ॥ द्रा कुत्सायाम् ॥ निद्रालुः । तदो नान्तत्वम् । तन्द्रालुः । श्रद्धालुः । शीङ् । शयालुः ॥

सुबो०—स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाशीङ्भ्य आलुः । आलुप्रत्ययमाह । स्पृह ईप्सायाम् । गृहु ग्रहणे । पद गतौ । एते त्रयश्चुरादावदंताः । अल्लोपस्य स्थानिवत्त्वान्नोपधाया गुणवृद्धी णेरिति णिलोपो न । न ल्विडामंतेति निषेधात् । णेर्गुणे कृते स्पृहयालुः । गृहयालुः । पतयालुः । दय दाने । दयालुः । द्रा कुत्सायाम् । निपूर्वः । आतोऽनपीत्यालोपः । निद्रालुः । तत्पूर्वो द्रा तत्शब्दस्य समाजे नत्वं निपात्यते । तंद्रालुः । श्रत्पूर्वो डुधाञ् धारणादौ । धेट् पानेऽयं तु न गृह्यते । श्रत्पूर्वस्य धेट्प्रयोगाभावात् । शीङ् स्वप्ने । शयालुः । कथं तर्हि कृपालुः स्पर्धालुरिति । कृपां स्पर्द्धां च लातीति विग्रहे मृगय्वादित्वात्कुः ॥

तत्त्व०—स्पृहि इति । स्पृह्यादयस्त्रयोऽपि चुरादावदन्ताः । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणवृद्धी । न ल्विटामंतेत्यादिना निषेधात् णेर्लोपो न ॥

शमादिभ्यो घिनुण् ॥ ७६२ ॥ शम उपशमे ॥ शमी । तमी । दमी । भ्रमी । क्षमी । क्लमी । श्रमी । प्रमादी । चजोः कगौ घिति । चकारजकारयोः ककारगकारौ घिति । सम्पर्की । योगी । विवेकी । त्यागी । असि । उसि । अनेकके घिनुणि रञ्जेर्नलोपो वाच्यः । रागी । भागी । विकापी । विलासी । प्रलापी । प्रसारी ॥ मथ हिंसायाम् ॥ प्रमाथी । प्रवासी ॥

सुबो०—शमादिभ्यो घिनुण् । शमु तमु दमु श्रमु भ्रमु क्षमु क्लमु मदि शमादयोऽष्टौ । घिनुण्प्रत्ययमाह । उकार उच्चारणार्थः । घित्त्वाच्चजोरिति कगौ । णित्त्वाद्वृद्धिः । शाम्यतीत्येवंशीलः । मांतस्य सेट इति न वृद्धिः । इनामिति दीर्घः । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रपूर्वस्य मदेर्दीर्घः । प्रमादी । आदिशब्देनान्येऽपि ग्राह्याः । पृची संपर्के । चजोरिति कः । संपर्की । सृज विसर्गे । युज समाधौ । युजिर् योगे वा । योगी । विचिर् पृथग्भावे । विवेकी । त्यज हानौ । त्यागी । राजृ दीप्तौ । रागी । भज सेवायाम् । भागी । कष् हिंसायाम् । विकाषी । लस् श्लेषणक्रीडनयोः । विलासी । लप व्यक्तायां वाचि । प्रलापी । सृ गतौ । प्रसारी । मंथ विलोडने । प्रमाथी । वस निवासे । प्रवासी ॥

तत्त्व०—शमादिभ्य इति । घो घित्कार्यार्थः । उकार उच्चारणार्थ इति वृत्तिः । उरिदिति भाष्यम् । तेन शमिनितराशम्मिनीतरेत्यत्र वृतः परस्येति ह्रस्वो वा । शमीशमिनावित्यत्र नुमभावस्तु झलग्रहणमपकृष्य छलान्तानामेव तद्विधानात् । शमीति । शमनशील इति वाक्यम् । अमतत्वाद्ध्रस्वः ॥

निन्दादेर्वुञ् ॥७६३॥ निन्दकः। हिंसकः। परिक्षेपकः । परिवादकः॥

सुबो०—निंदादेर्वुञ् । वुण्प्रत्ययेनापि सिद्धे वुञ्वचनं ज्ञापकम् । शीलादिष्वर्थेषु त्राऽऽदयो न भवंतीति । वुञ्प्रत्ययमाह । ञित्त्वाद्वृद्धिः युवोरनाकावित्यकादेशः । णिदि कुत्सायाम् । निंदकः । हिसि हिंसायाम् । हिंसकः । क्षिप प्रेरणे । क्षेपकः । वद व्यक्तायां वाचि । ण्यंतः णेरिति णिलोपः । परिवादकः ॥

तत्त्व०—निदादेरिति । वुणैव सिद्धे वुञ्वचन ताच्छीलिकेषु वासरूपविधिर्नास्ति तेनैतेषु तृन्नादयो न ॥

चलनशब्दार्थादकर्मकाद्युः ॥७६४॥ चुप मन्दायां गतौ ॥ चोपनः। चलनः । कम्पनः । शब्दनः । रवणः ॥

सुबो०—चलनशब्दार्थादकर्मकाद्युः । चलनार्थादकर्मकात् शब्दार्थाच्च युः स्यात् । युप्रत्ययमाह युवोरित्यनादेशः । चल कंपने । चलनः । चुप मंदायां गतौ । चोपनः । कपि चलने । कंपनः । शब्द शब्दने । अदंतः चुरादिः । णेरिति णिलोपः । शब्दनः । रु शब्दे । रवणः । अकर्मकात् किम् । पठिता विद्या ॥

तत्त्व०—चलनशब्दार्थादिति । चलनं देशान्तरप्राप्तिहेतुः क्रियाविशेषः । शब्दः श्रोत्रग्राह्यार्थः । चल कंपने । शब्द शब्दने चुरादिः ॥

अनुदात्तेतो हसादेरकर्मकात् ॥ ७६५ ॥ वर्तनः । रमणः ॥

सुबो०—अनुदात्तेतो हसादेरकर्मकात् युः स्यात् । वृतु वर्तने । वर्तनः । अनुदात्तेतः किम् । भविता । हसादेः किम् । एधिता । अकर्मकात्किम् । वसिता वस्त्रम् ॥

तत्त्व०—अनुदात्तेति । यद्यपि सर्वानुदात्तेद्धसान्त एवातो हसग्रहणसामर्थ्यादेव हसादिर्गृह्यते । जुगुप्सादिसान्तोऽनुदात्तादस्ति अवयवे कृतं लिंगमचरितार्थं समुदायस्य विशेषकमित्युक्तत्वात् । अतस्तद्व्यावृत्तये तदतविधिः स्यादित्यादिग्रहणम् । वर्तन इति । वर्तते तच्छील इति विग्रहः । अनुदात्तेतः किम् । भविता । हसादेः किम् । एधिता । अकर्मकात्किम् । वसिता वस्त्रम् ॥

ज्वादेश्च ॥ ७६६ ॥ जु गतौ वेगे च ॥ जवनः । सरणः । गर्द्धनः । क्रोधनः । रोषणः । मण्डनः । भूषणः ॥

सुबो०–ज्वादेश्च । युः स्यात् । जु गतौ वेगे च । जवनः । सृ गतौ । सरणः । गृधु अभिकांक्षायाम् । गर्द्धनः । क्रुध क्रोधे । क्रोधनः । रुष रोषे । रोषणः । मडि भूषायाम् । मंडनः । भूष अलंकारे । भूषणः ॥

ज्यादेरिनिः ॥ ७६७ ॥ जयी । प्रजवी । दरी । क्षयी ॥

सुबो०–ज्यादेरिनिः । इनिप्रत्ययः स्यात । इनिप्रत्ययमाह । इकार उच्चारणार्थः । जि जये । जि अभिभवे च । इनामिति दीर्घः । जयी । जु गतौ वेगे च । प्रजवी । दृङ् आदरे । दरी । क्षि क्षये । क्षि निवासगत्योश्च । क्षयी ॥

दादेरुः ॥ ७६८ ॥ दारुः । धारुः । सेरुः ॥

सुबो०–दादेरुः । रुप्रत्ययः स्यात् । रुप्रत्ययमाह । डुदाञ् दाने । दोऽवखंडने । देङ् पालने । त्रयाणामेषां ग्रहणम् । दारुः न तु दाण्दापोर्ग्रहणम् । डुधाञ् धारणादौ । धारुः । षिञ् बंधने । सेरुः ॥

सृघस्य दः क्मरः ॥ ७६९ ॥ सृमरः । घस्मरः । अद्मरः ॥

सुबो०–सृघस्य दः क्मरः । क्मरप्रत्ययः स्यात् । क्मरप्रत्ययमाह । कित्त्वाद्गुणो न । सृ गतौ । सृमरः । घस्लृ अदने । घस्मरः । अद भक्षणे । अद्मरः ॥

भञ्जभासमिदो घुरः ॥ ७७० ॥ भङ्गुरः । भासुरः । मेदुरः ॥

सुबो०–भंजभासमिदो घुरः । एभ्यो घुरप्रत्ययः स्यात् । घुरप्रत्ययमाह । घित्त्वात् चजोरिति कगौ । भंजो आमर्दने । भंगुरः । भासृ दीप्तौ । भासुरः । ञिमिदा स्नेहने । मेदुरः ॥

तत्त्व०–भजभासेति । भंजेः कर्मकर्त्तरि । अभिधानस्वाभाव्यमत्र हेतुः॥

विदिभिदिच्छिदेः कुरः ॥ ७७१ ॥ विदुरम् । भिदुरम् । छिदुरम् ॥

सुबो०–विदिभिदिच्छिदेः कुरः । कुरः प्रत्ययः स्यात् । कुरप्रत्ययमाह । कित्त्वाद्गुणो न । विद ज्ञाने । अस्यैव ग्रहणम् । न तु विद्लृ लाभे इत्यस्य संप्रदायात् । विदुरः । भिदिर् विदारणे । भिदुरम् । छिदिर् द्वैधीकरणे । छिदुरम् । कुरः कर्त्तरि भवति । तथा च माघः । प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमंगनाः । इह अदुरीति छेदः ॥

तत्त्व०–विदिभिदीति । ज्ञानार्थविदिर्व्याख्यानात् । छिदुरमिति । कर्मकर्त्तरीति कश्चित् भाष्ये तु न तथैवमाघोऽपि मागुरु पत्र मुख्यकर्त्तरि । गुरुमत्सरच्छिदुरयाऽदुरयाचितमंगना इति ॥

इण्नशजिसर्तिभ्यः क्वरप् ॥ ७७२ ॥ ह्रस्वस्य पिति तुक् ।

इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः । गमेर्लोपश्च । गत्वरः ॥

सुबो०—इण्नशजिसर्तिभ्यः क्वरप् । एभ्यः क्वरप् प्रत्ययः स्यात् । क्वरप्प्रत्ययमाह । कित्त्वान्न गुणः । टित्त्वाङ्गित इतीप् । पित्त्वात्तुक् । इण् गतौ । इत्वरः । इत्वरी स्त्री । णश् अदर्शने । नश्वरः । जि जये । जित्वरः । सृ गतौ । सृत्वरः । गम्लृ गतौ । मलोपो निपात्यते । गत्वरः ॥

तत्त्व०—इत्वरः । ह्रस्वस्येति तुक् । ट ईबर्थः ॥

जागर्तेरूकः ॥ ७७३ ॥ जागरूकः ॥

सुबो०—जागर्तेरूकः । ऊकप्रत्ययः स्यात् । ऊकप्रत्ययमाह । जागृ निद्राक्षये । जागरूकः ॥

यङ ऊकः ॥ ७७४ ॥ यजजपदशवदिभ्यो यङन्तेभ्य ऊकः शीले लुक् ॥ ऊके सति यङो लुक् । यायजूकः । जञ्जपूकः । दंदशूकः । वावदूकः ॥

सुबो०—यङ ऊकः । यजादिभ्यो यङन्तेभ्य ऊकः स्यात् । यजेर्यङि कृते द्वित्वादि । आत इति पूर्वस्य दीर्घेऽतिशयेन जयतीति । यायज्यते इति यायजूकः । जप व्यक्तायां वाचि । अतिशयेन जपतीति जमजपामिति नुक् । जंजप्यते इति जंजपूकः । दंश दशने । अतिशयेन दशतीति नुक् । दंदश्यते इति दंदशूकः । नो लोप इति नलोपः । वद व्यक्तायां वाचि । अतिशयेन वदतीति । वावद्यते इति वावदूकः ॥

भियः क्रुक्रुकक्लुकाः ॥ ७७५ ॥ भीरुः भीरुकः भीलुकः ॥

सुबो०—भियः क्रुक्रुकक्लुकाः । ञिभी भये अस्मादेते प्रत्ययाः स्युः । क्रुक्रुकक्लुकप्रत्ययानाह । कित्त्वान्न गुणः । भीरुभीरुकभीलुका इत्यमरः ॥

नमादेरः ॥ ७७६ ॥ नम्रः । स्मेरः । नञ्पूर्वाज्जसेः क्रियासातत्ये । अजस्रम् । कम्रः । हिंस्रः । दीप्रः ॥

सुबो०—नमादेरः । रप्रत्ययः स्यात् । रप्रत्ययमाह । णम् प्रह्वत्वे शब्दे च । नम्रः । कपि चलने । कंप्रः । ष्मिङ् ईषद्धसने । स्मेरः । जसु मोक्षणे । नञ्पूर्वः । ना इत्यः । अजस्रम् । कमु कान्तौ । कम्रः । हिसि हिंसायाम् । हिंस्रः । दीपी दीप्तौ । दीप्रः ॥

विन्दुरिच्छुरेतौ निपात्यौ ॥ ७७७ ॥ वेत्ति तच्छीलो विन्दुः । इच्छतीतीच्छुः ॥

सुबो०-विंदुरिच्छुरेतौ निपात्यौ। वेत्तेर्नुम् इषेश्छत्वं च निपात्यते। विद ज्ञाने इत्यस्यैव ग्रहणं नेतरेषाम्। इषु इच्छायामित्यस्यैव ग्रहणं न तु इष गतौ इष आभीक्ष्ण्ये इत्यनयोरनभिधानान्निपातनाद्वा। वेत्तीत्येवंशीलो विंदुः। इच्छतीत्येवंशीलः इच्छुः। बिंदुशब्दः पवर्गीयादिस्तु बिदि अवयवे अस्मान्मृगय्वादित्वात् कुप्रत्यये बोध्यः॥

तत्त्व०-विंदुः। वेत्तेर्ज्ञानार्थस्य नुमागम एवमिषेरिच्छार्थस्य छत्वमुप्रत्ययश्च॥

स्वपितृषिधृषेर्नजिङ्॥७७८॥ स्वप्नक्। तृष्णक्। धृष्णक्॥

सुबो०-स्वपितृषिधृषेर्नजिङ्। एभ्यो नजिङ् प्रत्ययः स्यात्। नजिङ्प्रत्ययमाह। ङित्वान्न गुणः। इकार उच्चारणार्थः। ञिष्वप् शये। चोः कुरिति जस्य गः। स्वप्नक्। तृष् पिपासायाम्। तृष्णक्। ञिधृषा प्रागल्भ्ये। धृष्णक्॥

तत्त्व०-स्वपि। धृष्णगिति। ङित्वान्न गुणः॥

स्थादेर्वरः॥७७९॥ स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। कस्वरः॥

सुबो०-स्थादेर्वरः। एभ्यो वरप्रत्ययः स्यात्। वरप्रत्ययमाह। ष्ठा गतिनिवृत्तौ। स्थावरः। ईश ऐश्वर्ये। हवत्योरितीण्न। ईश्वरः। भासृ दीप्तौ। भास्वरः। पिस गतौ। पेस्वरः। कस गतौ। कस्वरः॥

तत्त्व०-ईश्वर इति। ह्वत्योरिति नेट्॥

आदृतः किर्द्विश्च भूते॥७८०॥ आदन्तादृदंताज्जनिगमिनमिभ्यो यङंतेभ्यस्सासहिवावहिचाचलिपापतिभ्यः किप्रत्ययो भूते शीले धातोश्च द्वित्वम्॥ किर्लिङ्वद्वाच्यः। रामस्सोमं पपिर्यज्ञे ददिर्गाश्च-क्रिर्ज्जनम्। याजकान्यविराजह्निः पौण्डरीके महाद्विजान्॥ जज्ञिः। नेमिः। जग्मिः। सासहिः। वावहिः। चाचलिः। पापतिः॥

सुबो०-आदृतः किर्द्विश्च भूते। किप्रत्ययमाह। कित्वान्न गुणः। किप्रत्यये [illegible]। पा पाने। [illegible]। आतोऽनपीत्यालोपः। पपिः। डुदाञ् दाने। ददिः। [illegible] करणे। चक्रिः। [illegible] [illegible]। र इत्ययः। दद्रिः। हृञ् हरणे। [illegible]। [illegible]। गमामित्युपधालोपः। जज्ञिः। णमु प्रह्वत्वे शब्दे च। [illegible]। नेमिः। गम्लृ गतौ। गमामित्युपधालोपः। जग्मिः। [illegible]। [illegible]। [illegible]। पत्लृ पतने। एते यङंताः। अतिशयेन [illegible]। सासहाने। सासहांचक्रे इति। यत इत्यलोपः। अनपि [illegible]। सासहिः। [illegible]। अतिशयेन वहतीति वावहाने। वावहांचक्रे इति। [illegible] चाचलाने। चाचलाचक्रे इति। चाचलिः। अति[illegible]। पापताचक्रे इति। वंचुस्रंसु इति प्राप्तस्य नीकोऽभावो

निपात्यते । पापतिः । रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् । याजकान् वव्रिराजह्रिः पौंडरीके महाद्विजान् ॥ रामो यज्ञे सोमं पपाविति पपिः । अक्तादाविति वर्जनान्न कर्मणि षष्ठी । रामो यज्ञे गाः सुरभीः ददाविति ददिः । रामो यज्ञे अद्भुतमाश्चर्यं चकारेति चक्रिः । रामो यज्ञे याजकान् यज्ञकर्तॄन् वव्रे इति वव्रिः । रामः पौण्डरीके नाम्नि यज्ञे महांतश्च ते द्विजाश्च महाद्विजास्तान् आजहारेति आजह्रिः ॥

तत्त्व०—आदृत इति । आच्च ऋच्च तत्तस्मात् । लिङ्वद्भावान्नेमिरित्यादौ एत्वपूर्वलोपौ । जग्मिरिति । गमां स्वर इत्यलोपः ॥

---

**अथोणादयः । क्वादेरुण् ॥ ७८३ ॥ कारुः । वातीति वायुः । पायुः । जायुः । मिनोतीति मायुः । स्वद आस्वादने । स्वादुः । साधुः । आशुः । दीर्य्यते इति दारु । सानुः ॥**

सुबो०—अथोणादयः । क्वादेरुण् । उण् प्रत्ययः स्यात् । उण्प्रत्ययमाह । णित्वाद्वृद्ध्यादि । डुकृञ् करणे । करोतीति कारुः । शिल्पी कारकश्च । तत्राद्ये योगरूढिः द्वितीये तु योगमात्रमिति विवेकोऽत एव यौगिके तु धात्वर्थं प्रति कारकान्वयो भवत्येव । तथा च भट्टिः । " राघवस्य ततः कार्यं कारुर्वानरपुंगवः । सर्ववानरसेनानामाश्वागमनमादिशत् ॥ " इति । " विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः । " इति मेदिनी । " कारुः शिल्पिनि कारके " इति धरणिः । वा गतिगंधनयोः । आतो युगिति युक् । वायुः । पा पाने । पा रक्षणे च । पिबत्यनेन तैलादिकमिति पायुः । युक् । " गुदं त्वपानं पायुर्ना " इत्यमरः । पाति रक्षतीति विग्रहे रक्षकोऽपि पायुः । जि अभिभवे । जयत्यभिभवति रोगान् इति जायुः औषधम् । " भेषजौषधभैषज्यान्यगदो जायुः " इत्यमरः । पुँल्लिंगसाहचर्याज्जायुः पुंसि । डुमिञ् प्रक्षेपणे । मिनोति प्रक्षिपति देहे ऊष्माणमिति मीनोतिदीङामित्यात्वं युक् च । मायुः । " मायुः पित्तं कफः श्लेष्मा " इत्यमरः । गां वाचं विकृतां मिनोति प्रक्षिपतीति गोमायुः सृगालः । स्वद आस्वादने । स्वदते रोचते इति स्वादुः । साध संसिद्धौ । साध्नोति परकार्यमिति साधुः । स्वादुसाधू विशेष्यनिघ्नौ । अशूङ् व्याप्तौ । अश्नुते इत्याशुः । " आशुर्व्रीहिः पाटलः स्यात् " । शीघ्रार्थोऽप्ययम् । तत्र विलंबभावमात्रपरत्वे क्लीबः । तद्विशिष्टद्रव्यपरत्वे तु त्रिलिंगः । " अथ शीघ्रं त्वरितम् " इत्युक्तम् । " क्लीबे शीघ्राद्यसत्त्वे स्यात् त्रिष्वेषां मेद्यगामि यत् । " इत्यमरः । दॄ विदारणे । दीर्यते इति दारु । " काष्ठं दार्विन्धनं त्वेधः " इत्यमरः । षण् दाने । सानुः । " स्नुः प्रस्थः सानुरस्त्रियाम् " इत्यमरः ॥

तत्त्व०—क्वादेरिति । कृ आदिर्यस्य स क्वादिरतस्मात् । कृवापाजिमिस्वदिरयादय आदिशब्दग्राह्याः । णो वृद्ध्यर्थः । कारुरिति । कारुः शिल्पिनि कारके । द्वितीयेऽर्थे योगमात्रम् । राघवस्य तु ततः कार्यं कारु-

र्षानरपुंगवः। इति भट्टिश्चात एव। वायुरिति। आतो युक्। पायुरिति। पिबत्यनेनौषधीमिति पायुर्गुदम्। गुदं त्वपान पायुरित्यमरः। जायुरिति। जयति रोगानिति जायुरौषधम्। भेषजौषधभैषज्यान्यगदो जायुरित्यमर। मिनोतीति। प्रक्षिपति देहे ऊष्माणमिति मायुः। मायुः पित्तं कफः श्लेष्मेत्यमरः। स्वादते रोचते इति स्वादु मिष्टम्। साध्नोति परकार्यमिति साधुः। अश्नुते इत्याशुर्व्रीहिभेदः शीघ्रार्थश्च। विलवाभावमात्रपरत्वे क्लीवम्। तद्विशिष्टद्रव्यपरत्वे तु त्रिलिंगम्। त्रिष्वेषां भेद्यगामि यत् इत्यमरोक्तेः॥

**जनेर्भुञ् ॥ ७८२ ॥ जानुः। चारु। चाटु। किं शृणातीति किंशारुः। जरामेतीति जरायुः॥**

सुबो०—जनेर्भुञ्। भुञ्प्रत्ययमाह। ञकारावितौ। अनुबंधद्वयसामर्थ्यात् जनिवृध्योर्नेति वृद्धिनिषेधो न प्रवर्त्तते। जन जनने। जानु। जानुनी। चर गतौ। चारु रूपम्। चट भेदने। चाटु। "चटु चाटु प्रियं वाक्यम्" इति हेमचंद्रः। "चाटुर्नारि प्रियोक्तिः स्यात्" इति रत्नमाला। तथा च माघः। "चकर च बहु चाटु प्रौढयोषिद्दस्य" इति। माघे तु क्लीवेऽपि चाटु चाकृतकसंभ्रममासामिति। शॄ हिंसायाम्। किंशारुः। "किंशारुर्ना सस्यशूके विशेषे कंकपक्षिणि।" इति मेदिनी। इण् गतौ। वृद्धौ कृतायामायादेशे च जरायुः गर्भाशयः॥

तत्व०—जनेर्भुञ्। चार्विति। चटु चाटु प्रिय वाक्यमिति हेमचन्द्रः। चटुर्नारि प्रियोक्तिः स्यादिति रत्नकोशात्पुंस्त्वमपि। तथोभयत्रोदाहृतं माघेन चाटु चाकृतकसंभ्रममासाम्। चकर च बहु चाटु प्रौढयोषिद्वस्येति च। किंशारुर्ना सस्यशूके विशिखे कंकपक्षिणि इति॥

**त्रो रस्य लः ॥ ७८३ ॥ तरन्ति वर्णा अनेनेति तालु ॥**

सुबो०—त्रो रस्य लः। तॄ ऋ इति प्रश्लिष्य द्वयोरपि सवर्णे दीर्घे कृते त्रौ तयोस्त्रोः। तॄ प्लवनतरणयोः। ऋ गतौ अनयोरस्य लः स्यात्। उणि वृद्धौ सत्यां तालु। इयर्ति अर्यते वा आलुः। शाकविशेषो घटी च। "कर्कर्यालुर्गलंतिका" इति॥

**कृके वचः कश्च ॥ ७८४ ॥ कृकेन गलेन वक्तीति कृकवाकुः ॥**

सुबो०—कृके वचः कश्च। कृकशब्दे उपपदे वचेः कांतादेशः स्यात् उणि। कृकवाकुः। "कृकवाकुर्मयूरे च सरठे चरणायुधे।" इति विश्वः॥

**म्रादेरुः ॥ ७८५ ॥ मरुः। शयुः। तरुः। चरुः। त्सर छद्मगतौ। त्सरुः। तनुः। धनुः। मयुः। कटुः। वटुः। अणुः। शृणातीति शरुः। स्वरुः। वपुः। असवः। वसुः। हनुः। बन्धुः। मनुः। बिन्दुः॥**

सुबो०—म्रादेरुः। उप्रत्ययः स्यात्। उप्रत्ययमाह। मृङ् प्राणत्यागे। म्रियंतेऽस्मिन् भ्रमान्निति मरुः निर्जलदेशः। भृञ् भरणे। डुभृञ् धारणादौ च। भरति बिभर्ति वा भरुः। "भरुः स्वर्णहरे पुंसि" इति मेदिनी। "भरुर्भर्तृकनकयोः" इति हैमः। शीङ् स्वप्ने। शेते इति शयुः। "अजगरे शयुर्वाहस इत्युभौ" इत्यमरः। तॄ प्लवनतरणयोः। तरति नरकमनेन गोपका इति तरुर्वृक्षः। चर् गत्यादौ। चरति

भक्षयंति देवा इममिति चरुः । " चरुर्भांडे च हव्यान्ने " इति । घृतपक्वमन्नमित्यर्थः । त्सर छद्मगतौ । त्सरुः खड्गादिमुष्टिः । तनु विस्तारे । तनुः । " तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे ।" इति मेदिनी । "स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः । धन धान्ये । धनुः । " स्यात्तनुस्तनुषा सार्धं धनुषा च धनुर्विदुः । " इति विश्वः । उकारांते । श्रीहर्षः । शुद्धवंशजनितोऽपि गुणस्य स्थानतामनुभवन्नपि शक्रः । क्षिप्नुरेनमृजुमाशु सपक्षं सायकं धनुरिवाजनि वक्रः ॥ " धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने । " इति सांते मेदिनी । " अथास्त्रियां धनुश्चापौ " इत्यमरः । डुमिञ् प्रक्षेपणे । मीनातिमिनोतीत्यात्वं तु नेह । बाहुलकात् । मयुः । " तुरंगवदनो मयुः " इत्यमरः । " मयुस्तुरंगवदने मृगेऽपि मयुरिष्यते । " इति विश्वः । टुमस्जो शुद्धौ । मज्जति पानीये इति न्यंक्वादित्वाद्गः । झषे जबा इति सस्य दः । मद्गुः । " मद्गुः पानीयकाकिका " इति रभसः । अण शब्दे । अणुः । "व्रीहिभेदस्त्वणुः पुमान्" इति । "लवलेशकणाणवः" इत्यमरः । कटे वर्षादौ । कटति रसनामिति कटुः।"कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुँल्लिंगो रसमात्रके ॥ त्रिषु तद्वत्सुगंध्यश्च मत्सरेऽपि खरेऽपि च ।" इति मेदिनी । बट वेष्टने । बटतीति बटुः । "बटुर्द्विजसुतः स्मृतः" इति संसारावर्त्तः । शॄ हिंसायाम् । शरुः।"शरुः कोपे शरे वज्रे" इति हैमः । स्वॄ शब्दोपतापयोः। "शतकोटिः स्वरुः शंबः" इत्यमरः । त्रपूष् लज्जायाम् । अग्निं दृष्ट्वा त्रपते लज्जते इति त्रपुः। "रंगसीसकयोस्त्रपुः " इति मेदिनी । असु क्षेपणे । अस्यंति क्षिपंति शरीरमिति असवः । " पुंसि भूम्न्यसवः प्राणाः " इत्यमरः । वस निवासे । वसुः । " वसुर्हृदेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ । " हन हिंसागत्योः । हनुः । " हनुः पुमान् परो गंडात् " इति वररुचिकोशः । स्त्रीलिंगेऽप्ययम् ।" हनुर्हट्टविलासिन्यां नृत्यारंभे गदे स्त्रियाम् । द्वयोः कपोलाऽवयवे " इति मेदिनी । मतुप्प्रत्यये हनुमान् । पाक्षिको दीर्घोऽपि निपात्यते । हनूमान् । बंध बंधने । स्नेहेन बध्नातीति बंधुः । " बंधुर्बंधूकपुष्पे स्यात् बंधुर्भ्रातरि बांधवे । " इति विश्वः। मन ज्ञाने । मनुः । आदिराजा मंत्रश्च । बिदि अवयवे । बिंदुः ॥

तत्त्व०—भ्रादेरिति । भरुरिति । भरुः स्वर्णहरे पुंसीति मेदिनी । भरुर्भर्तृकनकयोरिति हेमचन्द्रः । शयुरिति । अजगरे शयुः । तरुरिति । तरंति नरकमनेन रोपकाः । चरुरिति । चरुर्भांडे च हव्यान्ने इति । त्सरुः खड्गमुष्टिः । तनुः स्वल्पः। मूर्त्तौ स्त्रियाम् । धनुः शस्त्रविशेषः । धनुषा च धनुर्विदुः । मयुः किन्नरः । अणुर्लेशः । बटुर्द्विजसुतः स्मृतः । स्वरुर्वज्रम् । त्रपुरिति । त्रपतेऽग्निं दृष्ट्वा रंगसीसकयोस्त्रपु । पुंसि भूम्न्यसवः प्राणाः । वसु तोये धने मणौ । हनुः पुमान् परो गंडात् । बन्धुः स्नेहेन बध्नाति । मनुरादिराजो मन्त्रश्च ॥

## स्यन्देस्सम्प्रसारणं धश्च ॥ ७८६ ॥ सिन्धुः ॥

सुबो०—स्यंदेः संप्रसारणं धश्च । स्यंदु प्रस्रवणे । अस्य यकारस्य संप्रसारणं

दस्य धश्च स्यात् उप्रत्यये । सिंधुः । " देशे नदविशेषेऽब्धौ सिंधुर्ना सरिति स्त्रियाम् । " इत्यमरः ॥

तत्त्व०–सिंधुरिति । देशे नदविशेषेऽब्धौ सिंधुर्ना सरिति स्त्रियामित्यमरः ॥

**उन्देरिच्चादेः ॥ ७८७ ॥** उनत्तीति इन्दुः ॥

सुबो०–उन्देरिच्चादेः । उन्दी क्लेदने । अस्योकारस्य इः स्यादुप्रत्यये । इन्दुः ॥

**स्कन्देस्सलोपश्च ॥ ७८८ ॥** कन्दुः ॥

सुबो०–स्कंदेः सलोपश्च । स्कंदिर् गतिशोषणयोः । अस्य सस्य लोपः स्यादुप्रत्यये । स्कंदति शोषयतीति कंदुः । " क्लीबेंऽबरीषं भ्राष्ट्रो ना कंदुर्वा स्वेदनी स्त्रियाम् । " इत्यमरः । स्कंदति जनता यस्मिन्निति व्युत्पत्त्या भोगस्थानं कंदुरिति केचित् ॥

तत्त्व०–कंदुरिति । स्कंदत्यस्मिन् जनता इति कंदुर्भोगस्थानम् ॥

**सृजेरसुम् सलोपश्च ॥ ७८९ ॥** रज्जुः ॥

सुबो०–सृजेरसुम् सलोपश्च । सृज विसर्गे । आगमसकारस्य चुत्वेन शः झभे जशा इति जः । सृजतीति रज्जुः । " रज्जुर्वेण्यां गुणे योषित् " इति मेदिनी ॥

तत्त्व०–रज्जुरिति । सस्य श्चुत्वेन शस्तस्य जः ॥

**फलेर्गुक् च ॥ ७९० ॥** फल्गुः ॥

सुबो०–फलेर्गुक् च । फल निष्पत्तौ । फल्गुः । " फल्गुः काकोदुंबरिका भवेत् फल्गु निरर्थकम् । " इति हेमः । नदी च ॥

**पाटेः पटिश्च ॥ ७९१ ॥** पाटयतीति पटुस्समर्थः ॥

सुबो०–पाटेः पटिश्च । पटिरादेशः स्यात् । पट गतौ । ण्यंतः । पाटयतीति पटुः ॥

**मनेर्धश्च ॥ ७९२ ॥** मन ज्ञाने । मधुः ॥

सुबो०–मनेर्धश्च । धांतादेशः स्यादुप्रत्यये । मन ज्ञाने । मन्यत इति मधुः । " मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे मधु । " इति हेमचंद्रः । " मकरंदस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्द्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधु ॥ " इति शाश्वतः ॥

**जनेस्तश्च ॥ ७९३ ॥** जतुः ॥

सुबो०–जनेस्तश्च । तांतादेशः स्यात उप्रत्यये । जनी प्रादुर्भावे । जायते इति जतु लाक्षा ॥

**वलेर्गुक् च ॥ ७९४ ॥** वल संवरणे । वल्गुः ॥

सुबो०–वलेर्गुक् च । गुगागमः स्यादुप्रत्यये । वल संवरणे । दन्त्योष्ठ्यादिः । वल्गुः । " वल्गुः स्याच्छागले पुंसि सुंदरे चाभिधेयवत् ।" इति मेदिनी ॥

**नमेर्नाकिश्च ॥ ७९५ ॥ नम्यतेऽनेनेति नाकुः ॥**

सुबो०—नमेर्नाकिश्च । णम प्रह्वत्वे शब्दे च । नाकुः । " वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम् । " इत्यमरः ॥

तत्त्व०—नाकुर्वल्मीकम् ॥

**श्यतेः कुस्सवच्च ॥ ७९६ ॥ शिशुः ॥**

सुबो०—श्यतेः कुस्सवच्च । कुप्रत्ययः स्यात् । स कुः सप्रत्ययवद्भवति । तेन सप्रत्यये यत्कार्यं द्वित्वादि तत्स्यात् । कुप्रत्ययमाह । कित्वान्न गुणः । शो तनूकरणे । कुप्रत्यये संध्यक्षराणामित्यात्वं द्वित्वम् । यः से इति पूर्वस्येत्वम् । आतोऽनपीत्यालोपः । शिशुः बालकः ॥

**याभ्रोर्द्विश्च ॥ ७९७ ॥ ययुः । बभ्रुः ॥**

सुबो०—याभ्रोर्द्विश्च । आभ्यां कुः स्यात् धातोर्द्वित्वं च । या प्रापणे । भृञ् भरणे । यातीति ययुः । भरतीति बभ्रुः । ययुरश्वोऽश्वमेधीयः । " बभ्रुर्विश्वानरे शूलपाणौ च गरुडध्वजे । विशाले नकुले पुंसि पिंगले त्वभिधेयवत् ॥ " इति मेदिनी । " बभ्रुर्मन्वंतरे विष्णौ बभ्रुर्नकुलपिंगलौ । " इति धरणिः । चादन्यतोऽपि । चक्रुः कर्त्ता । जघ्नुर्हंता । पपुः पालकः ॥

**व्यधेः कुः ॥ ७९८ ॥ विधुः ॥**

सुबो०—व्यधेः कुः । कुप्रत्ययः स्यात् । व्यध ताडने । ग्रहामिति संप्रसारणम् । विरहिणं विध्यतीति विधुः । " विधुः शशांके कर्पूरे हृषीकेशे च राक्षसे । " इति विश्वः ॥

**कृग्रोरुरङ् च ॥७९९॥ करोतीति कुरुः। गॄ शब्दे । गृणातीति गुरुः ॥**

सुबो०—कृग्रोरुरङ् च । आभ्यां कुः स्यादुरंतादेशश्च । डुकृञ् करणे । गॄ शब्दे । करोतीति कुरुः । " कुरुर्नृपांतरे भक्ते पुमान्पुंभूम्नि नो वृति । " इति मेदिनी । गृणाति तत्वमिति गुरुः ॥

**रपेरस्येच्च ॥ ८०० ॥ अनिष्टं रपतीति रिपुः ॥**

सुबो०—रपेरस्येच्च । रपेः कुप्रत्ययः स्यात् अकारस्येच्च । रप गतौ । अनिष्टं रपतीति रिपुः ॥

**अर्जिदृशिकम्यमिपशिबाधाम्नृजिपशितुक्धुक्दीर्घहकाराश्च ॥ ८०१ ॥ अर्ज्जयति गुणानिति ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कमु कान्तौ । कन्तुः । अन्धुः । पांशुः । बाधते इति बाहुः ॥**

सुबो०—अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च । अर्ज्ज अर्ज्जने । अस्य ऋजिरादेशः । षड्भ्यः कुप्रत्ययश्च । अर्ज्जयति गुणानिति ऋजुः । दृशिर् प्रेक्षणे । अस्य पशिरादेशः । पशुः । चादिगणेऽपि पठितः । " पशुदृश्यर्थे-मव्ययम् " इति धरणिः । कमु कांतौ । अस्य तुगागमः । कंतुः । " इः कंतुमेक-राकरः " इति त्रिकांडशेषः । अम रोगे । अम गत्यादौ वा । अस्य धुगागमः । अंधुः कूपः । पशि नाशने । सौत्रः । अस्य दीर्घः । पांशुः । पडि पसि नाशने । चुरादिर्दंत्यांतो वा । " पांशुर्ना न द्वयो रजः" इत्यमरः । " तालव्या अपि दंत्याश्च शंवशूकरपांशवः । " इति । बाधृ लोडने । अस्य हांतादेशः । बाहुः । " बाहुः स्त्रीपुंसयोर्भुजे " इत्यमरः । अकारांतोऽप्ययम् । " बाहौ च भुजयोः पुमान् " इति दामोदरः । आबंतोऽपि । " बाहा भुजे पुमान् मानभेदास्ववृषवायुषु । " इति मेदिनी ॥

**प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ॥ ८०२ ॥ पृथुः । मृदुः ॥**

सुबो०—प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च । त्रिभ्यः कुप्रत्ययः स्यात् त्रयाणां संप्रसारणं च । भ्रस्जेः सलोपश्च । प्रथ प्रख्याने । प्रथते इति पृथुः । "पृथुः स्यान्महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेऽथ पुमानग्नौ नृपांतरे ॥ " इति मेदिनी । म्रद मर्दने । म्रदितुं शक्यते अकठिनत्वादिति मृदुः कोमलः । भ्रस्ज पाके ॥

**न्यंक्वादेः कुः ॥ ८०३ ॥ न्यंकुः । भृज्जति तपसा इति भृगुः ॥**

सुबो०—न्यंक्वादेः कुः । न्यंक्वादिगणे कुत्वं निपात्यते । नितरामंचतीति न्यंकुः । न्यंक्वादित्वात् कुत्वम् । भृगुः । " भृगुः शुक्रे प्रधाने च जमदग्नौ पिनाकिनि । " इति विश्वः ॥

**लघिवंह्योर्नलोपश्च ॥ ८०४ ॥ लघुः ॥**

सुबो०—लघिवंह्योर्नलोपश्च । लघि गतौ । लघुः । "पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णाऽगुरुण्यपि । " इति त्रिकांडशेषः । " लघुरगुणे मनोज्ञे निःसारे वान्यवत् क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कायामोषधौ स्त्रियाम् ॥ " इति मेदिनी ॥

**वालमूललघ्वंगुलीनां वा लस्य रः ॥ ८०५ ॥ वालः वारः । मूलं मूरम् । लघुः रघुः । अंगुलिः अंगुरिः । वहि गतौ । बहुः ॥**

सुबो०—वालमूललघ्वंगुलीनां वा लस्य रः । एषां लो रत्वमापद्यते वा । रघुर्नृपभेदः । " अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् । " इति रघुः । बहि वृद्धौ । बहुः । "बहुस्तु आदिसंख्यासु विपुले त्वभिधेयवत् । " इति मेदिनी॥

**ऊर्णोतेर्नुलोपश्च ॥ ८०६ ॥ ऊरुः ॥**

सुबो०—ऊर्णोतेर्नुलोपश्च । ऊर्णुञ् आच्छादने । ऊर्णूयते आच्छाद्यते इत्यूरुः । कर्म्मणि कुप्रत्ययः ॥

**महति ह्रस्वश्च ॥ ८०७ ॥ उरु महत् ॥**

सुबो०—महति ह्रस्वश्च । ऊर्णोतीति कर्त्तरि कुप्रत्ययः । उरु महत् ॥

**आङ्परयोः खनिशृभ्याण्डिच्च ॥ ८०८ ॥ आखनतीत्याखुः । शृ हिंसायाम् । परान् शृणातीति परशुः ॥**

सुबो०—आङ्परयोः खनिशृभ्यां डिच्च । अनयोरुपपदयोः आभ्यां कुः स्यात् स डिच्च । डित्त्वाट्टिलोपः । खनु अवदारणे । आखुः । शृ हिंसायाम् । परं शृणातीति परशुः । पृषोदरादित्वादकारस्य लोपः । पर्शुः । "पर्शुः परशुना सह" इति विश्वः ॥

**द्रोश्च ॥ ८०९ ॥ द्रवति ऊर्ध्वमिति द्रुः । शतधा द्रवतीति शतद्रुः ॥**

सुबो०—द्रोश्च । द्रु गतौ । अस्मात् कुः स्यात् । स च डित् । द्रवतीति द्रुः वृक्षः शाखा च । तद्वान् द्रुमः । शतद्रुः । " शतद्रुस्तु शुतुद्रिः स्यात् " इत्यमरः ॥

**मृगय्वादयो निपात्याः ॥ ८१० ॥ मृगं यातीति मृगयुः । शंकुः । नीलंगुः कृमिविशेषः । मन्द्वादेरुरः । मदि । मन्दुरा । वाशुरा । मंथे हिंसायाम् । मथुरा । चते याचने । चतुरः । अंकुरः ॥**

सुबो०—मृगय्वादयो निपात्याः । कुप्रत्ययान्ता निपात्यंते । या प्रापणे । आतोऽनपीत्यालोपः । मृगं यातीति मृगयुः । "मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि ।" इति मेदिनी । " मृगयुर्ब्रह्मणि ख्यातो गोमायुव्याधयोरपि । " इति विश्वः । शकि शंकायाम् । शंकतेऽस्मादिति शंकुः । " शंकुः कीले गरे शस्त्रे संख्यापादपभेदयोः । पादभेदे च पापे च स्थाणावपि च दृश्यते ॥ " इति विश्वः । " शंकुर्ना कीलशल्ययोः " । लगि गतौ । अस्मात् कुप्रत्यये दीर्घे च निपातनात् कृते नीलंगुः । केचित्तु नीलशब्दे उपपदे गमेः कुप्रत्यये टिलोपः पूर्वपदस्य मुम् पाक्षिकदीर्घश्च निपात्यते इत्याहुः । "नीलंगुः कृमिजातौ स्यात् भ्रमरालीप्रसूतयोः।" इति विश्वः । "नीलंगुः स्यात् कृमौ पुंसि भ्रमराल्यां तु योषिति ।" इति मेदिनी । " नीलंगुरपि नीलगुः " इति विश्वः । मंद्यादेरुरः । उरप्रत्ययः स्यात् । उरप्रत्ययमाह । मदि स्तुत्यादौ । मंदुरा । " वाजिशाला तु मंदुरा " इत्यमरः । मंथ विलोडने । मथुरा । चते याचने । चतुरः । वाशृ शब्दे । वाश्यंते अस्यामिति वाशुरा रात्रिः । गर्दभोऽपि । अकि लक्षणे । अंकुरः । " अंकुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि । " खर्जूरादित्वादूरप्रत्यये अंकूरोऽपि । "अंकूरोऽङ्कुर एव च" इति विश्वप्रकाशः ॥

तत्त्व०—मृगयुरीति । मृगयुर्व्याधः । शंकुरीति । शंकुर्ना कीलशल्ययोः । नीलंगुः कृमिविशेषः सृगालश्च । मंदुरेति । मदुरा वाजिशाला स्यात् । वाशुरेति । वाश्यन्तेऽस्यामिति वाशुरा रात्रिर्गर्दभोंऽपि च । "वाशुरा वासितारात्र्योः" इति मेदिनी । अंकुर इति । "अंकुरं रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि ।" अंकुरोऽपि च ॥

**मद्गुरादयो निपात्याः ॥ ८११ ॥** मादयतीति मद्गुरः । कर्बुरः । बन्धुरः बन्धूरः । कुक वृक आदाने । कुकूरः कुकुरः । असुरः असूरः । मसुरः मसूरः ॥

सुबो०—मद्गुरादयो निपात्याः । उरप्रत्ययांता निपात्यंते । मदी हर्षे । गुगागमो निपात्यते । माद्यतीति मद्गुरो मत्स्यभेदः । कबृ वरणे । रुगागमो धातोर्निपात्यते । कर्बुरः । "कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः । कर्बुरा कृष्णवृंतायां शबले पुनरन्यवत् ॥" इति मेदिनी । कर्बुराश्चित्ररक्षसोः । बंध बंधने । बध्नातीति बंधुरः । खर्जूरादित्वादूरप्रत्ययोऽपि ।" बंधूरबंधुरौ स्यातां नम्रसुंदरयोस्त्रिषु ।" इति रंतिदेवः। कुक आदाने । कोकतेर्वा कुगागमो निपात्यते । कुक्कुरः । "कुक्कुरः कुक्कुरो मतः" इति हरचंद्रः । "कुक्कुरः सारमेये ना ग्रंथिपर्णे नपुंसके ।" इति मेदिनी । असु क्षेपणे । असुरः । अण्प्रत्यये आसुरः । मसी परिणामे । मसुरः । ऊरप्रत्यये मसूरोऽपि । "मसूरा मसुरा वा ना वेश्याव्रीहिमभेदयोः । मसूरी पादरोगे स्यादुपधाने पुनः पुमान् ॥" इति मेदिनी । "मसूरमसुरौ च द्वौ" इति विश्वः ॥

तत्त्व०—मद्गुर इति । मत्स्यभेदः। कर्बुरः इति । कबृ वरणे । "कर्बुरः सलिले हेम्नि कर्बूरः पापरक्षसोः।" शबले त्रिष्वपि । बंधूर इति । "बधूरबंधुरौ स्याता नम्रसुंदरयोस्त्रिषु ।" मसुर इति । "मसूरा मसुरा वा ना वेश्याव्रीहिमभेदयोः । मसुरा पादरोगे स्यादुपधाने पुनः पुमान् ॥"

**शावशेराप्तौ ॥ ८१२ ॥** शु इति आश्वर्थे । शु शीघ्रं अश्नुते प्राप्नोति कन्या यस्मात्सः श्वशुरः ॥

सुबो०—शावशेराप्तौ । आशुशब्दस्य निपातनादाकारलोपस्तस्मिन् शुशब्दे उपपदे आप्तौ गम्यमानायामशूङ् व्याप्तावित्यस्माद्धातोरुरप्रत्ययः स्यात् । श्वशुरः । "पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।" इत्यमरः ॥

**अविमह्योरिषट् ॥ ८१३ ॥** अविषः । महिषः । महिषी राजपत्नी ॥

सुबो०—अविमह्योरिषट् । इषट्प्रत्ययः स्यात् । इषट्प्रत्ययमाह । टित्वात् स्त्रियां ङीप् । अव रक्षणादौ । अविषः । "अविषौ राजजलधी" इत्युक्तत्वादविषशब्देन राजा समुद्रश्च । मह पूजायाम् । महिषः। "महिषी राजयोषिति" इति हैमः ॥

तत्त्व०—अविष इति । अविषौ राजजलधी महिषस्तु महान्मतः । महिषी राजपत्नी स्यात् ॥

**अमेर्दीर्घश्च ॥ ८१४ ॥** अम गत्याम् । आमिषम् ॥

सुबो०—अमेर्दीर्घश्च । अस्य दीर्घः स्यादिषट्प्रत्ययश्च । अम गत्यादौ । आमिषम् । "आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि ।" ॥

तत्त्व०-" आमिषं त्वस्त्रियां मांसे भोग्यवस्तुनि चेष्यते " ॥

**रुहेर्वृद्धिश्च ॥ ८१५ ॥ रौहिषः ॥**

सुबो०-रुहेर्वृद्धिश्च । अस्य वृद्धिः स्यादिषट्प्रत्ययश्च । रुह बीजजन्मनि । रौहिषः । " रंकुशंबररौहिषाः " इत्यमरः । " रौहिषो मृगभेदः स्यात् रौहिषं च तृणं मतम् । " इति संसारावर्तः ॥

तत्त्व०-रौहिषमिति । तृणे च मृगभेदे च ॥

**किलेर्बुक् च ॥ ८१६ ॥ किल शौक्ल्ये । केलतीति किल्बिषम् ॥**

सुबो०-किलेर्बुक् च । किल श्वैत्यक्रीडनयोरस्मादिषट्प्रत्ययो धातोर्बुगागमश्च स्यात् । किल्बिषम् । " किल्बिषं पापरोगयोः । अपराधेऽपि" इति मेदिनी॥

तत्त्व०-किल्बिषमिति । पापरोगयोः ॥

**मद्यादेः किरः ॥८१७॥ मदिरा । मुदिरा । मंदिरम् । तिमिरम् । मिहिरः। छिदिरः। रुचिरम् । रुधिरम् । वध हिंसायाम् । बधिरः । सुशिरम् ॥**

सुबो०-मद्यादेः किरः । किरप्रत्ययः स्यात् । किरप्रत्ययमाह । कित्वान्न गुणः । मदी हर्षे । मदिरा सुरा । मुद हर्षे । मुदिरः । " मुदिरः कामुकाभ्रयोः " इति मेदिनी । मदि स्तुत्यादौ । मंदिरम् । " मंदिरं नगरेऽगारे क्लीबं ना मकरालये । " इति मेदिनी । तिम आर्द्रीभावे । तिमिरम् । " तिमिरं ध्वांते नेत्रामयेन्तके " इति मेदिनी । मिह सेचने । मिहिरः । " मिहिरः सूर्यबुद्धयोः " इति मेदिनी । रुच दीप्तौ । रुचिरम् । " सुंदरं रुचिरं चारु " इत्यमरः । रुधिर् आवरणे । रुधिरम् । " रुधिरोऽगारके पुंसि क्लीबं तु कुंकुमास्रजोः । " इति मेदिनी । बंध बंधने । नो लोप इति नलोपः । बधिरः श्रोत्रेंद्रियरहितः । शुष शोषणे । " शुषिरं वंश्यादिवाद्ये विवरे च नपुंसकम् । " " शुषिरं विवरं बिलं छिद्रम् " इत्यमरः ॥

तत्त्व०-मुदिर इति । कामुकाभ्रयोः । मंदिरमिति । नगरागारयोः क्लीबम् । मिहिरः सूर्यबुद्धयोः । रुधिरमिति " रुधिरोऽगारके पुंसि क्लीब तु कुकुमास्रजो. । " सुशिर वश्यादिवाद्ये च नपुंसकम् ॥

**अजिरादयो निपात्याः ॥ ८१८ ॥ अजिरम् । शश प्लुतगतौ । शशतीति शिशिरम् । श्रथ मोचने । शिथिलम् । स्थिरम् । स्फायी । स्फिरम् । स्थविरः । खदिरः । शीङ् । शिबिरम् । सल गतौ । सलिलम् । अनिलः । महिला । कोकिलः । कसु । कपिलः । मथ्यन्ते रिपवो अस्यामिति मिथिला ॥**

सुबो०-अजिरादयो निपात्याः । किरप्रत्ययांता निपात्यंते । अज गतौ ।

अजेर्वीभावाभावः । अजिरम् । दशपादीवृत्तौ तु नञ्पूर्वस्य जीर्यतेः ऋवर्णलोपो निपात्यते इत्युक्तम् । न जीर्यतीत्यजिरः । " अजिरं प्रांगणे काये विषये दर्दुरानिले । " इति मेदिनी । शश प्लुतगतौ । शशेरुपधाया इत्वं निपात्यते । शिशिरम् । " शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत् । " इति विश्वः । " शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु । " इति मेदिनी । श्रथ मोचने । धातोरुपधाया इत्वं रलोपः प्रत्ययरेफस्य लत्वं च निपात्यते । शिथिलम् । ष्ठा गतिनिवृत्तौ । आतोऽनपीत्यालोपः । स्थिरं निश्चलम् । तिष्ठतेर्वुक् ह्रस्वत्वं च निपात्यते । स्थविरः । स्फायी वृद्धौ । यत इति यलोपः । आतोऽनपीत्यालोपः । स्फिरम् । " भूर्यदभ्रं पुरु स्फिरम् " इति हैमः । खद स्थैर्ये । खदिरः । " खदिरी शाकभेदे स्त्री ना चंद्रे दंतधावने । " इति मेदिनी । शीङ् स्वप्ने । शीङो बुक् ह्रस्वश्च निपात्यते । शेरतेऽस्मिन् राजबलानीति शिबिरं निवेशः । " निवेशः शिबिरं षंडः " इत्यमरः । सल गतौ । सलिलादय इलप्रत्ययांता निपात्यंते । सलति गच्छति निम्नमिति सलिलम् । अन प्राणने । अनिलः । मह पूजायाम् । महिला । पृषोदरादित्वान्महेलापि । "महेला फलिनी स्त्रियोः" इति मेदिनी । "प्रियंगुः फलिनी फली" इत्यमरः । दमयंतीकाव्ये प्रयोगो यथा । परमहेलारतोऽप्यपारदारिकः । अत्र परस्य महेला स्त्री । अथ च परमा उत्कृष्टा हेला क्रीडा तत्र रत इत्यर्थः । कुक आदाने । कोकिलः । कुट कौटिल्ये । बाहुल्याद्गुणाभावः । कुटिलः । कसु कांतौ । मस्य निपातनात्पः । कपिलः । " कपिलो रेणुकायां च शिंशपागोविशेषयोः । पुंडरीककरिण्यां स्त्री वर्णभेदे त्रिलिंगकः ॥ नाऽनले वासुदेवे च मुनिभेदे च कुक्कुरे । " इति मेदिनी । मंथ विलोडने । अकारस्येत्वं निपात्यते । मथ्यंते रिपवोऽत्रेति मिथिला नगरी ॥

तत्त्व०—अजिरमिति । " अजिर प्रांगणे काये विषये दर्दुरेऽनिले । शिशिर स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत् ॥ " स्फिरमिति । निश्चलम् । " खदिरी शाकभेदे स्त्री ना चद्रे दन्तधावने । " इति । शिबिरमिति । शेरतेऽस्मिन् राजबलानि निवेशः शिबिरम् । महिलेति । " महिला फलिनी स्त्रियाम् " ॥

**कुवेरादयोऽपि ॥ ८१९ ॥ कुबि आच्छादने । कुबेरः । कबृ वरणे । कपोतः ॥**

सुबो०—कुवेरादयोऽपि । कुबि आच्छादने । अस्मादेरप्रत्ययो नलोपश्च निपात्यते । कुंबत्यन्येषामैश्वर्यमिति कुबेरः । "कुबेरस्त्र्यंबकसखः" इत्यमरः । कबृ वरणे । अस्मादोतप्रत्ययो वकारस्य पत्वं निपात्यते । कपोतः । " कपोतः स्याच्चित्रकंठे पारावतविहंगयोः । " इति मेदिनी । "कपोतः पक्षिमात्रेऽपि " इति त्रिकांडशेषः ॥

**भातेर्डवतुः ॥ ८२० ॥ भातीति भवान् ॥**

सुबो०—भातेर्डवतुः । डवतुप्रत्ययमाह । डित्त्वाट्टिलोपः । उदित्त्वान्नुम् ईप् च । भातीति भवान् । भा दीप्तौ । सर्वादिशब्दोऽयम् ॥

**किशोरादयो निपात्यंते ॥८२१॥ किं शृणातीति किशोरः। कठ कृच्छ्रजीवने । कठोरः । चक तृप्तौ । चकोरः । कपि चलने । कपोलः । पटोलः ॥**

सुबो०—किशोरादयो निपात्यंते । ओरप्रत्ययांता ओलप्रत्ययांताश्च किंपूर्वस्य शृणातेष्टिलोपश्च किमोंत्यलोपश्च निपातनात् । शॄ हिंसायाम् । किशोरः । "किशोरोऽश्वस्य शावके । तैलपर्ण्योषधौ च स्यात्तरुणावस्थसूर्ययोः।" इति मेदिनी। कठ कृच्छ्रजीवने । कठोरः । कठिनः पूर्णश्च । "कठोरताराधिपलांछनच्छविः" इति माघः । चक तृप्तौ । चकोरः पक्षिभेदः । कपि चलने । नलोपो निपातनात् । कपोलः । ओलप्रत्ययोऽप्येभ्यो निपातनात् । पट गतौ । पटोलः । "पटोलं वस्त्रभेदेनौषध्यां ज्योत्स्न्यां तु योषिति ।" इति मेदिनी ॥

तत्त्व०—"किशोरोऽश्वस्य शावके । तैलपर्ण्योषधौ च स्यात्तरुणावस्थसूर्ययोः ।" ॥

**मीनातेरूरः ॥ ८२२ ॥ मयूरः ॥**

सुबो०—मीनातेरूरः । ऊरप्रत्ययमाह । मीञ् हिंसायाम् । मयूरः ॥

**स्यन्देः सम्प्रसारणम् ॥ ८२३ ॥ सिन्दूरम् ॥**

सुबो०—स्यंदेः संप्रसारणम् । स्यंदू प्रस्रवणे । अस्मादूरप्रत्ययः संप्रसारणं च स्यात् । सिंदूरः । "सिंदूरस्तरुभेदे स्यात् सिंदूरं रक्तवर्णके ।" इति मेदिनी ॥

**स्यादेस्तुः ॥ ८२४ ॥ सेतुः । तन्तुः । ओतुः । मसी परिणामे । मस्तुः । धातुः । षच समवाये । सचति समावेशयति चात्मनि जलमिति सक्तुः । क्रोष्टा ॥**

सुबो०—स्यादेस्तुः । तुप्रत्ययमाह । षिञ् बंधने । सेतुः । "सेतुरालौ स्त्रियां पुमान्" इत्यमरः । "सेतुर्नालौ कुमारके" इति मेदिनी । तनु विस्तारे । तंतुः । ह्वत्योरितीण्न । "सूत्राणि कटितंतवः" इत्यमरः । मसी परिणामे । मस्तुः । "मंडं दधिभवं मस्तु" इत्यमरः । षच सेचने । सच्यते इति सक्तुः। चोः कुरिति कः । अर्द्धर्चादिः । डुधाञ् धारणपोषणयोः । "धातुर्ना इंद्रियेषु च । शब्दयोनिमहाभूततद्गुणेषु रसादिषु । मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्ति च ॥" इति मेदिनी । "श्लेष्मादिरसलोहादिमहाभूतानि तद्गुणाः । इंद्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥" इत्यमरः । क्रुश आक्रोशे । छशषेति षत्वं ष्टुत्वं तृवद्भावः । क्रोष्टा । स्तुरारित्यार् । क्रोष्टारौ ॥

तत्त्व०—स्यादेरिति । सिनोतीति सेतुः जलशेषः । मस्तु इति । दधिमंडम् । धातुरिति । " मनःशिलादौ धातुः स्यादिद्रियेषु तथैव च । " ॥

अर्तेस्तुक् ॥ ८२५ ॥ ऋतुः । मन्तुः । जनी प्रादुर्भावे । जन्तुः ॥

सुबो०—अर्त्तेस्तुक् । तुकूप्रत्ययमाह । कित्त्वान्न गुणः । ऋ गतौ । ऋतुः । " ऋतुर्वर्षादिषट्सु च । आर्त्तवे मासि च पुमान् " इति मेदिनी । " ऋतुः स्त्रीकुसुमेऽपि च " इत्यमरः । " ऋतुः स्त्रीपुष्पकालयोः " इति विश्वः । पुनः तुप्रत्ययमाह । मन ज्ञाने । मंतुः । " मंतुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ । " इति मेदिनी । जनी प्रादुर्भावे । जंतुः प्राणी ॥

तत्त्व०—ऋतुरिति । " स्त्रीपुष्पे च ऋतुः काले " मंतुरपराधः ॥

चायः किः ॥ ८२६ ॥ केतुः । वस्तुः ॥

सुबो०—चायः किः । चायृ पूजानिशामनयोः । अस्मात्तुप्रत्ययो धातोः किरादेशश्च स्यात् । केतुः । " केतुर्ग्रहपताकयोः " इति विश्वः । " केतुर्ना (?) रुकादिग्रहे स्थानेषु गुल्मिनि । " इति मेदिनी । वस निवासे । तुः । वस्तुः ॥

तत्त्व०—केतुरिति । पताका महोत्पातेषु लक्ष्मणि च ॥

आगारे णित् ॥ ८२७ ॥ वास्तुः ॥

सुबो०—आगारे णित् । आगारेऽर्थे वसेस्तुण् स्यात् । तुण्प्रत्ययमाह । णित्वावृद्धिः । वास्तुः । " वेश्मभूर्वास्तुरस्त्रियाम् " इत्यमरः ॥

कृञः क्तुः ॥ ८२८ ॥ क्रतुः ॥

सुबो०—कृञः क्तुः । क्तुप्रत्ययमाह । कित्त्वान्न गुणः । डुकृञ् करणे । क्रतुः । " क्रतुर्यज्ञे मुनौ पुंसि " इति मेदिनी ॥

तत्त्व०—क्रतुरिति । क्रतुर्यज्ञे मुनौ पुंसि ॥

जीवेरातृको वृद्धिश्च ॥ ८२९ ॥ जीवयति कुसुदानिति जैवातृकः ॥

सुबो०—जीवेरातृको वृद्धिश्च । जीव प्राणधारणे । अस्मादातृकप्रत्ययः स्यात् धातोर्वृद्धिश्च । आतृकप्रत्ययमाह । जैवातृकः । " जैवातृकः पुमान् सोमे कृषकायुष्मतोस्त्रिषु । " इति मेदिनी । " जैवातृकास्त्विवद्भिषगायुष्मत्सु कृषीवले । " इति । अस्मादातुप्रत्ययोऽपि । " जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे । " ॥

तत्त्व०—जीवेरिति । " जैवातृकः पुमान्सोमे कृषकायुष्मतोस्त्रिषु । " ॥

कृषादेरूः ॥ ८३० ॥ कर्षूः । खर्ज व्यथने । खर्जूः ॥

सुबो०—कृषादेरूः । ऊप्रत्ययमाह । कृष विलेखने । कर्षूः । " कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता । " इति विश्वः । " कर्षूः पुमान् करीषाग्नौ स्त्रियां

कुल्यालपखातयोः । " इति मेदिनी । खर्ज व्यथने । खर्जूः । " खर्जूरी कीटकंडूषु " इति हैमः । पामा च ॥

तत्त्व०—कृषादेरिति । कर्षूः । "कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता । खर्जूः कीटान्तरे स्मृता"॥

**वहो धश्च ॥ ८३१ ॥ वहति प्राप्नोति धनमिति वधूः ॥**

सुबो०—वहो धश्च । वह प्रापणे अस्य धांतादेशः ऊप्रत्ययश्च स्यात् । वधूः । " स्नुषा नवोढा स्त्री भार्या वधूः पृक्कांगनासु च । " इति विश्वः । " वधूर्जाया स्नुषा स्त्रीषु पृक्का च महिला वधूः ।" इति त्रिकांडशेषः । स्त्रीविशेषः ॥

तत्त्व०—वधूः स्नुषा नवोढा स्त्री भार्या च ॥

**कषेश्छश्च ॥ ८३२ ॥ कच्छूः ॥**

सुबो०—कषेश्छश्च । कष हिंसायामस्मादूप्रत्ययः स्यात् अंतस्य छश्च । कच्छूः । " कच्छ्वां तु पामपामा विचर्चिका " इत्यमरः ॥

तत्त्व०—कच्छूः पामा ॥

**कास्वादयः ॥ ८३३ ॥ कस्यते हन्यतेऽनया कासूः । पद्यते प्राप्यतेऽनया पादूः । लबि गतौ । अलाबूः । कशेरूः । दद्रूः ॥**

सुबो०—कास्वादयः । ऊण्प्रत्ययांता निपात्यंते । णित्त्वाद्वृद्धिः । ऊण्प्रत्ययमाह । कस गतौ । कासूः । " कासूर्विकलवाचि स्यात् तथा शक्त्यायुधे स्त्रियाम् ।" इति मेदिनी । " कासूः शक्त्यायुधे रुजि । बुद्धौ विकलवाचि स्यात् " इति हैमः । पद गतौ । पादूः । चरणधारिणी । लभि स्रंसने । नञ्युपपदे लंबेर्नलोपो निपात्यते । न लंबते जले इत्यलाबूः । " तुंब्यलाबूरुभे समे " इत्यमरः । शॄ हिंसायाम् । कशब्दे उपपदे शृणातेरूप्रत्ययः ऋत एरादेशश्च निपात्यते । कशेरूः । बाहुलकादुप्रत्ययोऽपि । " कशेरुस्तृणकंदे स्त्री " इति । दरिद्रा दुर्गतौ । ऊप्रत्यये इकारस्याकारस्य च लोपो निपात्यते । दद्रूः कुष्ठभेदः । मृगय्वादित्वात् कुप्रत्यये दद्रुरपि । " दद्रुणो दद्रुरोगी स्यात् " इत्यमरः ॥

तत्त्व०—" कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रियाम् । " इति मेदिनी । पादूश्चरणधारिणी । तुंब्यलाबूरुभे समे । कसेरुस्तृणकंदे स्त्री ॥

**अन्द्वादयः ॥ ८३४ ॥ अन्दूः ॥**

सुबो०—अंद्वादयः । कूप्रत्ययांता निपात्यंते । अदि बंधने । अंदूः । " अंदूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च ।" इति मेदिनी । " अंदूको हस्तिनिगडे " इत्यमरः । संज्ञायां कप्रत्यये पूर्वस्य ह्रस्वः । केचित्तु अम गतौ । अस्य डुगागमे कूप्रत्यये च अंदुर्बुद्धिरिति व्याचख्युः ॥

तत्त्व०—अन्द्वादयः । " अंदूः स्त्रिया स्यान्निगडे प्रभेदे भूषणस्य च । "

**जनेर्बुक् ॥ ८३५ ॥ जम्बूः । कर्कं दधाति कर्कन्धूः । दिधिं धैर्य्यं स्यतीति दिधिषूः ॥**

सुबो०—जनेर्बुक् । जनी प्रादुर्भावे । अस्य बुगागमः स्यात् कूप्रत्यये । जंबूः । जंबूः अदने अस्येत्येके बाहुलकात्कुप्रत्ययोऽपि । जंबुः । उक्तं च विक्रमादित्यकाव्ये । "तस्य जंबोः फलरसो नदीभूय प्रवर्त्तते ।" इति । "परिणतजंबुफलोपभोगहृष्टा" इति भारविः । डुधाञ् धारणादौ । आतोऽनपीत्यालोपे निपातनात्पूर्वपदस्य नुम् । कर्कं दधातीति कर्कंधूः । "कर्कंधूर्बदरी कोलिः" इत्यमरः । षोऽन्तकर्मणि । दिधिं धैर्यं स्यति त्यजतीति संध्यक्षराणामित्यात्वे आतोऽनपीत्यालोपे च । दिधिषूः केश्चित्तु दधातेरित्वं द्वित्वं षुक् च निपात्यते । दधात्यसाविति दिधिषुरिति व्याख्यातम् । "पुनर्भूर्दिधिषूरूढा द्विः" इत्यमरः । द्विरूढा द्विवारं विवाहितेत्यर्थः ॥

तत्त्व०—कर्कंधूर्बदरी । दिधिषूः पुनर्भूः ॥

**मृग्रोरुतिः ॥ ८३६ ॥ मरुत् । गरुत् ॥**

सुबो०—मृग्रोरुतिः । उतिप्रत्ययमाह । इकार उच्चारणार्थः । मृङ् प्राणत्यागे । मरुत् । अण्प्रत्यये मारुतः । मरुत्शब्दोऽप्यव्युत्पन्नोऽस्ति । "मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत् ।" इति विक्रमादित्यकोशः। "कोऽयं वाति स दाक्षिणात्यमरुतः" इति कविराजश्लोकः । गॄ निगरणे ॥

तत्त्व०—मृग्रोरिति । गरुत्पक्षः गर्मुत् तृणं च ॥

**गिरतेरुतिस्तस्य मुट् ॥ ८३७ ॥ चट भेदने ॥**

सुबो०—गिरतेरुतिस्तस्य मुट् । अस्मात्परस्योतप्रत्ययस्य मुडागमः स्यात् । गर्मुत् । "गर्मुत्स्त्री स्वर्णलाभयोः" इति मेदिनी ॥

**चटेरुलः ॥ ८३८ ॥ चटुलम् ॥**

सुबो०—चटेरुलः । उलप्रत्ययमाह । चट भेदने । चटुलं शोभनम् ॥

**ह्वादेरितिः ॥ ८३९ ॥ हरित् । सरित् । युष सौत्रो धातुः । युष भजने । योषित् ॥**

सुबो०—ह्वादेरितिः । इतिप्रत्ययमाह । इकार उच्चारणार्थः । हृञ् हरणे । हरित् । "हरित्ककुभि वर्णे च तृणवाजिविशेषयोः ।" इति विश्वः । "हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात् तृणेऽपि च" इति मेदिनी । रुह बीजजन्मनि । रोहित् । "रोहिन्मृग्यां लताभेदे स्त्रीनार्के" इति मेदिनी । युष इति धातुः सौत्रः । योषित् । "स्त्री योषिदबला योषा" इत्यमरः ॥

तत्त्व०—ह्रादेरिति । " हारित्ककुभि वर्णे च हणवाजिविशेषयोः । रोहिन्मृगविशेषे स्त्री " ॥

**ताडेर्णिलुक् च ॥ ८४० ॥ तडित् ॥**

सुबो०—ताडेर्णिलुक् च । इतिप्रत्यये अस्य णेर्लुक् स्यात् । तड आघाते । ताडयतीति तडित् । " तडित्सौदामनी विद्युत् " इत्यमरः ॥

**शमेर्ढः ॥ ८४१ ॥ शण्ढः ॥**

सुबो०—शमेर्ढः । ढप्रत्ययमाह । बाहुलकात् ढस्येत्संज्ञा न । शमु उपशमे । हवक्त्योरितीण्न । शंढः । " शंढः स्यात् पुंसि गोपतौ । आकृष्टांडे वर्षधरे तृतीयप्रकृतावपि । " इति मेदिनी ॥

तत्त्व०—शमेरिति । शंढः क्लीवः ॥

**कमादेरठः ॥ ८४२ ॥ कमठः । जरठः । रमेर्वृद्धिश्च । रामठम् । शमेः खः । शंखः । कणेष्ठः । कण्ठः ॥**

सुबो०—कमादेरठः । अठप्रत्ययमाह । कमु कांतौ । कमठः । " कमठः कच्छपे पुंसि भाण्डभेदे नपुंसके । " इति मेदिनी । जॄ वयोहानौ । जरठः । " जरठः कठिने पांडौ कर्कशे चाभिधेयवत् । " इति विश्वः । " जरठः कठिने जीर्णे " इति वैजयंती । रमेर्वृद्धिः । रमु क्रीडायामस्य वृद्धिः स्यात् ठप्रत्यये । रामठं हिंगु । शमेः खः । खप्रत्ययमाह । शमु उपशमे । शंखः । " शंखो निधौ ललाटास्थ्नि कंबौ न स्त्री " इत्यमरः । " शंखः कंबौ न योषिति । ललाटास्थ्नि निधौ नखे " इति मेदिनी । कणेष्ठः । ठप्रत्ययमाह । कण शब्दे । निपातनात् णस्यानुस्वारे । कंठः । " कंठो गले सन्निधाने ध्वनौ मदनपादपे । " इति मेदिनी ॥

तत्त्व०—कमादेरिति । रामठं हिंगु ॥

**वृषलादयः कलप्रत्ययान्ता निपात्याः ॥८४३॥ वृषलः । शप् । शबलः । पल गतौ । पललम् । सरलः । तरलः । कम्बलः । मुस खण्डने । मुसलम् ॥**

सुबो०—वृषलादयः कलप्रत्ययांता निपात्याः । कित्त्वान्न गुणः । वृष सेचने । वृषलः । " वृषलस्तु गरे शूद्रे " इति हैमः । शप आक्रोशे । निपातनात्पस्य बः । शबलः । पल गतौ । पललम् । " पललं तिलचूर्णे च पिके मांसे नपुंसकम् । ना राक्षसे " इति मेदिनी । सृ गतौ । बाहुलकाद्गुणः । सरलः । " सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु । " इति मेदिनी । " सरला विरलायंते घनायंते कलिद्रुमाः । न शमी न च पुन्नागो ह्यस्मिन् संसारकानने॥ " इति । तॄ प्लवनतरणयोः । तरलः । कमु कान्तौ । कमेर्बुगागमो निपात्यते । कंबलः । " कंबलो नागराजे स्याद्

सास्नाप्रावारयोरपि । क्रियावप्युत्तरासर्गे सलिले तु नपुंसकम्॥" इति मेदिनी ।"सास्ना तु गलकंबलः" इत्यमरः। मुस खंडने । मुसलम् । "मुसलं स्यादयोऽग्रे च पुंनपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि ॥ " इति मेदिनी । मुस खंडने । अस्मात्कलप्रत्यये मुशलोऽपि । " मुसलो मूसलोऽपि च " इति विश्वः ॥

लगेर्वृद्धिश्च ॥ ८४४ ॥ लांगलम् । कुट्मलः । कुड्मलः । कश्मलम् । कोमलम् । मृजू । मलम् । चुप । चपलः । शकलम् । शमलम् । छगलः ॥

सुबो०–लगेर्वृद्धिश्च । लगि गतौ । अस्य वृद्धिर्निपात्यते । लांगलम् । कुट कौटिल्ये । कलप्रत्ययस्य मुडागमो निपात्यते । कुट्मलः । कुड दाहे । अस्मात्कलप्रत्यये मुडागमे च कुड्मलोऽपि । कश गतिशासनयोः । कलप्रत्ययस्य मुट् निपातनात् । कश्मलम् । कु शब्दे । अस्मात्कलप्रत्ययस्य मुट् धातोर्गुणश्च निपात्यते । कोमलम् । " कोमलं मृदुलं मृदु " इत्यमरः । मृजू शुद्धौ । मृजेष्टिलोपो निपात्यते कलप्रत्यये । मलः । " मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत् । " इति मेदिनी । चुप् मंदायां गतौ । धातोरुपधाया अत्वं निपात्यते कलप्रत्यये । चपलः । " चपलः पारदे मीने चौरके प्रस्तरांतरे । चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च ॥ नपुंसके तु शीघ्रे स्यात् वाच्यवत्तरले चले । " इति मेदिनी । शक्ल शक्तौ । शकलम् । " शकलं त्वचि खंडे स्याद्रागवस्तुनि वल्कले ।" इति मेदिनी । रोहितादीनां त्वचि तद्योगात् शाकली मत्स्यः । शमु उपशमे । शमलम् । छो छेदने । अस्य गुगागमो ह्रस्वश्च निपात्यते । छगलः । " छगलं नीलवस्त्रे ना छागे स्त्रीवृद्धदारके । " इति मेदिनी ॥

ञमांताड्डः ॥८४५॥ दण्डः । रण्डा । खण्डः । मन्यते । मण्डः । अण्डः । चण्डः । पण्डः ॥

सुबो०–ञमांताड् डः । ञमप्रत्याहारांताद्धातोर्डः स्यात् । डप्रत्ययमाह । दमु उपशमे । बाहुलकात् डस्य नेत्संज्ञा । दंडः । " दंडोऽस्त्री लगुडेऽपि स्यात् " इत्यमरः । रमु क्रीडायाम् । रंडा । " रंडा मूषकपर्ण्यां च विधवायां च योषिति । " इति विश्वः। खनु अवदारणे । खंडः। "खंडोऽस्त्री शकले चेक्षुविकारमणिभेदयोः। " इति मेदिनी ॥

कवर्गादिभ्यः किच्च ॥ ८४६ ॥ गुङ् गतौ । गुडः ॥

सुबो०–कवर्गादिभ्यः किच्च । डक् स्यात् । कित्त्वाद्गुणो न । डप्रत्ययमाह । गुङ् गतौ । गुङ् अव्यक्ते शब्दे । गुडः।"गुडो गोलेक्षुपाकयोः" इत्यमरः । "गुडः

स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः । गुडा स्नुह्यां च कथिता गुडिकायां च योषिति ॥ " इति मेदिनी ॥

**स्थादेरालः ॥ ८४७ ॥ स्थालम् । स्थाली ॥**

सुबो०-स्थादेरालः । आलप्रत्ययमाह । ष्ठा गतिनिवृत्तौ । स्थालम् । " स्थालं भाजनभेदेऽपि स्थाली स्यात् पाटलौषधौ । " इति मेदिनी ॥

**पतिचण्डिभ्यामालञ् ॥८४८॥ पातालम् । चडि कोपे । चंडालः ॥**

सुबो०-पतिचंडिभ्यामालञ् । आलञ्प्रत्ययमाह । ञित्त्वाद्वृद्धिः । पत्ल पतने । पतंत्यस्मिन्नधर्मिण इति पातालम् । " अधोभुवनपातालं बलिसद्म रसातलम् । " इत्यमरः । " पातालं नागलोके स्याद्विवरे वडवानले । " इति मेदिनी । चडि कोपे । नुमि कृते उपधाया अभावान्न वृद्धिः । चंडालः । अण्प्रत्यये । चांडालः॥

**तमादिभ्यः कालः ॥८४९॥ तमालः । विड भेदने । बिडालः । मृण हिंसायाम् । मर्णयति कमलानि मृणालम् । कुल संख्याने नाशने च । कोलति नष्टां करोति मृत्तिकां कुलालः । कपालः । पल्यते त्यज्यतेऽसौ पललम् ॥**

सुबो०-तमादिभ्यः कालः। कालप्रत्ययमाह । कित्त्वान्न गुणः। तमु कांक्षायाम् । तमालः । " तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे । " इति मेदिनी । विश प्रवेशने । " विशाला त्विद्रवारुण्यामुज्जयिन्यां तु योषिति । नृपवृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत् ॥" इति मेदिनी । विड आक्रोशे । विडालः। " विडालो नेत्रपिंगे स्यात् वृषदंशकके पुमान्। " इति मेदिनी । "ओतुर्विडालो मार्जारो वृषदंशक आखुभुक् । " इत्यमरः। मृण हिंसायाम् । मृणालम् । "मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिसे । " इति मेदिनी । कुल संख्याने । कुलालः । " कुलालः ककुभे कुंभकारे स्त्रीजननांतरे । " इति मेदिनी । " कुलालो घूकपक्षिणि । कुकुभे कुंभकारे च " इति हैमः । कपि चलने । नलोपो निपात्यते । कपालः । " कपालोऽस्त्री शिरोस्थिनि । घटादेः शकले व्रजे " इति मेदिनी । पल गतौ । पललम् ॥

**पतादिभ्योऽङ्गः ॥ ८५० ॥ पतंगः । तरंगः । लवंगम् ॥**

सुबो०-पतादिभ्योऽगः। अंगप्रत्ययमाह । पत्ल पतने । पतंगः। "पतंगः शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबं सूते " इति मेदिनी । सूते पारदे इत्यर्थः । तॄ प्लवनतरणयोः । तरंगः । " तरंगस्तुरगादीनां मुरफाले वस्त्रभंगके । कल्लोलयोः " इति विश्वः । लूञ् छेदने । लवंगम् । " लवंगं देवकुसुमे " इत्यमरः ॥

**बिडादेः कित ॥ ८५१ ॥ बिडङ्गः । मृद क्षोदे । मृदंगः ॥**

सुबो०—विडादेः कित् । अंगकप्रत्ययमाह । कित्त्वान्न गुणः । विड आक्रोशे । विडंगः । " विडंगः कृमिसंघघ्ने विडंगो नागरेऽन्यवत् । " इति विश्वः । " विडंगस्त्रिष्वभिज्ञे स्यात् कृमिघ्ने पुंनपुंसकम् । " इति मेदिनी । मृद क्षोदे । मृदंगः । " मृदंगः पटहे घोषे " इति मेदिनी ॥

**गमादेर्गः ॥ ८५२ ॥ गंगा । छो । छागः । खङ्गः ॥**

सुबो०—गमादेर्गः । गप्रत्ययमाह । गम्लृ गतौ । गंगा । छो छेदने । छागः । खङ्ग भेदने । खङ्गः । " खङ्गो गंडकशृंगे स्यान्निस्त्रिंशे गंडकेऽपि च । " इति शब्दतरंगिणी । " खङ्गो गंडकशृंगासिबुद्धिभेदेषु गंडके । " इति मेदिनी ॥

**भृंगादयः ॥ ८५३ ॥ भृञ् । भृङ्गः । शृङ्गम् । शार्ङ्गम् । पूगः । मोदते । मुद्गः ॥**

सुबो०—भृंगादयः । गक्प्रत्ययांता निपात्यंते । डुभृञ् धारणपोषणयोः । प्रत्ययस्य नुट् निपातनात् । भृंगः । " भृंगा विङ्गालिधूम्याटा " इति विश्वः । " भृंगो धूम्याटविङ्गयोः । मधुव्रते भृंगराजे पुंसि भृंग गुडत्वचि । " इति मेदिनी । शॄ हिंसायाम् । शृणातेर्ह्रस्वः प्रत्ययस्य नुडागमश्च निपात्यते । शृंगम् । " शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडांबुयंत्रके । विषाणोत्कर्षयोश्चाथ शृंगः स्यात्कूर्चशीर्षके ॥ स्त्रीविषयास्वर्णमीनभेदयोर्ऋषभौषधौ ॥ " इति मेदिनी । " शृंगं विषाणमाख्यातं शैलाग्रे जलयंत्रके । मीनौषधिसुवर्णानां भेदे शृंगी प्रयुज्यते ॥" इत्युत्पलिनीकोशे । शृणातेः शकुनौ वाच्ये गण्प्रत्ययः तस्य नुट् च निपात्यते णित्त्वाद्वृद्धिः । शार्ङ्गः पक्षी । शार्ङ्गं धनुरिति तु शृंगस्य विकार इत्यर्थेऽण्प्रत्यये बोध्यम् । पूङ् पवने । पूयते सुखमनेनेति । पूगः । " पुगस्तु क्रमुके वृंदे " इति मेदिनी । मुद हर्षे । मुद्गः सस्यभेदः ॥

**शरदादयोऽदिप्रत्ययान्ता निपात्याः ॥ ८५४ ॥ शॄ । शरत् । दृणातेः । दरत् । दृषत् । त्यजेः । त्यत् । तनेः । तत् । यजेः । यत् । इण् । एतत् ॥**

सुबो०—शरदादयोऽदिप्रत्ययांता निपात्याः । शॄ हिंसायाम् । अदिप्रत्ययः । इकार उच्चारणार्थः । शरत् । "शरत्स्त्री वत्सरेऽप्यृतौ " इति मेदिनी । दॄ विदारणे । दरत् । "दरत्स्त्रियां प्रपाते च भयपर्वतयोरपि ।" इति मेदिनी । दृणातेः षुक् ह्रस्वो गुणाभावश्च निपात्यते । दृषत् । " दृषन्निष्पेषणशिला पटप्रस्तरयोः स्त्रियाम् । " इति मेदिनी । त्यज वयोहानौ । निपातनाट्टिलोपः । त्यद् । तनु विस्तारे । निपा-

तनाट्टिलोपः । तद् । यज देवपूजादौ । टिलोपो निपातनात् । यद् । इण् गतौ । अस्य गुणे कृते तुगागमो निपात्यते । एतद् ॥

तत्त्व०–शरदादय इति । शरद्धृदयकूलयोः ॥

**भियोऽजिः षुक् ह्रस्वश्च ॥ ८५५ ॥** भिषक् ॥

सुबो०–भियोऽजिः षुक् ह्रस्वश्च । ञिभी भये । अस्मादजिप्रत्ययः स्यात् । आजिप्रत्ययमाह । इकार उच्चारणार्थः। अजिप्रत्यये भियो ह्रस्वः षुगागमश्च स्यात् । ह्रस्वविधानसामर्थ्यान्न गुणः । भिषक् । " भिषग्वैद्यौ चिकित्सके " इत्यमरः ॥

**युष्यसिभ्यां मदिक् ॥ ८५६ ॥** युष सौत्रः । युष्मद् । अस्मद् ॥

सुबो०–युष्यसिभ्यां मदिक् । मदिक्प्रत्ययमाह । कित्त्वाद्गुणो न । इकार उच्चारणार्थः । युष् सौत्रो धातुः । युष्मद् । असु क्षेपणे । अस्मद् । त्वमहम् ॥

**स्त्वादेर्मः ॥ ८५७ ॥** स्तोमः । सोमः । होमः । धर्मः । क्षेमम् । भामः । यामः । वामः । पद्मम् । नयतीति नेमः ॥

सुबो०–स्त्वादेर्मः। मप्रत्ययमाह । ष्टुञ् स्तुतौ । स्तोमः संघातः। षुञ् अभिषवे। सोमः । " सोमस्तुहिनदीधितौ । वानरे च कुवेरे च पितृदेवे समीरणे । वसुप्रभेदे कर्पूरनीरे सोमलतौषधौ ॥ " इति मेदिनी । हु दानादनयोः । होमः । देवतोद्देशेन हविःप्रक्षेपो होमः । धृञ् धारणे । धर्मः । " धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोर्क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ॥ " इति मेदिनी । " धर्मः पुण्ये यमे न्याये स्वभावाचारयोर्क्रतौ । " इति विश्वः । क्षि क्षेपे । क्षेमम् । भा दीप्तौ । भामः । " भामः क्रोधे रुचौ दीप्तौ " इति विश्वः । आदित्यश्च । या प्रापणे । यामः । " यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः । " इति मेदिनी । वा गतिगंधनयोः । वामः । " वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्य्यां स्त्रियामथ ॥ वामी शृगालीवडवारासभीकलभीषु च । " इति मेदिनी । पद गतौ । पद्मम् । " पद्मोऽस्त्री पद्मके व्यूहनिधिभेदस्यांतरेऽम्बुजे । ना नागे" इति मेदिनी । णीञ् प्रापणे । नेमः । " नेमः कीलेऽवधौ गर्त्ते प्राकारे कैतवेऽपि च । " इति मेदिनी । " नेमस्त्वर्द्धे प्राकारगर्तयोरवधौ कैतवेऽपि च । " इति हैमः ॥

**जिह्वादयो निपात्यंते ॥ ८५८ ॥** जिह्वः। ग्रसु ग्लसु अदने । ग्रामः । सिमः । शुष्मम् । श्वेड्म । श्यामः । धूमः । युग्मम् । रुक्मम् । तिग्मम् । हिमम् । भीमः । भीष्मः । घृ क्षरणे दीप्तौ च । जिघर्त्यनेन घर्मः । ग्रसेः । गीष्मः ॥

सुबो०–जिह्वादयो निपात्यंते । ओहाक् त्यागे । अस्मात् मप्रत्ययः सन्वद्भावः

वति आतो लोपश्च निपातनात् तेन द्वित्वादिः यः से इति पूर्वस्येत्वम्। जिह्मः। "जिह्मः कुटिलमंदयोः" इत्यमरः। "जिह्मस्तु कुटिले मंदे क्लीबे तगरपादपे।" इति मेदिनी। ग्रसु अदने। ग्रसेष्टेरात्वं निपात्यते। ग्रामः। "ग्रामः स्वरे संवसथे वृंदे शब्दादिपूर्वके।" इति विश्वः। शब्दादिपूर्वको ग्रामशब्दो वृंदे। "शब्दग्रामो गुणग्रामः" इति यथा। "शब्दादिपूर्वो वृंदेऽपि ग्रामः" इत्यमरः। "संपूर्वः संयुगे स्मृतः" इति विश्वः। षिञ् बंधने। निपातनान्मक्प्रत्ययांतो वक्ष्यमाणो ज्ञेयः। सिमः सर्वादिगणे पठितः। शुष् शोषणे। शुष्मम्। "शुष्ममग्निसमीरयोः" इति विश्वः। "शुष्मं तेजसि वायौ ना" इति मेदिनी। श्यैङ् गतौ। श्यामः। "त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिका निशा।" इत्यमरः। "श्यामो वटे प्रनागस्य वारिदे वृद्धदारुके। पिके च कृष्णहरितोः पुंसि स्यात् तद्वति त्रिषु॥ मरीचे सिंधुलवणे क्लीबं स्त्री शारिकौषधौ। गुदायां सोमवल्ल्यां च प्रियंगुवल्गुलीकयोः॥ यमुनायां त्रियामायां कृष्णात्रिवृतिकौषधौ। नीलिकायाम्" इति मेदिनी। धूञ् कंपने। धूमः। युजिर् योगे। निपातनात् जस्य गः। युग्मम्। रुच दीप्तौ। निपातनात् चस्य कः। रुक्मम्। "रुक्मं तु कांचने लोहे" इति विश्वः। तिज निशाने। निपातनात् जस्य गः। तिग्मम्। "तिग्मं तीक्ष्णं खरं तद्वत्" इत्यमरः। हन हिंसागत्योः। हंतेर्हिरादेशो निपातनात्। हिमम्। "हिमं तुषारमलयभवयोः स्यान्नपुंसकम्। शीतले वाच्यलिंगके" इति मेदिनी। ञिभी भये। भियः षुगागमो वा निपात्यते। बिभेत्यस्मादिति। भीमः। भीष्मः। "भीष्मो गांगेयघोरयोः" इति विश्वः। "भीमोऽम्लवेतसे घोरे शंभौ मध्यमपांडवे।" इति मेदिनी। घृ क्षरणदीप्त्योर्निपातनाद्गुणः। घर्मः। "घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदांभसोरपि।" इति मेदिनी। ग्रस अदने। अस्य निपातनात् ग्रीषादेशः। ग्रीष्मः। "ग्रीष्म उष्णर्तुभेदयोः" इति मेदिनी॥

**प्रथेः षिवः सम्प्रसारणं च॥ ८५९॥ पृथिवी॥**

सुबो०—प्रथेः षिवः संप्रसारणं च। षिवप्रत्ययमाह। षित्त्वादीष्। षवप्रत्यय इत्येके। प्रथ प्रख्याने। पृथिवी। "पृथिवी पृथवी पृथ्वी धरा सर्वंसहा रसा।" इति शब्दार्णवः॥

तत्त्व०—प्रथे. षिव इति। षव इत्येके। पृथिवी पृथवी पृथ्वी च॥

**अशादेः क्वः॥ ८६०॥ अश्वः। खट कांक्षायाम्। खट्वा। विश्वम्। सर्वादिरयम्॥**

सुबो०—अशादेः क्वः। कित्त्वान्न गुणः। क्वप्रत्ययमाह। अशूङ् व्याप्तौ। अश्वः। "अश्वः पुंजातिभेदे च तुरंगे च पुमानयम्।" इति मेदिनी। "अश्वः

पुंभेदवाजिनोः ” इति विश्वः । खट कांक्षायाम् । खट्यते शयनार्थिभिः कांक्ष्यते इति खट्वा । विश प्रवेशने । विश्वम् । “ विश्वा प्रतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुंठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु ॥ ” इति मेदिनी ॥

**स्रादेर्वः ॥ ८६१ ॥ सृतमनेन विश्वमिति सर्वः । शर्वः । गर्वः ॥**

सुबो०—स्रादेर्वः । वप्रत्ययमाह । सृ गतौ । सृतमनेन विश्वमिति सर्वः । गॄ निगरणे । गर्वः अहंकारः । शॄ हिंसायाम् । शर्वो रुद्रः ॥

**ग्रीवादयो वप्रत्ययांता निपात्यंते ॥ ८६२ ॥ ग्रीवा । लिहं-त्यनयेति जिह्वा ॥**

सुबो०—ग्रीवादयो वप्रत्ययांता निपात्यंते । गॄ निगरणे । ईडागमो गुणाभावश्च निपातनात् । गिरंत्यनयेति ग्रीवा । लिह आस्वादने । लस्य जो गुणाभावश्च निपातनात् । लिहंत्यनयेति । जिह्वा ॥

तत्त्व०—ग्रीवादय इति । गिरंत्यनया ग्रीवा ॥

**य्वादेः कन् ॥ ८६३ ॥ युवा । वृषा । तक्ष्णोति काष्ठानि । तक्षा । राजा । धवि गतौ । धन्वयति शरानिति धन्वा । प्रतिदिवा ॥**

सुबो०—य्वादेः कन् । कन्प्रत्ययमाह । कित्त्वान्न गुणः । यु मिश्रणे । यौतीति युधातोरित्युव् । नोपधाया इति दीर्घः । नाम्नो नो लोपशिति नलोपः । युवा । “ युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि । ” इति मेदिनी । वृषु सेचने । वृषा । “ वृषा कर्णे महेंद्रे ना ” इति मेदिनी । तक्षू तनूकरणे । तक्षा । “ तक्षा तु वर्द्धकिस्त्वष्टा रथकारश्च काष्ठतट् । ” इत्यमरः । राजृ दीप्तौ । राजा । “राजा प्रभौ नृपे चंद्रे पक्षे क्षत्रियशक्रयोः । ” इत्यमरः । धवि गतौ । धन्वा । “ समानौ मरुधन्वानौ ” इत्यमरः । “ अथास्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । ” इत्यमरः । “ धन्वा तु मरुदेशे ना क्लीबे चापे शरेऽपि च । ” इति मेदिनी । दिवु क्रीडादौ । प्रतिदीव्यत्यस्मिन्निति प्रतिदिवा दिवसः ॥

**सप्यशूभ्यां तुट् च ॥ ८६४ ॥ षप समवाये । सप्त । अष्ट ॥**

सुबो०—सप्यशूभ्यां तुट् च । आभ्यां कन्प्रत्ययः स्यात् तस्य तुडागमश्च । षप समवाये । जसूशसोरिति जसो लुक् । नाम्नो नो लोपशिति नलोपः । सप्त । अशूङ् व्याप्तौ । छशषेति षत्वम् । अष्ट ॥

**नञि जहातेः ॥ ८६५ ॥ अहः ॥**

सुबो०—नञि जहातेः । ओहाक् त्यागे । अस्मात् कन्प्रत्ययः स्यात् । न जहाति प्रकाशमिति आतोऽनपीत्यालोपः । अह्न इति नस्य सः । अहः ॥

श्वादयः ॥ ८६६ ॥ श्वा । उक्षा । पुष्णाति कमलानीति पूषा । प्लेहति प्लीहा । मुह्यन्त्यस्मिन्नाहते मूर्द्धा । मज्जत्यस्थिषु मज्जा । अर्य्यपूर्वान्माङः। अर्य्यमा । मातर्य्यन्तरिक्षे श्वयतीति मातरिश्वा । मह पूजायाम् । मह्यते इति मघवा ॥ इत्युणादौ प्रथमः पादः ॥ १ ॥

सुबो०–श्वादयः । कन्प्रत्ययान्ता निपात्यंते । टुओश्वि गतिवृद्ध्योः। श्वयतीति इकारलोपो निपातनात् । श्वा । उक्ष सेचने । उक्षा वृषभः । पूष वृद्धौ । इनामिति दीर्घः । पूषा । पूषणौ । पूषणः । प्लिह गतौ । इकारस्य दीर्घत्वं निपात्यते । प्लीहा कुक्षिव्याधिः । मुह वैचित्त्ये । मुहेरुपधाया दीर्घः । धोऽन्तादेशो रमागमश्च निपातनात् । मूर्द्धा । "मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । मुर्वी बंधने । अस्योकारस्य दीर्घत्वं वस्य धश्च निपात्यते इत्युज्ज्वलदत्तः । मूर्द्धा । टुमस्जो शुद्धौ । मस्जेः श्चुत्वेन सस्य शः। झभे जबा इति शस्य जः। मज्जा । नकारांतोयामबंतोप्यभ्युपगम्यते । "ऊष्मया सार्द्धमूष्मापि मज्जोक्तौ मज्जया सह ।" इति द्विरूपकोशः। माङ् माने । इनामिति दीर्घः । अर्यमा । "अर्यमा तु पुमान् सूर्ये पितृदेवांतरेऽपि च ।" इति मेदिनी । टुओश्वि गतिवृद्ध्योः । धातोरिकारलोपः संप्रसारणाभावः सप्तम्या अलुक् च निपात्यंते । मातरीत्यव्ययमन्तरिक्षवाचि तस्मिन् श्वयतीति मातरिश्वा । "मातरिश्वा सदागतिः" इत्यमरः । अथ च श्वादेरिति सूत्रेण वस्योत्वं न भवति । अभिव्यक्तिपरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य तदंतस्य च ग्रहणात् तेन मातरिश्वनः मातरिश्वनेत्यादि । मह पूजायाम् । धातोर्हस्य घः अवुगागमश्च निपात्यते । मघवा इन्द्रः ॥ इत्युणादौ प्रथमः पादः ॥१॥

कृहृभ्योरेणुः ॥ ८६७ ॥ करेणुः । हरेणुः ॥

सुबो०–कृहृभ्योरेणुः । एणुप्रत्ययमाह । डुकृञ् करणे । करेणुः । "करेणुरिभ्यां स्त्रीनेभे" इत्यमरः । "करेणुर्गजयोषायां स्त्रियां पुंसि मतंगजे ।" इति मेदिनी । हृञ् हरणे । हरेणुः । "हरेणुर्ना सती न स्त्री रेणुकाकुलयोषयोः ।" इति मेदिनी । हरेणुर्गंधद्रव्यम् । कलापश्चेति बोध्यम् । "कलापस्तु सतीनकः" इत्यमरः ॥

कुपादेः क्थः ॥ ८६८ ॥ कुष्ठम् । रथः । काश्र दीप्तौ । काष्ठम् । अवभृथः ॥

सुबो०–कुपादेः क्थः । क्थप्रत्ययमाह । कित्त्वान्न गुणः । कुष निष्कर्षे । कुष्ठम् । "कुष्ठं रोगे पुष्करे स्त्री" इति मेदिनी । "कुष्ठं रोगे सुगंधे च" इति विश्वः । रमु क्रीडायाम् । लोपस्त्वनुदात्ततनामिति मलोपः । रथः । "रथः पुमानवयवे स्यंदने वेतसेऽपि च ।" इति मेदिनी । "रथः स्यात् स्यंदने काये चरणे वेत-

सेऽपि च ।" इति विश्वः । काशृ दीप्तौ । छशषेति षत्वं ष्टुत्वम् । काष्ठम् । "काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम् ॥" इति मेदिनी । "काष्ठं दार्विंधनं त्वेधः" इत्यमरः । डुभृञ् धारणादौ । अवभृथो यज्ञस्नानम् ॥

**उषादेस्थः ॥ ८६९ ॥ ओष्ठः । कोष्ठः । गाथा । अर्थः । शु गतौ । शोथः ॥**

सुबो०—उषादेस्थः । थप्रत्ययमाह । उष दाहे । ओष्ठः । कुष निष्कर्षे । कोष्ठः । "कोष्ठः कुक्षिकुसूलयोः" । गै शब्दे । गाथा । "गाथा श्लोके संस्कृतान्यभाषार्थोशेषवृत्तयोः ।" इति मेदिनी । ऋ गतौ । अर्थः । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।" इत्यमरः । शु गतौ । शोथः श्वयथुः ॥

**सर्तेर्णित् ॥ ८७० ॥ सार्थः ॥**

सुबो०—सर्तेर्णित् । थण्प्रत्ययमाह । णित्वाद्वृद्धिः । सृ गतौ । सार्थः । "सार्थो वणिक्समूहे स्यादपि संघातमात्रके ।" इति मेदिनी ॥

**निशीथादयः ॥ ८७१ ॥ निशीथः । तीर्थः । रिचिर् विरेचने । रिक्थम् । षिचिर् क्षरणे । सिक्थम् । पृषु सेचने । पृष्ठम् । गूथम् । यु मिश्रणे । यूथम् । प्रोथः ॥**

सुबो०—निशीथादयः । थक्प्रत्ययान्ता निपात्यंते । शीङ् स्वप्ने । निशीथः । "निशीथस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रके ।" इति मेदिनी । तॄ प्लवनसंतरणयोः । ऋत इरितीर् ध्वोर्विहसे इति दीर्घः । तीर्थम् । "तीर्थं साध्वक्षरक्षेत्रोपायोपाध्यायमंत्रिषु । अवतारर्षिजुष्टांभःस्त्रीरजःसु च विश्रुतम् ॥" इति विश्वः । रिचिर् विरेचने । चोः कुरिति कः । रिक्थम् । "रिक्थमृक्थं धनं वसु" इत्यमरः । षिचिर् क्षरणे । सिक्थम् । "सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम् ।" इति मेदिनी । पृष सेचने । पृष्ठम् । "पृष्ठं तु चरमं तनोः" इत्यमरः। "पृष्ठं चरममात्रेऽपि देहस्यावयवांतरे ।" इति मेदिनी । स्तोत्रविशेषेऽपि पृष्ठः । पृष्ठैः स्तूयते इत्यादौ तथा निर्णयात् । गु पुरीषोत्सर्गे । निपातनाद्दीर्घः । गूथं विष्ठा । यु मिश्रणे । निपातनाद्दीर्घः । यूथम् । "यूथं तिर्यक्समूहेऽपि वृंदमात्रेऽपि भाषितम् ।" इति विश्वः । "यूथं तदग्रसरगर्वितकृष्णसारम्" इति रघुः । प्रुङ् गतौ । निपातनाद्गुणः । प्रोथः । "प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु ।" इति मेदिनी । "प्रोथमस्त्री तुरंगास्ये प्रोथः प्रस्थित उच्यते ।" ॥

तत्त्व०—निशीथादय इति । रात्रावर्द्धरात्रे च निशीथः । तीर्थमिति । "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषु । अवतारर्षिजुष्टांभःस्त्रीरजस्सु च विश्रुतम् ॥" इति विश्वः । रिक्थमिति । "रिक्थमृक्थं धनं वसु" । गूथं विष्ठा । यूथं समूहः । "प्रोथमस्त्री तुरंगास्ये प्रोथः प्रस्थित उच्यते ।" ॥

**स्फायादेरक् ॥ ८७२ ॥** स्फारः । तंचू संकोचने । तक्रम् । वंचु । वक्रः । शक्रः । क्षिप्रः । क्षुद्रः । चक्रम् । चदि । चन्द्रः । उन्दी । उन्द्रः । श्विता । श्वित्रम् । वृत्रः । वीरः । नीरम् । छिद्रम् । उस्रा । शुभ्रम् ॥

सुबो०–स्फायादेरक् । रक्प्रत्ययमाह । कित्त्वाद्गुणो न । स्फायी वृद्धौ ईवत्योरितीण्न । यवयोर्वसे इति यलोपः । स्फारः । " स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे । " इति मेदिनी । तंचू संकोचने । न्यंक्वादित्वात्कुत्वम् । नो लोप इति नोलोपः । तक्रम् । " तक्रं ह्युदश्विन्मथितं पादांब्वर्द्धांबु निर्जलम् । " इत्यमरः । वंचु प्रलंभने । वक्रः । " वक्रः स्यात्कुटिले क्रूरे पुटभेदे शनैश्चरे । " इति विश्वः । शक्ल शक्तौ । शक्रः । " शक्रः पुमान्देवराजे कुटजार्जुनभूरुहोः।" इति मेदिनी । क्षिप प्रेरणे । क्षिप्रः । क्षुदिर् संपेषणे । क्षुद्रः । " क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् । " इति मेदिनी । चदि आह्लादने । इदित इति नलोपाभावः । चंद्रः । पचाद्यप्रत्यये चन्दोऽपि । " हिमांशुश्चंद्रमाश्चंद्रः, शशी चंदो हिमद्युतिः " इति शब्दार्णवः । उन्दी क्लेदने । उन्द्रः जलमार्जारः । श्विता वर्णे । श्वित्रं कुष्ठम् । वृतु वर्तने । वृत्रः । " वृत्रो रिपौ ध्वनौ ध्वांते शैले चक्रे च दानवे । " इति विश्वः । अज गतिक्षेपणयोः । अजेर्वीरिति वीरादेशः । वीरः । णीञ् प्रापणे । नीरम् । छिदिर् द्वैधीकरणे । छिद्रः । वस निवासे । यजामिति संप्रसारणम् । घसादेः षः इति षत्वे प्राप्ते निषेधमाह । रपिसृपिसृजिस्पृशिस्पृहिसवनादीनां सस्य षत्वं नेति । उस्रः । " उस्रो वृषे च किरणे उस्रा धेनुपवित्रयोः । " इति मेदिनी । " माहेयी सौरभेयी गौरुस्रा माता च शृंगिणी । " इत्यमरः । शुभ दीप्तौ । शुभ्रम् । " शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिषु । " इति मेदिनी ॥

तत्त्व०–स्फायादेरिति । उन्द्रो जलचरः । श्वित्र कुष्ठम् । उस्रो रश्मिः। उस्रा गौः ॥

**अमितम्योर्दीर्घश्च ॥ ८७३ ॥** आम्रः । ताम्रम् ॥

सुबो०–अमितम्योर्दीर्घश्च । आभ्यां रक् स्यादुपधाया दीर्घश्च । अम गत्यादौ। आम्रः । " आम्रश्चूतो रसालोऽसौ " इत्यमरः । तमु कांक्षायाम् । ताम्रम् ॥

**निद्रादयः ॥ ८७४ ॥** णिदि । निद्रा । अर्द । आर्द्रम् । शुच् । शूद्रः । दुःखेनेयते । दूरम् । कृती । कृच्छ्रम् । क्रूरः । रोदयतीति रुद्रः । ज्या वयोहानौ । जीरः ॥

सुबो०–निद्रादयः । रक्प्रत्ययांता निपात्यंते । णिदि कुत्सायाम् । नलोपो निपातनात् । निद्रा । " स्यान्निद्रा शयनं स्वापः " इत्यमरः । अर्द गतौ । अर्द-

दीर्घो निपातनात् । आर्द्रा । " आर्द्रा नक्षत्रभेदे स्यात् स्त्रियां क्लिन्नेऽभिधेयवत् । " इति मेदिनी । शुच शोके । चस्य दो धातोर्दीर्घश्च निपात्यते । शूद्रः । इण् गतौ । दुःपूर्वः धातोर्लोपो निपातनात् । रिलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ । दुःखेनेयते प्राप्यते इति दूरम् । कृती छेदने । कृतेः कृच्छ्र इत्येतावादेशौ निपातनात् । कृच्छ्रम् । " कृच्छ्रमाख्यातमाभीले पापसंतापयोरपि । " इति विश्वः । " स्यात्कष्टं कृच्छ्रमाभीलम् " इत्यमरः । क्रूरः । " क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवत् । " इति विश्वः । " नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वंचकः । " इत्यमरः । रुदिर् अश्रुविमोचने । ण्यंतः । रोदयतीति णेरिति णिलोपः । रुद्रः । जु गतौ । ईकारो निपातनात् । जीरः । ज्या वयोहानौ । अस्माद्रक्प्रत्यये ग्रहामिति संप्रसारणे च कृते जीर इत्येके । " जीरः खड्गे वणिग्द्रव्ये " इति विश्वः । " जीरस्तु जरणे खड्गे " इति मेदिनी ॥

स्वादेः क्रः ॥ ८७५ ॥ सुरः । षूङ् प्राणिप्रसवे । सूरः । धीरः । गृध्रः ॥

सुबो०—स्वादेः क्रः । क्रप्रत्ययमाह । कित्वान्न गुणः । षुञ् अभिषवे । सुरः । " सुरा चषकमद्ययोः । पुँल्लिंगस्त्रिदिवेशे स्यात् " इति मेदिनी । " सुरो देवे सुरा मद्ये चषकेऽपि सुरा क्वचित् । " इति विश्वः । षूङ् प्राणिगर्भविमोचने । सावयति प्रेरयति कर्माणि लोकमिति सूरः । " सूरसूर्यार्यमादित्य० " इत्यमरः । डुधाञ् धारणादौ । अपिद्धाधेतीत्वम् । धीरः । " धीरो धैर्य्यान्विते स्वैरे बुधे क्लीबं तु कुंकुमे । स्त्रियां श्रवणशब्दकुल्याम् " इति मेदिनी । गृधु अभिकांक्षायाम् । गृध्रः । " गृध्रः खगांतरे पुंसि वाच्यलिंगोऽथ लुब्धके । " इति मेदिनी ॥

शूरादयः ॥ ८७६ ॥ शु सौत्रः । शूरः । षिञ् । सीरः । चिञ् । चीरम् ॥

सुबो०—शूरादयः । क्रप्रत्ययांता निपात्यंते । शु गतौ । निपातनाद्दीर्घः सर्वत्र । शूरः । " शूरः स्यात्पादपे भटे " इति मेदिनी । " शूरश्चारुभटे सूर्य्ये " इति विश्वहेमचंद्रौ । षिञ् बंधने । सीरः । " सीरोऽर्कहलयोः पुंसि " इति मेदिनी । चिञ् चयने । चीरम् । " चीरी झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनयोः " इति मेदिनी । " चीरं तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च । चीरा कृच्छ्राटिकाझिल्ल्योः " इति विश्वः ॥

वा विन्धेः ॥ ८७७ ॥ वीध्रम् । वृधु । वर्ध्रम् । वध्रः । इन्द्रः ।
अगि गतौ । अग्रम् । वज्रम् । डुवप् । विप्रः । उच समवाये । उग्रः ।
ञिभी भये । भेरी । शुच शोके । शुक्रः । शुक्लः । गुङ् गतौ । गौरः ।
इण् । इरा । माला ॥

सुबो०—वा विधेः। ञिइंधी दीप्तौ। विपूर्वादस्मात् क्रन् स्यात्। नोलोपः इति नलोपः। वीध्रम्। " वीध्रं तु विमलार्थकम् " इत्यमरः। वृधु वृद्धौ। वर्ध्रं चर्म। टुवप् बीजतंतुसंताने। वप्रः प्राकारः। " वप्रः पितरि केदारे वप्रः प्राकाररोधसोः।" इति धरणिः। इदि परमैश्वर्य्ये। इंद्रः। "इंद्रः शचीपतीवंतरात्मन्यादित्ययोगयोः।" इति विश्वः। अगि गतौ। नलोपो निपात्यते। अग्रम्। " अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलंबने समूहे च प्रांतरे पुंनपुंसकम्॥ अधिके च प्रधाने च प्रथमे चाभिधेयवत्। " इति मेदिनी। वज गतौ। वज्रः। " वज्रोऽस्त्री हीरके पवौ। " टुवप् बीजतंतुसंताने। उपधाया इत्वं निपातनात्। विप्रः। उच समवाये। चस्य गो निपातनात्। उग्रः। " उग्रः शूद्रासुते क्षत्राद् रुद्रे पुंसि त्रिपूत्कटे।" इति मेदिनी। ञिभी भये। नंदादित्वादीप्। भेरी। "भेरी स्त्री दुंदुभिः पुमान्" इत्यमरः। पक्षे रस्य लत्वं निपात्यते। भेलः। " भेलः प्लवमणौ पुंसि भीरावज्ञे च वाच्यवत्।" इति मेदिनी। शुच शोके। को निपातनात्। शुक्रः। "शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान्। रेतोऽक्षिरुग्भिदोः क्लीबम्" इति। पक्षे लत्वं निपात्यते। शुक्लः। " शुक्लो योगांतरे सिते। नपुंसकं तु रजते " इति च मेदिनी। गुङ् अव्यक्ते शब्दे। वृद्धिर्निपातनात्। गौरः। " गौरः पीतेऽरुणे श्वेते विशुद्धेऽप्यभिधेयवत्। ना श्वेतसर्षपे चंद्रे न द्वयोः पद्मकेशरे॥ गौरी त्वसंजातरजःकन्याशंकरभार्य्ययोः। रोचने रजनीपिंगाप्रियंगुवसुधासु च॥ आपगाया विशेषेऽपि यादसांपतियोषिति। " इति मेदिनी। " गौरोऽरुणे सिते पीते " इति विश्वः। इण् गतौ। इणो गुणाभावो निपातनात्। इरा। "इरा मद्ये च वारिणि" इति विश्वः मा माने। प्रत्ययरस्य लत्वं निपातनात्। माला। " मालं क्षेत्रे स्त्रियां पृक्का स्रजो जात्यंतरे पुमान्। " इति मेदिनी। " मालं क्षेत्रे जने मालो माला पुष्पादिदामनी " इति विश्वः। " मालमुन्नतभूतलम् " इत्युत्पले। " क्षेत्रमारुह्य मालम्" इति मेघदूतः॥

क्वुश्शिल्पिसंज्ञयोः॥ ८७८॥ रजकः। चष् भक्षणे। चषकम्। कुह विस्मापने। कुहकम्॥

सुबो०—क्वुश्शिल्पिसंज्ञयोः। शिल्पिन्यभिधेयसंज्ञायां गम्यमानायां च क्वुः स्यात्। क्वुप्रत्ययमाह। कित्त्वान्न गुणः। युवोरित्यकादेशः। रंज रागे। नो लोप इति नलोपः। रजकः। " रजको धावकशुकौ " इति हैमः। " रजको धावके शुके " इति विश्वः। चष भक्षणे। संज्ञायां तु। चषकः। " चषकोऽस्त्री पानपात्रम् " इत्यमरः। कुह विस्मापने। कुहकः दांभिकः। कृती छेदने। कृतकः॥

मुषेः किक्कोर्दीर्घश्च॥ ८७९॥ मूषिकः॥

सुबो०–मुषेः किकोर्दीर्घश्च । मुष स्तेये । अस्मात्किकः । किकप्रत्ययमाह । कित्त्वान्न गुणः । मूषिकः आखुः ॥

**क्रिय इकः ॥ ८८० ॥ क्रयिकः ॥**

सुबो०–क्रिय इकः । इकप्रत्ययमाह । डुक्रीञ् द्रव्यविनिमये । क्रयिकः क्रेता ॥

**श्यास्त्याहृञादिभ्य इनः ॥ ८८१ ॥ श्येनः । स्त्येनः । हरिणः ॥**

सुबो०–श्यास्त्याहृञादिभ्य इनः । इनप्रत्ययमाह । श्यैङ् गतौ । संध्यक्षराणामित्यात्वम् । श्येनः । " श्येनः पत्त्रिणि पांडुरे " इति मेदिनी । स्त्यै ष्ट्यै शब्दसंघातयोः । स्त्येनः चौरः । हृञ् हरणे । हरिणः । " हरिणः पुंसि सारंगे विशदे त्वभिधेयवत् । हरिणी हरितायां च गणिकावृक्षभेदयोः ॥ सुवर्णप्रतिमायां च " इति मेदिनी । अव रक्षणादौ । अविनः अध्वर्युः ॥

**वृजादेः किनः ॥ ८८२ ॥ वृजिनम् ॥**

सुबो०–वृजादेः किनः । किनप्रत्ययमाह । कित्त्वान्न गुणः । वृजी वर्ज्जने । वृजिनम् । " वृजिनं कल्मषे क्लीबं केशे ना कुटिलेऽन्यवत् ।" इति मेदिनी ॥

**अजेर्विनः ॥ ८८३ ॥ अजिनम् । कठ कृच्छ्रजीवने । कठिनम् । नल गन्धे । नलिनम् । कुडि दाहे । कुण्डिनम् । दो । दिनम् ॥**

सुबो०–अजेर्विनः । किनप्रत्यये विभावो न स्यात् । अज गत्यादौ । अजिनम् । " अजिनं चर्म कृत्तिः स्त्री " इत्यमरः । कठ कृच्छ्रजीवने । कठिनः । " कठिनमपि निष्ठुरे स्यात्स्तब्धे तु त्रिषु नपुंसकं स्थाल्याम् । कठिनी खटिकायामपि कठिना गुडशर्करायां च ॥ " इति मेदिनी । नल गंधने । नलिनं पद्मम् । मल धारणे । मलिनम् । " मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति । " इति मेदिनी । कुडि दाहे । कुंडिनं नगरम् । कुंडिन ऋषिः । दो अवखंडने । संध्यक्षराणामित्यात्वे आतोऽनपीत्यालोपः । दिनम् ॥

**द्रुदक्षिभ्यामिनः॥८८४॥ द्रविणम् । दक्ष वृद्धौ । दक्षिणः। दक्षिणा ॥**

सुबो०–द्रुदक्षिभ्यामिनः । द्रु गतौ । द्रविणः । " द्रविणं न द्वयोर्वित्ते कांचने च पराक्रमे ।" इति मेदिनी । दक्ष वृद्धौ । दक्षिणः । " दक्षिणस्तु परच्छंदानुवर्तिनि । "दक्षेऽपसव्ये सरले प्राचीनेत्यथ दक्षिणा। दिक्प्रतिष्ठा यज्ञदानम् " इति हेमचंद्रः। " दक्षिणः सरलोदारपरच्छंदानुवर्तिषु । वाच्यवद्दक्षिणावाची यज्ञदानप्रतिष्ठयोः॥ " इति विश्वः ॥

**अर्तेः किदिर् च ॥ ८८५ ॥ इरिणम् ॥**

सुबो०—अर्त्तेः किदिर् च । ऋ गतौ । अस्मादिनः प्रत्ययः स्यात् धातोरिरादेशश्च । इरिणम् । " इरिणं शून्यमूषरम् " इत्यमरः ॥

**वेपितुह्योर्ह्रस्वश्च ॥ ८८६ ॥ विपिनम् । तुहिनम् ॥**

सुबो०—वेपितुह्योर्ह्रस्वश्च । आभ्यामिनप्रत्ययः स्यात् धातोर्ह्रस्वश्च । टुवेपृ कंपने । विपिनम् । " अटव्यरण्यं विपिनम् " इत्यमरः । तुहिर् अर्दने । उपधाया गुणे कृते ह्रस्वः । तुहिनं हिमम् ॥

**तलिपुलिभ्यां च ॥८८७॥ तल प्रतिष्ठायाम् । तलिनम् । पुलिनम् ॥**

सुबो०—तलिपुलिभ्यां च । इनप्रत्ययः स्यात् । तल प्रतिष्ठायाम् । तलिनम् । " तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु । " पुल महत्त्वे । पुलिनम् ॥

**रुहेश्च ॥ ८८८ ॥ रोहिणः ॥**

सुबो०—रुहेश्च । इनप्रत्ययः स्यात् । रुह बीजजन्मनि । रोहिणः चंदनतरुः ॥

**आप्नोतेः क्विप् ह्रस्वश्च ॥ ८८९ ॥ आपः । अद्भिः ॥**

सुबो०—आप्नोतेः क्विप् ह्रस्वश्च । आप्लृ व्याप्तौ । अस्मात्क्विप्धातोर्ह्रस्वश्च । क्विप्प्रत्ययमाह । न्सम्महतो धौ दीर्घः । आपः । भिदपामिति दत्वम् । अद्भिः ॥

**ग्लानुदिभ्यां डौः ॥ ८९० ॥ ग्लौः । नौः ॥**

सुबो०—ग्लानुदिभ्यां डौः । डौप्रत्ययमाह । डित्वाट्टिलोपः । ग्लै हर्षक्षये । ग्लौः । " ग्लौर्मृगांकः कलानिधिः " इत्यमरः । नुदि प्रेरणे । नौः । " स्त्रियां नौस्तरणिस्तरिः " इत्यमरः ॥

**रातेर्डैः ॥ ८९१ ॥ राः । रायौ ॥**

सुबो०—रातेर्डैः । डैप्रत्ययमाह । डित्वाट्टिलोपः । रा दाने । रैस्भि इत्यात्वम् । राः । " रः स्मृतः पावकस्तीक्ष्णा राः पुंसि स्वर्णवित्तयोः । " इति मेदिनी । " रस्तीक्ष्णे दहने रास्तु सुवर्णे जलदे धने । " इति हैमः ॥

**गमेर्डोः ॥ ८९२ ॥ गौः ॥**

सुबो०—गमेर्डोः । डोप्रत्ययमाह । डित्वाट्टिलोपः। गम्लृ गतौ । औरौरित्योः । गौः । " गौर्नादित्ये बलीवर्दे किरणे ऋतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ॥ नृस्त्रियोः स्वर्गवज्रांबुरश्मिदृग्बाणलोमसु । " इति केशवः । " गौः स्वर्गे वृषभे रश्मौ वज्रे चंद्रे पुमान् भवेत् । अर्जुने नेत्रदिग्बाणभूर्वाग्वारिषु गौर्मता ॥ " इत्यमरः ॥

तत्त्व०—गमेरोरिति । गौरिति । " गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ॥ नृस्त्रियोः स्वर्गवज्रांबुरश्मिदृग्बाणलोमसु । " ॥

**भ्रमेर्डूः ॥ ८९३ ॥ भ्रूः ॥**

सुबो०—भ्रमेर्डूः । डूप्रत्ययमाह । डित्त्वाट्टिलोपः । भ्रमु अनवस्थाने । भ्रूः ॥

**दमेर्डोसू ॥ ८९४ ॥ दोः । दोषौ ॥**

सुबो०—दमेर्डोसू । डोसूप्रत्ययमाह । डित्त्वाट्टिलोपः । दमु उपशमे । दोषां र इति रः । दोः । " दोर्षंतस्य तथाविधस्य " इति श्रीहर्षप्रयोगात् पुंस्त्वम् । ककुदोषणी इति भाष्यप्रयोगान्नपुंसकत्वम् । " दोर्दोषा च भुजो बाहुः " इति धनंजयकोशात् । स्त्रीलिंगोऽप्ययम् ॥

**पणेरिज् आदेर्वः ॥ ८९५ ॥ वणिक् ॥**

सुबो०—पणेरिज् आदेर्वः । इज्प्रत्ययमाह । पण व्यवहारे स्तुतौ च । वणिक् । " नैगमो वणिजो वणिक् " इत्यमरः ॥

**आशेरशादेशो युप्रत्ययः ॥ ८९६ ॥ रशना ॥**

सुबो०—आशेरशादेशो युप्रत्ययः । युप्रत्ययमाह । युवोरित्यनादेशः । अशूङ् व्याप्तौ । अश् भोजने वा । रशना । " तालव्या अपि दंत्याश्च शंवसूकरशूकराः । रशनापि च जिह्वायाम् " इति विश्वः । रस आस्वादने रस शब्दे इति धातुभ्यां युप्रत्यये दंत्यसकारवानपि । " रसनस्वदने ध्वनौ । जिह्वायां तु न पुंसि स्याद्रास्नायां रसना स्त्रियाम् । " इति मेदिनी । " रसनं निःस्वने स्वादे रसना कांचिजिह्वयोः । " इति धरणिः ॥

तत्त्व०—रशनेति । कांचौ । जिह्वायां दन्त्यसकारवान् ॥

**उन्देर्नलोपश्च ॥ ८९७ ॥ ओदनः ॥**

सुबो०—उंदेर्नलोपश्च । युः स्यात् । उंदी क्लेदने । ओदनः । " ओदनं न स्त्रियां भक्ते बलायामोदिनी स्त्रियाम् । " इति मेदिनी ॥

**गमेर्गान्तादेशश्च ॥ ८९८ ॥ गगनम् । अन्येभ्योऽपि युः । स्यंदनम् । रोचनः । रंजिकृभ्यां क्युः । रजनम् । कॄ । किरणः ॥**

सुबो०—गमेर्गांतादेशश्च । युः स्यात् मस्य गश्च । गम्लृ गतौ । गगनम् । " नभोऽन्तरिक्षं गगनम् " इत्यमरः । अन्येभ्योऽपि युः । स्यंदू प्रस्रवणे । स्यंदनः । " स्यंदनं तु स्तुतौ नीरे तिनिशे ना रथे स्त्रियाम् । " इत्यमरः। रुच दीप्तौ । रोचनः। " रोचनं रक्तकह्लारे गोपित्तवरयोषितोः । रोचनं कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु ॥ " इति मेदिनी । रंजिकृभ्यां क्युः । क्युप्रत्ययमाह । कित्त्वान्न गुणः । रंज रागे । नोलोपः । रजनम् । " रजनो रागजनने रजनं रक्तचंदने । " इति मेदिनी । कॄ विक्षेपे । ऋत इरितीर् । किरणः ॥

धृषेर्धिषश्च ॥ ८८९ ॥ धिषणा । धाञश्च । निधनम् ॥

सुबो०–धृषेर्धिषश्च । धृषेर्धिष् आदेशश्च । ञिधृषा प्रागल्भ्ये । धिषणः । " धिषणस्त्रिदशाचार्ये धिषणाधिपयोषिति । " इति मेदिनी । " गीष्पतिर्धिषणो गुरुः " इत्यमरः । डुधाञ् धारणादौ । आतोऽनपीत्यालोपः । निधनम् । " निधनं स्यात्कुले नाशे " इति मेदिनी । " निधनं कुलनाशयोः " इति हैमः ॥

सरल०–धिषणेति । बुद्धौ । गुरौ तु पुंवत् ॥

पृषदादयः ॥९००॥ पृषु सेचने । पृषत् । पृषन्ति । बृह उद्यमे । बृहत् । महान् । जगत् । विपूर्वाद्धनः । वेहत् ॥

सुबो०–पृषदादयः । अतृप्रत्ययांता निपात्यंते वर्त्तमानेऽर्थे । अतृप्रत्ययमाह । ऋदित्त्वात् पुंसि ञितो नुमिति नुम् । स्त्रियां तु ङ्कित इतीप् । पृषु सेचने । निपातनात् गुणाभावः । पृषत् । पृषन्ति । बिंदुवाची पृषच्छब्दो नपुंसकमिति ध्वननाय बहुवचनांतमुदाहृतम् । " पृषन्मृगे पुमान् बिंदौ न द्वयोः पृषतोऽपि च । " इति मेदिनी । बृह वृद्धौ । बृहत् विपुलम् । " बृहती क्षुद्रवार्तिक्यां कंटकार्य्यां च वाचि च । " इति विश्वः । मह पूजायाम् । महान् । " महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्वभेदे पुमान् श्रेष्ठे वाच्यवत् " इति विश्वः । " विश्वावसोस्तु बृहती तुंबरोश्च कलावती । महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी ॥ " इति वैजयंती । " अवेक्षमाणं महतीं मुहुर्मुहुः " इति माघः । हन हिंसागत्योः । विपूर्वाद्धंतेरत्प्रत्ययो धातोष्टिलोपश्च निपातनात् । उपसर्गेकारस्यैत्वं च । विहंति गर्भमिति वेहत् । " वेहद्गर्भोपघातिनी " इत्यमरः ॥

नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृभ्रातृजामातृमातृपितृदुहितृ एते निपात्यंते तृप्रत्ययान्ताः ॥९०१॥ न पतन्त्यनेनेति नप्ता । नेष्टा । त्वेषयतीति त्वष्टा । क्षद भक्षणे । क्षत्ता । होता । पोता । प्रशास्ता । भ्राता । जायां मातीति जामाता । मान पूजायाम् । माता । पातीति पिता । दुहिता ॥

सुबो०–नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृभ्रातृजामातृमातृपितृदुहितृ एते निपात्यंते तृप्रत्ययांताः । पत्लृ पतने । तृप्रत्ययमाह । नञः प्रकृतिभावो धातोष्टेर्लोपश्च निपातनात् । सेरा इत्यात्वम् । नप्ता पौत्रो दौहित्रश्च । णीञ् प्रापणे । नयतेः षुक् गुणश्च निपातनात् ष्टुत्वम् । नेष्टा । त्विष् दीप्तौ । धातोरितोऽत् निपातनात् । त्वष्टा । " त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्ययाच्यपि । " इति मेदिनी । हु दानादनयोः । होता । पूञ् पवने । पोता । भ्राजृ दीप्तौ । भ्राजतेर्जलोपो निपा-

तनात् । भ्राता । मा माने । जायां मातीति जायाया जादेशो निपातनात् । जामाता । मान पूजायाम् । नस्य लोपो निपातनात् । माता । पा रक्षणे । पातेराकारस्येत्वं च निपात्यते । पिता । दुह प्रपूरणे । दुहेस्तृप्रत्ययस्येट् गुणाभावश्च निपातनात् । दुहिता । क्षद शकलीकरणे भक्षणे च अनुदात्तेत् । क्षत्ता । " क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे । " इति विश्वः ॥

**सावसेर्ऋः ॥ ९०२ ॥ स्वसा ॥**

सुबो०—सावसेर्ऋः । सु उपपदे असु क्षेपणे इत्यस्माद्दृप्रत्ययः स्यात् । ऋप्रत्ययमाह । स्वसा भगिनी ॥

**यतेर्वृद्धिश्च ॥ ९०३ ॥ याता ॥**

सुबो०—यतेर्वृद्धिश्च । यती प्रयत्नेऽस्माद्दृः स्यात् वृद्धिश्च । याता । " भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् । " इत्यमरः ॥

**नञि नन्देश्च ॥ ९०४ ॥ नवांदतीति ननांदा । ननंदेत्येके ॥**

सुबो०—नञि नंदेश्च । ऋः स्याद्वृद्धिश्च । टुनदि समृद्धौ । न नंदतीति कृतायामपि सेवायां रुष्यतीत्यर्थः । ननन्दा ननान्दा । वृद्धिर्वानुवर्तते इत्येके । " ननान्दा तु स्वसा पत्युर्ननन्दा नंदनी च सा । " इति शब्दार्णवः । " उषा पूषा ननान्दा च ननन्दा च प्रकीर्तिता । " इति विश्वः ॥

**दिवेर्ऋः ॥ ९०५ ॥ देवा । देवरौ ॥**

सुबो०—दिवेर्ऋः । दिवु क्रीडादौ । देवा । " स्वामिनौ देवृदेवरौ " इत्यमरः ॥

**नयतेर्डिच्च ॥ ९०६ ॥ ना । नरौ । नरः ॥**

सुबो०—नयतेर्डिच्च । ऋप्रत्ययमाह । डित्त्वाट्टिलोपः । णीञ् प्रापणे । ना । " स्युः पुमांसः पंचजनाः पुरुषाः पूरुषा नरः । " इत्यमरः ॥

**अर्त्यादेरनिः ॥ ९०७ ॥ अरणिः । सरणिः । तरणिः । धमनिः । अशनिः । अवनिः । रजनिः ॥**

सुबो०—अर्त्यादेरनिः । अनिप्रत्ययमाह । ऋ गतौ । अरणिः । " अरणिर्वह्निमंथे ना द्वयोर्निर्मंथ्यदारुणि । " इति मेदिनी । सृ गतौ । सरणिः । " सरणिः श्रेणिवर्त्मनोः " इति दंत्यादौ रभसः । शॄ हिंसायाम् । ततोऽनिः शरणिरित्येके । धृञ् धारणे । धरणिः भूमिः । धमिः सौत्रः । धमनिः शिरा । अश भोजने । अश्यते भुज्यते राज्यमिंद्रेणानयेति अशनिः । " अशनिः स्त्रीपुंसयोः स्याच्चंचलायां पवावपि । " इति मेदिनी । अव रक्षणादौ । अवनिः पृथिवी । तॄ प्लवनसंतरणयोः । तरणिः । " तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम् । " इति मेदिनी ।

कुमारी लताविशेषः । " तरणी रामतरणी कर्णिका चारुकेसरा । सहाकुमारी गंधाढ्या" इति धन्वंतरिनिघंटुः । रंज रागे । नलोपो निपातनात् । रजनिः । कृदीकारादितीपि । रजनी । " रजनी हस्तिनीरात्रिहरिद्राजतुकासु च । " इति मेदिनी ॥

**अर्च्यादेरिस् ॥ ९०८ ॥ अर्चिः । अर्चिषी । रोचिः । शोचिः । छदिः । हविः । सर्पिः ॥**

सुबो०–अर्च्यादेरिस् । इसप्रत्ययमाह । अर्च पूजायाम् । अर्चिः । " ज्वालाभासोर्न पुंस्यर्चिः " इति सांतेष्वमरः । ञ्यंतादर्चेरिमत्यये " अर्चिर्हेतिः शिखा स्त्रियाम् " इत्यमरः । शुच शोके । शोचिः । " रोचिः शोचिरुभे क्लीबे " इत्यमरः । हु दानादनयोः । हविः घृतम् । सृप्लृ गतौ । सर्पिः आज्यम् ॥

तत्त्व०–अर्चादेरिति । अर्चिर्ज्वाला । इदंतोऽपि । शोचिर्दीप्तिः ॥

**द्युतेरादेर्ज्जः ॥ ९०९ ॥ ज्योतिः ॥**

सुबो०–द्युतेरादेर्जः । इत् स्यात् दस्य जश्च । द्युत दीप्तौ । ज्योतिः । " ज्योतिरग्नौ दिवाकरे । पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः । " इति मेदिनी ॥

**बृंहेर्नलोपश्च ॥ ९१० ॥ बर्हिः ॥**

सुबो०–बृंहेर्नलोपश्च । बृह वृद्धौ अस्मादिस्प्रत्ययः स्यान्नकारस्य लोपश्च । बर्हिः । " बर्हिः स्यात्कुशशुष्मणोः " इत्यमरः ॥

**जनादेरुस् ॥ ९११ ॥ जनुः । ऋ । अरुः । चक्षेश्शित् । चक्षुः । वप् । वपुः । यज् । यजुः ॥**

सुबो०–जनादेरुस् । उस्प्रत्ययमाह । जनी प्रादुर्भावे । जनुः । " जनुर्जननजन्मानि " इत्यमरः । ऋ गतौ । अरुः । " व्रणोऽस्त्रियामीर्ममरुः क्लीबे " इत्यमरः । पॄ पालनपूरणयोः । परुः । " ग्रंथिर्ना पर्वपरुषी " इत्यमरः । टुवप् बीजतंतुसंताने । वपुः । " वपुः क्लीबं तनौ शस्ताकृतावपि " इति मेदिनी । शस्ताकृतिः प्रशस्ताकृतिरित्यर्थः । यज देवपूजादौ । यजुर्वेदः ॥

तत्त्व०–जनादेरिति । जनुर्जनन परुर्ग्रंथिः ॥

**एतेर्णित् ॥ ९१२ ॥ आयुः ॥**

सुबो०–एतेर्णित् । इण् गतावित्यस्मात् णुस् प्रत्ययः स्यात् । णित्त्वाद्वृद्धिः । वृद्धौ कृतायामायादेशः । आयुः । आयुषी ॥ इति उणादौ द्वितीयः पादः ॥ २ ॥

**धीवरादयः ष्वरप्रत्ययान्ता निपात्यंते ॥ ९१३ ॥ धीवरः । शर्वरी । निपद्वरः । पीवरः ॥**

सुबो०—धीवरादयः ष्वरप्रत्ययांता निपात्यन्ते । ष्वरप्रत्ययमाह । षित्वात् ङीप् इतीप् । डुधाञ् धारणादौ । इत्वं निपातनात् । धीवरः । " कैवर्त्ते दाशधीवरौ " इत्यमरः । शॄ हिंसायाम् । शर्वरी । " शर्वरी यामिनी स्त्रियोः " इति मेदिनी । षद्लृ विशरणादौ । निषद्वरः । " निषद्वरः स्मरे पंके निशायां तु निषद्वरी । " इति मेदिनी । पा पाने । इत्वं निपात्यते । पीवरः । अन्ये तु पीव स्थौल्ये अस्मात् ष्वरप्रत्यये यवयोर्वसे इकारे चेति वलोपे पीवर इत्याहुः । " पीवरः कच्छपे स्थूले " इति मेदिनी ॥

तत्त्व०—धीवरादय इति । शर्वरी रात्रीः । निषिद्वरस्तु जम्बाल. । निषद्वरी रात्रिः ॥

इणादेर्नक् ॥ ९१४ ॥ इनः । जिनः । दीनः । कृष्णः ॥

सुबो०—इणादेर्नक् । नक्प्रत्ययमाह । कित्वान्न गुणः । इण् गतौ । इनः । " इनः पत्यौ नृपार्कयोः " इति मेदिनी । जि जये । जिनः । " जिनोऽर्हति च बुद्धे च पुंसि स्यात्त्रिषु जित्वरे । " इति मेदिनी । दीङ् क्षये । दीनः । " दीना मूषिकयोषायां दुर्गते कातरेऽन्यवत् । " इति विश्वः । कृष् विलेखने । कृष्णः । " कृष्णः सत्यवतीपुत्रे केशवे वायसेऽर्जुने । कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति ॥ वर्णके वाच्यलिंगः स्यात् क्लीबे मरिचलोहयोः । " इति मेदिनी ॥

तत्त्व०—इणादेरिति । " इनः सूर्ये नृपे पत्यौ " ॥

बंधेर्ब्रधबुधौ च ॥ ९१५ ॥ ब्रध्नः । बुध्नः ॥

सुबो०—बंधेर्ब्रधबुधौ च । बंध बंधने । अस्मात् नक् स्यात् । धातोः स्थाने एतावादेशौ च स्याताम् । ब्रध्नः । बुध्नः । " भास्कराहस्करब्रध्नप्रभाकरदिवाकराः ।" इत्यमरः । " बुध्नो ना मूलरुद्रयोः " इति मेदिनी ॥

धादेर्नः ॥ ९१६ ॥ धानाः । पर्णम् । वस्नः । श्रोणः ॥

सुबो०—धादेर्नः । नप्रत्ययमाह । डुधाञ् धारणादौ । धानाः । "धाना भ्रष्टयवे स्त्रियाम्" इत्यमरः । "धाना भ्रष्टयवे शक्तौ धान्याकेऽभिनवोद्भिदि ।" इति विश्वः । पॄ पालनादौ । पर्णम् । " पर्णं पत्रे किंशुके ना " इति मेदिनी । वस निवासे । वस्नः । " वस्नो मूल्ये वेतने च " इति विश्वः । " वस्नस्त्वविक्रये पुंसि वेतने स्यान्नपुंसकम् । " इति मेदिनी । अविक्रये मूल्ये इत्यर्थः । श्रु श्रवणे । श्रोणः पंगुः ॥

तत्त्व०—धादेरिति । " धाना भ्रष्टयवाः स्त्रियः " । " मूल्यवेतनयोर्वस्नः " । श्रोणः पंगुः ॥

लक्षेर्न्नस्याण्मटौ ॥ ९१७ ॥ लक्षणः । लक्ष्मणः ॥

सुबो०—लक्षेर्नस्याण्मटौ । लक्ष दर्शनांकनयोः अस्माच्चुरादिण्यंतात् नः स्यात्प्रत्ययस्याड्मटागमौ च स्याताम् । लक्षणं लक्ष्मणः । " लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा ।" इति ।" लक्षणे नाम्नि चिह्ने स्यात् सौमित्रिरपि लक्ष्मणः।

लक्ष्मणा चौषधावपि रामभ्रातरि लक्ष्मणः ॥" इति विश्वः। "लक्षणं नाम्नि चिह्ने स्यात् सारस्यां लक्षणा क्वचित्। लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति॥ रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्।" इति मेदिनी ॥

तत्त्व०—"लक्षण लक्ष्मण नाम्नि चिह्ने च द्वयम्। रामभ्रातरि च। "लक्षणा हसयोषायां सारसस्य च लक्ष्मणा।" ॥

रास्नादयः ॥९१८॥ रासृ शब्दे। रास्ना। सास्ना। स्थूणा। वीणा। कृती। कृत्स्नम्। तिज। तीक्ष्णम्। श्लिषेः। श्लक्ष्णम् ॥

सुबो०—रास्नादयः। नक्प्रत्ययांता निपात्यंते। रस आस्वादने। उपधाया दीर्घो निपातनात्। रास्ना। "रास्ना तु स्याद्भुजंगाख्यामेलापर्ण्यामपि स्त्रियाम्।" इति मेदिनी। षस स्वप्ने। उपधाया दीर्घो निपातनात्। सास्ना। "सास्ना तु गलकंबलः" इति मेदिनी। ष्ठा गतिनिवृत्तौ। ऊत्वं णत्वं च निपात्यते। स्थूणा। "स्थूणा स्यात् सूर्म्यां स्तंभे गृहस्य च" इति मेदिनी। सूर्मी लोहप्रतिमा। वी गत्यादिषु। णत्वं निपातनात्। वीणा। "वीणा विद्युति वल्लक्याम्" इति मेदिनी। कृती छेदने। वक्ष्यमाणेभ्यः वस्नप्रत्ययो निपातनात्। कृत्स्नम्। तिज निशाने। धातोर्दीर्घो निपातनात्। चोः कुरिति गः। खसे चपा झसानामिति कः। षत्वणत्वे। तीक्ष्णम्। "तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके। क्लीबं यवाग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिषु ॥" इति मेदिनी। श्लिष आलिंगने। श्लिषेरिकारस्यात्वं निपातनात्। षढोरिति कत्वम्। श्लक्ष्णम् ॥

तत्त्व०—रास्नादयः। रास्ना गधद्रव्यम्। सास्ना गोगलकम्बलः। स्थूणा गृहस्तंभः ॥

मनादेर्युः ॥ ९१९ ॥ मन्युः। दस्युः। जन्युः ॥

सुबो०—मनादेर्युः। युप्रत्ययमाह। मन ज्ञाने। निपातनान्न युवोरित्यनादेशः। मन्युः। "मन्युर्दैन्ये क्रतौ क्रुधि"। दसु उपक्षये। दस्युः। "दस्युश्चौरे रिपौ पुंसि" इति मेदिनी। जनी प्रादुर्भावे। जन्युः। "अथ जन्युः स्यात्प्राण्यग्निधातृषु" इति मेदिनी ॥

तत्त्व०—मनादेरिति। "मन्युर्दैन्ये क्रतौ क्रुधि।" दस्युश्चौरः। जन्युर्देही ॥

मृङस्त्युक् ॥ ९२० ॥ मृत्युः ॥

सुबो०—मृङस्त्युक्। त्युक्प्रत्ययमाह। कित्वान्न गुणः। मृङ् प्राणत्यागे। मृत्युः। "मृत्युर्ना मरणे यमे" इति मेदिनी ॥

सर्तेरय्वयू ॥ ९२१ ॥ सरयुः सरयूः ॥

सुबो०—सर्तेरय्वयू। अयुअयूप्रत्ययावाह। सृ गतौ। सरयुः सरयूः नदी ॥

पादेः पः ॥ ९२२ ॥ पापम् ॥

सुबो०—पादेः पः। पप्रत्ययमाह। पा रक्षणे। पाति रक्षति धर्मादात्मानमिति पापम्॥

न्यादेः कित्॥ ९२३॥ नीपः। सूपः। कूङ् शब्दे। कूपः॥

सुबो०—न्यादेः कित्। पकप्रत्ययमाह। णीञ् प्रापणे। नीपः। "नीपः कदंबबंधूकनीलाशोकद्रुमेऽपि च।" इति मेदिनी। षुञ् अभिषवे। बाहुलकाद्दीर्घः। सूपः। "सूपो व्यञ्जनसूदयोः" इति मेदिनी। कुशब्दे बाहुलकाद्दीर्घः। कुवन्ति मंडूका अस्मिन्निति कूपः॥

शिल्पादयः॥९२४॥ शील। शिल्पम्। शसु। शष्पम्। बाधृ। बाष्पम्। रु। रूपम्। शु। शूर्पम्॥

सुबो०—शिल्पादयः। पक्प्रत्ययांता निपात्यंते। शील समाधौ। ह्रस्वो निपातनात्। शिल्पं कौशलम्। शसु हिंसायाम्। निपातनात्षत्वम्। शष्पम्। "शष्पं बालतृणेऽपि च। पुंसि स्यात् प्रतिभाहीने" इति मेदिनी। "शष्पं बालतृणं घासः" इत्यमरः। बाधृ विलोडने। धस्य षत्वं निपातनात्। बाष्पः। "बाष्पो नेत्रजलोष्मणोः" इति विश्वः। "बाष्पमूष्माणि चाश्रुणि" इति च। रु शब्दे। दीर्घत्वं निपातनात्। रूपम्। "रूपं स्वभावे सौंदर्ये" इति विश्वः। शॄ हिंसायाम्। निपातनादुर्। र्वोर्विहसे इति दीर्घः। शूर्पम्। "प्रस्फोटनं शूर्पमस्त्री" इत्यमरः॥

तत्त्व०—शिल्पादय इति। शिल्पं कौशलम्। शष्पं बालतृणम्। प्रतिभाक्षयश्च। बाष्पमिति। "अस्त्री नेत्रजलोष्मणोः, रूपं स्वभावे सौंदर्ये"॥

स्तनादेर्ण्यन्तादित्नुः॥ ९२५॥ स्तनयित्नुः। गदयित्नुः॥

सुबो०—स्तनादेर्ण्यंतादित्नुः। इत्नुप्रत्ययमाह। स्तन गद देवशब्दे। चुरादी ण्यंतौ। गुणे कृते अयादेशः। स्तनयित्नुः। "स्तनयित्नुः पुमान् वारिधरेऽपि स्तनितेऽपि च।" इति मेदिनी। "स्तनयित्नुः पयोवाहे तद्वृत्तौ मृगरोगयोः।" इति विश्वः। गदयित्नुः। "गदयित्नुः पुमान् कामे जल्पाके कार्मुकेऽपि च।" इति विश्वः॥

तत्त्व०—स्तनादेरिति। स्तनयित्नुः। णेरलोपः॥

दाभाभ्यां नुः॥ ९२६॥ दानुः। भानुः॥

सुबो०—दाभाभ्यां नुः। नुप्रत्ययमाह। डुदाञ् दाने। दानुः। "दानुर्दातरि विक्रांते" इति मेदिनी। भा दीप्तौ। भानुः। "भानू रश्मिदिवाकरौ" इत्यमरः॥

धेट इच्च॥ ९२७॥ धेनुः॥

सुबो०–धेट इच्च। नुः स्यात्। धातोरित्वं च। धेट् पाने। संध्यक्षराणामित्यात्वे कृते इत्वं ततो गुणः। धेनुः। " धेनुः स्यान्नवसूतिका " इत्यमरः॥

**सुवः किच्च ॥ ९२८ ॥ सूनुः ॥**

सुबो०–सुवः किच्च। नुः स्यात्। कित्त्वान्न गुणः। षूङ् प्राणिप्रसवे। सूनुः। " सूनुः पुत्रेऽनुजे रवौ " इति विश्वः॥

तत्त्व०–सूनुरिति। पुत्रेऽनुजे रवौ॥

**अजिवृभ्यां णुः ॥ ९२९ ॥ वेणुः। वर्णुः ॥**

सुबो०–अजिवृभ्यां णुः। णुप्रत्ययमाह। अज गतौ। अजेर्वीति वीः। वेणुः। " वेणुर्नृपांतरे वंशे " इति विश्वः। वृङ् संभक्तौ। वर्णुः। नददेशभेदयोः॥

**स्थारीभ्यां णुः ॥ ९३० ॥ स्थाणुः। रेणुः ॥**

सुबो०–स्थारीभ्यां णुः। ष्ठा गतिनिवृत्तौ। स्थाणुः। " स्थाणुः कीले हरे पुमान्। अस्त्री ध्रुवं " इति मेदिनी। " स्थाणुः कीले स्थिरे " इति विश्वः। री गतिरेषणयोः। रेणुः। " रेणुः स्त्रीपुंसयोर्धूलौ पुंल्लिंगः पर्पटे पुनः। " इति मेदिनी। " रेणुर्द्वयोः स्त्रियां धूलिः " इत्यमरः॥

तत्त्व०–स्थाणुरिति। कीले स्थिरे हरे। रेणुर्द्वयोः स्त्रियां धूलिः॥

**विषेः कित् ॥ ९३१ ॥ विष्णुः ॥**

सुबो०–विषेः कित्। णुप्रत्ययमाह। कित्त्वान्न गुणः। विषॢ व्याप्तौ। विष्णुः। " विष्णुर्नारायणः कृष्णः " इत्यमरः॥

**कादेः कः ॥ ९३२ ॥ कर्कः। राका। अर्कः। कल्कः। इण्। एकः। भेकः। काकः। पाकः। निहाकाः ॥**

सुबो०–कादेः कः। कप्रत्ययमाह। बाहुलकान्न कस्येत्संज्ञा। डुकृञ् करणे। कर्कः। "कर्कः कर्के तनौ वह्नौ शुक्लाश्वे दर्पणे घटे।" इति विश्वः। रा दाने। राका। " राका नद्यंतरे कच्छ्वौ नवजातरजःस्त्रियाम्। संपूर्णेन्दौ " इति मेदिनी। " राका तु सरिदंतरे। राका नवरजःकन्या पूर्णेन्दुः पूर्णिमापि च॥ " इति विश्वः। अर्च पूजायाम्। चोः कुरिति कः। अर्कः। "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे बृहस्पतौ।" इति विश्वः। कल गतौ। कल्कः। " कल्कोऽस्त्री घनतैलादिशेषे दंभे विभीतके। विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः॥ " इति मेदिनी। " कल्कः पापाशये पापे दंभे विट्किट्टयोरपि। " इति विश्वः। इण् गतौ। एकः। " एकः संख्यांतरे श्रेष्ठे केवलेतरयोस्त्रिषु। " इति मेदिनी। " एके मुख्याऽन्यकेवलाः " इति विश्वः। ञिभी भये। भेकः। " भेको मंडूकमेघयोः " इति विश्वः। कै शब्दे। काकः।

"काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः॥ काका स्यात्काकनासायां काकोलीकाकजंघयोः । रक्तिकायां मलय्वां च काकमाच्यां च योषिति ॥ काकं सुरतबंधे स्यात् काकानामपि संहतौ । " इति मेदिनी । मलयूः काकोदुंबरिका । पा पाने । पाकः। "पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च । " इति मेदिनी । ओहाकृ त्यागे । निहाका । " निहाका गोधिका समे " इत्यमरः ॥

तत्त्व०—क्रादेरिति । कर्कों धवलघोटकः। राका पूर्णिमा तिथिः । कल्कः पापाशये पापे दंभे विट्किट्टयोरपि । एके मुख्यान्यकेवलाः। भेको मंडूकमेषयोः । पाकः शिशुः । निहाका गोधिका समे ॥

नौ सदेर्डित् ॥ ९३३ ॥ निष्कः ॥

सुबो०—नौ सदेर्डित् । कन्प्रत्ययमाह । डित्त्वाट्टिलोपः । षद्लृ विशरणादौ । निष्कः । " निष्कोऽस्त्री हेम्नि तत्पले " इति विश्वः ॥

तत्त्व०—निष्कोऽस्त्री हेम्नि तत्पले ॥

शकेरुनउन्तउन्तिउनिप्रत्ययाः ॥ ९३४ ॥ शकुनः शकुन्तः । शकुन्तिः शकुनिः ॥

सुबो०—शकेः उनउंतउंतिउनिप्रत्ययाः । उनउंतउंतिउनिप्रत्ययानाह । शक्लृ शक्तौ । शकुनः शकुंतः । शकुंतिः शकुनिः । " शकुंतिपक्षिशकुनिशकुंतशकुनद्विजाः । " इत्यमरः । " शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः । शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम् ॥ " इति मेदिनी । " शकुंतः कीटभेदे स्यात् भासपक्षिविहंगयोः । " इति मेदिनी ॥

हृशाभ्यामितः ॥ ९३५ ॥ हरितः । श्येतः ॥

सुबो०—हृशाभ्यामितः । इतप्रत्ययमाह । हृञ् हरणे । हरितः । " हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत् । " इति मेदिनी । श्यैङ् गतौ । श्येतः । " शुक्लशुभ्रशुचिश्वेतविशदश्येतपांडुराः । " इत्यमरः ॥

रुहेरस्य लो वा ॥ ९३६ ॥ रोहितः । लोहितम् ॥

सुबो०—रुहेरस्य लो वा । अस्मादितः स्यात् रस्य वा लकारः। रुह बीजजन्मनि । रोहितः । लोहितः । " लोहितं कुंकुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे ॥ " इति मेदिनी । " लोहितं रक्तगोशीर्षं कुंकुमाजिकुचंदने । पुमान्नदांतरे भौमे वर्णे च त्रिषु तद्वति ॥ " इति मेदिनी ॥

श्रुवादेराप्यः ॥ ९३७ ॥ श्रवाप्यः । स्पृहयाप्यः ॥

सुबो०—श्रुवादेराप्यः । आप्यप्रत्ययमाह । श्रु श्रवणे । श्रवाप्यः । श्रवाप्यो यज्ञपशुः । स्पृह ईप्सायाम् । चुरादिरदंतः । स्पृहयाप्यः ॥

तत्त्व०—श्रवादेरिति । श्रवाप्यो यज्ञपशुः ॥

वृञ एण्यः ॥ ९३८ ॥ वरेण्यः ॥

सुबो०—वृञ एण्यः । एण्यप्रत्ययमाह । वृञ् वरणे । वरेण्यः श्रेष्ठः ॥

अर्तेरन्यः ॥ ९३९ ॥ अरण्यम् । पृषु सेचने । पृषेश्च षस्य जः । पर्जन्यः ॥

सुबो०—अर्त्तेरन्यः । अन्यप्रत्ययमाह । ऋ गतौ । अरण्यम् । " अटव्यरण्यं विपिनम् " इत्यमरः । पृषु सेचने । षस्य जः अन्यश्च स्यात् । पर्जन्यः । " पर्जन्यो मेघशब्देऽपि ध्वनदंबुदशक्रयोः । " इति मेदिनी ॥

तत्त्व०—पर्जन्य इति । पर्जन्यः शक्रमेघयोः ॥

वदेरान्यः ॥ ९४० ॥ वदान्यः ॥

सुबो०—वदेरान्यः । आन्यप्रत्ययमाह । वद व्यक्तायां वाचि । वदान्यः । "वदान्यस्त्यागिवाग्मिनोः " इत्यजयकोशः ॥

तत्त्व०—वदेरिति । वदान्यस्त्यागिवाग्मिनोः ॥

अमादेरत्रः ॥ ९४१ ॥ अमत्रम् । नक्षत्रम् । पतत्रम् । कलत्रम् । वरत्रा ॥

सुबो०—अमादेरत्रः । अत्रप्रत्ययमाह । अम गत्यादौ । अमत्रं भाजनम् । नक्ष गतौ । नक्षत्रम् । नञः प्रकृतिभावे नक्षत्रमिति साधितं तत्तु व्युत्पत्त्यंतरम् । पत्लृ पतने । पतत्रं तनूरुहम् । गड सेचने । गडेरादेश्च कः । कडत्रम् । डलयोरेकत्वस्मरणात् कलत्रम् । " कलत्रं श्रोणिभार्ययोः " इत्यमरः । वृञ् वरणे । वरत्रा । " नध्री वध्री वरत्रा च " इत्यमरः । चर्ममयी रज्जुरित्यर्थः ॥

तत्त्व०—अमादेरिति । अमत्र भाजनम् । पतत्र तनूरुहम् । वरत्रा चर्ममयी रज्जुः ॥

भ्रादेरतः ॥ ९४२ ॥ भरतः । पर्व पूर्तौ । पर्वतः ॥

सुबो०—भ्रादेरतः । अतप्रत्ययमाह । भृञ् भरणे । भरतः । " भरतः शबरे नटे । क्षेत्रे रामाऽनुजे शास्त्रे दौष्यंतावृषभात्मजे । तंतुवाये " इति हेमचंद्रः । "भरतो ना नाट्यशास्त्रे शबरे च मुनौ नटे । रामानुजे च दौष्यंतौ " इति मेदिनी । पर्व पूरणे । पर्वतः । " पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यंतरे शैले " इति मेदिनी ॥

पृषिरञ्जिभ्यां कित् ॥ ९४३ ॥ पृषतः । रजतम् ॥

सुबो०—पृषिरंजिभ्यां कित् । अतप्रत्ययमाह । कित्त्वान्न गुणः । पृषु सेचने । पृषतः । " पृषन्मृगे पुमान् बिंदौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिंद्वयुक्तेऽप्युभाविमौ ॥ " इति मेदिनी । रंज रागे । नोलोपः । रजतम् । " रजतं त्रिषु शुक्ले स्यात् क्लीबे हारे च दुर्वने । " इति मेदिनी ॥

तत्त्व०—पृषेरिति । पृषतो बिंदुमृगयोः ॥

**शपादेरथः ॥९४४॥ शपथः । शमथः । दमथः। वस । आवसथः। संवसथः ॥**

सुबो०–शपादेरथः । अथप्रत्ययमाह । शप आक्रोशे । शपथः । शमु दमु उपशमे । शमथः। दमथः । " शमथः शांतिमंत्रिणोः " इति मेदिनी । " दमथस्तु पुमान् दंडे दमे च परिकीर्तितः । " इति मेदिनी । " शमथस्तु शमः शांतिर्दांतिस्तु दमथो दमः । " इत्यमरः । वस निवासे । आवसथो गृहम् । संवसथो ग्रामः ॥

तत्त्व०–शपादेरिति । शपथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ॥

**रभादेरसः ॥ ९४५ ॥ रभसः ॥**

सुबो०–रभादेरसः। असप्रत्ययमाह । रभ राभस्ये । रभसः। "रभसो वेगहर्षयोः"॥

**वेञ आत्वाभावस्तुट् च ॥ ९४६ ॥ वेतसः ॥**

सुबो०–वेञ आत्वाभावस्तुट् च । वेञ् तंतुसंताने । अस्मात्सप्रत्यये परे आत्वाभावप्रत्ययस्य तुडागमश्च स्यात् । वेतसः ॥

**दिवेः कित् ॥ ९४७ ॥ दिवु । दिवसः ॥**

सुबो०–दिवेः कित् । कसप्रत्ययमाह । कित्वान्न गुणः । दिवु क्रीडादौ । दिवसः । " वा तु क्लीबे दिवसवासरौ " इत्यमरः ॥

**कादेरभः ॥ ९४८ ॥ कृ । करभः । शृ । शरभः । शल गतौ । शलभः । कल गतौ । कलभः । गर्द कुत्सिते शब्दे । गर्दभः ॥**

सुबो०–कादेरभः । अभप्रत्ययमाह । कृ विक्षेपे । करभः । " करभो मणिवंधादिकनिष्ठांतोष्ट्रतत्सुते।" इति मेदिनी । " मणिवंधादाकनिष्ठं करस्य करभो बहिः ।" इत्यमरः। शृ हिंसायाम् ।शरभः । " शरभस्तु पशौ सिंहे करभे वानरे सिध्यति ।" इति मेदिनी । शल गतौ । शलभः । " समौ पतंगशलभौ " इत्यमरः । कल गतौ । कलभः । "कलभः करिपोतके" । गर्द शब्दे । गर्दभः । "गर्दभः श्वेतकुमुदे गदेभोगंधभिद्यपि । रासभे गर्दभांडे च क्षुद्रजंतुरोगप्रभेदयोः ॥ " इति मेदिनी ॥

**ऋषिवृषिभ्यां कित् ॥ ९४९ ॥ ऋषभः । वृषभः ॥**

सुबो०–ऋषिवृषिभ्यां कित् । कभप्रत्ययमाह । कित्वान्न गुणः । ऋषी गतौ । ऋषभः। " ऋषभः स्यादादिजिने वृषभे भेषजे स्वरे । कर्णरंध्रे कोलपुच्छे श्रेष्ठे चाप्युत्तरे स्थितः ॥ ऋषभी शूकशिंब्यां स्यात् पुरुषाकारयोषिति । विधवायां शिरालायाम्" इति हेमचंद्रः। "ऋषभस्त्वौषधांतरे । स्वरवृषभयोः कर्णरंध्रे गर्दभपुच्छयोः ॥ उत्तरस्थः स्मृतः श्रेष्ठे स्त्रीनराकारयोषिति । शूकशिंब्यां शिरालायां विधवायां क्वचिन्मता ॥" इति मेदिनी । वृषु सेचने । वृषभः। "वृषभः श्रेष्ठवृषयोः"॥

**रासवल्लिभ्यां च ॥ ९५० ॥** रासृ शब्दे । रासभः । वल वल्ल संवरणे । वल्लभः ॥

सुबो०—रासवल्लिभ्यां च । अभः स्यात् । रासृ शब्दे । रासभः । वल्ल संवरणे । वल्लभः । " वल्लभो दयितेऽध्यक्षे सलक्षणतुरंगमे । " इति मेदिनी ॥

**विशादेरन्तः ॥ ९५१ ॥** वेशन्तः । वसन्तः । जयन्तः ॥

सुबो०—विशादेरंतः । अंतप्रत्ययमाह । विश प्रवेशने । वेशंतः । " वेशंतः पल्वलं चाल्पसरः " इत्यमरः । वस निवासे । वसंतः ऋतुः । जि जये । जयंतः । " जयंतः पाकशासनिः " इत्यमरः ॥

तत्त्व०—विशादेरिति । वेशन्तः पल्वलम् । जयंतः शक्रपुत्रः ॥

**हन्तेर्हिंमुट् च ॥ ९५२ ॥** हेमन्तः ॥

सुबो०—हंतेर्हिंमुट् च । हन हिंसागत्योः । अस्य हिरादेशोंतप्रत्ययश्च प्रत्ययस्य मुडागमश्च स्यात् । हेमंतः । बाहुलकादन्येभ्योऽप्यंतः । अर्ह पूजायाम् । अर्हंतः । " अर्हंतः क्षपणको जिनः " इति विक्रमादित्यकोशः ॥

**अर्त्यादेररः ॥ ९५३ ॥** अररम् । भ्रमरः । चमरः । देवरः । वासृ शब्दे । वासरः ॥

सुबो०—अर्त्यादेररः । अरप्रत्ययमाह । ऋ गतौ । अररम् । " अररं छदकपाटयोः " इति मेदिनी । " कपाटमररं तुल्ये " इत्यमरः । भ्रमु अनवस्थाने । भ्रमरः । " भ्रमरः कामुके भृंगे " इति मेदिनी । चमु अदने । चमरः । " चमरं चामरे स्त्री तु मंजरीमृगभेदयोः । " इति मेदिनी । दिवु क्रीडादौ । ण्यंतः । देवयतीति देवरः । पत्युः कनिष्ठभ्राता । वस निवासे । ण्यंतः । वासयतीति वासरो दिवसः ॥

तत्त्व०—अर्त्यादेरिति । अरर कपाटम् ॥

**कुवः कित् ॥ ९५४ ॥** कुररः ॥

सुबो०—कुवः कित् । करप्रत्ययमाह । कित्त्वान्न गुणः । कु शब्दे । कुररः । " उत्क्रोशकुररौ समौ " इत्यमरः ॥

**अंग्यादेरारः ॥ ९५५ ॥** अंगारः । मन्दारः ॥

सुबो०—अंग्यादेरारः । आरप्रत्ययमाह । अगि गतौ । अंगारः । " अंगारमुल्मुके न स्त्री पुंल्लिंगस्तु महीसुते । " इति मेदिनी । मदि स्तुत्यादौ । मन्दारः । बाहुलकादारुप्रत्ययोऽपि । मंदारुः । " पारिभद्रे तु मंदारुर्मंदारः पारिजातके । " इति शब्दार्णवः । " मंदारुः स्यात्सुरद्रुमे । पारिभद्रेऽर्कपर्णे च " इति विश्वः ॥

**गडेः कड च ॥ ९५६ ॥** गड आसेचने । कडारः ॥

सुबो०—गडेः कड् च । गाडि वदनैकदेशे गड सेचने वा । अस्य कडादेशः आरप्रत्ययश्च स्यात् । कडारः । " कडारः कपिलः पिंगः " इत्यमरः । " कडारः कपिले दासे " इति मेदिनी ॥

**शृंगारादयः ॥ ९५७ ॥ शृंगारः । भृंगारः । मृजूष् । मार्जारः । कमु । कुमारः । तुषारः । कासारः ॥**

सुबो०—शृंगारादयः । आरप्रत्ययांता निपात्यंते । शॄ हिंसायाम् । नुम् गुक् ह्रस्वश्च निपात्यते । शृंगारः । " शृंगारः सुरते नाट्यरसे च गजमण्डने । नपुंसकं लवंगेऽपि नागसंभवचूर्णयोः ॥ " इति मेदिनी । भृञ् भरणे । नुम् गुक् ह्रस्वश्च निपात्यते । भृंगारः । " भृंगारः कनकालुका । भृंगारी झिल्लिकायां स्यात् कनकालौ पुनः पुमान् ॥ " इति च । मृजूष् शुद्धौ । मृजेर्वृद्धिरिति वृद्धिः । मार्जारः । " ओतुर्विडालो मार्जारः " इत्यमरः । " मार्जार ओतौ खट्वांगे " इति मेदिनी । कमु कांतौ । उपधायाः उत्वं गुणाभावश्च निपातनात् । कुमारः । " कुमारः स्यात् शुके स्कंदे युवराजेऽश्ववारके । बालके वरुणाद्रौ ना न द्वयोर्जात्यकांचने ॥ कुमारी शैलतनयावनमाल्योर्नदीभिदि । सहाऽपराजिताकन्याजंबुद्वीपेषु च स्त्रियाम् ॥ " इति मेदिनी । तुष् तुष्टौ । तुषारः । " तुषारस्तुहिनं हिमम् " इत्यमरः । कासृ शब्दकुत्सायाम् । कासारः । " कासारः सरसी सरः " इत्यमरः ॥

तत्त्व०—भृंगार इति । भृंगार कनकालुका ॥

**सर्तेरपः षुक् च ॥ ९५८ ॥ सर्षपः ॥**

सुबो०—सर्त्तेरपः षुक् च । सृ गतौ अस्मादपप्रत्ययः स्यात् धातोः षुगागमश्च । अपप्रत्ययमाह । सर्षपः ॥

**विटपादयः ॥९५९॥ विट शब्दे । विटपः । विष्टपम् । कुणपम् । वल संवरणे । उलपम् ॥**

सुबो०—विटपादयः । कपप्रत्ययांता निपात्यंते । कित्वान्न गुणः । विट् शब्दे । विटपः । " विटपो न स्त्रियां स्तंबे शाखाविस्तारपल्लवे । विटाधिपे ना " इति मेदिनी । विश प्रवेशने । विशतेः प्रत्ययस्य तुडागमो निपात्यते । व्रश्चेति षत्वं ष्टुत्वम् । विष्टपम् । " विष्टपं भुवनं जगत् " इत्यमरः । कण शब्दे । वस्योत्वं निपातनात् । कुणपम् । " कुणपः पूतिगंधे शवेऽपि चेत् " इति मेदिनी । " कुणपः शवमस्त्रियाम् " इत्यमरः । वल संवरणे । वस्योत्वं निपातनात् । उलपम् । " उलपो न स्त्री गुल्मिन्यामुलपो ना तृणांतरे । " इति मेदिनी ॥

तत्त्व०—उलप इति । कोमलं तृणम् ॥

**वृतादेस्तिकः ॥ ९६० ॥ वर्तिका ॥**

सुबो०—वृतादेस्तिकः । तिकप्रत्ययमाह । वृतु वर्तने । वर्तिका ॥

**कृतः कित् ॥ ९६१ ॥ कृत्तिका ॥**

सुबो०—कृतः कित् । कृती छेदने इत्यादिभ्यः तिकक् स्यात् कित्त्वान्न गुणः । कृत्तिका । भिदिर् विदारणे । भित्तिका । भित्तिः । लतु सौत्रो धातुः । लत्तिका गोधा ॥

**इष्यशिभ्यान्तकः ॥ ९६२ ॥ इष्टका । अष्टका ॥**

सुबो०—इष्यशिभ्यां तकः । तकप्रत्ययमाह । इषु इच्छायाम् । ष्टुत्वम् । इष्टका । अशूङ् व्याप्तौ छशषेति षत्वम् । अष्टका ॥

**वीपतिभ्यां तनः ॥ ९६३ ॥ वेतनम् । पत्तनम् ॥**

सुबो०—वीपतिभ्यां तनः । तनप्रत्ययमाह । वी गत्यादौ । वेतनम् । पत्लृ पतने । पत्तनम् । " पत्तनं पुटभेदनम् " इत्यमरः ॥

**अर्त्यादेर्भः ॥ ९६४ ॥ अर्भः । दृ भये । दर्भः । गर्भः ॥**

सुबो०—अर्त्यादेर्भः । भप्रत्ययमाह । ऋ गतौ । इयर्तीति अर्भः शिशुः । कप्रत्यये । अर्भकः । दॄ विदारणे । दर्भः । गॄ निगरणे । गर्भः । " गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकंटके । " इति मेदिनी ॥

**इणः कित् ॥ ९६५ ॥ इभः ॥**

सुबो०—इणः कित् । कभः स्यात् । कित्त्वान्न गुणः । इणू गतौ । इभः । " इभः स्तंबेरमः पद्मी " इत्यमरः ॥

**असिसंजिभ्यां क्थिः ॥ ९६६ ॥ अस्थि । सक्थि ॥**

सुबो०—असिसंजिभ्यां क्थिः । क्थिप्रत्ययमाह । कित्त्वान्न गुणः । असु क्षेपणे । अस्थि । " कीकसं कुल्यमस्थि च " इत्यमरः । षंज् संगे । चोः कुरिति जस्य गः । खसे चपा इति कः । नलोप इति नलोपः । सक्थि । " सक्थि क्लीबे पुमानूरुः " इत्यमरः ॥

**शुपादेः क्सिः ॥ ९६७ ॥ शुक्षिः । कुष निष्कर्षे । कुक्षिः । अशू । अक्षि ॥**

सुबो०—शुपादेः क्सिः । क्सिप्रत्ययमाह । कित्त्वान्न गुणः । शुष् शोषणे । षढोरिति कः । षत्वम् । शुक्षिः वातः । कुष दाहे । कुक्षिः । अशूङ् व्याप्तौ । छशषेति षत्वे कत्वं च । आक्षि नयनम् ॥

तत्त्व०—शुक्षिरिति । वातः शुक्षिः ॥

**इषः क्सुः ॥ ९६८ ॥ इक्षुः ॥**

सुबो०—इषः क्सुः । क्सुप्रत्ययमाह । कित्त्वान्न गुणः । इषु इच्छायाम् । कत्वे षत्वे इक्षुः । "रसाल इक्षुः" इत्यमरः ॥

अवितॄस्तॄतन्त्रिभ्य ईः ॥९६९॥ अवीः । तरीः । स्तरीर्धूमः । तंत्रीः ॥

सुबो०—अवितॄस्तॄतंत्रिभ्य ईः । ईप्रत्ययमाह । अव रक्षणादौ । अवीः । "अवीर्नारी रजस्वला" । तॄ प्लवनतरणयोः । तरीः । "स्त्रियां नौस्तरणिस्तरिः" इत्यमरः । स्तृञ् आच्छादने । स्तरीः धूमः । तात्रि कुटुंबधारणे चुरादिः । तंत्रयतीति णेरिति णिलोपः । तंत्रीर्वीणा ॥

तत्त्व०—अवि । अवीरिति । अवति गर्भमवीः अवी स्त्री गर्भिणी विदुः । तरी नौः । स्तरीः शयनं धूम इति च ॥

लक्षेरीमुट् च ॥ ९७० ॥ लक्ष्मीः ॥ इति तृतीयः पादः ॥ ३ ॥

सुबो०—लक्षेरीमुट् च । लक्ष दर्शनांकनयोः । चुरादिः अस्मादीप्रत्ययः स्यात् प्रत्ययस्य मुडागमश्च । णेरिति णिलोपः । लक्ष्मीः । "लक्ष्मीः संपत्तिशोभयोः । ऋद्धचौषधौ च पद्मायाम्" इति मेदिनी । दीर्घादपि कृदिकारादिति पाक्षिक ङीप् कैश्चिदिष्यते अत एव वातप्रमीश्रीलक्ष्मीत्यादिशब्दाः पक्षे ईवंता अपि । "आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रिया ।" इति द्विरूपकोशः ॥ इति उणादौ तृतीयः पादः संपूर्णतामगमत् ॥ ३ ॥

वातप्रम्यादयः ॥ ९७१ ॥ वातप्रमीः । यांत्यनेनेति ययीः । पा रक्षणे । पपीः ॥

सुबो०—वातप्रम्यादयः । कीप्रत्ययांता निपात्यंते । कस्येत्संज्ञा । माङ् माने । आतोऽनपीत्यालोपः । वातं प्रमिमीते इति वातप्रमीः । "वातप्रमीर्वातमृगः" इत्यमरः । अयं स्त्रीपुंसयोः । या प्रापणे । ययीरश्वः । पा रक्षणे । पपीः । निपातनादुभयत्र द्वित्वम् । "पपीः स्यात्सोमसूर्ययोः" इति विश्वः ॥

तत्त्व०—वातप्रम्यादय इति । ययीरश्वः । पपीः स्यात्सोमसूर्ययोः ॥

रत्न्यादयः ॥ ९७२ ॥ ऋ । रत्निः । अंजु । अञ्जलिः । मदी । मत्स्यः । अत् । अतिथिः । अगि । अंगुलिः । कु । कवसः । कौतेः । कवचः । यु । यवासः । कृश् । कृशानुः ॥

सुबो०—रत्न्यादयः । निपात्यंते । ऋ अञ्जू मदी अत् अगि कु यु कृशिभ्योऽष्टभ्यः क्र त्नि आलि स्य इथि उलि अच आस आनुक्प्रत्यया यथासंख्यमष्टौ भवंति । ऋ गतौ । कत्निः । कित्त्वान्न गुणः । रत्नं रत्निः । "बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृतांगुलिः ।" अरत्निरत्र नञ्समासः । प्रसृतांगुलिर्यो हस्तः

सोऽरत्निरित्यर्थः। अंजू व्यक्त्यादौ। अलिः। अंजलिः। "अंजलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि च।" इति मेदिनी। मदी हर्षे। स्यः। मत्स्यः। "मत्स्यो मीनेऽथ पुंभूम्नि देशे" इति मेदिनी। अत सातत्यगमने। इथिः। अतिथिः। "अतिथिः कुशपत्रे स्यात् पुमानागंतुके त्रिषु।" इति मेदिनी। अगि गतौ। उलिः। अंगुलिः। "अंगुलिः करशाखायां कर्णिकायां गजस्य च।" इति हैमः। कु शब्दे। अचः। कवचः। "कवचो गर्दभांडे च सन्नाहे पर्पटेऽपि च।" इति मेदिनी। यु मिश्रणे। आसः। यवासः। "यासो यवासो दुःस्पर्शः" इत्यमरः। कृश तनूकरणे। आनुक्। कृशानुः। "कृशानुः पावकोऽनलः" इत्यमरः॥

तत्त्व०—रत्न्यादय इति। ऋ इत्यस्य रत्निरिति। बद्धमुष्टिकरो रत्निः सोऽरत्निः प्रसृतांगुलिः॥

**शुः करः॥ ९७३॥ शर्करा॥**

सुबो०—शुः करः। करप्रत्ययमाह। ककारस्य नेत्वं बाहुलकात्। शॄ हिंसायाम्। शर्करा। "शर्करा खंडविकृतौ उपलाकर्परांशयोः। शर्करान्वितदेशे च रुग्भेदे सकलेऽपि च॥" इति मेदिनी॥

**पुपः कित्॥ ९७४॥ पुष्करः॥**

सुबो०—पुपः कित्। करक्प्रत्ययमाह। पुष पुष्टौ। पुष्करम्। "पुष्करं खेऽबुपद्मयोः। तूर्य्यवक्त्रे खड्गफले हस्तिहस्ताग्रकांडयोः॥ कुष्ठौषधौ द्वीपतीर्थभेदयोश्च नपुंसकम्। उरंगरागविहगनृत्यभेदेषु चांबुदे॥" इति मेदिनी॥

**गमेरिनिर्भविष्यति॥ ९७५॥ गमिष्यतीति गमी॥**

सुबो०—गमेरिनिर्भविष्यति। इकार उच्चारणार्थः। इन्प्रत्ययमाह। गम्लृ गतौ। इनामिनि दीर्घः। गमी। आङ्पूर्वाद् गमेरिनिप्रत्ययस्तु णित् णित्त्वाद्वृद्धिः। आगमिष्यतीति आगामी। भू सत्तायामस्मादपि इनिः स च णित्स्यात्। भविष्यतीति भावी॥

**परमेस्थः कित्॥ ९७६॥ परमेष्ठी॥**

सुबो०—परमेस्थः कित्। परमशब्दे उपपदे तिष्ठतेरिनिः कित् स्यात्। कित्त्वादातोऽनपीत्यालोपः। परमेष्ठी। "परमेष्ठी पितामहः" इत्यमरः। सप्तम्या अलुक्॥

**मन्थ इनिः कित्॥ ९७७॥ मन्था। मन्थानौ॥**

सुबो०—मंथ इनिः कित। मंथ विलोडने। अस्मादिनिः कित्। नोलोप इति नलोपः। इनोऽग्पंचसु इन्यत्वम्। आ सौ इनि टेगत्वे थो न्तुट्। मंथाः। "मंथा मंथदंडे च वज्रे चाग्नेऽपि च स्मृतः।"॥

**पतेन्थश्च॥ ९७८॥ पंथाः। पंथानौ॥**

सुबो०—पतेस्थश्च । पत्लृ गतौ । अस्मादिनिः स्यात् तकारस्य थश्च । पंथाः । पथि गतावित्यस्मात्पचाद्यप्रत्यये आकारांतोऽप्यस्ति । " वाटः पथश्च मार्गश्च " इति सुभूतिचंद्रः । ऋभवो देवाः क्षपंत्यऽस्मिन्निति विग्रहे बाहुलकात् डप्रत्यये । ऋभुक्षः । " ऋभुक्षः स्वर्गवज्रयोः " इति विश्वः । ततो मत्वर्थीयो निः । ऋभुक्षिन्निति नांतं प्रातिपदिकम् । अत्वे आत्वे च ऋभुक्षा इंद्रः ॥

**बलाकादयः ॥ ९७९ ॥ बलाका । पताका । खज मन्थे । खजाकः । पिनाकः । तड आघाते । तडाकः ॥**

सुबो०—बलाकादयः । आकप्रत्यांता निपात्यंते । बल प्राणने । बलाका । " बलाका बकपंक्तिः स्याद्बलाका बिसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः ॥ " इति विश्वः । पत्लृ पतने । पताका । " पताका वैजयंत्यां च सौभाग्येंऽके ध्वजेऽपि च । " इति विश्वः । " पताका वैजयंत्यां च सौभाग्ये नाटकांगयोः । " इति मेदिनी । खज मंथे । खजाकः पक्षी । पा रक्षणे । पातेरित्वं नुम् च निपात्यते । पिनाकः । " क्लीबपुंसोः पिनाकः स्याच्छूलशंकरधन्वनोः । " इत्यमरः । " पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः । " इति मेदिनी । पिष्लृ संचूर्णने । षस्य णत्वं धातोर्यगागमश्च निपात्यते । पिण्याकः । " पिण्याकोऽस्त्री तिलकल्के हिंगुबाह्लीकसिह्लके । " इति मेदिनी । तड आघाते । तडाकः ॥

तत्त्व०—पिनाक इति । क्लीबपुंसोः पिनाकः स्याच्छूलशंकरधन्वनोः ॥

**दूषेरीकः ॥ ९८० ॥ दूषीका ॥**

सुबो०—दूषेरीकः । ईकप्रत्ययमाह । दुष् वैकृत्ये । ण्यंतः दुषेर्णाविति दीर्घः । णेरिति णिलोपः । " दूषीका नेत्रयोर्मलम् " इत्यमरः । किंच अकृतेऽपि ईकप्रत्यये दूषयतेर्धातोरितीप्रत्यये दूषिः । कृदिकारादिति वेऽपि दूषी । उभाभ्यामपि स्वार्थे कप्रत्यये ह्रस्वो वेति पाक्षिके ह्रस्वे च कृते दूषिका दूषीका च सिद्ध्यति । " पिचंडी दूषिका दूषी पिचाट च दृशोर्मलम् । " इति विक्रमादित्यकोशः । " दूषिका तूलिकायां च मले स्याल्लोचनस्य च । " इति मेदिनी ॥

तत्त्व०—दूषेरिति । दूषीका नेत्रयोर्मलम् ॥

**अनिहृषिभ्यां किच्च ॥ ९८१ ॥ अनीकम् । हृषीकम् ॥**

सुबो०—अनिहृषिभ्यां किच्च । कीकप्रत्ययः स्यात् । कित्त्वान्न गुणः । अन प्राणने । अनीकम् । " अनीकोऽस्त्री रणे सैन्ये " इति मेदिनी । हृष तुष्टौ । हृषीकम् । " हृषीकं विषयींद्रियम् " इत्यमरः ॥

**अलीकादयः ॥ ९८२ ॥ अल भूषणादौ । अलीकम् । वलीकम् । पुण कर्मणि शुभे । पुण्डरीकम् । ईषिका । इषीका ॥**

सुबो०—अलीकादयः। ईकप्रत्ययांता निपात्यंते। अल भूषणादौ। अलीकम्। "अलीकं त्वप्रियेऽपि स्याद्दिव्ये सत्ये नपुंसकम्।" इति मेदिनी। "अलीकमप्रिये लाभे वितथे" इति हेमचंद्रः। विपूर्वात्। व्यलीकम्। "व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने। ना नागरे" इति मेदिनी। वल संवरणे। वलीकम्। "वलीकनीध्रे पटलप्रांते" इत्यमरः। वलतेर्निपातनात् मुगागमे कृते वल्मीकम्। "वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्।" इत्यमरः। पुण शुभे कर्म्मणि। धातोर्नुमागमो णस्य डश्च प्रत्ययस्यारुडागमश्च निपातनात्। पुंडरीकम्। "पुण्डरीकं सितांभोजं सितच्छत्रे च भेषजे। पुंसि व्याघ्रे च दिङ्नागे कोशकारांतरेऽपि च॥" इति मेदिनी। ईष गतौ। निपातनात् ह्रस्वः। इषीका शलाका॥

तत्त्व०—अलीकादय इति। अलीक मिथ्या। वलीक पटलप्रांते॥

**क्रादेरीषः॥ ९८३॥ करीषम्। तॄ। तरीषः॥**

सुबो०—क्रादेरीषः। ईषप्रत्ययमाह। कॄ विक्षेपे। करीषः। "करीषं गोमयं शुष्कम्" इत्यमरः। तॄ प्लवनतरणयोः। तरीषः तरीषा॥

तत्त्व०—क्रादेरीति। करीषोऽस्त्री पशुशुष्कगोमययोः॥

**श्रादेः कीषः॥ ९८४॥ शॄ। शिरीषः। पॄ। पुरीषम्॥**

सुबो०—श्रादेः कीषः। शॄ हिंसायाम्। ऋत इतीर्। शिरीषो वृक्षः। पॄ पालनपूरणयोः। पोरुरित्युर्। पुरीषम्। "गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम्।" इत्यमरः॥

**अर्जेर्ऋजः॥९८५॥ ऋजीषम्। अवि शब्दे। अंवरीषो निपात्यः। अंवरीषम्॥**

सुबो०—अर्जेर्ऋजः। अर्ज अर्जने। अस्मात्कीषः स्यात् धातोर्ऋजादेशश्च। ऋजीषम्। "ऋजीषं पिष्टपचनम्" इत्यमरः। अवि शब्दे। निपातनात् ईषप्रत्ययः प्रत्ययस्यारुडागमश्च। अंवरीषः। "अंवरीषं रणे भ्राष्ट्रे क्लीवपुंसि नृपांतरे। नरकस्य प्रभेदे च किशोरे भास्करेऽपि च॥ आम्रातके तु पाते च" इति मेदिनी। "अंवरीषः पुमान् भ्राष्ट्रम्" इति वोपालितः। "क्लीवे पुंसि नृपांतरे। क्लीवेंऽवरीषं भ्राष्ट्रो ना" इत्यमरः॥

तत्त्व०—अंवरीष इति। अंवरीषः पुमान् भ्राष्ट्रम्। क्लीवेऽपि॥

**क्रादेरीरः॥ ९८६॥ करीरः। शॄ। शरीरम्॥**

सुबो०—क्रादेरीरः। ईरप्रत्ययमाह। कॄ विक्षेपे। करीरः। "वंशांकुरे करीरोऽस्त्री वृक्षभिद्घट्योः पुमान्। करीरा चीरिकायां च दंतमूले च दंडिनाम्॥" इति मेदिनी। शॄ हिंसायाम्। शीर्य्यंते इति शरीरम्। अर्द्धर्चादिः। "शरीरं वर्ष्म विग्रहः" इत्यमरः॥

तत्त्व०—क्रादेरिति । करीरो वंशांकुरः ॥

**गभीरादयः ॥९८७॥ गम्लृ । गभीरः गम्भीरः । वश । उशीरम् । घस्लृ । क्षीरम् ॥**

सुबो०—गभीरादयः । ईरप्रत्ययांता निपात्यंते । गम्लृ गतौ । मस्य भः पाक्षिको नुम् च निपातनात् । गभीरम् । " निम्नं गभीरं गम्भीरम् " इत्यमरः । वश् कांतौ । निपातनात्कीरप्रत्ययः । ग्रहामिति संप्रसारणम् । उशीरम् । " मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यम् " इत्यमरः । घस्लृ अदने । कीरप्रत्ययो निपातनात् । गमामित्युपधालोपे कत्वं षत्वम् । क्षीरम् । " क्षीरं दुग्धे च नीरे च " इति विश्वः ॥

**शीङो धुक्लक्वलवलञ्वालपालाः ॥९८८॥ शीधुः । शीलम् । शेवलम् । शैवलम् । शेवालम् । शेपालम् ॥**

सुबो०—शीङो धुक्लक्वलवलञ्वालपालाः । शीङ् स्वप्ने अस्मात् षट् प्रत्यया भवंति । शेरतेऽनेनेति शीधुरर्द्धर्चादिः । " मैरेयमासवः शीधुः " इत्यमरः । लक् । शीलम् । " शीलं स्वभावे सद्वृत्ते " इति मेदिनी । वल । शेवलम् । वलञ् । शैवलम् । " जलनील्यां तु शेवालं शैवलम् " इत्यमरः । " शैवलं पद्मकाष्ठे स्यात् शेवाले तु पुमानयम् । " इति मेदिनी । वाल । शेवालम् । पाल । शेपालम् । " शेवालं शैवलो न स्त्री शेपालो जलनीलिका । " इति शब्दार्णवः ॥

तत्त्व०—शीधु इति । मद्यम् । शेवालं शेवलो न स्त्री शेवालो जलनीलिका ॥

**उलूकादयः ॥९८९॥ उलूकः । शमु । शम्बूकः । शल । शालूकः । मडि भूषायाम् । मण्डूकः ॥**

सुबो०—उलूकादयः । ऊकप्रत्ययांता निपात्यंते । वल संवरणे । सम्प्रसारणं निपातनात् । उलूकः । " उलूकः पुंसि काकाराविंद्रे भारतयोधिनि । " इति मेदिनी । शम् उपशमे । धातोर्बुगागमो निपातनात् । शंबूकः । " शंबूको गजकुंभांते घोषे च शूद्रतापसे । " इति मेदिनी । बाहुलकात् उकप्रत्ययोऽपि । " जंबूकं जंबुकं प्रोक्तं शंबूकमपि शंबुकम् । " इति द्विरूपकोशः । " शंबूका जलशुक्तयः " इत्यमरः। शल गतौ । निपातनाद्वृद्धिः । शालूकम् । "सौगंधिकं तु कल्हारम्" इत्याद्युपक्रम्य " शालूकमेषां कंदः स्यात् " इत्यमरः । एषां सौगंधिकादीनां कुमुदकैरवांताना कंदो मूलं शालूकमित्यर्थः । मडि भूषायाम् । मंडते वर्षासमयमिति मंडूकः भेकः ॥

तत्त्व०—उलूकादय इति । उलूकाविंद्रमेचको । शंबूको जलशुक्तिः । शालूक कंदविशेषः ॥

नियो मिः ॥ ९९० ॥ नेमिः ॥

सुबो०—नियो मिः। मिप्रत्ययमाह। णीञ् प्रापणे। नयति चक्रमिति नेमिः। "नेमिर्ना तिनिशे नूपनिकाचक्रांतयोः स्त्रियाम्।" इति मेदिनी ॥

अर्तेरुच्च ॥ ९९१ ॥ ऊर्मिः ॥

सुबो०—अर्त्तेरुच्च। मिप्रत्ययः स्यात् धातोरुरादेशश्च। ऋ गतौ। ऊर्मिः। "ऊर्म्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः। वस्त्रसंकोचरेखायां वेदनापीडयोरपि॥" इति मेदिनी ॥

भुवः किच्च ॥ ९९२ ॥ भूमिः ॥

सुबो०—भुवः किच्च। मिः स्यात्। कित्त्वान्न गुणः। भू सत्तायाम्। भवंति भूतान्यस्यामिति भूमिः। "भूमिर्वसुंधरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम्।" इति मेदिनी ॥

अश्नोतेरश् च ॥ ९९३ ॥ रश्मिः ॥

सुबो०—अश्नोतेरश् च। अशूङ् व्याप्तावस्मात् मिः स्यात् धातोरशादेशश्च। रश्मिः। "रश्मिः पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपि।" इति मेदिनी ॥

तत्त्व०—रश्मिरिति। रज्जुकिरणयो रश्मिः॥

सृादेर्निः कित् ॥ ९९४ ॥ सृणिः। वृष्णिः ॥

सुबो०—सृादेर्निः कित्। सृ गतौ। सृणिः। "अंकुशोऽस्त्री सृणिः स्त्रियाम्" इत्यमरः। "सृणिः स्यादंकुशः पुमान्" इति। वृषु सेचने। वृष्णिः। "वृष्णिस्तु यादवे मेषे वृष्णिः पाषंडचंडयोः।" इति विश्वः। "वृष्णिः क्षत्रियमेषयोः"॥

तत्त्व०—सृणिरिति। अंकुशः। वृष्णिरिति। क्षत्रियमेषयोः॥

अङ्गेर्नलोपश्च ॥ ९९५ ॥ अग्निः ॥

सुबो०—अंगेर्नलोपश्च। अगि गतौ। निः। अग्निः। "अग्निर्वैश्वानरो वह्निः" इत्यमरः। "अग्निर्वैश्वानरोऽपि स्यात् चित्रकाख्यौषधौ पुमान्।" इति मेदिनी ॥

वहादेर्निः ॥ ९९६ ॥ वह्निः। श्रेणिः। योनिः। द्रोणिः। ग्लानिः ॥

सुबो०—वहादेर्निः। निप्रत्ययमाह। वह प्रापणे। वह्निः। "वह्निर्वैश्वानरोऽपि स्यात् चित्रकाख्यौषधौ पुमान्।" इति मेदिनी। श्रिञ् सेवायाम्। श्रेणिः। "श्रेणिः स्त्रीपुंसयोः पंक्तौ समाने शिल्पिसंहतौ।" इति मेदिनी। "निःश्रेणिस्त्वधिरोहिणी"। श्रु श्रवणे। श्रोणिः कटिः। "श्रोणिः ककुद्मति" इत्यमरः। यु मिश्रणे। योनिः। "योनिः स्त्रीपुंसयोश्च स्यादाकारे स्मरमंदिरे।" इति मेदिनी। द्रु गतौ। द्रोणिः सेचिनी। ग्लै हर्षक्षये। ग्लानिः दौर्बल्यम् ॥

**घृण्यादयः ॥ ९९७ ॥ घृणिः । स्पृश् । पृश्निः । पृष् । पार्ष्णिः ॥**

सुबो०—घृण्यादयः । निक्प्रत्ययान्ता निपात्यंते । घृ सेचने । घृणिः । “ घृणिः पुमान् । अंशुज्वालांतरंगेषु ” इति हेमचंद्रः । स्पृश संस्पर्शने । स्पृशतेः सलोपो निपातनात् । छशषेति षत्वं ष्टुत्वम् । पृष्णिः । “ पृष्णिरल्पतनौ ” इत्यमरः । पृषु सेचने । पृषेर्वृद्धिर्निपात्यते । पार्ष्णिः । “ पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रंथ्यधरेऽपि च ॥ ” इति मेदिनी ॥

तत्त्व०—घृणिरिति । किरणः । पृष्णिरिति । स्पृशेः सलोपे पृषेस्तु वृद्धौ । पार्ष्णिः ॥

**पातेर्डतिः ॥ ९९८ ॥ पतिः ॥**

सुबो०—पातेर्डतिः । डतिप्रत्ययमाह । डित्वाट्टिलोपः । पा रक्षणे । पतिः । “ पतिर्धवे ना त्रिष्वीशे ” इति मेदिनी ॥

**शकेर्ऋतन् ॥ ९९९ ॥ शकृत् ॥**

सुबो०—शकेर्ऋतन् । ऋतन्प्रत्ययमाह । शक्लृ शक्तौ । शकृत् । “उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम् ॥ ” इत्यमरः ॥

**हन्तेरंति रंह च ॥१००० ॥ हन्ति दुरितमनया अंहतिः ॥**

सुबो०—हंतेरति रंह च । हन हिंसागत्योः अस्मादतिः स्यात् धातोरंहादेशश्च । अंहतिः । “ प्रादेशनं निर्वपणमपवर्जनमंहतिः । ” इत्यमरः ॥

**सूङादेः क्रिः ॥ १००१ ॥ सूरिः । भूरिः । अद्रिः ॥**

सुबो०—सूङादेः क्रिः । क्रिप्रत्ययमाह । कित्वान्न गुणः । षूङ् प्राणिप्रसवे । सूरिः । “ धीमान् सूरिः कृतिः कृष्टिर्लब्धवर्णो विचक्षणः । ” इत्यमरः। अभिधानमालायां सूरीति नांतमुदाहृतम् । भू सत्तायाम् । भूरिः । “ भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिंगकः ॥” इति मेदिनी । अद भक्षणे । अद्रिः । “ अद्रयो द्रुमशैलार्काः ” इत्यमरः ॥

**राशदिभ्यां त्रिप् ॥ १००२ ॥ रात्रिः । शत्रिः । अत्रिः ॥**

सुबो०—रादेस्त्रिः । त्रिप्रत्ययमाह । रा दाने । रात्रिः । शद्लृ शातने । शत्रिः । “ शत्रिर्नाभोधरे विष्णौ ” इति मेदिनी । अद भक्षणे । अत्रिर्मुनिभेदः ॥

**पतेरत्रिः ॥ १००३ ॥ पतत्रिः ॥**

सुबो०—पतेरत्रिः । अत्रिप्रत्ययमाह । पत्लृ गतौ । पतत्रिः पक्षी । पतत्रात् पक्षवाचकात् शब्दान्मत्वर्थे इनि तु नांतः । पतत्री । पतत्रिणौ ॥

तत्त्व०—पतत्रिरिति । पक्षिणि ॥

**मृङ ईचिः ॥ १००४ ॥ मरीचिः ॥**

सुबो०–मृङ ईचिः । ईचिप्रत्ययमाह । मृङ् प्राणत्यागे। मरीचिः ।" मरीचिः कृपणे दीप्तौ ऋषिभेदे च दृश्यते । " इति विश्वः । " मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम् । " इति मेदिनी ॥

**वेञो डिच्च ॥ १००५ ॥ वीचिः ॥**

सुबो०–वेञो डिच्च । वेञ् तंतुसंताने । अस्मादीचिर्डित् स्यात् । वीचिः । " वीचिः स्वल्पे तरंगे स्यादवकाशे सुखे द्वयोः । " इति विश्वः ॥

**पुरः कुषः ॥ १००६ ॥ पुर अग्रगमने । पुरुषः ॥**

सुबो०–पुरः कुषः । कुषप्रत्ययमाह । कित्त्वान्न गुणः। पुर अग्रगमने । पुरुषः । बाहुलकाद्दीर्घे पूरुषः । " पुरुषस्त्वात्मनि नरे पुन्नागे च " इति हेमः । " पुरुषाः पूरुषा नरः " इत्यमरः ॥

**पॄनहिकलिभ्य उषः ॥ १००७ ॥ परुषम् । नहुषः । कलुषम् ॥**

सुबो०–पॄनहिकलिभ्य उषः । उषप्रत्ययमाह । पॄ पालनपूरणयोः । परुषम् । " परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत् । " इति मेदिनी । णह बंधने । नहुषः। " नहुषो राजविशेषे नागभिद्यपि " इति हैमः। कल शब्दसंख्यानयोः । कलुषम् । " कलुषं त्वाविलैनसोः " इति विश्वः ॥

**पीयेरूषः ॥ १००८ ॥ पीय पाने सौत्रः । पीयूषम् । पेयूषम् ॥**

सुबो०–पीयेरूषः । उषप्रत्ययमाह । पीय पाने सौत्रो धातुः । पीयूषम् । बाहुलकाद्गुणाभावः । गुणे तु पेयूषः । " पेयूषोऽभिनवं पयः " इत्यमरः । " पीयूषममृतं सुधा " इत्यमरः " पीयूषं सप्तदिवसावधिक्षीरे तथामृते । " इति मेदिनी । " पीयूषममृते नव्यसूतधेनोः पयस्यपि । " इति हैमः ॥

**मस्जेर्नुम्च ॥ १००९ ॥ मंजूषा ॥**

सुबो०–मस्जेर्नुम् च । टुमस्जो शुद्धौ । अस्मादूषः स्यात् धातोर्नुमागमश्च । मित्त्वादंत्यात्स्वरात्परः । सस्य श्चुत्वेन शः । झभे जबा इति शस्य जः । हसात्परस्य झसस्येति वा जलोपः । लोपाभावपक्षे जकारद्वयम् । मञ्जूषा । " पिटकः पेटकः पेटा मञ्जूषा " इत्यमरः ॥

**गण्डेश्च ॥ १०१० ॥ गडि वदनैकदेशे । गण्डूषः ॥**

सुबो०–गंडेश्च । गडि वदनैकदेशे । अस्मादूषः स्यात् । गंडूषः।" गंडूषो मुखपूर्तीभपुष्करप्रसृतोन्मिते । " इति मेदिनी ॥

**शकादेरटः॥१०११॥ शकटम्। ककि गतौ। कंकटः। कञ्। करटः॥**

सुबो०–शकादेरटः । अटप्रत्ययमाह । शकि गतौ । शक्लृ शक्तौ । शकटः ।

" क्लीबेऽनः शकटोऽस्त्री स्यात् " इत्यमरः । ककि गतौ । कंकटः सन्नाहः । डुकृञ् करणे । कॄ विक्षेपे वा । करटः । " काकेभगंडौ करटौ " इत्यमरः । " करटो गजगंडे स्यात् कुसुंभे निंद्यजीविनि । एकादशादिश्राद्धे च दुर्दुरूढेऽपि वायसे ॥ " इति मेदिनी ॥

तत्त्व०—कंकट इति । सन्नाहे ॥

**कलिकर्द्योरमः॥ १०१२ ॥** कलमः । कर्द कुत्सिते शब्दे । कर्दमः ॥

सुबो०—कलिकर्द्योरमः । अमप्रत्ययमाह । कल संख्याने । कलमः । " कलमः शालिचौरयोः " इति हेमः । " कलमः पुंसि लेखिन्यां शालौ पाटच्चरेऽपि च । " इति मेदिनी । कर्द कुत्सिते शब्दे । कर्दमः पंकः ॥

**पुल्यादेः किन्दः ॥ १०१३ ॥** पुलिन्दः ॥

सुबो०—पुल्यादेः किंदः । किंदप्रत्ययमाह । कित्त्वान्न गुणः । पुल महत्त्वे । पुलिंदः जातिविशेषः ॥

तत्त्व०—पुलिद इति । जातिविशेषे ॥

**कुपेर्वा वः ॥ १०१४ ॥** कुपिन्दः कुविन्दः ॥

सुबो०—कुपेर्वा वः । किंदः स्यात् । कुप क्रोधे । पस्य वा वकारश्च । कुविंदः कुपिंदः । " तंतुवायः कुविंदः स्यात् " इत्यमरः ॥

तत्त्व०—कुपिंदकुविंदौ तन्तुवाये ॥

**नौ षञ्जेर्घथिः ॥ १०१५ ॥** निषंगथिः ॥

सुबो०—नौ षंजेर्घथिः । षंज संगे । निपूर्वादस्मात् घथिप्रत्ययः स्यात् । घथिप्रत्ययमाह । घित्त्वाच्चजोरिति कुत्वं सादेश्चेति षत्वम् । निषंगथिः आलिङ्गकः ॥

तत्त्व०—निषंगथिरिति । आलिंगके ॥

**सर्तेर्णिच्च ॥ १०१६ ॥** सारथिः ॥

सुबो०—सर्तेर्णिच्च । सृ गतौ । अस्मात् घथिः स्यात् स च णित् । सारथिः । " नियंता प्राजिता यंता सूतः क्षत्ता च सारथिः । " इत्यमरः ॥

**खर्ज्जादेरूरः ॥ १०१७ ॥** खर्जूरः । कर्पूरम् । वल्लूरम् ॥

सुबो०—खर्ज्जादेरूरः । ऊरप्रत्ययमाह । खर्ज आर्जवे । खर्जूरः । " खर्जूरं रूपफलयोः खर्जूरः कीटवृक्षयोः । " इति मेदिनी । कृपू सामर्थ्ये । बाहुलकात् कृपो रो ल इति लत्वाभावः । कर्पूरम् । " अथ कर्पूरमस्त्रियाम् । घनसारश्चंद्रसंज्ञः सिताभ्रो हिमवालुकः । " इत्यमरः । वल्ल संवरणे । वल्लूरम् । " वल्लूरं शुष्कमांसं स्यात् " ॥

तत्त्व०—वल्लूरमिति । शुष्कमांसम् ॥

**लंगेर्वृद्धिश्च ॥ १०१८ ॥** लांगूलम् । कुसूलम् । कुसूलम् ॥

सुबो०—लंगेर्वृद्धिश्च। लगि गतौ। अस्मादूलप्रत्ययः स्यात्। धातोर्वृद्धिश्च। लांगूलम्। "लांगूलं पुच्छशेफसोः" इति मेदिनी। कुस संश्लेषणे। ऊलः। निपातनाद्गुणाभावः। कुसूलम्। "कुसूलं च कुसीदं च मध्यदंतमुदाहृतम्।" इति विश्वः॥

**कुवश्चट् दीर्घश्च॥ १०१९॥ कूची॥**

सुबो०—कुवश्चट् दीर्घश्च। कु शब्दे अस्माच्चट्प्रत्ययः स्यात् धातोः पाक्षिको दीर्घश्च। चट्प्रत्ययमाह। टित्त्वादीप्। कूची। "कूची चित्रलेखनिका कुचकूचौ स्तने मतौ।" इति विश्वः॥

तत्त्व०—कूचीति। चित्रलेखिका॥

**सिवेरू च॥ १०२०॥ सूची॥**

सुबो०—सिवेरू च। षिवु तंतुसंताने। अस्माच्चट् स्यात् धातोष्टेरूश्च। सूची दर्भांकुरः। "सूची तु सीवनद्रव्येऽप्यांगिकाभिनयांतरे।" इति मेदिनी॥

तत्त्व०—सूचीति। सूची दर्भांकुरः॥

**शमेर्वः॥ १०२१॥ शमु। शम्वः॥**

सुबो०—शमेर्वः। शमु उपशमे अस्मात् वः स्यात्। वप्रत्ययमाह। शम्वः। "शंवः स्यान्मुशलाग्रस्थलोहमण्डके। पवौ शुभान्विते त्रिषु" इति विश्वमेदिन्यौ॥

तत्त्व०—शम्व इति मुशले॥

**उल्वादयः॥१०२२॥ उच समवाये। उल्बः। शुल्बम्। स्था। स्तंवः। स्तवकः॥**

सुबो०—उल्वादयः। वप्रत्ययांता निपात्यंते। उच समवाये। सस्य लत्वं गुणाभावश्च। उल्वम्। "गर्भाशयो जरायुः स्यादुल्वं च कललोऽस्त्रियाम्।" इति मेदिनी। शुच शोके। चस्य लत्वं गुणाभावश्च निपातनात्। शुल्वम्। "शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ।" इति मेदिनी। ष्ठा गतिनिवृत्तौ अस्मादंव-अवक एतौ प्रत्ययौ। निपातनात् धातोस्थस्य तश्च। स्तंवः। स्तवकः। "स्तंबो गुल्मे तृणादीनामप्रकांडद्रुमेऽपि च।" इति विश्वः। "स्तंवोऽप्रकांडद्रुमगुच्छयोः" इति मेदिनी। "स्याद्गुच्छकस्तु स्तवकः" इत्यमरः॥

तत्त्व०—उल्व गर्भाशयः। शुल्व ताम्रम्। स्तवो गुच्छस्तृणादीनाम्। स्तवकः पुष्पगुच्छः॥

**शाशपिभ्यां दः॥ १०२३॥ शादः। शब्दः॥**

सुबो०—शाशपिभ्यां दः। दप्रत्ययमाह। शो तनूकरणे। शादः। "शादो जंबालशष्पयोः" इत्यमरः। "शादः स्यात्कर्दमे शष्पे" इति मेदिनी। "शष्पं बालतृणं घासः" इत्यमरः। शपू आक्रोशे। शब्दो निनादः॥

तत्त्व०—शाद इति । जन्वालशष्पयोः ॥

अब्दादयः ॥१०२४॥ अवतीत्यब्दः । कुन्दः ॥

सुबो०—अब्दादयः । दप्रत्ययांता निपात्यंते । अव रक्षणे । वस्य बः। अब्दः । " अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान् । " इति मेदिनी । कु शब्दे । निपातनान्नुम् । कुंदः । " कुंदो माध्येऽस्त्री मुकुंदभ्रमिनिध्यंतरेषु ना । " इति मेदिनी ॥

वलिमलितनिभ्यः कयः ॥ १०२५ ॥ वलयम् । मलयः । तनयः ॥

सुबो०— वलिमलितनिभ्यः कयः । कयप्रत्ययमाह । कित्त्वाद्गुणनिषेधादि । वल संवरणे । वलयः । " वलयः कंठरोगे ना कंकणे पुंनपुंसकम् । " इति मेदिनी । मल धारणे । मलयः । "मलयः पर्वतांतरे । शैलांगे देश आरामे त्रिवृतायां तु योषिति ।" इति मेदिनी । तनु विस्तारे । तनयः । " आत्मजस्तनयः सूनुः " इत्यमरः ॥

हृञो दुक् च ॥ १०२६ ॥ हरतीति हृदयम् ॥

सुबो०—हृञो दुक् च । हृञ् हरणे । अस्मात्कयः स्यात् धातोर्दुगागमश्च । ह्रियते विषयैरिति हृदयं मनः ॥

मिनोतेरुः ॥ १०२७ ॥ मेरुः ॥

सुबो०—मिनोतेरुः । रुप्रत्ययमाह । डुमिञ् प्रक्षेपणे । मेरुः । " मेरुः सुमेरुर्हेमाद्रिः " इत्यमरः ॥

जत्र्वादयः ॥ १०२८ ॥ जत्रु । अश्रु । रुरुः । शातयतीति शत्रुः ॥

सुबो०—जत्र्वादयः । रुप्रत्ययांता निपात्यंते । जनी प्रादुर्भावे । नस्य तो निपातनात् । जत्रु । " संधी तस्यैव जत्रुणी " इत्यमरः। तस्य स्कंधस्येत्यर्थः । अशूङ् व्याप्तौ । अश्रु नयनजलम् । रुशब्दे निपातनाद्गुणाभावः । रुरुः । " कृष्णसाररुरुन्यंकुरंकुशंबररोहिषाः । " इत्यमरः । " रुरुर्मृगे दैत्येऽपि च " इति मेदिनी । शद्लृ शातने ण्यंतः। शातयतीति । णेरिति णिलोपः। निपातनाद्ध्रस्वत्वम्। शत्रुः॥

तत्त्व०—रुरुरिति । मृगभेदे ॥

कुसेरुम्भोमेदेताः ॥१०२९॥ कुसुम्भम् । कुसुमम् । कुसीदम् । कुसितः ॥

सुबो०—कुसेरुंभोमेदेताः । कुस संश्लेषणे । अस्मात् उंभ उम ईद इत एते प्रत्ययाः स्युः । उंभादिप्रत्ययानाह । कुसुंभम् । " कुसुंभं हेमनि महारत्ने नेनाकमंडलौ । " इति मेदिनी । कुसुमम् । " कुसुमं स्त्रीनेत्ररोगयोः फलपुष्पयोः " इति मेदिनी । कुसीदम् । " कुसीदं जीवने वृद्ध्यां क्लीबं त्रिषु कुसीदके । " इति मेदिनी। कुसितो जनपदः ॥

तत्त्व०—कुसित इति । जनपदे ॥

**तण्डुलादयः ॥ १०३० ॥** तड आघाते । तण्डुलः । अकि लक्षणे । अंकुशः । चष । चषालः । पल्वलम् । त्रिधृषा । धिष्ण्यम् । शल्यम् ॥

सुबो०—तंडुलादयो निपात्याः । तड आघाते । उलप्रत्ययो नुमागमश्च निपात्यते । तण्डुलः । "तण्डुलः स्याद्विडंगे च धान्यादिनिकरे पुमान् ।" इति मेदिनी । अकि लक्षणे । उशप्रत्ययो निपातनात् । अंकुशः । "अंकुशोऽस्त्री सृणिः स्त्रियाम्" इत्यमरः । चष भक्षणे । आलप्रत्ययो निपातनात् । चषालः । "चषालो यूपकटकः" इत्यमरः । पा पाने । वलप्रत्ययो निपात्यते लुगागमश्च धातोर्ह्रस्वत्वं च । पल्वलमल्पसरः । त्रिधृषा प्रागल्भ्ये । ण्यप्रत्ययः ऋत इत्वं च निपात्यते । धिष्ण्यम् । "धिष्ण्यं स्थाने गृहे भेऽग्नौ" इत्यमरः । "धिष्ण्यं स्थानाग्निसद्मसु । ऋक्षे शक्तौ च" इति मेदिनी । शल गतौ । यप्रत्ययः । शल्यम् । "शल्यं तु न स्त्रियां शंकौ क्लीबं क्ष्वेडेषुतोमरे । मदनद्रुश्वा विधोर्ना" इति मेदिनी ॥

**मूङ्शक्यम्यविभ्यः क्लः ॥ १०३१ ॥** मूलम् । शक्लः । अम्लः । अवि गतौ । अंव्लः ॥

सुबो०—मूङ्शक्यम्याविभ्यः क्लः । क्लप्रत्ययमाह । कित्त्वान्न गुणः । मूङ् बंधने । मूलम् । "मूलं बुध्नोऽङ्घ्रिनामकः" इत्यमरः । शक्लृ शक्तौ । शक्लः । "शक्लः प्रियंवदे" इत्यमरः । अम गेगे चुरादिर्ण्यंतः । बाहुलकादुपधाह्रस्वः । णेरिति णिलोपः । अम्लः । "अम्लो रसविशेषे स्यात् क्लीबे च गैरिकौषधौ ।" इति मेदिनी । अवि शब्दे । अंव्लो रसः ॥

तत्त्व०—शुक्ल इति । प्रियंवदे ॥

**मादेर्यः ॥ १०३२ ॥** माया । छाया । सस्यम् । षुञ् । सव्यम् ॥

सुबो०—मादेर्यः । यप्रत्ययमाह । मा माने । माया । "माया स्याच्छांबरी बुध्योर्मयः पीतांबरे सुरे ।" इति मेदिनी । छो छेदने । छाया । "छाया स्यादातपाभावे प्रतिबिंबार्कयोषितोः । पालनोत्कोचयोः कांतिराच्छोभापंक्तिषु स्त्रियाम् ॥" इति विश्वः । षस स्वप्ने । सस्यम् । "वृक्षादीनां फलं सस्यम्" इत्यमरः । षुञ् अभिषवे । सव्यम् । "सव्यं वामे प्रतीपे च" इति मेदिनी । "सव्यं दक्षिणवामयोः" इति विश्वः ॥

तत्त्व०—सव्यमिति । दक्षिणवामयो. ॥

**जनेर्यक् ॥ १०३३ ॥** जाया । जन्यम् ॥

सुबो०—जनेर्यक् । जन जनने । अस्माद्यक् प्रत्ययः स्यात् । जनसनेति वात्वम् । जन्यम् । जाया । " जन्यं हट्टे परीवादे संग्रामे च नपुंसकम् । जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् ॥ त्रिषूत्पाद्ये नवोढायां स्निग्धे जामातृभृत्ययोः । " इति मेदिनी ॥

तत्त्व०—जन्यमिति । युद्धे ॥

**अघ्न्यादयः ॥ १०३४ ॥ हन् । अघ्न्या । कनी दीप्तौ । कन्या । वन्ध्या ॥**

सुबो०—अघ्न्यादयः । यक्प्रत्ययांता निपात्यंते । हन् हिंसागत्योः । धातोरडागमः उपधालोपश्च निपातनात् । हनो घ्न इति घः । अघ्न्या । नञ्पूर्वाद्धंतेर्यक् उपधालोपश्चेत्यन्ये । अघ्न्यः प्रजापतिः । " माहेयी सौरभेयी गौरुस्रा माता च शृंगिणी । अर्जुन्यघ्न्या रोहिणी स्यात् " इत्यमरः । कनी दीप्तौ । कन्या । " कन्या कुमारिकानार्योरौषधीराशिभेदयोः । " इति विश्वः । बन्ध बन्धने । बवयोरैक्यात् निपातनान्नलोपाभावः। वन्ध्या । "वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजस्त्रियाम् ।" इति मेदिनी । संपूर्वाद्ध्यात्रो यक् । आतो लोपश्च निपातनात् । संध्या । " सायं संध्या पितृप्रसूः " इत्यमरः ॥

**अर्त्यादेर्वन् ॥ १०३५ ॥ अर्वा । पृ । पर्वा ॥**

सुबो०—अर्त्यादेर्वन् । वन्प्रत्ययमाह । अर्वा । " अर्वा तुरगगर्दभयोः " इति विश्वः । " अर्वा तुरंगमे पुंसि कुत्सिते वाच्यलिंगके । " इति मेदिनी । पॄ पालनादौ । पर्वा । " पर्व क्लीबे मंह ग्रंथौ प्रस्तावे लक्षणांतरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि ॥ " इति मेदिनी ॥

**ध्याप्योस्सम्प्रसारणम् ॥ १०३६ ॥ प्यैङ् ध्यैङ् वृद्धौ । पीवा । धीवा ॥**

सुबो०—ध्याप्योः संप्रसारणम् । ध्यै चिंतायाम् । प्यैङ् वृद्धौ । आभ्यां वन्प्रत्ययः स्यात् धातोः संप्रसारणं च । धीवा कर्मकरः । पीवा स्थूलः ॥

तत्त्व०—धीवेति । कर्मकरे । पीवा स्थूलः ॥

**अदेर्धश्च ॥ १०३७ ॥ अध्वा ॥**

सुबो०—अदेर्धश्च । अद भक्षणे । अस्मात् वन् स्यात् । दस्य धश्च । अध्वा मार्गः॥

**धातोरिः ॥ १०३८ ॥ यजिः । वट वेष्टने । वटिः । जनिः । बोधिः । हरिः । वर्तिः ॥**

सुबो०—धातोरिः । इप्रत्ययमाह । यज देवपूजादौ । यजिः । वट वेष्टने । वटिः । बुध अवगमने । बोधिः । " बोधिः पुंसि समाधेऽश्वभेदे पिप्पलपादपे । " इति

मेदिनी। हृञ्। हरिः। "हरिर्विष्णावहाविंद्रे भेके सिंहे हये रवौ। चंद्रे कीले प्लवंगे च यमे वाते प्रकीर्तितः॥" वृतु वर्त्तने। वर्तिर्दीपोपकरणम्॥

तत्त्व०–हरीरीति। "हरिर्विष्णावहाविंद्रे भेके सिंहे हये रवौ। चंद्रे कीले प्लवगे च यमे वाते च कीर्तितः॥"

नाम्युपधात्किः॥१०३९॥ कृषिः। ऋषिः। शुचिः। लिपिः। तूल निष्कर्षे। तूलिः॥

सुबो०–नाम्युपधात्किः। नाम्युपधाद्धातोः किः स्यात्। किप्रत्ययमाह। कित्वान्न गुणः। कृष विलेखने। कृषिः। ऋषी गतौ। ऋषिः। "ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्।" इति मेदिनी। शुच शोके। शुचिः। "शुचिः शुद्धे सितेऽनले। ग्रीष्माषाढानुपहतेपूपधायुद्धमंत्रिणि। शृंगारे" इति हैमः। लिप उपदेहे। लिपिः। बाहुलकाद्वत्वमपि। लिविः। तूलिः कूर्चिका॥

क्रमितमिशतिस्तम्भामत इच्च॥१०४०॥ क्रिमिः। तिमिः। शितिः। स्तिमिः॥

सुबो०–क्रमितमिशतिस्तंभामत इच्च। एभ्यः किः स्यात् एषामत इकारादेशश्च। क्रमु पादविक्षेपे। क्रिमिः। निपातनाद्रस्य संप्रसारणमपि भवति। कृमिः। "कृमिर्ना कृमिवत्कीटे" इति मेदिनी। तमु कांक्षायाम्। तिमिः। तिमिर्मत्स्यभेदः। शतिः सौत्रो धातुः। शितिः। "शितिः कृष्णे सिते भूर्जे" इति विश्वः। "शितिर्भूर्जे नासितासितयोस्त्रिषु" इति मेदिनी। स्तंभः सौत्रः। स्तिमिः समुद्रः॥

मनेरत उच्च॥१०४१॥ मुनिः॥

सुबो०–मनेरत उच्च। मन ज्ञाने अस्मात्किः स्यात् अकारस्योकारादेशश्च। मन्यते जानातीति मुनिः। "मुनिः पुमान् वसिष्ठादौ वंगसेनतरौ जिने।" इति मेदिनी॥

वर्णेर्वलिश्च॥१०४२॥ वर्ण वर्णने सौत्रः। वलिः॥

सुबो०–वर्णेर्वलिश्च। वर्णिः सौत्रोऽस्मात्किः स्यात् धातोर्वलिरादेशश्च। वलिः। "करोपहारयोः पुंसि वलिः प्राण्यंगजे स्त्रियाम्।" बवयोरैक्याद्बलिः॥

तत्त्व०–बलिः पूजापहारयोः॥

वपादेरिञ्॥१०४३॥ वापिः। राजिः। वारिः॥

सुबो०–वपादेरिञ्। इञ्प्रत्ययमाह। ञित्वाद्वृद्धिः। डुवप् बीजतंतुसंताने। वापिः। राजृ दीप्तौ। राजिः। "राजिः स्त्रीपंक्तिरेखयोः" इति मेदिनी। वृञ् वरणे ऽन्तः। ञेरिति त्रिलोपः। वारिः। "वारिः स्मृता सरस्वत्या वारि ह्रीबेरनीरयोः।" इति विश्वः। कृदिकारादितीप् तु पाक्षिकः सर्वत्र भवति। "वारी तु गजबंधनी" इत्यमरः। "वारिः पथिकसंहतौ" इति च॥

तत्त्व०–वारिर्गजबंधनी। जले क्लीबे॥

**नहो भः ॥ १०४४ ॥ नाभिः । जनिः । आजिः । आतिः ॥**

सुबो०—नहो भः । णह बंधने । अस्मादिञ् स्यात् हस्य भश्च । नाभिः । " नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे ॥ " इति मेदिनी । जनी प्रादुर्भावे इञ् । जनिवध्योरिति न वृद्धिः । जनिः । कृदिकारादिति पक्षे ईप् । जनी । " जनी सीमंतिनी वध्वोरुत्पत्तावौषधौ तथा । " इति मेदिनी । अज गतौ क्षेपणे च । वाहुलकादजेर्वीभावो न । आजिः संग्रामः । अत सातत्यगमने । आतिः पक्षी ॥

तत्त्व०—नाभिः स्यात्क्षत्रिये पुंसि । प्राण्यंगे तु स्त्रियाम् ॥

**अशेरुट् ॥ १०४५ ॥ राशिः ॥**

सुबो०—अशेरुट् । अशूङ् व्याप्तौ । अस्मादिञ्प्रत्ययो धातोरुडागमश्च स्यात् । राशिः । " राशिर्मेषादिपुंजयोः । " इति मेदिनी ॥

**वातेर्डित् ॥ १०४६ ॥ विः ॥**

सुबो०—वातेर्डित् । वा गतिगंधनयोरस्माड्डित् स्यात् । डित्वाट्टिलोपः । विः पक्षी । स्त्रियां वीत्यपि ॥

**नीव्यादयः ॥ १०४७ ॥ निपूर्वो व्येञ् । नीविः । प्रहिः । समानं ख्यायते जनैरिति सखा ॥**

सुबो०—नीव्यादयः डिप्रत्ययांता निपात्यंते । निपूर्वः व्येञ् संवरणे । डित्वाट्टिलोपः नेर्दीर्घो निपात्यते । यत इति यलोपः। नीविः। कृदिकारादितीपि । नीवी । " स्त्रीकटौ वस्त्रबंधेऽपि नीवी परिपणेऽपि च । " इत्यमरः । परिपणो मूलधनम् । हृञ् हरणे । टिलोपे । प्रहिः । " पुंस्येवांधुः प्रहिः कूपः " इत्यमरः । ख्या प्रकथने । टिलोपे सति यलोपः सहादेरिति समानस्य सादेशः सेर्डा धेरिति डा । सखा ॥

तत्त्व०—प्रहिः कूपः ॥

**आङ्पूर्वौ श्रीहनी ॥ १०४८ ॥ अश्रिः । अहिः ॥**

सुबो०—आङ्पूर्वौ श्रीहनी । श्रिञ् सेवायाम् । टिलोपे सति आङो ह्रस्वः निपातनात् । अश्रिः । "स्त्रियः पाल्यश्रिकोटयः" इत्यमरः । दंत्यसकारवांस्तु अदंतः । " अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते । " इति मेदिनी । आङ्पूर्वो हन हिंसागत्योः । टिलोपे सति आङो ह्रस्वो निपातनात् । अहिः । " अहिर्वृत्रासुरे सर्पे " इति मेदिनी ॥

तत्त्व०—स्त्रियां पाल्यश्रिकोटयः ॥

**कॄादेः किः ॥ १०४९ ॥ कॄ । किरिः । गॄ । गिरिः । पॄ । पुरिः ॥**

सुबो०—ऋादेः किः। किप्रत्ययमाह। कित्वान्न गुणः। कॄ विक्षेपे। ऋत इरितीर्। किरिः। "वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटिः।" इत्यमरः। तॄकॄज्ञाभ्यश्चेति कप्रत्ययेऽदन्तोऽप्यस्ति। "त्वाचि त्वचः किरोऽपि स्यात् किरौ प्रोक्तः पथः पथि।" इति द्विरूपकोशः। गॄ निगरणे। गिरिः। "गिरिर्ना नेत्ररुग् भदि। अद्रौ गिरियके योषित् गीर्णो पूज्ये पुनस्त्रिषु॥" इति मेदिनी। पॄ-पालनादौ। पोरुरित्युर्। पुरिर्नगरं राजा नदी च॥

**मन् धातोः ॥ १०५० ॥ कर्म्म। चर्म्म। भस भर्त्सनदीप्त्योः। भस्म। जन्म। छद्म। सुत्रामा॥**

सुबो०—मन् धातोः। मन्प्रत्ययमाह। डुकृञ् करणे। क्रियते इति कर्म। "कर्म व्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्।" इति रुद्रः। चर गत्यादौ। चर्म। "चर्म कृत्तौ च फलके" इति मेदिनी। भस भर्त्सनदीप्त्योः। भस्म। जन जनने। जन्म। छद अपवारणे चुरादिः। इस्मन्निति ह्रस्वः। णेरिति णिलोपः। छद्म। त्रैङ् पालने। सुष्ठु त्रायते इति सुत्रामा इन्द्रः॥

**बृंहेर्नस्य अः ॥ १०५१ ॥ ब्रह्म ॥**

सुबो०—बृंहेर्नस्य अः। बृहि वृद्धावस्मान्मन् स्यात्। नुमो नस्य अकारे कृते रत्वम्। ब्रह्म। "ब्रह्म तत्त्वं तपो वेदो न द्वयोः पुंसि वेधसि। ऋत्विग्रागभिदोर्विप्रे" इति मेदिनी। "ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः।" इत्यमरः॥

तत्त्व०—ब्रह्म तत्त्व तपो वेदो ब्रह्मा विप्रः प्रजापतिः॥

**नामादयः ॥ १०५२ ॥ म्ना। नाम। षिञ्। सीमा। व्येञ्। व्योम। रु। रोम। पै शोषणे। पाप्मा। वेमा। अतेर्मनिण्। आत्मा॥**

सुबो०—नामादयः। मन्प्रत्ययांता निपात्यंते। म्ना अभ्यासे। म्नायतेऽनेनेति मलोपो निपातनात्। नाम। "आख्याह्वे अभिधानं च नामधेयं च नाम च।" इत्यमरः। षोऽन्तकर्मणि। साम। "साम क्लीबमुपायस्य भेदे वेदांतरेऽपि च।" इति मेदिनी। षिञ् बंधने। सिनोतेर्दीर्घो निपात्यते। सीमा। "सीमसीमे स्त्रियामुभे" इत्यमरः। व्येञ् संवरणे। अंत्यस्योत्वं निपातनात् गुणः। व्योम। रु शब्दे। रोम गात्रकेशः। पा पाने। पुगागमो निपात्यते। पाप्मा पापम्। वेञ् तंतुसंताने। वेमा तंतुवायदंडः। अर्द्धर्चादिः। अतेर्मनिण्। णित्वाद्वृद्धिः। इकार उच्चारणार्थः। अत सातत्यगमने। आत्मा। "आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि॥" इति मेदिनी॥

तत्त्व०—वेमा तन्तुवायदण्डः॥

**हनिमशिभ्यां सिकः ॥ १०५३ ॥** हंसिका । मश शब्दे । मक्षिका ॥

सुबो०-हनिमशिभ्यां सिकः । आभ्यां सिकप्रत्ययः स्यात् । सिकप्रत्ययमाह । हन हिंसागत्योः । हंसिका । " हंसिका हंसयोषिति " । मश शब्दे रोषकृते च । छशषेति षत्वं षढोरिति कत्वं षत्वं च । मक्षिका । " मक्षिका भ्रमराली स्यात् " इति हारावली ॥

**कोररः ॥ १०५४ ॥** कवरः ॥

सुबो०-कोररः । कु शब्दे । अस्मादरः स्यात् । कवरः पाटकः । बवयोरैक्यात् ईपि प्रत्यये । कबरी केशविन्यासः । अन्यत्र कबरा ॥

**गिर उडः ॥ १०५५ ॥**

सुबो०-गिर उडः । गॄ निगरणे । अस्मादुडप्रत्ययः । गरुडः ॥

**इन्देः कमिर्नलोपश्च ॥ १०५६ ॥** इदम् ॥

सुबो०-इंदेः कमिर्नलोपश्च । इदि परमैश्वर्ये । अस्मात्कमिः स्यात् नलोपश्च कित्वाद्गुणो न । इकार उच्चारणार्थः । इदमिति सर्वादिगणशब्दोऽयं सन्निहितपरामर्शकः ॥

**कायतेर्डिमु ॥ १०५७ ॥** किम् ॥

सुबो०-कायतेर्डिमु । कै शब्दे । अस्मात् डिमुप्रत्ययः स्यात् डित्वाट्टिलोपः । किम् ॥

**धातोस्त्रः ॥ १०५८ ॥** वस्त्रम् । अस्त्रम् । छत्रम् ॥

सुबो०-धातोस्त्रः । त्रप्रत्ययमाह । वस निवासे । वस्त्रम् । असु क्षेपणे । अस्त्रम् । " अस्त्रं प्रहरणे चापे करवाले नपुंसकम् । " इति मेदिनी । छद अपवारणे । चुरादिर्ण्यंतः । इस्मन्त्रिति ह्रस्वत्वं णेरिति णिलोपः । छत्रम् ॥

**सिविमुच्योष्टेरूः ॥ १०५९ ॥** षिवु । सूत्रम् । मुच्लृ । मूत्रम् ॥

सुबो०-सिविमुच्योष्टेरूः । आभ्यां त्रप्रत्ययः स्यात् । अनयोष्टेरूकारादेशश्च । कित्वान्न गुणः । षिवु तंतुसंताने । सूत्रम् । " सूत्रं तु सूचनाग्रंथे सूत्रे तंतुव्यवस्थयोः । " इति विश्वः । मुच्लृ मोक्षणे । मूत्रम् ॥

**अमादेः क्त्रः ॥ १०६० ॥** आंत्रम् । चित्रम् । मित्रम् । वश । उष्ट्रः ॥

सुबो०-अमादेः क्त्रः । अम गतिशब्दसंभक्तिषु । अमांतस्येति दीर्घः । आंत्रम् । चिञ् चयने । चित्रम् । " आलेख्याश्चर्ययोश्चित्रम् " इत्यमरः । ञिमिदा स्नेहने । मित्रम् । " मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि " इति मेदिनी । उष दाहे । ष्टुत्वम् । उष्ट्रः । " उष्ट्रे क्रमेलकमयमहांगाः " इत्यमरः ॥

**पूञो ह्रस्वश्च ॥ १०६१ ॥ पुत्रः ॥**

सुबो०—पूञो ह्रस्वश्च । पूञ् पवने । अस्मात् क्त्रः स्यात् धातोर्ह्रस्वत्वं च । पुनाति स्ववंश्यानिति पुत्रः । पुत् नरकस्तस्मात् त्रायते इति आतो ड इति डप्रत्यये पुत्र इति व्युत्पत्त्यंतरम् ॥

**स्त्यायतेर्ड्रट् ॥ १०६२ ॥ स्त्री ॥**

सुबो०—स्त्यायतेर्ड्रट् । स्त्यै ष्ट्यै शब्दसंघातयोरस्मात् ड्रट् स्यात् । टित्वादीप् डित्वाट्टिलोपः । यवयोर्वसे इति यलोपः । स्त्री । " स्त्री योषिदबला योषा नारी सीमंतिनी वधूः । " इत्यमरः ॥

**गमेरा ॥ १०६३ ॥ गात्रम् ॥**

सुबो०—गमेरा । गम्लृ गतौ । अस्य मस्यात्वं स्यात् त्रप्रत्ययश्च । गात्रम् । " गात्रमंगे कलेवरे । स्तंबेरमाग्रजंघादि विभागेऽपि समीरितम् । " इति विश्वः ॥

**चरादेरित्रञ् ॥ १०६४ ॥ चारित्रम् । वादित्रम् ॥**

सुबो०—चरादेरित्रञ् । इत्रञ्प्रत्ययमाह । ञित्वाद्वृद्धिः । चर गतौ । चारित्रम् । वद व्यक्तायां वाचि ञ्यंतः । वादित्रं तूर्यादिः ॥

**अशित्रादिभ्य इत्रोत्रौ॥१०६५॥ अशित्रम् । वहित्रम् । धरित्री । अमित्रः । त्रैङ् । त्रोत्रम् ॥**

सुबो०—अशित्रादिभ्य इत्रोत्रौ । अशिश्च त्रा च तौ अशित्रौ अशित्रौ आदी येषां ते अशित्रादयस्तेभ्यः । द्वंद्वांते श्रूयमाणः शब्दः प्रत्येकं संबध्यते इत्यादि-शब्दः प्रत्येकं योज्यः । अशूङ् व्याप्तौ इत्यादिभ्य इत्रः प्रत्ययः स्यात् । त्रैङ् पालने इत्यादिभ्यः उत्रप्रत्ययः स्यात् । अशूङ् । अशित्रम् । वह प्रापणे । वहि-त्रम् । धृञ् धारणे । धरित्रम् । ईपि धरित्री । अम गतौ । अमित्रः शत्रुः । मित्रं नेति विग्रहे त्वमित्रमिति नपुंसकं त्रैङ् आत्वे उत्रे च । त्रोत्रं प्रहरणम् । वृञ् वरणे । वरुत्रं प्रावरणम् ॥

तत्त्व०—त्रोत्रमिति । प्रहरणे ॥

**चितेः कणः कश्च ॥ १०६६ ॥ चिक्कणम् ॥**

सुबो०—चितेः कणः कश्च । चिती संज्ञाने । अस्मात् कणप्रत्ययः स्यात् तस्य कश्च । बाहुलकाद्गुणाभावः । चिक्कणम् । " चिक्कणं मसृणं स्निग्धम् " इत्यमरः ॥

तत्त्व०—चिक्कणमिति स्निग्धम् ॥

**सूचेस्स्मः ॥ १०६७ ॥ सूक्ष्मम् ॥**

सुबो०—सूचेः स्मः । सूच पैशून्ये । चुरादिरस्मात् स्मप्रत्ययः स्यात् । णेरिति

ञिलोपः । कुत्वषत्वे । सूक्ष्मम् । "सूक्ष्मं स्यात्कंटकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके ।" इति मेदिनी ॥

**पातेर्डुम्सुः ॥ १०६८ ॥ पुमान् ॥**

सुबो०—पातेर्डुम्सुः । पा रक्षणेऽस्मात् डुमसुप्रत्ययः स्यात् डित्त्वाट्टिलोपः । उदित्त्वात् स्त्रियामीप् । सुपुंसी । पुंसोऽसुङित्यसुङ् । पुमान् ॥

**भुजादेः क्ष्यः ॥ १०६९ ॥ भुजिष्यो दासः ॥**

सुबो०—भुजादेः किष्यः । भुज पालनादौ । अस्मात् किष्यप्रत्ययः स्यात् । कित्त्वान्न गुणः । भुजिष्यः । "भुजिष्यस्तु स्वतंत्रे च हस्तसूत्रकयोः स्त्रियाम् ।" इति मेदिनी । "भुजिष्यः परिचारकः" इत्यमरः ॥

**वसादेस्तिः ॥१०७०॥ वस्तिः । शास्तिः । अगमस्यतीतिअगस्तिः ॥**

सुबो०—वसादेस्तिः । तिप्रत्ययमाह । वस निवासे वस आच्छादने च । वस्तिः । "वस्तिर्द्वयोर्निरूहे नाऽभ्यधोभूमिदशासु च ।" इति मेदिनी । "वस्तिर्नाभेरधो द्वयोः" इत्यमरः । शासु अनुशिष्टौ । शास्तिः राजदंडः । असु क्षेपणे । विंध्याख्यमगमस्यतीति हलादेरिति टिलोपः । अगस्तिः । "अगस्तिः कुंभयोनौ च वंगसेनतरौ पुमान् ।" इति मेदिनी ॥

तत्त्व०—वस्तिरिति । वस्तिर्नाभेरधो द्वयोः । दशासूत्रेऽपि वस्तयः । शास्तिरिति । राजदण्डे अगमिति विध्याख्यमित्यर्थः ॥

**वौ तसेः ॥१०७१॥ तसु उपक्षये । वितस्तिः । पत्तिः ॥**

सुबो०—वौ तसेः । तसु उपक्षये । अस्मात् विपूर्वात्तिः स्यात् । वितस्तिः । "अंगुष्ठे सकनिष्ठे स्यात् वितस्तिर्द्वादशांगुलः ।" इत्यमरः । "स्त्रीपुंसयोर्वितस्तिः स्यात्" इत्यमरमाला । पद गतौ । पत्तिः ॥

**दृणातेर्ह्रस्वः ॥ १०७२ ॥ दृतिः ॥**

सुबो०—दृणातेर्ह्रस्वः । दृ विदारणे अस्मात्तिः स्यात् धातोर्ह्रस्वत्वं च । दृतिः । "दृतिश्चर्मपुटे मत्स्ये ना" इति मेदिनी ॥

**कॄतॄकृपिभ्यः कीटः ॥ १०७३ ॥ किरीटम् । तिरीटम् । कृपीटम् ॥**

सुबो०—कॄतॄकृपिभ्यः कीटः । कीटप्रत्ययमाह । कित्त्वान्नगुणः । कॄ विक्षेपे । ऋत इरितीर् । किरीटम् । "किरीटं मुकुटे न स्त्री" इति हेमचंद्रः । तॄ प्लवनसंतरणयोः । ऋत इरितीर् । तिरीटं सुवर्णं शिरोवेष्टनं च । कृपू सामर्थ्ये । कृपीटम् । "गोमीकृपीटमुदरे नीरे" इति विश्वः ॥

तत्त्व०—किरीटमिति । शिरोवेष्टने । तिरीटमिति सुवर्णे । कृपीटमिति वारिकुक्ष्योश्च ॥

**धातोरसुः ॥ १०७४ ॥** चेतः । सरः । पयः ॥

सुबो०-धातोरसुः । असुप्रत्ययमाह । उदित्त्वादीप् । चित संचेतने । चिती संज्ञाने । चुरादिश्च । चेतः । " चित्तं तु चेतो हृदयं स्वांतं हृन्मानसं मनः । " इत्यमरः । सृ गतौ । सरः । ईपि सरसी । " सरसी तु महासरः " इति शब्दार्णवः । महांति सरांसि सरस्य इति भाष्यम् । पय गतौ । पीङ् पाने च । पयः । " पयः स्यात् क्षीरनीरयोः " इति मेदिनी ॥

**अशेर्युट् स्तुतौ ॥ १०७५ ॥** स्तूयते इति यशः ॥

सुबो०-अशेर्युट् स्तुतौ । अशूङ् व्याप्तावस्मात् असुः स्यात् धातोर्युडागमश्च । यशः कीर्तिः ॥

**उब्जेर्बले बलोपः ॥ १०७६ ॥** ओजः ॥

सुबो०-उब्जेर्बले बलोपः । उब्ज आर्ज्जवे । अस्मादसुः स्यात् बले वाच्ये वस्य लोपश्च । ओजः । " ओजो दीप्ताववष्टंभे प्रकाशबलयोरपि । " इति मेदिनी ॥

**श्रिञः शिरः किच्च ॥ १०७७ ॥** शिरः ॥

सुबो०-श्रिञः शिरः किच्च । श्रिञ् सेवायाम् । अस्मादसुः स्यात् स च कित् धातोः शिरादेशश्च । शिरः । " उत्तमांगं शिरः शीर्षम् " इत्यमरः । कप्रत्यये तु शिर इत्यदंतोऽपि शिरोवाची । " शिरोऽदंतो रजोवाची रजस्तथा " इति कोशांतरम् । " पिंडं दद्याद्गयाशिरे " इति वायुपुराणे । " कुण्डलैर्धृष्टगंडानां कुमाराणां तरस्विनाम् । निचकर्त शिरान् द्रौणिर्नालभ्य इव पंकजान् ॥ " इति महाभारते ॥

**अर्तेरुरः ॥ १०७८ ॥** उरः ॥

सुबो०-अर्तेरुरः । ऋ गतावस्मादसुः स्यात् स च कित् धातोरुरादेशश्च । उरः । " उरो वत्सं च वक्षश्च " इत्यमरः ॥

**व्याधौ शुट् ॥ १०७९ ॥** अर्शः ॥

सुबो०-व्याधौ शुट् । ऋ गतौ । अस्मादसुः स्यात् प्रत्ययस्य शुडागमश्च स्यात् व्याधौ वाच्ये । अर्शः गुदव्याधिः ॥

तत्त्व०-अर्श इति । गुदव्याधौ ॥

**उदके नुट् ॥ १०८० ॥** अर्णः ॥

सुबो०-उदके नुट् । अर्तेरसुः स्यात् तस्य नुट् च । अर्णः जलम् ॥

**इण आगसि ॥ १०८१ ॥** एनः ॥

सुबो०-इण आगसि । इण् गतावस्मात्पापे वाच्येऽसुः स्यात् प्रत्ययस्य नुगागमश्च । एनः पापम् ॥

**स्रुरीभ्यां तुट् च ॥ १०८२ ॥ स्रोतः । रेतः ॥**

सुबो०—स्रुरीभ्यां तुट् च । आभ्यामसुः स्यात् प्रत्ययस्य तुडागमश्च । स्रु गतौ । स्रोतः । "स्रोतोऽम्बुवेगेन्द्रिययोः" इति विश्वः । रीङ् श्रवणे । रेतः । "रेतः शुक्रे पारदे च" इति मेदिनी ॥

**पातेरुदके थुट् ॥ १०८३ ॥ पाथः ॥**

सुबो०—पातेरुदके थुट् । पा रक्षणे । अस्मादसुः प्रत्ययः स्यात् प्रत्ययस्य थुडागमश्च । पाथः । "कबंधमुदकं पाथः" इत्यमरः ॥

**अदेर्भक्ते धो नुम् च ॥ १०८४ ॥ अन्धः ॥**

सुबो०—अदेर्भक्ते धो नुम् च । अद भक्षणे । अस्मादसुः स्यात् धातोर्दस्य धो नुम् च । अंधः । "भिस्सा स्त्री भक्तमंधोऽन्नम्" इत्यमरः ॥

**आप उदके ह्रस्वो नुम्भौ ॥ १०८५ ॥ अम्भः ॥**

सुबो०—आप उदके ह्रस्वो नुम्भौ । आप्नोतेरसुः स्यात् धातोर्ह्रस्वत्वं च नुमागमो भश्चांतादेशः उदके वाच्ये । अम्भः उदकम् ॥

**नहेर्दिवि भः ॥ १०८६ ॥ नभः ॥**

सुबो०—नहेर्दिवि भः । णह बंधने । अस्मात् गगने वाच्ये असुः स्यात् भश्चांतादेशः । नभः । "नभो व्योम्नि नभो मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृतम् ॥" इति विश्वः । "नभः खं श्रावणो नभाः" इत्यमरः । "नभं तु नभसा सार्द्धम्" इति द्विरूपकोशः ॥

**इण आग अपराधे ॥ १०८७ ॥ आगः ॥**

सुबो०—इण आग अपराधे । इण् गतावस्मादसुः स्यात् अपराधे वाच्ये धातोरागादेशश्च । आगः । "आगः पापापराधयोः" इति विश्वः । "आगोऽपराधो मंतुश्च" इत्यमरः ॥

तत्त्व०—आगः पापापराधयोः ॥

**अमेर्हुक् ॥ १०८८ ॥ अंहः ॥**

सुबो०—अमेर्हुक् । अम गत्यादावस्मादसुः स्यात् धातोर्हुगागमश्च । अमंति गच्छंत्यधस्तादनेनेति । अंहः दुरितम् ॥

**रमेश्च ॥ १०८९ ॥ रंहः । देशे ह च । रमंतेऽस्मिन् रहः ॥**

सुबो०—रमेश्च । रमु क्रीडायामस्मादसुः स्यात् धातोर्हुगागमश्च । रंहः वेगः । देशे वाच्ये रमेरसुः स्यात् धातोर्मस्य हश्च । रहः। "रहस्तत्त्वे रते गुह्य" इति मेदिनी॥

**रंज्यादेः कित् ॥ १०९० ॥ रजः । भुवः ॥**

सुबो०—रंज्यादेः कित् । असुः स्यात् स च कित् । रंज रागे । कित्त्वान्नोलोपो इति नलोपः । रजः । "रजः क्लीबं गुणांतरे । आर्त्तवे च परागे च रेणुमात्रेऽपि दृश्यते ॥" इति मेदिनी । कप्रत्यये अकारांतोऽपि । "रजोयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु ।" इत्यजयकोशः । भू सत्तायाम् । नुधातोरित्युव् । भुवः अंतरिक्षम् । षष्ठ्यंतप्रतिरूपकमव्ययमिदम् ॥

**वसेर्णित् ॥ १०९१ ॥ वासः ॥**

सुबो०—वसेर्णित् । वस निवासे । अस्मादसुः स्यात् स च णित् । णित्वाद्वृद्धिः । वासः वस्त्रम् ॥

**चंदेरादेश्च छः ॥ १०९२ ॥ छन्दः ॥**

सुबो०—चंदेरादेश्च छः । चदि आह्लादने अस्मादसुः स्यात् धातोश्चस्य छश्च । छंदः । "छंदः पद्यभेदेऽपि स्वैराचाराभिलाषयोः ।" इति मेदिनी । अदंतोऽप्ययम् । "छंदावभिप्रायवशात्" इति द्विरूपकोशः ॥

**वचादेस्सुट् ॥ १०९३ ॥ वक्षः । पक्षः ॥**

सुबो०—वचादेस्सुट् । वच परिभाषणे इत्यादिभ्योऽसुः स्यात् प्रत्ययस्य सुडागमश्च चस्य कत्वे सस्य षत्वम् । वक्षो हृदयम् । डुपचष् पाके । पक्षः । "पक्षसी तु स्मृतौ पक्षौ" इति ॥

तत्व०—पक्ष इति । पक्षसी तु स्मृतौ पक्षौ ॥

**नञि हन एह च ॥ १०९४ ॥ अनेहाः । अनेहसौ ॥**

सुबो०—नञि हन एह च । असिप्रत्ययमाह । नञ्युपपदे हंतेरसिप्रत्ययः स्यात् धातोरेहादेशश्च । इकार उच्चारणार्थः । हन हिंसागत्योः । उशनसामिति सेडौ । अनेहाः कालः ॥

**विधाञो वेध च ॥ १०९५ ॥ वेधाः ॥**

सुबो०—विधाञो वेध च । डुधाञ् धारणादौ । विपूर्वादस्मादसिः स्यात् सोपसर्गस्य धातोर्वेधादेशश्च । विदधातीति वेधाः । अत्वसोः साविति दीर्घः । "वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि ।" इति मेदिनी ॥

**चन्द्रे माङो डित् ॥ १०९६ ॥ चन्द्रमाः ॥**

सुबो०—चंद्रे माङो डित् । चंद्रोपपदान्माङोऽसिः स्यात् स च डित् । डित्वाट्टिलोपः । माङ् माने । चंद्रं रजतममृतं च मिमीतेऽसौ चंद्रमाः । अत्वसोः साविति दीर्घः ॥

**पुरसि धाञः ॥ १०९७ ॥ पुरोधाः ॥**

सुबो०—पुरसि धाञः । पुरस्शब्दे उपपदे धाञोऽसिप्रत्ययः स्यात् डुधाञ् धारणादौ । पुरोधाः । " पुरोधास्तु पुरोहितः " इत्यमरः ॥

**उषः कित् ॥१०९८॥ उषः ॥**

सुबो०—उषः कित् । उष दाहे अस्मादसिः स्यात् स च कित् कित्वान्न गुणः । उषः प्रभातम् ॥

**दमेरुनसिः ॥ १०९९ ॥ दमुनाः ॥**

सुबो०—दमेरुनसिः । दमु उपशमे अस्मादुनसिः स्यात् । दमुनाः । " सप्तार्चिर्दमुनाः शुक्रः " इत्यमरः ॥

तत्त्व०—दमुना अग्निः ॥

**वशेः कनसिः ॥ ११०० ॥ उशनाः ॥**

सुबो०—वशेः कनसिः । वश कांतावस्मात् कनसिः स्यात् । कित्त्वाद् ग्रहामिति संप्रसारणम् । उशनाः । " उशना भार्गवः कविः " इत्यमरः ॥

**अंगिरादयः ॥ ११०१ ॥ अगि । अङ्गिराः ॥**

सुबो०—अंगिरादयः । असिप्रत्ययांता निपात्यंते । अगि गतौ । असिप्रत्ययस्य इडागमो निपातनात् । अंगिराः ऋषिभेदः ॥

**अप्पूर्वस्सर्त्तिः ॥११०२॥ अप्सराः ॥**

सुबो०—अप्पूर्वः सर्तिः । सृ गतावप्पूर्वः अप्सराः । " स्त्रियां बहुष्वप्सरसः । स्यादेकत्वेऽप्सराः " इति शब्दार्णवः । " अप्सरस्त्वप्सराः प्रोक्ताः सुमनाः सुमनःसु च । " इति द्विरूपकोशः ॥

तत्त्व०—अप्सरा इति । प्रायेण भूम्नि अप्सरसः ॥

**पुरुपूर्वो रौतिः ॥११०३॥ पुरूरवाः ॥ इत्युणादौ चतुर्थः पादः ॥४॥**

सुबो०—पुरुपूर्वो रौतिः । रुशब्दे पुरुपूर्वः पुरुशब्दांतस्य दीर्घो निपातनात् । पुरूरवाः । " पुरूरवा बुधसुतो राजर्षिश्च पुरूरवाः । " इत्यमरः ॥ इत्युणादिषु चतुर्थः पादः ॥ ४ ॥

**अदिभुवो डुतः ॥ ११०४ ॥ अद्भुतम् ॥**

सुबो०—अदिभुवो डुतः । अदित्यव्ययमाकस्मिकार्थे तस्मिन्नुपपदे भूधातोर्डुतः प्रत्ययः स्यात् । डित्वाट्टिलोपः । अद्भुतं आश्चर्य्यम् ॥

**गुधेरूमः ॥ ११०५ ॥ गोधूमः ॥**

सुबो०–गुधेरूमः । गुध परिवेष्टने । अस्मादूमः स्यात् । गुध्यते वेष्ट्यते प्राणिभिरिति गोधूमः । "गोधूमो नागरंगे स्यादोषधीव्रीहिभेदयोः ।" इति मेदिनी ॥

**मसेरूरः ॥ ११०६ ॥ मसूरः ॥**

सुबो०–मसेरूरः । मसी परिणामे अस्मात् ऊरः स्यात् । मसूरः ॥

**तृहेः क्नो हलोपः ॥ ११०७ ॥ तृणम् ॥**

सुबो०–तृहेः क्नो हलोपः । तृह् हिंसायामस्मात् क्नः स्यात् धातोर्हस्य लोपश्च । कित्त्वाद्गुणाभावः । तृणम् ॥

**दंसेष्टो न आ च ॥ ११०८ ॥ दासः ॥**

सुबो०–दंसेष्टो न आ च । दंसि दंशनदर्शनयोरस्माट्टप्रत्ययः नस्यात्वं च टित्वादीप् । दासः । दासी । "दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि ।" इति विश्वः ॥

तत्त्व०–दास इति । सेवकशूद्रयोर्दासः दासो धीवरः ॥

**दंशेश्च ॥ ११०९ ॥ दाशः ॥**

सुबो०–दंशेश्च । अस्मादपि स्यात् नस्यात्वं च । दाशः । "कैवर्ते दाशधीवरौ" इत्यमरः ॥

**सौ रमेः क्तः सोर्दीर्घः ॥ १११० ॥ सूरतः ॥**

सुबो०–सौ रमेः क्तः सोर्दीर्घः । रमु क्रीडायाम् । सुपूर्वादस्मात् क्तः स्यात् पूर्वपदस्य दीर्घश्च । कित्वात् लोपस्त्वनुदात्ततनामिति मलोपः । सूरतः । उपशांतो दयालुश्च ॥

तत्त्व०–सूरत इति । उपशांतदयावतोः ॥

**पूञो यो णुक् ह्रस्वश्च ॥ ११११ ॥ पुण्यम् ॥**

सुबो०–पूञो यो णुक् ह्रस्वश्च । पूङ् पवनेऽस्माद्यः प्रत्ययः स्यात् धातोर्णुक् ह्रस्वश्च । पुण्यम् । "पुण्यं मनोज्ञेऽभिहिते तथा सुकृतधर्मयोः ।" इति विश्वः ॥

**स्रंसतेश्शिर्यस्य कित्त्वं कुट् च ॥ १११२ ॥ शिक्यम् ॥**

सु[illegible]०–स्रंसतेः शिर्यस्य कित्त्वं कुट् च । स्रंसु अधःपतने अस्माद् यः स्यात् [illegible] कित् प्रत्ययस्य कुडागमश्च धातोः शिरादेशश्च । शिक्यम् ॥

**अर्तेः क्युरुट् च ॥ १११३ ॥ उरणः ॥**

सुबो०–अर्तेः क्युरुट् च । ऋ गतौ । अस्मात् क्युः प्रत्ययः स्यात् धातोरुदा[illegible]श्च । कित्वान्न गुणः । युवोरित्यनादेशः । उरणः । "मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय[illegible] एडके ।" इत्यमरः ॥

[illegible]

**उदि दृणातेर उदो दलोपश्च ॥१११४॥ उदरम् ॥**

सुबो०—उदि दृणातेर उदो दलोपश्च । दृ विदारणे । अस्मादुदूपूर्वादः स्यात् उदो दस्य लोपश्च । उदरम् ॥

**खनेर्मुट् डप्रत्ययः ॥ १११५ ॥ मुखम् ॥**

सुबो०—खनेर्मुट् डप्रत्ययः । खनु अवदारणे अस्मात् डः प्रत्ययः स्यात् धातोर्मुडागमश्च । डित्त्वाट्टिलोपः । मुखम् । " मुखं निःसरणे वक्त्रे प्रारंभोपाययोरपि । संध्यंतरे नाटकादेः शब्देऽपि च नपुंसकम् ॥ " इति मेदिनी । " मुखमुपाये प्रारंभे श्रेष्ठे निःसरणास्ययोः । " इति हैमः ॥

**अमेः सः ॥ १११६ ॥ अंसः ॥**

सुबो०—अमेः सः । अम गतावस्मात्सप्रत्ययः स्यात् । अंसः । " स्कंधो भुजशिरोंऽसोऽस्त्री " इत्यमरः । " अंसः स्कंधे विभागे च " इति विश्वः ॥

**मुहेः खो मूर्च ॥ १११७ ॥ मूर्खः ॥**

सुबो०—मुहेः खो मूर्च । मुह वैचित्ये । अस्मात्खप्रत्ययः स्याद् धातोर्मूरादेशश्च । मुह्यति इति मूर्खः । " अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः । " इत्यमरः ॥

**नहेर्हलोपश्च ॥ १११८ ॥ नखः ॥**

सुबो०—नहेर्हलोपश्च । णह बंधने अस्मात् खप्रत्ययः स्यात् हकारस्य लोपश्च । नखः । " नखः कररुहे षंढे गंधद्रव्ये नखं नखी । " इति विश्वः । " नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम् । " इति मेदिनी ॥

**शीङो ह्रस्वश्च ॥ १११९ ॥ शिखा ॥**

सुबो०—शीङो ह्रस्वश्च । शीङ् स्वप्नेऽस्मात्खः स्यात् धातोर्ह्रस्वश्च । ह्रस्वविधानसामर्थ्याद्गुणाभावश्च । शिखा । " शिखा शाखाबर्हिचूडालांगलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च ॥ " इति मेदिनी ॥

**माङ ऊखो मय च ॥ ११२० ॥ मयूखः ॥**

सुबो०—माङ ऊखो मय च । माङ् माने । अस्मादूखप्रत्ययः स्यात् धातोर्मयादेशश्च । मयूखः । " मयूखस्त्विट्करज्वालासु " इत्यमरः ॥

**गलेः फो गस्योच्च ॥ ११२१ ॥ गुल्फः ॥**

सुबो०—गलेः फो गस्योच्च । गल अदने अस्मात् फप्रत्ययः स्यात् धातोरकारस्योत्वं च । गुल्फः । "तद्ग्रंथी घुटिके गुल्फौ " इत्यमरः । तयोः पादयोर्ग्रंथी इत्यर्थः ॥

तत्त्व०—गुल्फ इति । शरीरावयवरोगयोः ॥

**स्पृशेश्शुश्वणौ पृ च ॥ ११२२ ॥ पर्शुः । पार्श्वः ॥**

सुबो०—स्पृशेः शुश्वणौ पृ च । स्पृश स्पर्शने । अस्मात् शुश्वणौ प्रत्ययौ स्तः धातोः पृ इत्यादेशश्च णित्त्वाद्वृद्धिः । पर्शुः । पार्श्वः । “ पर्शुरस्त्री कक्षयोरधः ” इति । पार्श्वमंतिके । “ कक्षाधोऽवयवे वक्रोपायपर्शुसमूहयोः । ” इति हैमः ॥

तत्त्व०—पार्श्वे स्त्रीकक्षयोरधः ॥

**श्मनि श्रिभो डुन् ॥ ११२३ ॥ श्मन्शब्दो मुखवाची । श्मानं मुखं श्रयते श्मश्रु ॥**

सुबो०—श्मनि श्रिञो डुन् । श्रिञ् सेवायामस्मात् श्मन्युपपदे डुन् स्यात् । डित्वाट्टिलोपः । श्मन्शब्दो मुखवाची मुखमाश्रयते इति श्मश्रु । नोलोप इति नलोपः । “ तद्वृद्धौ श्मश्रु पुम्मुखे ” इत्यमरः । पुरुषमुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्तते इत्यर्थः ॥

**जनेरो जंघ च ॥ ११२४ ॥ जंघा ॥**

सुबो०—जनेरो जंघ च । जनी प्रादुर्भावे । अस्मादप्रत्ययः स्यात् धातोर्जंघादेशश्च । जंघा ॥

**हन्तेः शरीरावयवे द्वे च ॥ ११२५ ॥ जघनम् ॥**

सुबो०—हन्तेः शरीरावयवे द्वे च । हन् हिंसागत्योरस्मादः स्यात् धातोर्द्वित्वं च। पूर्वाद् हंतेरिति हस्य घः । जघनम् । “ पश्चान्नितंबः स्त्रीकट्याः क्लीबे तु जघनं पुरः । ” इत्यमरः ॥

तत्त्व०—जघनमिति । “ पश्चान्नितंबः स्त्रीकट्याः क्लीबे तु जघन पुरः ॥ ”

**क्लिशेर्लस्य लोपश्च ॥ ११२६ ॥ केशः ॥**

सुबो०—क्लिशेर्लस्य लोपश्च । क्लिशु विबाधनेऽस्मादः स्यात् धातोर्लकारस्य लोपश्च। केशः । “ केशः स्यात् पुंसि वरुणे ह्रीवेरे कुंतलेऽपि च । ” इति मेदिनी ॥

**फलेरितः फस्य पः ॥ ११२७ ॥ पलितम् ॥**

सुबो०—फलेरितः फस्य पः । फल निष्पत्तौ अस्मादितः प्रत्ययः स्यात् धातोरा-[illegible] पत्वं च । पलितम् । “ पलितं जरसा शौक्ल्यम् ” इत्यमरः । “ पलितं [illegible] नारी केशपाके च कर्दमे । ” इति मेदिनी ॥

**कृञादिभ्यो वुन् ॥ ११२८ ॥ करकः । कटकः । कुर गतौ । कोरकः । नरकः ॥**

सुबो०—[illegible] । [illegible] । [illegible]त्यकादेशश्च । डुकृञ् करणे । करकः [illegible] । [illegible] । कटे वर्षावरणयोः । कटको वलयः । नृ नये ।

नरकः । " स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् । " इत्यमरः । " नरकः पुंसि निरये देवारातिप्रभेदयोः । " इति मेदिनी ॥

तत्त्व०—नरक इति । नारकोऽपि च । कोरकोऽस्त्री कोरकः पुमानिति । अस्य प्रायेण पुमानिति व्याख्यानात् ॥

**चीकयतेराद्यन्तविपर्ययः ॥११२९॥ चीक शब्दे । कीचकः ॥**

सुबो०—चीकयतेराद्यंतविपर्ययः। चीक आमंत्रणे। चुरादिरस्याद्यंतविपर्ययः वुश्च। कीचकः। णेरिति णिलोपः । " कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमांतरे ।" इति हैमः ॥

तत्त्व०—कीचक इति । वायुना शब्दकारी सच्छिद्रो वंशः ॥

**पचिमच्योरिरतः ॥ ११३० ॥ पेचकः । मेचकः । मच शब्दे ॥**

सुबो०—पाचिमच्योरिरतः । एतयोरुपधाया अत इः स्यात् वुप्रत्ययश्च । गुणः । डुपचष् पाके । पेचकः । " उलूके करिणः पुच्छे मूलोपांते च पेचकः । " इत्यमरः। " पेचको गजलांगूले मूलोपांते च कौशिके ।" इति मेदिनी । मचि कल्कने । मेचकः। " मेचकस्तु मयूरस्य चंद्रके श्यामले पुमान् । तद्युक्ते वाच्यवत् क्लीबं स्रोतोंजनांधकारयोः ॥ " इति मेदिनी ॥

**जनेररष्ठ च ॥ ११३१ ॥ जठरम् ॥**

सुबो०—जनेररष्ठ च । जन जनने जनी प्रादुर्भावे च आभ्यामरप्रत्ययः स्यात् धातोर्नस्य ठश्च । जठरः । " जठरः कठिनेऽपि स्यात् " इत्यमरः ॥

**हर्यतेः कन्यो हिर च ॥ ११३२ ॥ हिरण्यम् ॥**

सुबो०—हर्यतेः कन्यो हिर च । हर्य गतिकांत्योरस्मात् कन्यप्रत्ययः स्यात् धातोर्हिरादेशश्च । कित्वान्न गुणः । हिरण्यं सुवर्णम् ॥

**कृञः पासः ॥११३३॥ कर्पासः ॥**

सुबो०—कृञः पासः । डुकृञ् करणेऽस्मात्पासप्रत्ययः स्यात् । कर्पासः । अणि प्रत्यये कार्पासं वस्त्रम् ॥

**ऊर्णोतेर्डः ॥ ११३४ ॥ ऊर्णा ॥**

सुबो०—ऊर्णोतेर्डः । ऊर्णुञ् आच्छादने अस्माड्डप्रत्ययः स्यात् । डित्त्वाट्टिलोपः । ऊर्णा । " ऊर्णा मेषादिलोम्नि स्यादावर्ते चांतराभ्रुवौ ।" इत्यमरः । भ्रुवोर्मध्ये य आवर्त्तस्तत्रेत्यर्थः । अंतरायोगे भ्रुवाविति द्वितीया ॥

**दधातेर्यो नुट् च ॥ ११३५ ॥ धान्यम् ॥**

सुबो०—दधातेर्यो नुट् च । डुधाञ् धारणपोषणयोरस्माद्यप्रत्ययः स्यात् प्रत्ययस्य नुडागमश्च । धान्यम् । " धान्यं व्रीहिषु धान्याके " इति मेदिनी ॥

**तनोतेर्डउः सवच्च ॥ ११३६ ॥ तितउः ॥**

सुबो०–तनोतेर्डउः सवच्च। तनु विस्तारे अस्मात् डउप्रत्ययः स्यात्। डउप्रत्ययः सप्रत्ययतुल्यो भवति। तेन द्वित्वादि। डित्त्वाट्टिलोपः। यः से इति पूर्वस्येत्वम्। तितउः। पुंसि क्लीबे च। पृथगुच्चारणसामर्थ्याद्गुणो न। " चालनी तितउः पुमान् " इत्यमरः॥

तत्त्व०–तितउरिति चालन्याम्। भाष्ये क्लीबनिर्देशात् क्लीबता। " चालनी तितउः पुमान् " इत्यमरोक्तेः। पुस्त्वमिति॥

**अर्भकादयः ॥ ११३७ ॥ ऋधु। अर्भकः ॥**

सुबो०–अर्भकादयः। अर्भकादयो निपात्यंते। ऋधु वृद्धौ अस्मात्कप्रत्ययो धातोर्धकारस्य भश्च निपात्यते। अर्भकः। " अर्भकः कथितो बाले मूर्खेऽपि कशिपौ तथा। " इति मेदिनी॥

**प्रथेरुक् सम्प्रसारणं च ॥ ११३८ ॥ प्रथ। पृथुकः ॥**

सुबो०–प्रथेरुक् संप्रसारणं च। प्रथ प्रख्याने। अस्मादुक्प्रत्ययः स्यात्संप्रसारणं निपात्यते। " पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्।" इति मेदिनी॥

**पिबतेः कः ॥ ११३९ ॥ पाकः ॥**

सुबो०–पिबतेः कः। पा पानेऽस्मात्कप्रत्ययो निपातनात्। पाकः। " पाकः परिणतौ शिशौ। देशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च ॥" इति मेदिनी॥

**वदेर्नञि यः ॥ ११४० ॥ अवद्यम्। अव। अवमः। अधमः ॥**

सुबो०–वदेर्नञि यः। वद व्यक्तायां वाचि। नञ्युपपदादस्माद्यप्रत्ययो निपात्यते। अवद्यं पापम्। " कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः। " इत्यमरः। अव रक्षणादौ। अस्मादमप्रत्ययो निपात्यते धातोर्वकारस्य वा धकारश्च। अधमः। अवमः। " निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः। " इत्यमरः॥

**क्लिशेरः ॥ ११४१ ॥ कीनाशः ॥**

सुबो०–क्लिशेरः। क्लिश विबाधने। अस्मादप्रत्ययो निपात्यते उपधाया ईत्वं लस्य लोपो नागागमश्च। कीनाशः। " कीनाशः कर्षकक्षुद्रपांसुघातिषु वाच्यवत्। यमे ना " इति विश्वः॥

**चतेरुरः ॥ ११४२ ॥ चत्वारः ॥**

सुबो०–चतेरुरः। चते याचनेऽस्मादुरप्रत्ययः स्यात्। चतुराम् शौ चेत्याम्। चत्वारः॥

**दन्तेर्घुरच् ॥ ११४३ ॥ घोरम् ॥**

सुबो०—हंतेर्घुरच् । हन हिंसागत्योरस्मादप्रत्ययः स्यात् । धातोर्घुरादेशश्च । गुणः । घोरम् । " घोरं भीमे हरे " इति विश्वः ॥

**क्षमेरल्लोपश्च ॥ ११४४ ॥ क्ष्मा ॥**

सुबो०—क्षमेरल्लोपश्च । क्षमूष् सहने । अस्मादप्रत्ययः स्यात् धातोरुपधाया लोपश्च । क्ष्मा । " क्ष्माऽवनिर्मेदिनी मही " इत्यमरः ॥

**तरतेर्ड्रिः ॥ ११४५ ॥ त्रयः । त्रीन् ॥**

सुबो०—तरतेर्ड्रिः । तॄ प्लवनसंतरणयोरस्मात् ड्रिप्रत्ययः स्यात् । डित्वाट्टिलोपः । ए ओ जसीत्येत्त्वम् । त्रयः ॥

**ग्रहेरनिः ॥ ११४६ ॥ ग्रहणिः ॥**

सुबो०—ग्रहेरनिः । ग्रह उपादानेऽस्मादनिप्रत्ययः स्यात् । कृदिकारादिनीप् च । ग्रहणिः । " ग्रहणी रुक् प्रवाहिका " इत्यमरः ॥

**प्रथेरमः ॥ ११४७ ॥ प्रथमः ॥**

सुबो०—प्रथेरमः । प्रथ प्रख्यानेऽस्मादमप्रत्ययः स्यात् । प्रथमः । " प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत् । " इत्यमरः । प्रथमचरमेति वैकल्पिकं सर्वादिकार्यमस्य ॥

**चरेश्च ॥ ११४८ ॥ चरमः ॥**

सुबो०—चरेश्च । चर गतिभक्षणयोरस्मादमप्रत्ययः स्यात् । चरमः ॥

**मंगेरलः ॥ ११४९ ॥ मंगलः । सदोणादयः । सर्वस्मिन्काले उणादयः । उणादयोऽपरिमिताः प्रयोगमनुसृत्य प्रयोक्तव्याः ॥ इत्युणादौ पंचमः पादः ॥**

सुबो०—मंगेरलः । मगि गतावस्मादलप्रत्ययः स्यात् । मंगलम् । " मंगलो क्षितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थरक्षणेऽपि च ॥ " इति मेदिनी ॥ इत्युणादौ पंचमः पादः ॥

तत्त्व०—उणादय इति । तथा चोणादिषु प्रयोगं दृष्ट्वैव प्रकृतिप्रत्ययानुबंधककल्पनं कार्यमित्यर्थः ॥

इति उणादयः ।

---

**तुमुन् तदर्थायां भविष्यति ॥ ११५० ॥** धातोर्भविष्यति काले तुम्प्रत्ययस्तदर्थायां क्रियायां गम्यमानायाम् ॥ गुडं भोक्तुं व्रजति । व्याकरणं पठितुमीहे ॥

सुबो०–तुम् तदर्थायां भविष्यति । क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोर्भावे तुम् प्रत्ययः स्यात् तच्छब्देन क्रियाया अर्थः प्रयोजनं यस्याः सा क्रियार्था तस्यां क्त्वाद्यंतं चेत्यव्ययसंज्ञा। भुज पालनादौ । भोक्तुं व्रजति देवदत्तः। भविष्यद्रूपं यद्भोजनं तत् प्रयोजनकं देवदत्तकर्तृकं व्रजनमित्यर्थः । पठ व्यक्तायां वाचि । कृत इतीट् । पठितुमीष्टे देवदत्तः । भविष्यद्रूपं यत्पठनं तत्प्रयोजनकं देवदत्तकर्तृकं कामनमित्यर्थः ॥

तत्त्व०–तुम् तदर्थायामिति । क्रियायामिति । विशेष्यपदमात्रानुवृत्तम् । तस्यै क्रियायै इयं तदर्था तस्याम् । यद्वा सा क्रिया अर्थः प्रयोजन यस्याः सा तस्याम् । तुमुन्भाव इति पडिताः ॥

**तुमर्थे वुण् ॥ ११५१ ॥ कृष्णं दर्शको व्रजति ॥**

सुबो०–तुमर्थे वुण् । क्रियायां क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोः कर्त्तरि वुण् प्रत्ययः स्यात् । युवोरित्यकादेशः । दृशिर् प्रेक्षणे । कृष्णं दर्शको याति । कृष्णकर्मकं भविष्यद्दर्शनकर्तृकं दर्शनप्रयोजनकं च यानमित्यर्थः ॥

**कालसमयवेलासु ॥ ११५२ ॥ अध्येतुं कालः । स्तोतुं समयः । भोक्तुं वेला ॥**

सुबो०–कालसमयवेलासु । कालादिषूपपदेषु तुम् स्यात् । पर्य्यायोपादानमर्थोपलक्षणार्थम् । इङ् अध्ययने । अध्येतुं कालः । ष्टुञ् स्तुतौ । स्तोतुं समयः । भुज पालनादौ । भोक्तुं वेला । एवमन्ये । हसादियोगेऽपि अनुवादेऽर्थे तुम् न भवति । सिद्धस्वरूपोच्चारणमनुवादः । भूतानि कालः पचतीति वार्त्ता इति ॥

तत्त्व०–कालेति । प्रेरणमात्रानुवर्त्तते तेन भूतानि कालः पचतीति वार्त्तेत्यत्र न ॥

**इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुम् ॥ ११५३ ॥ भोक्तुमिच्छति वष्टि वांछति वा ॥**

सुबो०–इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुम् । अक्रियार्थोपपदार्थमेतत् । भोक्तुमिच्छति वाञ्छति । वश कान्तावयमपीच्छार्थकः । कांतिरिच्छा इत्युक्तत्वात् । भोक्तुमिच्छतीत्यत्र भोजनविषयिणीच्छा प्रतीयते नतु भोजनार्थेच्छेति । एककर्तृकेष्विति किम् । पुत्रस्य पठनमिच्छति । पुत्रस्येति कर्त्तरि षष्ठी । पुत्रकर्तृकं पठनमिच्छतीत्यर्थः ॥

तत्त्व०–इच्छार्थेष्विति । इच्छति भोक्तुमित्यादाविच्छाया भुजिं प्रति तादर्थ्याभावात् । प्रवृत्तिसामान्ये [illegible] । यत्नस्तु तादर्थ्यम् । एककर्तृत्वादिलाभार्थमेतत् ॥

**शकधृषज्ञाग्लाघटरभलभक्रमसहार्हाऽस्त्यर्थेषु ॥ ११५४ ॥ शक्नोति भोक्तुम् । धृष्णोति । जानातीत्यादि ॥**

सुबो०–शकधृषज्ञाग्लाघटरभलभक्रमसहार्हाऽस्त्यर्थेषु । एषूपपदेषु धातोस्तुम् स्यात् । अक्रियार्थोपपदार्थमेतत् । शक्लृ शक्तौ । ञिधृषा प्रागल्भ्ये । ज्ञा अवबोधने ।

ग्लै हर्षक्षये । घट चेष्टायाम् । रभ रामस्ये । डुलभष् प्राप्तौ । क्रमु पादविक्षेपे । षह मर्षणे । अर्ह पूजायाम् । अस भुवि । अर्थग्रहणमस्तिनैव संबध्यतेऽनंतरत्वात् । भोक्तुं शक्नोति धृष्णोति जानाति इत्यत्र भुज्यर्थो विषयतया संबध्यते । ग्लापयति भोक्तुमित्यत्र भोजनविषयिणी शक्तिर्गृह्यते । भोक्तुं महती योग्यता गम्यते । आरभते भोक्तुमित्यत्र भुजेराद्यावस्था गम्यते । लभते भोक्तुमित्यत्र प्राप्तिर्गम्यते । उत्सहते भोक्तुमित्यत्र भुजेराद्यावस्था गम्यते । अर्हति भोक्तुमित्यत्रापि योग्यता । अस्ति भवति विद्यते वा भोक्तुमित्यादौ संभवमात्रम् ॥

**पूर्णतावाचिषु सामर्थ्यार्थेषु ॥ ११५५ ॥** पर्याप्तो भोक्तुम् । प्रवीणः । कुशलः । समर्थः । पूर्णतेति किम् । अलं भुक्त्वा । सामर्थ्यार्थेषु किम् । पर्य्याप्तं भुंक्ते ॥

सुबो०—पूर्णतावाचिषु सामर्थ्यार्थेषु । पर्याप्तिवाचिषु सामर्थ्यवचनेषु उपपदेषु धातोस्तुम् स्यात् । पर्याप्तो भोक्तुं समर्थः कुशलः पटुः प्रवीण इत्यर्थः । पूर्णतावाचिष्विति किम् । पर्याप्तं भुंक्ते । प्रभूततेह गम्यते । न तु भोक्तुः सामर्थ्यम् ॥

**घञ् भावे ॥ ११५६ ॥** पाकः । त्यागः । भावः । दायः ॥

सुबो०—घञ् भावे । सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । क्रियांतराकांक्षोत्थापकतावच्छेदकाक्रांतत्वं सिद्धत्वम् । पिबतीत्यादौ तु साध्यावस्थापन्ने धात्वर्थे भाव इति भावे इत्याधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायामुपपदे भवंतीत्यर्थः । ञित्वाद्वृद्धिः । घित्त्वाच्चजोः कगौ घितीति कः । पच्यते पचनं वा पाकः । त्यज वयोहानौ । त्यज्यते त्यजनं वा त्यागः । भू सत्तायाम् । भूयते भवनं वा भावः । डुदाञ् दाने । दीयते दानम् । आतो युगिति युक् । दायः ॥

तत्त्व०—घञ् इति । भाव इति । भवनं भावः क्रियासामान्यं नतु भवत्यर्थमात्रम् । सिद्धताभूय एव भावे घञ् । उक्त च । क्रियायाः साध्यतावस्था सिद्धावस्था च कीर्तिता । सिद्धतां द्रव्यमिच्छंति तत्रैवेच्छंति घञ्विधिम् ॥ इति । पाक इति । ञित्वादुपधावृद्धिः ञित्वात्कुत्वम् ॥

**संज्ञायामकर्तरि च ॥११५७॥** कर्तृवर्जिते कारके भावे च घञ् संज्ञायामसंज्ञायां च ॥ कार्य्यं प्रत्याह्रियते यः सः प्रत्याहारः । दीयतेऽस्मै दायः । विक्रियतेऽनेनेति विकारः । उपाध्यायः । घञर्थे कः । घञोऽपवादः । विशेषेण हन्यते कार्य्यमनेनेति विघ्नः । सुघ्नः ॥

सुबो०—संज्ञायामकर्तरि च । कर्तृभिन्ने कारकेऽर्थे धातोर्घञ् स्यात् संज्ञायामसंज्ञायां च वाच्यमानायाम् । हृञ् हरणे । प्रत्याह्रियते इति प्रत्याहारः । डुदाञ् दाने । दीयते अस्मै इति आतो युगिति युक् । दायः । डुकृञ् करणे । विक्रियतेऽनेनेति

विकारः । इङ् अध्ययने । उपेत्याऽधीयतेऽस्मादित्युपाध्यायः । स्वराद इत्यस्याप-
वादोऽयं घञ् ॥

तत्त्व०—भाव इति । बाहुलकादनुपसर्गाद्बुधोऽपि घञ् । उपाध्यायेति । घञन्तस्य पुंस्त्वनियमात्कथमि-
ति चेत्सत्यम् । अपादाने स्त्रियामप्यभिधानात् ॥

स्वरादः ॥ ११५८ ॥ भावादौ ॥ घञोऽपवादः । चयनं चयः ।
नयनं नयः । षिञ् बन्धने । विशेषेण सीयंते बध्यंते जना अनेनेति
विषयः । स्तूयते अनेनेति स्तवः । सवनं सवः । लवनं लवः ।
कृञ् । क्रियते कार्यमनेनेति करः । गिरत्यनेनेति गरः । गलः ।
द्व्याद्युपसर्गहीनस्य छादेर्ह्रस्वोऽप्रत्यये । परिच्छदः । छत्रम् । दन्ता
छाद्यन्तेऽनेनेति दन्तच्छदः ओष्ठः । द्व्यादि किम् । अन्ववप्रच्छादः ।
समवपरिच्छादः ॥

सुबो०—स्वरादः । स्वरांताद्धातोरप्रत्ययः स्यात् भावादौ । घञोऽपवादः । चिञ्
चयने । चयः । णीञ् प्रापणे । नयः । षिञ् बंधने । विपूर्वः । विषयः । ष्टुञ्
स्तुतौ । स्तवः । " स्तवः स्तोत्रं स्तुतिर्नुतिः " इत्यमरः । लुञ् छेदने । लवः ।
" लवलेशकणाणवः " इत्यमरः । कृ विक्षेपे । करः । गॄ निगरणे । गरः ॥

मदामः ॥ ११५९ ॥ मदादीनामप्रत्ययो भावादौ ॥ मदः । पणः ।
प्रमदः । संमदः । शमः । आश्रमः ॥

सुबो०—मदामः । मदादिभ्योऽप्रत्ययः स्यात् भावादौ । मदी हर्षे । मदः । प्रमदः ।
संमदः । पण व्यवहारे स्तुतौ च । पणः । शमु उपशमे । श्रमु तपसि खेदे च । श्रमः ॥

तत्त्व०—मदाम इति । मद इति । माद्यतेऽनेनेति करणादावपि । कथं प्रमादोऽनवधानतेति । बाहुलका-
द् घञादि । यद्वा मद एव माद इति स्वार्थिकाणन्तस्य प्रशब्देन पश्चात्समासः । सम इति । अथ कथं
विश्राम इति अपाणिनीयमिति तु दीक्षितः । विश्राम लभतामिदं च शिथिल ज्याबद्धमस्मद्धनुरित्यादौ तु
विश्रान्तिपदप्रक्षेपेणाप्युपपत्तिः विश्राममाप्नोति हन्त्याप्यपेक्षेति वामनादयः । वस्तुतस्तत्रापि प्रमादशब्दव-
त्समाधानम् ॥

मूर्तौ घनः ॥ ११६० ॥ काठिन्ये परिच्छेदे च हन्तेरप्रत्ययो
घनादेशश्च ॥ दधिघनः । सैन्धवघनः ॥

सुबो०—मूर्तौ घनः । मूर्तिः काठिन्यं तस्मिन्नभिधेये हंतेरः स्यात् धातोर्घनादे-
शश्च । कठिनं दधि हन्ति दधिघनः । परिच्छेदे सैंधवघनः ॥

तत्त्व०—मूर्तौ घन इति । मूर्तिः काठिन्यम् ॥

हनो वधोऽप्रत्ययश्च ॥ ११६१ ॥ हननमिति वधः ॥

सुबो०—हनो वधोऽप्रत्ययश्च । अनुपसर्गाद्धंतेर्भावे अप्रत्ययः स्यात् धातोर्वधादेशश्च । वधः । चकारात् घञपि । हनो घदिति घदादेशः । घातः ॥

ट्वितोऽथुः ॥ ११६२ ॥ ट्वितो धातोरथुर्भवति भावादौ ॥ टुवेपृ कम्पने । वेपनम् । वेपथुः । वमथुः । नन्दथुः । श्वयथुः ॥

सुबो०—ट्वितोऽथुः । अयमपि स्वभावाद्भावे एव । टुवेपृ कंपने । वेपथुः । टुणदि समृद्धौ । नंदथुः । टुओश्विइर् गतिवृद्ध्योः । श्वयथुः ॥

तत्त्व०—ट्वितोऽथुरिति । टुरित्यस्य स ट्वित् तस्मात् ॥

ड्वितस्त्रिमक् तत्कृते ॥ ११६३ ॥ ड्वितो धातोस्त्रिमक्प्रत्ययो धात्वर्थेन कृतेऽर्थे ॥ करणेन निर्वृतः कृत्रिमः घटः । पक्त्रिमः ॥

सुबो०—ड्वितस्त्रिमक् तत्कृते । धात्वर्थनिर्वृत्तेऽर्थेऽयं स्वभावाद्भावे । कित्त्वात्संप्रसारणादि । डुकृञ् करणे । करणेन निर्वृतः कृत्रिमः । डुपचष् पाके । पाकेन निर्वृतः पक्त्रिमः । टुवप् बीजतंतुसंताने । वापेन निर्वृतं यजामिति संप्रसारणम् । उप्त्रिमम् ॥

तत्त्व०—ड्वित इति । डु इत्यस्य स ड्वित् तस्मात् । तत्कृते इति । तेन धात्वर्थेन कृतस्तत्कृतस्तस्मिन्नित्यर्थः । यद्यपि भावादावित्यनुवर्त्तते तथापि स्वभावात् भाव एवैतद्वयं नहि कृतेन निर्वृत्तमित्येव क्वापि विग्रहः ॥

नंकी ॥ ११६४ ॥ धातोर्नङ्की प्रत्ययो भावादौ ॥ यज । इज्यन्ते देवा अनेनेति यज्ञः । याच्ञा । यतीति यत्नः । प्रच्छविच्छोः शो नेऽसम्प्रसारणं च । प्रश्नः । विश्नः । रक्ष पालने । रक्ष्णः । स्वप्नः । अन्तः धीयते यः सः अन्तर्द्धिः । आधिः । विशेषेण जनेषु पीडा आधीयतेऽनेनेति व्याधिः । प्रकर्षेण दधाति रथमार्गमनेनेति प्रधिः । वारि धीयतेऽस्मिन्निति वारिधिः । पाथः धीयतेऽस्मिन्निति पाथोधिः ॥

सुबो०—नङ्की । ङकारककारा एतौ भावे कर्तरि कारके च भवतः । नङ्प्रत्ययमाह । क्ङिति चेति गुणो न । यज देवपूजादौ श्चुत्वम् । यज्ञः । "यज्ञः सवोऽध्वरो यागः" इत्यमरः । टुयाचृ याच्ञायाम् । याच्ञा । यती प्रयत्ने । यत्नम् । क्विति झसे कौ ञमे चेत्यनेन प्रच्छविच्छोः शो ने । प्रच्छ ज्ञीप्सायाम् । ग्रहामिति संप्रसारणं न । भाष्याऽनुक्तत्वात् । प्रश्नः । विश प्रवेशने । विश्नः । रक्ष पालने । रक्ष्णः । ञिष्वप् शये । स्वप्नः । किप्रत्ययमाह । डुधाञ् धारणादौ । आतोऽनपीत्यालोपः । अंतर्द्धिः । प्रधिः । पयांसि धीयंतेऽस्मिन्निति । पयोधिः । वारिधिः । डुधाञ् दाने । अदादिः ॥

तत्त्व०—नङ्कीति । नङ् च किश्च नङ्की । यज्ञ इति । यजन यज्ञः । यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबधनः । इत्यत्र तु इज्यत इति यज्ञो विष्णुरिति कर्मणि व्याख्यानम् । याच्ञेति । यद्यपि नङन्ताः पस्येव तथाप्यय स्त्रीलिंगः स्वभावात् । प्रश्न इति । सञ्ज्ञापूर्वकत्वेनानित्यत्वान्न संप्रसारणम् । अंतर्द्धिरिति ।

कित्वादातो लोप इत्यालोपः । आधिरिति । आदानमादीयत इति वा । वारिधिरिति । वारीणि धीयन्तेऽस्मिन्निति वारिधिः ॥

**युट् भावे च ॥ ११६५ ॥ ज्ञानम् । करणम् । कारणम् ॥**

सुबो०–युट् भावे च। धातोर्भावे युट् स्याच्चकारात् युण् च। युवोरित्यनादेशः । टित्त्वादीप् । णित्त्वाद्वृद्धिः । ज्ञा अवबोधने । ज्ञानम् । डुकृञ् करणे । युण्प्रत्ययः । कारणम् ॥

**साधनाधारयोश्च ॥ ११६६ ॥ पच्यतेऽनेनेति पचनोऽग्निः । पच्यतेऽस्यां पचनी स्थाली ॥**

सुबो०–साधनाधारयोश्च । साधनेऽधिकरणे चाऽर्थे धातोर्युट् प्रत्ययः स्यात् । डुपचष् पाके । पच्यतेऽनेनेति पचनः । अत्र करणे युट् । ङ्कित इतीप् । पच्यतेऽस्यामित्यधिकरणे युट् । पचनी ॥

**ईषद्दुःसुषु खल्यू॥११६७॥ ईषदादिषु प्रयुज्यमानेषु खल्यू एतौ भावादौ ॥ ईषद्भवः । दुर्भवः । सुकरः । दुःखेन युध्यतेऽस्मादिति दुर्योधनः । दुःखेन शिष्यते इति दुःशासनः । कर्तृकर्मणोश्च्व्यर्थयोरीषदादिषु चोपपदेषु भूकृञोः खल् । अदुराढ्येन दुराढ्येन भूयते दुराढ्यंभवं भवता । अस्वाढ्यः स्वाढ्यः क्रियते स्वाढ्यंकरः ॥**

सुबो०–ईषद्दुःसुषु खल्यू । एषूपपदेषु धातोः खल्यू प्रत्ययौ स्तः भावे कर्मणि च । खल्प्रत्ययमाह । खित्त्वात् खिति पदस्येति मुम् । भू सत्तायाम् । ईषद्भवः । दुर्भवः । डुकृञ् करणे । सुकरः । युप्रत्ययमाह । युध संप्रहारे । दुःखेन युध्यते इति दुर्योधनः । शासु अनुशिष्टौ । दुःखेन शिष्यते इति दुःशासनः । दुरिति कृच्छ्रार्थे वर्त्तते । इतरौ त्वकृच्छ्रार्थे वर्त्तते । कर्तृकर्मणोश्च्व्यर्थयोरीषदादिषु चोपपदेषु भूकृञोः खल् । कर्तृकर्मवाचकौ शब्दौ धातोरव्यवधाने तु प्राक् प्रयुज्येते । ईषदादयस्तु ताभ्या प्राक् प्रयोज्याः । दुःखेनाढ्येन भूयते इति दुराढ्यंभवं भवता । अक्तादाविति निषेधात् कर्तरि तृतीया । सुखेनाढ्यः क्रियते स्वाढ्यंकरः सः ॥

तत्त्व०–ईषद्दुःसुषु खल्यू । खल्यू लकार इखखीत्यत्रोक्तात् खप्रत्ययाद्भेदज्ञापनार्थः । खकारो मुमागमार्थः । ईषद्भव इति । ईषद्भवनम् ॥

**तव्यानीयौ ॥ ११६८ ॥ भावकार्ययोः ॥ एधितव्यं एधनीयम् । आसितव्यं आसनीयम् । पातव्यं पानीयम् ॥**

सुबो०–कृत्यसंज्ञकान् प्रत्ययानाह । तव्यानीयौ । धातोरेतौ प्रत्ययौ स्तः भावकर्मणोः । तव्यप्रत्ययमनीयप्रत्ययं चाह । एध वृद्धौ । कृत इतीट् । एधि-

तव्यं एधनीयं त्वया । आस उपवेशने । आसितव्यं आसनीयम् । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च ॥

तत्त्व०—तव्यानीयाविति । एधनीयमिति भावे एकवचनमेव । औत्सर्गिकत्वात् क्लीबत्वं च लिंगाविशेषात् ॥

**वसेस्तव्यः कर्त्तरि णिच्च ॥ ११६९ ॥ वसतीति वास्तव्यः ॥**

सुबो०—वसेस्तव्यः कर्तरि णिच्च । वस निवासे इत्यस्यैव ग्रहणं न तु वस आच्छादने इत्यस्य लुग्विकरणत्वात् । वस निवासे अस्मात् कर्तरि तव्यः स्यात् । स च णित् । णित्त्वाद्वृद्धिः ॥

तत्त्व०—वसेरिति । वसति वस निवासे इत्यस्यैव ग्रहणं नतु वस आच्छादने इत्यस्य । वास्तव्य इति णित्त्वाद्वृद्धिः । वस्तुनि भवो वास्तव्य इति ण्यप्रत्ययेनैव रूपसिद्धिमिच्छन्तः केचिदेतन्न मन्यंते ॥

**केलिमः ॥ ११७० ॥ सौकर्ये धातोः केलिमः प्रत्ययो भवति ॥**

**पचेलिमा माषाः । भिदेलिमाः सरलाः ॥**

सुबो०—केलिमः । धातोः कर्मणि केलिमः प्रत्ययः स्यात् । कित्त्वान्न गुणः । भिदिर् विदारणे । भिदेलिमाः सरलाः । डुपचष् पाके । पचेलिमा माषाः । पक्तव्या इत्यर्थः ॥

**स्वराद्यः ॥ ११७१ ॥ स्वरांताद्धातोर्यः ॥ चेयम् । जेयम् ।**

**तव्यादयोऽपि । चेतव्यः चयनीयः । दित्स्यम् ॥**

सुबो०—स्वराद्यः। स्वरग्रहणं धातोर्विशेषणं विशेषणेन तदंतविधिः। चिञ् चयने। चेयम् । जि जये । जेयम् । तव्यादयोऽपि भवंति। चेतव्यः चयनीयः। डुदाञ् दाने अस्मादिच्छायामात्मनः स इति मः । इस्से इति इसादेशः द्वित्वलोपश्च । सस्तोऽनपीति सस्य तः। दित्सति। सांताद्यप्रत्यये यत इत्यलोपः। दित्स्यते इति दित्स्यम् ॥

तत्त्व०—स्वराद्य इति । यद्भाव्य तद्भविष्यति इत्यत्र तु ओरावश्यक इति घ्यण् । अत्र स्वरग्रहणं चिरयं धातोर्द्विविधत्वेनैव हसान्ताद् घ्यणो विधानेन परिशेषात्स्वरान्तलाभात् । यदि तु यत इत्यत्रानपीति विषयसप्तमी तदाभूतपूर्वस्वरान्तादपि यदित्येतदर्थं स्वरग्रहणम् । तेन दित्स्यमित्यादौ एव । वस्तुतस्तत्र स्वरप्रयोजनाभावात् घ्यण्यपि न क्षतिरिति ध्येयम् ॥

**ई चातः ॥ ११७२ ॥ आदन्ताद्धातोर्य आकारस्य च ईकारः ॥**

**देयम् । ग्लेयम् । गेयम् ॥**

सुबो०—ई चातः। डुदाञ् दाने। देयम्। गै शब्दे। गेयम्। ग्लै हर्षक्षये। ग्लेयम् ॥

तत्त्व०—ई चात इति। ह्रस्व एव सुपठः। यत्तु वासुदेवेनोक्तं दीर्घेकारविधानं खेयमित्यत्र चकारात्खनेर्यं नस्यैत्वे रूपसिद्धये । अन्यथापक्षे आत्वं स्यादिति तद्भाष्यविरोधादुपेक्ष्यम् ॥

**पुशकात् ॥ ११७३ ॥ पवर्गान्ताच्छकादेश्च यः प्रत्ययः ॥**

**शप्यम् । यम्यम् । जप्यम् । शक्यम् । सह्यम् ॥**

सुबो०–पुशकात् । अत्र घ्यण् न भवति तव्यादयस्तु स्युरेव । शप उपालंभे । शप्यम् । यमु उपरमे । यम्यम् । जप व्यक्तायां वाचि । जप्यम् । शकादेस्तु शक्ल शक्तौ । शक्यम् । षह मर्षणे । सह्यम् ॥

तत्व०–पुशकादिति । पुश्च शकश्च पुशक तस्मात् ॥

**ऋहसान्ताद् घ्यण् ॥११७४॥ ऋवर्णान्तात् हसान्ताद्धातोर्घ्यण् भावकार्ययोः ॥ कार्यम् । हार्यम् । वाह्यम् । घात्यम् । वाक्यम् । पाक्यम् । रोग्यम् ॥**

सुबो०–ऋहसांताद् घ्यण् । ऋ इति धातोर्न ग्रहणम् । किंतु ऋवर्णस्य हसा साहचर्यात् घित्त्वाच्चजोः कगाविति कगौ । णित्त्वाद्वृद्धिः । डुकृञ् करणे । कार्यम् । हृञ् हरणे । हार्यम् । वह प्रापणे । वाह्यम् । हन हिंसागत्योः । हनो घदिति घत् । घात्यम् । डुपचष् पाके । पाक्यम् । रुज् रोगे । रोग्यम् । वच परिभाषणे । वाक्यम् ॥

तत्व०–ऋहसान्तादिति । आ च हसश्च ऋहस तस्मात् । घो घित्कार्यार्थः । णो वृद्ध्यर्थः ॥

**घ्यणि क्वचित्कुत्वाभावः ॥ ११७५ ॥ याज्यम् । याच्यम् । वाच्यम् । रोच्यम् । अर्च्यम् ॥**

सुबो०–घ्यणि क्वचित् कुत्वाभावः । यज् याच् प्रवच् रुच् एषां कुत्वं न घ्यणि । यज देवपूजादौ । याज्यम् । टुयाचृ याच्ञायाम् । याच्यम् । वच परिभाषणे प्रपूर्वः । प्रवाच्यं ग्रंथविशेषः । रुच् दीप्तौ । रोच्यम् । ऋच स्तुतौ । अर्च्यम् । ऋदुपधात् क्यपि तु न भवति ॥

**ओरावश्यके ॥ ११७६ ॥ उवर्णान्तादावश्यकेऽर्थे घ्यण् ॥**

सुबो०–ओरावश्यके । अवश्यमेवेत्यावश्यकं तस्मिन् ॥

तत्व०–ओरावश्यक इति । आवश्य भाव अवश्यकम् । अवश्यमष्टिलोपस्तद्धिते । अव्ययत्वात् ॥

**ओदौतोर्यस्स्वरवत् ॥ ११७७ ॥ ओकारौकारयोर्निमित्तं यः प्रत्ययः स्वरवत् ॥ "लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥" अवश्यं भाव्योऽवश्यभाव्यः । भोक्तुकामः। श्रोतुमनाः। संहितं सहितम् । संततं सततम् । मांसस्य पचनम् । मांस्पचनं मांसपचनम् । मांसस्य पाकः । मांस्पाकः मांसपाकः ॥**

सुबो०–ओदौतोर्यः स्वरवत् । यं प्रत्ययं निमित्तत्वेनाश्रित्य गुणेन यत्र

ओकारो भवति वृद्ध्या च यत्र औकारो भवति स च प्रत्ययः स्वरवद्भवतीत्यर्थः । " लुंपेदवश्यमः कृत्ये तुम् काममनसोरपि । समो वा हिततत्योर्मांसस्य पचि युड्घञोः ॥ " अवश्यमो निपातस्यांत्यं लुंपेत् । लोपं कुर्य्यात् । कृत्ये कृत्यसंज्ञके प्रत्यये परे । यथा अवश्यलाव्यः । तुमुप्रत्ययस्यांत्यं लुंपेत् काममनसोः शब्दयोः परयोः । यथा भोक्तुकामः । श्रोतुमनाः । समुपसर्गस्यांत्यं वा लुंपेत् हिततत्योः शब्दयोः परयोः। यथा सहितं संहितम् । सततं संततम् । मांसशब्दस्यांत्यं वा लुंपेत् । पचिप्रकृतियुड्घञ्प्रत्यययोः परयोः । यथा मांस्पचनं मांसपचनम् । मांस्पाकः मांसपाकः ॥

तत्त्व०—घातितार्थस्यापि क्वचित्प्रयोगो दृश्यते । लाघव मत्यनादरादित्यत आह । अवश्यलाव्यम् ॥

**हनो वधादेशो ये ॥ ११७८ ॥ वध्यम् ॥**

सुबो०—हनो वधादेशो ये । हन हिंसागत्योरस्मात् यप्रत्ययः स्यात् धातोर्वधादेशश्च । वध्यः । पक्षे घ्यणपि । हनो घदिति घत् । घात्यः ॥

**ऋदुपधात्क्यप् ॥ ११७९ ॥ ऋकारोपधाद्धातोः क्यप् ॥ कृती । कृत्यम् । वृत्यम् ॥**

सुबो०—ऋदुपधात् क्यप् । कित्त्वाद्गुणो न पित्त्वात् ह्रस्वस्य पितीति तुक् । कृती छेदने । कृत्यम् । वृतु वर्त्तने । वृत्यम् । वृधु वृद्धौ । वृध्यम् । तपरकरणं किम् । कॄत संशब्दने । युट् कीर्तनम् ॥

तत्त्व०—ऋदुपधादिति । तपरत्वाद्दीर्घोपधान्न तेन कॄत इति कीर्त्यम् ॥

**कृपिचृत्योर्न ॥ ११८० ॥ कल्प्यम् । चृत दीप्तौ । चर्त्यम् ॥**

सुबो०—कृपिचृत्योर्न । आभ्यां क्यप् न स्यात् । घ्यण् । कृपू सामर्थ्ये । कल्प्यम् । चृती हिंसायाम् । चर्त्यम् ॥

**मृजो वा ॥ ११८१ ॥ मृज्यम् । मार्ग्यम् ॥**

सुबो०—मृजो वा । ऋदुपधादिति नित्यं प्राप्ते विकल्पार्थमारंभः । मृजूष् शुद्धौ । मृज्यम् । क्यबभावे घ्यण् । मृजेर्वृद्धिरिति वृद्धिः । चजोरिति गः । मार्ग्यः ॥

**भुवो भावे ॥ ११८२ ॥ नाम्न्युपपदे भुवो भावे क्यप् ॥ ब्रह्मणो भावः ब्रह्मभूयम् । नाम्नि किम् । भव्यम् ॥**

सुबो०—भुवो भावे । भू सत्तायाम् । ब्रह्मभूयम् । नाम्न्युपपदे इति किम् । भव्यम् । स्वरादय इति यः ॥

**इण्स्तुभृद्दवृशासुजुषूखनः क्यप् च ॥ ११८३ ॥ इत्यः ।**

स्तुत्यः । दृङ् आदरे । दृत्यः । वृत्यः । शासेरिः । शिष्यः । जुषी प्रीतिसेवनयोः । जुष्यः ॥

सुबो०–इण्स्तुभृदृवृशासुजुषूखनः क्यप् च । एभ्यो धातुभ्यः क्यप् स्यात् । इण् गतौ । इत्यः । ष्टुञ् स्तुतौ । स्तुत्यः । वृ इति वृञ् वरणे इत्यस्य ग्रहणम् । वृङ् संभक्तावस्मात्तु ण्यणेव । वार्यः । दृ आदरे । दृत्यः । भृञ् भरणे । भृत्यः कर्मकरः । भर्त्तव्य इत्यर्थः । क्रियाशब्दोऽयं न तु संज्ञा । शासु अनुशिष्टौ । शासेरितीत्वम् । घसादेरिति षः । शिष्यः । जुषी प्रीतिसेवनयोः । जुष्यः ॥

तत्त्व०–इण्स्तु । वृ इति वृञ् नतु वृङ् तस्य वार्यः ऋत्विजः ण्यणेव । शासु अनुशिष्टौ । शासु इच्छायामपीति काश्चित् स्वरभेदार्थमेव ॥

खन इत्वं क्यपि ॥ ११८४ ॥ खेयम् ॥

सुबो०–खन इत्वं क्यपि । खन खनने इत्यस्य नस्य इत्वं स्यात् क्यपि । खेयम् ॥

भिद्योद्ध्यौ नदे ॥ ११८५ ॥ भिनत्ति कूलमिति भिद्यः । उज्झति जलमित्युद्ध्यः ॥

सुबो०–भिद्योद्ध्यौ नदे । भिदिर् विदारणे । उज्झ त्यागे । आभ्यां क्यप् स्यात् कर्तरि उज्झेर्धत्वं च निपात्यते नदे वाच्ये । भिनत्ति कूलमिति भिद्यः । उज्झत्युदकमिति उद्ध्यः । नदे किम् । भेत्ता । उज्झिता । तृप्रत्ययः ॥

तत्त्व०–भिद्योद्ध्यौ । धत्वं निपात्यम् । नदे इति । भेत्ता । उज्झिता ॥

कृवृषोर्वा क्यप् ॥ ११८६ ॥ कृत्यं कार्यम् । वृष्यं वर्ष्यम् ॥

सुबो०–कृवृषोर्वा क्यप् । कर्त्तरि । डुकृञ् करणे । वृषु सेचने । आभ्यां वा क्यप् स्यात् करोतेः क्यप् अप्राप्तौ वृषस्तु ऋदुपधाद्देति नित्यं प्राप्ते विकल्पः । ह्रस्वस्य पितीति तुक् । कृत्यम् । वृष्यम् । क्यबभावपक्षे ण्यण् । कार्यम् । वर्ष्यम् ॥

पुष्यसिध्यौ नक्षत्रे ॥ ११८७ ॥ पुष्णन्ति कार्याण्यस्मिन्निति पुष्यः । सिध्यंति कार्याण्यस्मिन्निति सिद्ध्यः ॥

सुबो०–पुष्यसिद्ध्यौ नक्षत्रे । पुष पुष्टौ । षिधु गत्यां आभ्यामधिकरणेऽर्थे क्यप् निपात्यते । पुष्यः । सिद्ध्यः । नक्षत्रे किम् । पोषणम् । सेधनम् । साधनाधारयोरिति युट् ॥

राजसूयादयः ॥ ११८८ ॥ राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः । राजसूयः । सरत्याकाशे सूर्यः ॥

सुबो०–राजसूयादयः । क्यबंताः शब्दा निपात्यंते । षुञ् अभिषवे । राज्ञा सोतव्यः इति राजसूयः । अभिषवद्वारा निष्पादयितव्य इत्यर्थः । यद्वा राजा सूयते

कण्डयतेऽत्रेति राजसूयः । राजेति सोमः अधिकरणे क्यप् । निपातनाद्दीर्घः । अर्द्धर्चादित्वात् पुन्नपुंसकः । सृ गतौ । सरत्याकाशे इति सूर्यः। कर्तरि क्यप् । निपातनादुरादेशः । र्वोरुपधाया इति दीर्घः । यद्वा षू प्रेरणे तुदादिः । सुवति कर्मणि लोकं प्रेरयतीति सूर्यः । क्यपोरुट् निपातनात् ॥

तत्त्व०—राजसूयादय इति । लतात्मकः सोमो राजा स सूयते कण्डयतेऽत्रेति अधिकरणे क्यप् । निपातनाद्दीर्घः अर्द्धर्चादिरयम् । सूर्य इति । सरत्याकाशे । सुवति कर्मणि लोकं प्रेरयति वा ॥

**तव्यादयोऽर्हेऽर्थे विधौ शक्तौ च वक्तव्याः॥११८९॥** दर्शनार्हो द्रष्टव्यः दर्शनीयः दृश्यः । स्वाध्यायोऽध्येतव्यः अध्ययनीयः अध्येयः । श्रोतव्यः । मंतव्यः । वोढव्यः । तव्यादीनां कृत्यसंज्ञा ॥

सुबो०—तव्यादयोऽर्हेऽर्थे विधौ शक्तौ च वक्तव्याः। दृशिर् प्रेक्षणेऽस्मात्तव्यप्रत्यये गुणे कृते रारो झसे दृशामिति रः । छशषेति षत्वं ष्टुत्वम् । द्रष्टव्यः । अनीयप्रत्यये तु दर्शनीयः। क्यपि तु। दृश्यः। इङ् अध्ययनेऽस्मात्तव्यप्रत्यये गुणे कृते अध्येतव्यः। अनीये तु अध्ययनीयः । यप्रत्यये अध्येयः । श्रु श्रवणे । श्रोतव्यः । श्रवणीयः । क्यपि तु श्रुत्यः । मन ज्ञाने । मंतव्यः । मननीयः । वह प्रापणे । अस्मात्तव्यप्रत्यये हो ढ इति ढत्वे तथोर्द्ध इति धत्वं ष्टुत्वं ढि ढो लोप इति ढलोपपूर्वदीर्घौ सहिवहोरित्योत्वम् । वोढव्यः। वहनीयः। कृत्यक्तखलर्थाः प्रत्ययाः भावकर्मणोर्भवंति ॥ इति कृत्यप्रत्ययाः ॥

**स्त्रियां यजां भावे ॥ ११९० ॥** यजादेर्धातोः स्त्रियां भावे क्यप् । इज्या । व्रज्या । समज्या । निषद्या । निपत्या । मन्या । विद्या । सुत्या । शय्या । भृत्या । इत्या । कृत्या ॥

सुबो०—स्त्रियां यजां भावे । क्यप्प्रत्ययमाह । पित्वात्तुक् कित्वाद्गुणनिषेधः संप्रसारणं च । यज देवपूजादौ । यजामिति संप्रसारणम् । यजनमिज्या । व्रज गतौ । व्रजनं व्रज्या । अज गतौ क्षेपणे च । समजंत्यस्यामिति समज्या सभा । अजेः क्यपि वीभावो न निपातनात् । षद्लृ विशरणादौ । निषीदंत्यस्यामिति निषद्या आपणः । प्रादेश्चेति षत्वम् । पत्लृ पतने । निपतंत्यस्यामिति निपत्या पिच्छिला भूमिः । मन ज्ञाने । मन्यतेऽनयेति मन्या गलपार्श्वनाडी । विद ज्ञाने । विदंत्यनयेति विद्या । षुञ् अभिषवे । ह्रस्वस्येति तुक् । सुत्या । अभिषवः । शीङ् स्वप्ने । शेरतेऽस्यामिति शीङो यङ् । ये क्ङितीत्ययङ् । शय्या । डुभृञ् धारणादौ । भृत्या जीविका । इण् गतौ । ईयतेऽनयेति इत्या शिबिका । डुकृञ् करणे । कृत्या ॥

तत्त्व०—स्त्रियां यजामिति । बहुवचनमाद्यर्थम् । तेन यजशीङ्व्रजविदःषुञ्श्रुमनाविद्भृञ्अटाटच इण् समज निषद निपत कृञ् इत् एषां ग्रहणम् । इज्येति । कित्वात्संप्रसारणम् । समज्या सभा । निषद्या

आपणः । निपात्यया पिच्छिला भूमिः । मन्यतेऽनया क्रुद्धादिरिति मन्या गलपार्श्वशिरा । विद्यते ज्ञायतेऽर्थ-तत्त्वमनया विद्या । सूयते सोमोऽत्रेति सुत्याऽभिषवो दिवसः । शय्यतेऽस्या शय्या खट्वादि । भरणं भृत्य-वेतनम् । ईयते गम्यतेऽनयेति इत्या शिबिकादिः । भृतिर्मतिरासुतिरिति तु सूत्रेषु निपातनात् ॥

**कृञो यग्वा ॥११९१॥ अयकि ॥ क्रिया । इषेरिच्छेति निपातः इषेरप् च्छत्वादेशः । इच्छा । सर्तेर्गुणः । परिसर्या । अटाट्या । आस्या । जागर्तेर्गुणः । जागर्या ॥**

सुबो०—कृञो यग् वा । करोतेर्यक् प्रत्ययो वा स्यात् यक् प्रत्ययाभावे शप्रत्ययो निपातनात् भवति भावकर्मणोरर्थयोः यक्प्रत्यये अयकीति रिङ् आप् च । क्रिया इषु इच्छायामस्मात् शप्रत्ययो निपात्यते शित्वाच्चतुर्वत्कार्यं तेन गमामिति छः । आवत इत्याप् । इच्छा । सृ गतौ । अस्मात् शप्रत्यययक्प्रत्ययौ निपात्येते धातोर्गु-णश्च । शप्रत्यये यक् चतुर्ष्विति यक् । यत इत्यल्लोपः । आप् । परिसर्पणं परिसर्या । यकि तु निपातनाद्गुणः । परिसर्या । अट गतौ । अस्मादपि शयकौ निपात्येते । शप्रत्यये तु यक् चतुर्ष्विति यक् यत इत्यल्लोपः निपातनात् । टयशब्दस्य द्वित्वं पूर्वभागे यकारनिवृत्तिदीर्घावपि निपातनात् । आवत इत्याप् । अटाट्या । यकि तु टयशब्दस्य द्वित्वं यकारनिवृत्तिदीर्घौ पूर्ववदेव । अटाट्या । अन्ये तु अट गताव-स्मात् सूचिसूत्रिमूत्र्यटीति यङ्स्वरादेरिति टयशब्दस्य द्वित्वं आत इति पूर्वस्यात्वम् । अटाट्येत्यस्मात् प्रत्ययांतादित्यङ् प्रत्ययः । अनपि चेति यलोपः यत इत्यलोपः आप् च । अटाट्या । आस उपवेशने निपातनाद्यक् । आस्या । जागृ निद्राक्षये । अस्मात् शयगकारप्रत्यया निपातनाद्भवंति । शप्रत्यये शित्वाच्चतुर्वत्कार्य्यं तेन यक् चतुर्ष्विति यक् जागर्तेर्वि इतीणू णप्ङित्मिन्नेति गुणः आप् च । जागर्या । यकि तु जागर्तेरिति गुणः । जागर्या । आकारप्रत्यये गुणः । जागरा ॥

तत्त्व०—इच्छेति । इच्छादयो निपात्याः । परिसर्येति । परिसरणम् ॥

**हनस्तः ॥ ११९२ ॥ हत्या ॥**

सुबो०—हनस्तः । अनुपसर्गे नाम्न्युपपदे हंतेर्भावे क्यप् स्यात् धातोर्नस्य तश्च । ब्रह्मणो हननं ब्रह्महत्या ॥

**क्तिः ॥ ११९३ ॥ धातोः क्तिः स्त्रियां भावे ॥ कृतिः । बुद्धिः । स्मृतिः । ञमान्तस्य दीर्घः । शान्तिः । दान्तिः । कान्तिः । क्षान्तिः । ह्रेञ् । हूतिः । ऊढिः । स्फातिः ॥**

सुबो०—क्तिः । धातोः स्त्रीलिंगे भावादौ क्तिप्रत्ययः स्यात् । घञोऽपवादः । डुकृञ् करणे । कृतिः । बुध अवगमने । तथोर्द्ध इति तस्य धः । झभे जबा इति

पूर्वधस्य दः । बुद्धिः । स्मृ चिंतायाम् । स्मृतिः । शमु दमु उपशमे । कमु कांतौ। क्षमूष् सहने । अमांतस्य क्ङितीति दीर्घः । शांतिः । दांतिः । कांतिः । क्षांतिः ॥

तत्त्व०—क्तिः स्त्रियां यजामित्यतः स्त्रियामनुवर्त्तते ॥

**ह्वक्त्योर्नेट् ॥ ११९४ ॥** संशीतिः ॥

सुबो०—ह्वक्त्योर्नेट् । ह्वप्रत्याहारः क्तिप्रत्ययस्तयोरिण् न स्यात् । शीङ् स्वप्ने । संशीतिः ॥

तत्त्व०—ह्वक्त्योरिति । ह्व प्रत्याहारः । ह्वश्च क्तिश्च ह्वक्ती तयोरित्यर्थः ॥

**ग्रहादीनामिट् ॥ ११९५ ॥** निग्रहीतिः ॥

सुबो०—ग्रहादीनामिट् । ग्रहादीनां क्तिप्रत्ययस्येट् स्यात् । ग्रह उपादाने । ग्रहामिति संप्रसारणं ईटो ग्रहामिति दीर्घः । निगृहीतिः। पठ व्यक्तायां वाचि । निपठतिः॥

तत्त्व०—ग्रहादीनामिति । पूर्वेण निषेधे प्राप्ते वचनम् । स्फायी । फीतिः । ववयोरिति यलोपः फीतिकाम इत्यत्र क्तांतात् औप्रत्यये समाधेय न च फायः फीति कितीत्युक्तेरचापि भविष्यतीति वाच्यम् । क्तक्तवत्वोरेव तत्राधिकृतत्वेन लाभात् नान्यस्य ॥

**ग्लादेर्निः ॥११९६॥** ग्लानिः । म्लानिः । त्वरतेर्वस्योत्वम् । तूर्णिः॥

सुबो०—ग्लादेर्निः । ग्लादेर्धातोर्निः प्रत्ययः स्यात् । ग्लै म्लै हर्षक्षये । ग्लानिः । ञित्वरा संभ्रमे । जरत्वरेत्यूः । तूर्णिः ॥

**ऋल्वादिभ्यः क्तेर्निः ॥११९७॥** कीर्णिः । गीर्णिः । लूनिः । धूनिः ॥

सुबो०—ऋल्वादिभ्यः क्तेर्निः। ऋदंतात् ल्वादिभ्यश्च परस्य क्तेस्तस्य निः स्यात् । कॄ विक्षेपे । ऋत इरितीर् । य्वोर्विहसे इति दीर्घः । कीर्णिः । गॄ निगरणे । गीर्णिः । लूञ् छेदने । लूनिः । धूञ् कंपने । धूनिः ॥

**संपदादेः क्विब्वा ॥११९८॥** संपदनं सम्पत् । संपत्तिः। कर्त्तरि क्तिः ॥

सुबो०—संपदादिभ्यः क्विब्वा । पक्षे क्तिः । पद गतौ । संपत् । विपत् । संपत्तिः । विपत्तिः । कर्त्तरि क्तिः ॥

**संज्ञायाम् ॥ ११९९ ॥** प्रकुरुते इति प्रकृतिः ॥

सुबो०—संज्ञायाम् । धातोः कर्तरि क्तिः स्यात् संज्ञायां वाच्यायाम् । प्रकुरुते इति प्रकृतिः ॥

**षिद्भिदादिभ्यङ् ॥ १२०० ॥** षितो धातोर्भिदादेश्च स्त्रियामङ् ॥ पचा । माया ॥

सुबो०—षिद्भिदामङ् । षितो धातोर्भिदादिभ्यश्च स्त्रियामङ् स्यात् । डुपचष् पाके । आवत इत्याप् । पचा । मृजूष् शुद्धौ । मृजा । भिदिर् विदारणेऽर्थे ।

भिदा । अन्या भिद्यते इति भित्तिः कुड्यम् । कथं तर्हि " मुखाब्जं गंधलब्धेः " इति माघः । " प्रेक्षोपलब्धिश्चित् संवित् " इत्यमरश्च । पित्त्वादिङ्प्रत्यय उचितः । सत्यम् । अनर्थकास्तु प्रतिवर्णमनुपलब्धेरिति भाष्यप्रयोगाद्बाहुलकात् क्तिः प्रत्ययोऽपि बोध्यः ॥

तत्त्व०—षिद्भिदामिति । ष इत्येषां ते षितः ते च भिदश्च तेषां भिदेरिति । विदारणे एव । अन्यत्र भित्तिः । छित्तिः ॥

## ऋतोऽङि गुणः ॥ १२०१ ॥ जरा । भिदा । छिदा । क्षिपा । गुहा ॥

सुबो०—ऋतोऽङि गुणः । ऋतो धातोर्गुणः स्यात् अङि परे जॄष्इर् वयोहानौ । जरा । छिदिर् द्वैधीकरणे । छिदा । द्वैधी करणे एवायम् । अन्यत्र तु छिद्यते इति छित्तिः छिद्रम् । क्रपेः संप्रसारणं च । क्रप कृपायामस्य संप्रसारणं स्यात् अङि परे । कृपा । क्षिप प्रेरणे । क्षिपा । गुहू संवरणे । गुहा ॥

तत्त्व०—गुहेति । कंदरौषध्योः । अन्यत्र गुढिः ॥

## गुरोर्हसात् ॥ १२०२ ॥ गुरुमतो हसान्तात्स्त्रियामङ् ॥ नक्तिः । ईहा । ऊहा । कुण्डा ॥

सुबो०—गुरोर्हसात् । ईह चेष्टायाम् । ईहा । ऊह वितर्के । ऊहा । कुडि दाहे । कुंडा । गुरुमत इति किम् । भक्तिः । हसांतादिति किम् । नीतिः ॥

तत्त्व०—गुरोरिति । हसेन धातोर्विशेषणात्तदन्तलाभ इत्याह । हसान्तादिति । तथा च तादृशसमुदायो न गुरुर्भवितुमर्हतीति गुरुपदं तद्वल्लक्षकमित्याशयेनाह । गुरुमत इति । प्रशसायां रूप इत्यादिनिर्देशाद्विपर्ययोऽपि नाशक्यः ॥

## प्रत्ययांतात् ॥ १२०३ ॥ स्त्रियामङ् ॥ चिकीर्षा । लोलूया । कण्डूया । पुत्रकाम्या ॥

सुबो०—प्रत्ययांतात् । धातोरङ् प्रत्ययः स्यात् स्त्रियाम् । डुकृञ् करणेऽस्मात् इच्छायामात्मन इति सप्रत्यये कृते वुः से इतीण् न । नानिटि से इति न गुणः। से-दीर्घ इति दीर्घे कृते ऋत इरितीर् स्वोर्विहसे इति दीर्घः द्वित्वादि पूर्ववत् । स धातु-रिति धातुत्वादङ् । कर्तुमिच्छतीति । चिकीर्षतीति चिकीर्षा । लूञ् छेदनेऽस्मादति-शये हसादेरिति यङ् द्वित्वं च यङीति । पूर्वस्य गुणः । लोलूयते इत्यस्मादङ्प्रत्यये यत इत्यल्लोपः । अतिशयेन लूनातीति लोलूयते इति लोलूया । कंडूञ् गात्रविघ-र्षणे । अस्मात् कंड्वादिभ्य इति यक् यगंतादङि परे यत इत्यलोपः। कंडूयते इति कंडूया । पुत्रशब्दात्काम्यश्चेति काम्यप्रत्ययस्ततोऽङ् यत इत्यलोपः । पुत्रमिच्छ-तीति पुत्रकाम्यति पुत्रकाम्यतीति पुत्रकाम्या ॥

तत्त्व०—प्रत्ययान्तात् । कडूयेति । कड्वादिपदान्तात् । केवलात् क्तिरपि । कडूतिः ॥

धात्वर्थनिर्देशे वुण् वक्तव्यः ॥ १२०४ ॥ आशिका । शायिका ॥

सुबो०—धात्वर्थनिर्देशे वुण् वक्तव्यः। आशिका । शायिका। काप्यत इतीत्वम्॥

इक्श्तिपौ धातुनिर्देशे ॥ १२०५ ॥ पचिः । पचतिः ॥

सुबो०—इक्श्तिपौ धातुनिर्देशे । इक्श्तिपौ प्रत्ययावाह । कित्त्वाद्गुणो न शित्वाच्चतुर्वत् । डुपचष् पाके । पचिः । अप् कर्त्तरीत्यप् । पचतिः बहुलमित्यनुवृत्तेः क्वचिन्नेतौ । भुवो वुगिति ॥

तत्त्व०—इक्श्तिपाविति । निर्देशोऽनुकरणं बाहुलकत्वात् क्वचिन्न । गुम्भ्य इत्यादौ ॥

ण्यन्तार्थासश्रंथघट्टवन्दिविदिइषिभ्यः स्त्रियां युः ॥१२०६॥ कारणा । अर्थना । आसना । श्रंथना । घटना । वन्दना । वेदना । एषणा ॥

सुबो०—ण्यंतार्थासश्रंथघटिवंदिविदिइषिभ्यः स्त्रियां युः । एभ्यो युः स्यात् । अङोऽपवादः । युप्रत्ययमाह । युवोरित्यनादेशः । डुकृञ् करणे । णेरिति णिलोपः। कारणा । हृञ् हरणे । हारयतीति हारणा । अर्थ याच्ञायाम् । अर्थयतीति अर्थना । त्रीण्यपि ण्यंतोदाहरणानि । आस उपवेशने । आस्यंतेऽस्यामिति आसना। ण्यण्प्रत्यये तु आस्या । श्रंथ संदर्भे । श्रंथना । घट चेष्टायाम्। घटना । वदि अभिवादनस्तुत्योः । वंदना । अत्र विद्लृ लाभे अयमेव गृह्यते । वेदना । ज्ञानार्थस्य विदेस्तु संवित्तिः । अनिच्छार्तस्येषेरत्र ग्रहणम् । इष गतौ । अन्वेषणा ॥

तत्त्व०—ण्यन्तासंघटचलने । ण्यादिः चुरादेस्तु ण्यन्तत्वादेव विद्लृ लाभार्थः । ज्ञाने तु विद चेतनादिष्विति चुरादिण्यन्तस्यैव । ईषेस्तु गत्यर्थस्याभीक्ष्णार्थस्य च न ।रिच्छार्थस्य ॥

इञ् अजादिभ्यः ॥ १२०७ ॥ आजिः । आतिः ॥

सुबो०—इञ् अजादिभ्यः। अजप्रभृतिभ्यो धातुभ्य इञ् स्यात् । इञ्प्रत्ययमाह । ञित्वाद्वृद्धिः । अज गत्यादौ । बाहुलकादजेर्वीभावो न । आजिः संग्रामः । अट गतौ । आटिः । अत सातत्यगमने । आतिः ॥

तत्त्व०—इञजा । ञित्वाद्वृद्धिः । आजिरिति । वीभावस्तु न बाहुलकात् ॥

विभाषाख्यानपरिप्रश्नयोरिञ् च॥१२०८॥ आक्रोशे नञ्यनिः॥ अकरणिः । अजननिः ॥

सुबो०—विभाषाख्यानपरिप्रश्नयोरिञ् च । परिप्रश्ने आख्याने च गम्ये धातोरिञ् वा स्यात् वुञ् च यथाप्राप्तमन्येऽपि प्रत्यया भवंति । का त्वं कारिं कारिकां कृत्यां कृतिं वाऽकार्षीः । एवं गणिं गणिकां गणनाम् । पचिं पाचिकां पचां पक्तिम् । आख्यानेऽप्येवम् ॥

**इक् कृष्यादिभ्यः ॥१२०९॥ कृषिः । गिरिः ॥**

सुबो०—इक् कृष्यादिभ्यः । इक्प्रत्ययमाह कित्त्वान्न गुणः । कृष् विलेखने । कृषिः । गॄ निगरणे । ऋत इरितीर् । गिरिः । कॄ विक्षेपे । किरिः । आवश्यकाधमर्ण्ययोर्णिनिः । अवश्यंकारी । शतंदायी । भविष्यदर्थे णिनिश्च । ग्रामंगामी ॥

तत्त्व०—इक् । कित्त्वान्न गुणः । कृषिरिति । ऋत इर् । गिरिः ॥

**पूर्वकाले क्त्वा ॥१२१०॥ धातोः समानकर्तृके धातौ प्रयुज्यमाने पूर्वकालेऽर्थे क्त्वा प्रत्ययः ॥**

सुबो०—पूर्वकाले क्त्वा । समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । पूर्वकालेऽत्र बहुव्रीहिः । क्त्वा तु अव्ययकृतो भाव इति भावे । भावोऽपि घञादाविव नेह सिद्धावस्थापन्नः किंतु साध्यावस्थापन्नः । स च धातुनैव लब्धः । क्त्वाप्रत्ययार्थभूता क्रिया च क्रियांतरं प्रति विशेषणं भवति । क्त्वाप्रत्ययमाह । कित्त्वान्न गुणः । क्त्वाद्यंतामित्यव्ययत्वाद्विभक्तेर्लुक् ॥

तत्त्व०—पूर्वकाले । धातोरिति । पूर्वकालक्रियावचनादित्यर्थः । समानकर्तृके धातौ प्रयुज्यमाने । यस्माद्धातोः क्त्वा विधीयते तत्क्रियाकर्त्ता यस्य धातोः कर्त्ता तस्मिन् प्रयुज्यमाने क्त्वा प्रत्ययो भवतीत्यर्थः । स्नात्वा भुङ्क्ते इत्यत्र स्नानभोजनक्रिययोरेक एव कर्त्ता । स्नानक्रियाया पूर्वभावित्वेन स्नाधातोः क्त्वा । यद्यपि शक्तिः कारकं सा च प्रतिक्रियं विद्यते तथापि शक्तिमतोरभेदादेककर्तृकत्वमुक्तम् । एवमेककर्तृकाणामपि नत्वा स्तुत्वा व्रजति । ननु चात्र सर्वपूर्वाया एव भविष्यत्ययथामीषां विप्राणां पूर्वमानयितामित्युक्ते सर्वपूर्व एवानीयते । अत्र वदति । आख्यातवाच्यायाः विशेषणत्वेन प्राधान्यं तेन तामेव प्रति सर्वासां विशेषणत्वात् परस्परेण सम्बन्धः। नहि भिक्षुको भिक्षुकान्तरं याचते किन्तु सर्व एव प्रभुमिति न तैरिह न स्तुत्यपेक्षं पौर्वकाल्यमीति । पूर्वं भुङ्क्ते ततो व्रजतीत्यत्र तु पूर्वशब्देनैककालस्योक्तत्वान्न क्त्वा प्रत्ययः । अस्यते भोक्तुमित्यपि भवति । आसित्वा भोक्तुमिति न भवति । अनभिधानात् । किन्त्वासित्वा भुंक्त इत्येव ॥

**क्त्वा सेट् किन्न ॥१२११॥ धातोः सेट् क्त्वा किन्न ॥ वर्तित्वा । शयित्वा ॥**

सुबो०—क्त्वा सेट् किन्न । धातोः परः सेट् क्त्वा किन्न स्यात् । वृतु वर्तने । कृत इतीट् । वर्तित्वा । शीङ् स्वप्ने । शयित्वा । सेट् किम् । कृत्वा । कित इतीण्न ॥

**मृडमृदगुधकुषक्लिशवदवसरुदविदमुषग्रहिभ्यः कित् ॥१२१२॥ मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । क्लिशित्वा । उदित्वा । उषित्वा । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा ॥**

सुबो०—मृडमृदगुधकुषक्लिशवदवसरुदविदमुषग्रहिभ्यः कित् । एभ्यो धातुभ्यः सेट् क्त्वा कित् । मृड सुखे । मृद क्षोदे । गुध परिवेष्टने । गुध रोषे च । कुष निष्कर्षे । क्लिशु हिंसायां दिवादिः । क्लिशु विबाधने । क्र्यादिः । वद व्यक्तायां वाचि ।

वस निवासे । रुदिर् अश्रुविमोचने । विद् ज्ञाने । मुष स्तेये । ग्रह उपादाने । मृड मृडित्वा । मृद मृदित्वा । गुध गुधित्वा । कुष कुषित्वा । क्लिशु ऊदित्वाद्वेट् । क्लिशित्वा । क्लिष्ट्वा । वदयजामिति संप्रसारणम् । उदित्वा । वस वसिक्षुध्योरितीट् । यजामिति संप्रसारणम् । घसादेरिति षः। उषित्वा । रुदिर् रुदित्वा । विद् विदित्वा । मुष मुषित्वा । ग्रहामिति संप्रसारणम् । ईटो ग्रहामिति दीर्घः । गृहीत्वा ॥

**नोपधात्थफान्ताद्वा ॥ १२१३ ॥ कित् । ग्रंथित्वा ग्रथित्वा । गुंफित्वा गुफित्वा ॥**

सुबो०—नोपधात् थफांताद्वा । नोपधाद्धातोः थफान्ताच्च परः सेट् क्त्वा वा कित् स्यात् । ग्रंथ संदर्भे । कित्त्वान्नो लोप इति नलोपः। ग्रथित्वा ग्रंथित्वा । गुफ गुंफने । कित्वात्पक्षे नलोपः । गुफित्वा गुंफित्वा । नोपधात् किम् । कोथित्वा । रेफित्वा । कुथ पूतीभावे । रिफ कत्थनयुद्धनिंदाहिंसादानेषु । इह इवर्णोपधादिति विकल्पोऽपि न भवति नोपधग्रहणसामर्थ्यात् ॥

**अलंखल्वोः प्रतिषेधे ॥ १२१४ ॥ अलंभुक्त्वा । खलुकृत्वा ॥**

सुबो०—अलंखल्वोः प्रतिषेधे । धात्वर्थे अलंखल्वोरुपपदयोर्धातोः क्त्वा स्यात् । भुज पालनादौ । अलंभुक्त्वा । डुकृञ् करणे । कित इतीट् न । खलुकृत्वा । अलंखल्वोः किम् । माकार्षीत् । प्रतिषेधयोः किम् । अलंकारः ॥

**उदितः क्त्वो वेट् ॥१२१५॥ एषित्वा इष्ट्वा । भ्रमित्वा भ्रान्त्वा ॥**

सुबो०—उदितः क्त्वो वेट् । उदितो धातोः परस्य क्त्वाप्रत्ययस्येड् वा स्यात् । इषु इच्छायाम् । उदित्वाद्वेट् । इट्पक्षे क्त्वा सेडित्यकित्वाद्गुणः । एषित्व इडभावे ष्टुत्वम् । इष्ट्वा । भ्रमु चलने । उदित्वाद्वेट् । भ्रमित्वा । इडभावे अमांतस्येति दीर्घः। भ्रान्त्वा ॥

तत्त्व०—उदित इति । उदिधस्य स तथा तस्मात् ॥

**अदो जग्धुः ॥ १२१६ ॥ जग्ध्वा ॥**

सुबो०—अदो जग्धुः । अद भक्षणे । अस्य क्षधादेशः क्त्वाप्रत्यये । तथोर्द्ध इति धः । खसे चपा इति धस्य कः । झभे जबा इति कस्य गः । जग्ध्वा ॥

**समासे क्यप् ॥ १२१७ ॥ समासे सति पूर्वकाले क्यप् समानकर्तृके धातौ प्रयुज्यमाने ॥ सम्भृत्य करोति । प्रणम्य गच्छति । अनञ्पूर्व इत्येके । अकृत्वा ॥**

सुबो०—समासे क्यप् । अव्ययपूर्वपदे अनञ्समासे समानकर्तृकयोर्धात्वर्थयोः

पूर्वकाले विद्यमानाद्धातोः क्यप् स्यात् । क्यप्प्रत्ययमाह कित्वाद्गुणो न । पित्वात् ह्रस्वस्य पितीति तुक् । डुभृञ् धारणादौ । णम् प्रह्वत्वे शब्दे च । प्रणम्शब्दो नाम्नश्च कृतेति क्त्वांतेन नित्यं समस्यते । संभृत्य । प्रणम्य । अनञ् किम् । अकृत्वा । अव्ययपूर्वपदे इति किम् । परमकृत्वा । मांतानिटां धातूनां तु मस्य लोपो वा भवति क्यपि । वनतितनोत्यादीनां तु लोपस्त्वनुदात्ततनामिति नित्यम् । अमस्य लोपः । आगत्य आगम्य । प्रणत्य प्रणम्य । अन्यत्र तु नित्यम् । प्रहत्य । प्रमत्य । वितत्य॥

तत्त्व०–समासे क्यप् । समानकर्तृकस्य एव यत्तु मत्प्रसूतिमनाराध्य इत्यादिमहाकविप्रयोगाद्भिन्नकर्तृकेऽपि क्यबिति वासुदेवेनोक्तम् । तन्महान्तो न क्षमते स्थितस्येत्यध्याहार्येणैव तत्र निर्वाहः । ओदनः पक्त्वा भुज्यत इत्यत्र प्रधानशक्त्याभिधाने गुणशक्तिरभिहितवत्प्रकाशते इति न्यायात् प्रधानक्रियया कर्मोक्तमतो गुणक्रियायाप्राप्तिकर्मविभक्तिर्न भवति ॥

**क्यपि लघुपूर्वात्परस्य णेरय् ॥ १२१८ ॥ परिणमय्य । लघुपूर्वात्किम् । संप्रधार्य ॥**

सुबो०–क्यपि लघुपूर्वात् परस्य णेरय् । लघुः पूर्वो यस्माद्वर्णात् लघुपूर्ववर्णात्परस्य णेरयादेशः स्यादित्यर्थः । णम् प्रह्वत्वे शब्दे च । अस्मात्प्रयोजकणिप्रत्यये जनीजॄषित्यमतत्वान्मित्वम् । मितां ह्रस्व इति ह्रस्वस्ततो णेरयादेशः । प्रणमय्य । गण संख्याने । चुरादिरदंतः । अस्मात् स्वार्थे णिप्रत्यये यत इत्यलोपः । नन्विह कृतस्याल्लोपस्य स्थानिवद्भावेन लघुपूर्वकवर्णात्परत्वं नास्ति कथमयादेशः स्यात् । उच्यते । अत्रायादेशे कर्तव्ये अल्लोपस्य स्थानिवत्वं भाष्यादौ न स्वीकृतमस्ति । विगणय्य । लघुपूर्वादिति किम् । संप्रधार्य । संपूर्वात् धृ धारणे अस्मात् प्रयोजकणिप्रत्ययांतात् क्यपि कृते णेरिति णिलोपः ॥

**आप्नोतेर्वा ॥ १२१९ ॥ प्रापय्य प्राप्य ॥**

सुबो०–आप्नोतेर्वा । आप्लृ व्याप्तावस्मात्परस्य णेरयादेशो वा स्यात् । अप्राप्तविभाषेयम् । तथा च श्रीहर्षः । " अयमयोगिवधूवधपातकी भ्रमिमवाप्य दिवः खलु पात्यते । " इत्यत्रावाप्येत्यस्यावापय्येत्यर्थो बोध्यः ॥

**क्यपीत्वाभावः ॥ १२२० ॥ प्रदाय । प्रधाय । प्रस्थाय । प्रसाय । मिनोतिमीनातीत्यात्वम् । प्रमाय । निमाय । एवं लिलीङोरात्वं वेत्यादि । विलीय विलाय ॥**

सुबो०–क्यपीत्वाभावः । दादेरित्वं स्थामीत्वं च प्राप्तमनेन निषिध्यते । डुदाञ् दाने । प्रदाय । ष्ठा गतिनिवृत्तौ । प्रस्थाय । षोऽन्तकर्मणि । प्रसाय । डुधाञ् धारणादौ । विधाय । कथं तर्हि । निपीय यस्येति श्रीहर्षप्रयोग इति चेदत्राहुः । दिवादिगणस्थस्य पीङ् पाने इत्यस्य रूपमिति ॥

कालेऽपि क्वचित्॥१२२१॥ नेत्रे संमील्य हसति। मुखं व्यादाय स्वपिति ॥

सुबो०-कालेऽपि क्वचित् । क्वापि स्यात् । डुदाञ् दाने । व्यादाय यदैव स्वपिति तदैव मुखं व्यादत्ते । मील निमीलने । निमील्य यदैव हसति तदैव नेत्रे संमीलयतीत्यर्थः ॥

पौनःपुन्ये णम्पदं द्विश्च ॥१२२२॥ समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले धातोर्णम् क्त्वा च णमन्तस्य द्विर्वचनम् ॥ पायंपायं गच्छति। भोजंभोजम्। स्मारंस्मारम् । मितां ञ्यन्तानामिणि णमि च वा दीर्घः । गामंगामम् । गमंगमम् । लाभंलाभम् । लंभंलंभम् ॥

सुबो०-पौनःपुन्ये णमूपदं द्विश्च । पौनःपुन्ये द्योत्ये समानकर्तृकयोः पूर्वकाले धातोर्णम् स्यात् चकारात् क्त्वा च णमंतस्य द्वित्वं च । णमूप्रत्ययमाह । णित्वाद्वृद्धिः क्त्वाद्यंतं चेत्यव्ययत्वाद्विभक्तेर्लुक् । पा पानेऽस्मात् णमि कृते आतो युगिति युक् । पायंपायम् । पक्षे पीत्वापीत्वा । स्थामीतीत्वम् । भुज पालनादौ । भोजंभोजम् । भुक्त्वा २ । स्मृ चिंतायाम् । स्मारं २ । पक्षे स्मृत्वा २ । गम्लृ गतौ। ञ्यंतादस्मात् णमि कृते जनीजॄषित्यमंतत्वात् मित् संज्ञायां मितां ह्रस्वे इति ह्रस्वे कृते मितां ञ्यंतानामिणि णमि चेति वा दीर्घः । गामं २ । गमम् २ । पक्षे गत्वा २ । डुलभष् प्राप्तौ । अस्मात् णमि कृते लभेरिणमोरिति वा नुम् । लंभम् २ । नुमभावे वृद्धिः । लाभम् २ । पक्षे लब्ध्वा २ ॥

तत्त्व०-पौनःपुन्ये णमूपदं द्विश्च । णमन्तस्य नामत्वात्स्यादौ पदत्वम् । पापमिति । आतो युगिति युक् । गामामिति । ञमांतस्येति दीर्घः। लभामिति । णमिवानुम् । व्यवस्थितत्वादुपसृष्टस्य प्रलंभमित्यादौ नित्यमेव॥

कथमादिषु स्वार्थे कृञो णम् ॥१२२३॥ कथंकारम् । अन्यथाकारम् । एवंकारम् । इत्थंकारं पठति । एवंकारं पठतीत्यर्थः ॥

सुबो०-कथमादिषु स्वार्थे कृञो णम् । कथमित्थमन्यथैवमित्यादिषूपपदेषु कृञो णम् स्यात् यदि कृञ् प्रयोगाऽनर्हः स्यात्। कथंकारं पठति। कथं पठतीत्यर्थः। अन्यथाकारं भुंक्ते । अन्यथा भुंक्तेत्यर्थः । एवंकारं करोति । एवं करोतीत्यर्थः । इत्थंकारं वदति । इत्थं वदतीत्यर्थः । प्रयोगानर्ह इति किम् । शिरोऽन्यथा कृत्वा भुंक्ते ॥

अग्रे प्रथमपूर्वेषूपपदेषु क्त्वाणमौ वा ॥ १२२४ ॥ अग्रेभोजं

व्रजति। अग्रेभुक्त्वा। प्रथमम्भोजं प्रथमम्भुक्त्वा। पूर्वम्भोजं पूर्वम्भुक्त्वा। पक्षे प्रत्ययाभावः। अग्रे भुंक्ते ततो व्रजति। आभीक्ष्ण्ये तु पूर्वेण नित्यमेव णम्। अग्रेभोजं भोजं व्रजति॥

सुबो०—अग्रे प्रथमपूर्वेषूपपदेषु क्त्वाणमौ वा। पौनःपुन्ये इति नानुवर्त्तते। एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमौ वा स्तः। अग्रेति सप्तम्यंतस्यानुकरणं प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वाद्विभक्तेर्लुक् न कृतः। अग्रेभोजं अग्रेभुक्त्वा वा व्रजति। अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीत्यर्थः। पक्षे लडादयः। अग्रे भुंक्ते। पौनःपुन्ये तु नित्यमेव णम् क्त्वा च। अग्रेभोजं २ भुक्त्वा २ वा व्रजति॥

कर्मण्याक्रोशे कृञः खमुञ्॥ १२२५॥ चौरंकारमाक्रोशति। चौरशब्दमुच्चार्येत्यर्थः॥

सुबो०—कर्मण्याक्रोशे कृञः खमुञ्। कर्मण्युपपदे आक्रोशे गम्ये करोतेः खमुञ् स्यात्। खमुञ्प्रत्ययमाह। खित्वात्खिति पदस्येति मुम्। ञित्वाद्वृद्धिः। उकार उच्चारणार्थः। करोतिरुच्चारणेऽर्थे वर्तते। अत्र चौरंकारमाक्रोशति चौरशब्दमुच्चार्येत्यर्थः॥

तत्त्व०—चौरंकारमिति। खित्वान्मुम्। करोतिरत्रोच्चारणार्थः। चौरादयश्च शब्दप्रधानाः। चौरत्वमित्युच्चार्य क्रोशतीत्यर्थः। नात्र चोरत्वं करण किं स्वाक्रोशसंपादनार्थमचोरोऽपि चोर इत्युच्यते॥

च्व्यर्थेषु स्वाद्वर्थे॥ १२२६॥ कृञो णम्स्यादेककर्तृकयोः पूर्वकाले पूर्वपदस्य मान्तत्वं निपात्यते॥ अस्वादुं स्वादुं कृत्वा भुंक्ते। स्वादुंकारं भुंक्ते। संपन्नंकारम्। लवणंकारम्। सम्पन्नलवणशब्दौ स्वादुपर्यायौ। क्त्वापि। स्वादुं कृत्वा भुंक्ते॥

सुबो०—च्व्यर्थेषु स्वाद्वर्थे। कृञो णम् स्वादुपर्यायेषूपपदेषु एककर्तृकयोः पूर्वकाले करोतेर्णम् स्यात्। पूर्वपदस्य मांतत्वं निपात्यते॥

तत्त्व०—स्वाद्वर्थे इति। प्रकृतेन खमुञासिद्धेऽपि अव्ययत्वान्न नुम् स्यात्। ईषच्च निवृत्तिरित्याद्यर्थं निपातनम्॥

यथातथयोरसूयाप्रतिवचने॥ १२२७॥

सुबो०—यथातथयोरसूयाप्रतिवचने। यथातथयोरुपपदयोः॥

तत्त्व०—यथातथयोरिति॥

कृञः सिद्धाऽप्रयोगे णम्॥ १२२८॥ यथाकारमहं भोक्ष्ये। तथाकारं भोक्ष्ये किं तवानेन। सिद्धाप्रयोगे किम्। सिद्धंकृत्वा भुंक्ते॥

सुबो०—कृञः सिद्धाप्रयोगे णमु । करोतेः सिद्धाऽप्रयोगे णमु स्यात् । सिद्धः प्रयोगोऽस्य एवं भूतश्चेत् कृञ् व्यर्थत्वात् प्रयोगानर्ह इत्यर्थः । गुणेषु दोषारोपणमसूया । असूयया प्रतिवचनं असूयाप्रतिवचनं तस्मिन् वाच्ये सति । यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये । यथा भोक्ष्येऽहं तथा भोक्ष्य इत्यर्थः ॥

तत्त्व०—सिद्धाप्रयोगे इति । सिद्धः अप्रयोगेऽस्य कृञो निःप्रयोजनत्वात्प्रयोगानर्ह इत्यर्थः ॥

**कर्मणि दृशिविदोः साकल्ये ॥ १२२९ ॥** कन्यादर्शं वरयति । सर्वाः कन्या इत्यर्थः। ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति वा तं तं सर्वं भोजयतीत्यर्थः ॥

सुबो०—कर्मणि दृशिविदोः साकल्ये । कर्मण्युपपदे दृशिविदोर्णमु स्यात् साकल्ये । सकलस्य भावः साकल्यं तस्मिन् । दृशिर् प्रेक्षणे । विद ज्ञाने । विद्लृ लाभे । विद विचारणे इति त्रयाणां ग्रहणम् ॥

**यावति विन्दजीवोः ॥१२३०॥** यावद्वेदं भुंक्ते । यावल्लभते तावदित्यर्थः । यावज्जीवमधीते विप्रः ॥

सुबो०—यावति विंदजीवोः । यावच्छब्दे उपपदे विद्लृ लाभे जीव प्राणधारणे आभ्यां णमु स्यात् ॥

तत्त्व०—यावदिति । पूर्वकाल इतीह नास्ति । असाकल्यार्थमिदम् । साकल्ये दृशिविदोरित्येव सिद्धेः ॥

**कर्मणोश्चर्मोदरयोः पूरेः ॥ १२३१ ॥** चर्मपूरं स्तृणाति । उदरपूरं भुंक्ते ॥

सुबो०—कर्मणोश्चर्मोदरयोः पूरेः । चर्मोदरयोः कर्मणोरुपपदयोः पूरी आप्यायनेऽस्मात् णमु स्यात् । चर्मपूरं स्तृणाति । आच्छादयतीत्यर्थः ॥

**कर्मण्युपपदे पूरेरूलोपश्च वा ॥ १२३२ ॥** वर्षप्रमाणे गम्ये णमु ॥ गोष्पदप्रं वृष्टो देवः । गोष्पदपूरं वा । मूषिकाबिलप्रं वृष्टो देवः । मूषिकाबिलपूरं वा ॥

सुबो०—कर्मण्युपपदे पूरेरूलोपश्च वा । वर्षप्रमाणे गम्ये णमु स्यात् समुदायेन वर्षप्रमाणे गम्ये । " वर्षे वृष्टिः " इत्यमरः । वर्षस्य वृष्टेः प्रमाणं वर्षप्रमाणं तस्मिन् ॥

**चैलार्थेषु कर्मसूपपदेषु क्नोपेर्वर्षप्रमाणे ॥ १२३३ ॥** णमु ॥ चैलक्नोपं वृष्टो देवः । वस्त्रक्नोपम् । वसनक्नोपम् ॥

सुबो०—चैलार्थेषु कर्मसूपपदेषु क्नोपेर्वर्षप्रमाणे । चैलमर्थो येषां तानि चैलार्थानि

तेषु कर्मसूपपदेषु क्नूयी शब्दे उंदे च ण्यंतादस्मात् णम् स्यात् । क्नूय्धातोः प्रयोजके णिप्रत्यये कृते ह्रीव्लीरीक्नूयीक्ष्मायीनामिति पुक् । यवयोर्वसे हकारे चेति यलोपः । पुकीति गुणः । क्नोपीति ण्यंताण्णम् । णेरिति णिलोपः । चैलं क्नोपयत्यार्द्रीकरोतीति चैलक्नोपम् ॥

**निमूलसमूलयोः कषः ॥१२३४॥ कषादिषु यथाविध्यनुप्रयोगः प्रयोक्तव्यः ॥ अत्र प्रकरणे पूर्वकाल इति न संबध्यते । असम्भवादप्रतीतेश्च । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं वा कषतीत्यर्थः ॥**

सुबो०–निमूलसमूलयोः कषः । निमूलसमूलयोः कर्मणोरुपपदयोः कष हिंसायामस्मात् धातोर्णम् स्यात् ॥

तत्त्व०–निमूलप्रकृतिधातोरेव कषादेर्नत्वन्यधातुयोगेऽपीति बोध्यम् । निमूलकाषमिति । निगतं मूलमस्येति निमूल एकस्यापि धात्वर्थस्य निमूलादिविशेषणसबधाद्भेदे सति सामान्यविशेषभावेन विशेषणविशेष्यभावः एवमग्रेऽपि ॥

**शुष्कचूर्णरूक्षेषु कर्मसूपपदेषु पिषः ॥ १२३५ ॥ शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् ॥**

सुबो०–शुष्कचूर्णरूक्षेषु कर्मसूपपदेषु पिषः । एषु कर्मसूपपदेषु पिष्लृ संचूर्णनेऽस्मात् धातोर्णम् स्यात् ॥

**समूलाकृतजीवेषु कर्मसु हन्कृञ्ग्रहां णम् ॥ १२३६ ॥ समूलघातं हन्ति । समूलं हन्तीत्यर्थः । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवं गृह्णातीत्यर्थः ॥**

सुबो०–समूलाकृतजीवेषु कर्मसु हन्कृञ्ग्रहां णम् । समूलादिषु कर्मसूपपदेषु हनादिभ्यो णम् स्यात् । हनादीनामेव यथाविध्यनुप्रयोगश्च कर्त्तव्यः । समूलोपपदाद्धंतेर्णमि कृते हनो घदिति घत् । ततोऽत उपधाया इति वृद्धिः। समूलघातम् । जीवोपपदाद् गृह्णातेर्णमि कृते वृद्धिः । जीवग्राहम् । जीवतीति जीवः । नाम्युपधादिति कः । जीवंतं गृह्णातीत्यर्थः ॥

**करणे हनः ॥ १२३७ ॥ पादघातं हन्ति । पादेन हन्तीत्यर्थः ॥**

सुबो०–करणे हनः । करणकारकोपपदात् हंतेर्णम् स्यात् हंतेरनुप्रयोगश्च । नित्यसमासार्थमिदं सूत्रम् । भिन्नधातुसंबंधे तु हिंसार्थानामिति वक्ष्यते ॥

**स्नेहने पिषः ॥१२३८॥ उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः ॥**

सुबो०—स्नेहने पिषः । स्नेहनकरणोपपदात् पिष्ऌ संचूर्णनेऽस्मात् णम् स्यात् । स्निह्यते येन तत् स्नेहनं तस्मिन् । पेषंवासवाहनधिषु परेषु उदकस्योदादेशो वक्तव्यः । इत्युदादेशः । उदपेषम् ॥

**हस्तार्थे करणे वर्तिग्रहोः ॥ १२३९ ॥** हस्तवर्त्तं वर्त्तयति । करवर्त्तम् । हस्तेन गुटिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् ॥

सुबो०—हस्तार्थे करणे वर्तिग्रहोः । हस्तार्थकरणकारकोपपदाभ्यां वर्तिग्रहिभ्यां णम् स्यात् अनयोर्यथाविध्यनुप्रयोगश्च । वृतु वर्तने । ण्यंतादस्मात् णमि कृते णेरिति णिलोपः । हस्तवर्तम् । हस्तग्राहं गृह्णाति । हस्तेन गृह्णातीत्यर्थः ॥

**धनार्थे करणे पुषः ॥ १२४० ॥** धनपोषं पुष्णाति । स्वपोषम् । गोपोषम् ॥

सुबो०—धनार्थे करणे पुषः । धनपर्यायविशेषे चोपपदेषु पुष पुष्टावस्मात् णम् स्यात् अनुप्रयोगश्च ॥

**आधारे बन्धः ॥ १२४१ ॥** चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः ॥

सुबो०—आधारे बंधः । अधिकरणोपपदाद्बंध बंधनेऽस्मात् णम् स्यात् अनुप्रयोगश्च ॥

**संज्ञायां बध्नातेः ॥ १२४२ ॥** क्रौञ्चबंधं बद्धः । मयूरिकाबन्धं बद्धः । अट्टालिकाबन्धं बद्धः । बन्धविशेषाणां संज्ञा एताः ॥

सुबो०—संज्ञायां बध्नातेः । संज्ञायां वाच्यायामस्मात् णम् स्यात् ॥

**कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ १२४३ ॥** जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः ॥

सुबो०—कर्त्रोर्जीवपुरुषयोर्नशिवहोः । जीवपुरुषकर्तृकोपपदाभ्यां णश अदर्शने । वह प्रापणे । आभ्यां णम् स्यात् यथाविध्यनुप्रयोगश्च ॥

तत्त्व०—जीवतमिति जीवः । नाम्युपधादिति कः करणे ॥

**ऊर्ध्वे कर्त्तरि शुषिपूरोः ॥ १२४४ ॥** ऊर्ध्वशोषं शुष्यति । ऊर्ध्वः शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वः पूर्यत इत्यर्थः ॥

सुबो०—ऊर्ध्वे कर्तरि शुषिपूरोः । ऊर्ध्वकर्त्रोपपदाभ्यां शुष शोषणे पूरी आप्यायने आभ्यां णम् स्यात् यथा अनयोरनुप्रयोगश्च । ऊर्ध्वशोषं शुष्यति । वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः ॥

**उपमाने कर्मणि कर्त्तरि च ॥ १२४५ ॥** घृतनिधायं निहितं जलम् । घृतमिव सुरक्षितमित्यर्थः । अजनाशं नष्टः । अज इव नष्ट इत्यर्थः । कषादिषु यस्माण्णं विहितस्स एवानुप्रयोक्तव्यः । तथैवोदाहृतम् ॥

सुबो०—उपमाने कर्मणि कर्त्तरि च । उपमानवाचके कर्तरि कर्मणि चोपपदे धातोर्णम् स्यात् तस्यैव धातोरनुप्रयोगश्च ॥

**उपदंशस्तृतीयायाम् ॥ १२४६ ॥** इतः प्रभृति पूर्वकाल इति संबध्यते । मूलकोपदंशं भुंक्ते । मूलकेनोपदंशम् । दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात्तृतीया । यद्यप्युपदंशिना सह न शाब्दः संबंधः तथाऽप्यार्थोऽस्त्येव ॥

सुबो०—उपदंशस्तृतीयायाम् । तृतीयांतोपपदादुपदंशतेर्णम् स्यात् । मूलकोपदंशम् । वाक्यमपि च । मूलकेनोपदंशम् ॥

तत्त्व०—उपदंशस्तृतीयायामिति । मूलकोपदशं भुंक्ते । मूलकेनोपदश्य भुक्त इत्यर्थः । अत्र मूलकस्य भुज्यपेक्षया करणत्व शाब्दम् । मूलकेन भुक्ते । किं कृत्वा । उपदश्य । किं अर्थान्मूलकमित्येतदेव कर्म गम्यते॥

**हिंसार्थानां चानुप्रयोगधातुना समानकर्मणां तृतीयान्ते उपपदे ॥ १२४७ ॥** दण्डोपघातं गाः कालयति । दंडेनोपघातं दण्डताडं दण्डेन ताडं वा । समानकर्मकाणां किम् । दण्डेन चौरमाहत्य गाः कालयतीत्यर्थः ॥

सुबो०—हिंसार्थानां चानुप्रयोगधातुना समानकर्मणां तृतीयांते उपपदे । तृतीयांतोपपदादनुप्रयोगधातुना सह समानकर्मकाद्धिंसार्थाण्णम् स्यात् । हंतेर्णमि कृते हनो घदिति घत् वृद्धिः । दंडोपघातं गाः कालयति । कल विक्षेपे चुरादिः । प्रेरयतीत्यर्थः । दंडताडम् । तड आघाते चुरादिः ॥

**सप्तम्यां तृतीयायां चोपपदे उपपीडरुधकर्षः ॥ १२४८ ॥** पार्श्वोपपीडं शेते । पार्श्वाभ्यामुपपीडम् । पार्श्वयोरुपपीडं वा । व्रजोपरोधं गाः स्थापयति । व्रजेनोपरोधम् । पाण्युपकर्षं धानाः संगृह्णाति । पाणावुपकर्षम् । पाणिनोपकर्षम् ॥

सुबो०—सप्तम्यां तृतीयायां चोपपदे उपपीडरुधकर्षः । सप्तमीतृतीयांतोपपदेभ्य उपपूर्वेभ्यः पीडादिभ्यो णम् स्यात् । इह सूत्रे पीडादीनां समाहारद्वंद्वं कृत्वा

उपपूर्वः पीडारुधकर्ष इत्युत्तरपदलोपी समासः कर्त्तव्यः । सूत्रे पुंस्त्वं सौत्रं ज्ञेयम् । पंचम्यर्थे प्रथमा च ज्ञेया । पीड पीडायाम् । रुधिर आवरणे । कृष विलेखने । अयं भौवादिक एव गृह्यते । गुणसहितस्य कृषेरपा निर्देशात् । तत्फलं तुदादेर्व्युदासः । यद्यपि विलेखने एव तौदादिकोऽपि पठ्यते तथापि क्षेत्रविषयकविलेखने एव तौदादिकः प्रयुज्यते । एवं च तौदादिकात् कर्षेः क्यप् प्रत्यय एव भवति । क्षेत्रे उपकृष्य हलेनोपकृष्येति ॥

**तृतीयासप्तम्योरुपपदयोस्संनिकर्षे धातोः ॥१२४९॥ केशग्राहं युध्यन्ते । केशेषु गृहीत्वा युध्यंत इत्यर्थः । हस्तग्राहम् । हस्तेन गृहीत्वा ॥**

सुबो०—तृतीयासप्तम्योरुपपदयोः सन्निकर्षे धातोः । तृतीयासप्तम्युपपदाद्धातोर्णम् स्यात् । सन्निकर्षः संबंधः ॥

**तृतीयासप्तम्योः प्रमाणे गम्ये धातोः ॥१२५०॥ द्व्यंगुलोत्कर्षं खण्डिकां छिनत्तीति । द्व्यंगुलेन द्व्यंगुले वोत्कर्षम् ॥**

सुबो०—तृतीयासप्तम्योः प्रमाणे गम्ये धातोः । तृतीयासप्तम्युपपदाद्धातोर्णम् स्यात् प्रमाणे गम्ये । द्वयोरंगुल्योः समाहारो द्व्यंगुलं द्व्यंगुलोत्कर्षं द्व्यंगुलेनोपकृष्य परिच्छिद्य इत्यर्थः । खंडिकां छिनत्ति । ह्रस्वः खण्डः खंडिका ताम् ॥

**अपादाने द्वितीयायां च त्वरायां गम्यमानायां धातोः॥१२५१॥ शय्योत्थायं धावति । यष्टिग्राहं युध्यन्ते । लोष्टग्राहम् ॥**

सुबो०—अपादाने द्वितीयायां च त्वरायां गम्यमानायां धातोः । पंचमीद्वितीयांतोपपदाद्धातोर्णम् त्वरायां गम्यमानायाम् । शय्योत्थायं धावति । शय्याया उत्थाय धावतीत्यर्थः । आतो युगिति युक् । उदस्थास्तंभोरिति सलोपः । यष्टिग्राहं युध्यंते । एवं खलु युद्धाय त्वरंते । यष्ट्यादिकमपि गृहीत्वा धावंति । नायुधं प्रतीक्षंते इत्यर्थः ॥

**अपगुरोर्वा णम्योतः ॥ १२५२ ॥ गुरी उद्यमे । अस्यपगारं युध्यन्ते । अस्यपगोरं वा ॥**

सुबो०—अपगुरोर्वा णम्योतः । गुरी उद्यमे इत्यस्योकारस्यात्वं वा स्यात् णमि प्रत्यये । अस्यपगारं युध्यंते । असिमुद्यम्येत्यर्थः ॥

**अध्रुवे स्वाङ्गे द्वितीयान्ते धातोः ॥ १२५३ ॥ भ्रूविक्षेपं कथ-**

यति ध्रुवं विक्षेपम् । अध्रुवे किम् । शिर उत्क्षिप्य कथयति । येन विना न जीवनं तद् ध्रुवम् ॥

सुबो०–अध्रुवे स्वांगे द्वितीयांते धातोः । द्वितीयांतादध्रुवस्वांगोपपदाद्धातोर्णम् स्यात् ॥

परिक्लिश्यमाने द्वितीयान्ते स्वाङ्गे धातोः ॥ १२९४ ॥ उरःप्रतिपेषं युध्यन्ते । कृत्स्नमुरस्संपीडयित्वेत्यर्थः । "उरोविदारं प्रतिचस्करे नखैः ।" ध्रुवार्थमिदम् ॥

सुबो०–परिक्लिश्यमाने द्वितीयांते स्वांगे धातोः । सर्वतो बाध्यमाने स्वांगे द्वितीयांते उपपदे सति धातोर्णम् स्यात् । पिष्लृ संचूर्णने । उरःप्रतिपेषम् ॥

द्वितीयान्ते विशिपतिपदिस्कंदां व्याप्यमानासेव्यमानयोः ॥ १२९५ ॥ गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन संबंधो व्याप्तिः । क्रियायाः पौनःपुन्यं समासे वा । गेहानुप्रवेशमास्ते । गेहंगेहमनुप्रवेशम् । एवं गेहानुप्रयातम् । गेहानुप्रपादम् । गेहानुस्कंदम् । असमासे गेहस्य णमन्तस्य च पर्यायेण द्वित्वम् । गेहंगेहमनुप्रवेशम् । गेहमनुप्रवेशमनुप्रवेशम् ॥

सुबो०–द्वितीयांते विशिपतिपदिस्कंदां व्याप्यमानासेव्यमानयोः । द्वितीयांतोपपदेभ्यो विशादिभ्यो णम् स्यात् व्याप्त्यर्थे पौनःपुन्ये चार्थे गम्ये । वीप्सायां पदं द्विरिति क्रियासमभिहारे इति द्वित्वं तु न भवति । समासेनैव वीप्सासमभिहारयोरुक्तत्वात् । यद्यपि पौनःपुन्ये णमुक्त एव तथापि द्वितीयांतस्योपपदसंज्ञार्थं समासे वार्थमिति पुनर्विधिः । समासे गेहानुप्रवेशम् । असमासे गेहंगेहमनुप्रवेशमिति च ॥

क्रियांतरेषु कालेषु द्वितीयान्तेषूपपदेषु क्रियाव्यवधाने वर्तमानयोरस्यतितृषोः ॥ १२९६ ॥ द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासम् । द्व्यहतर्षम् । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः ॥

सुबो०–क्रियांतरेषु कालेषु द्वितीयांतेषूपपदेषु क्रियाव्यवधाने वर्तमानयोरस्यतितृषोः ॥ क्रियामंतरयंति व्यवधानेनेति क्रियांतरास्तेषु क्रियांतरकालवाचिषु-शब्देषु

द्वितीयांतेषूपपदेषु सत्सु क्रियाव्यवधाने वर्तमानाभ्यामसु क्षेपणे ञितृष् पिपासार्थाभ्यां णम् स्यात् ॥

**नाम्नि द्वितीयान्ते आदिशिग्रहोः ॥ १२५७ ॥** नामादेशमाचष्टे नामग्राहं कथयति ॥

सुबो०—नाम्नि द्वितीयांते आदिशिग्रहोः । द्वितीयांते नामशब्दोपपदाभ्यां आङ्पूर्वकादिश अतिसर्जने ग्रह उपादाने आभ्यां णम् स्यात् ॥

**अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमौ वा ॥ १२५८ ॥** अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य नीचैः कथनम् । उच्चैःकृत्य उच्चैःकृत्वा उच्चैःकारं वाऽप्रियमाचष्टे । नीचैःकृत्य नीचैःकृत्वा नीचैःकारं वा प्रियं ब्रूते ॥

सुबो०—अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमौ वा । अव्ययपूर्वपदात्करोतेः क्त्वाणमौ वा स्तः । अयथाभिप्रेताख्यानेऽर्थे । यथाभिप्रेतं तथाख्यातमित्यर्थः । अप्रियस्य नीचैः कथनं यथाभिप्रेताख्यानम् । तद्विपरीतं अयथाभिप्रेताख्यानमिति ॥

**तिर्यगुपपदे समाप्तौ कृञः क्त्वाणमौ वा ॥ १२५९ ॥** तिर्यक्कृत्य गत इति तिर्यक्कृत्वा । तिर्यक्कारम् । समाप्य गत इत्यर्थः ॥ समाप्तौ किम् । तिर्यक्कृत्वा काष्ठङ्गतः ॥

सुबो०—तिर्यगुपपदे समाप्तौ कृञः क्त्वाणमौ वा । तिर्यक्शब्दोपपदात्करोतेः क्त्वाणमौ वा स्तः समाप्तौ गम्यमानायाम् । समाप्तौ किम् । तिर्यक्कृत्वा काष्ठं गतः । अग्रतः स्थितम् । पार्श्वतः कृत्वा गत इत्यर्थः ॥

**स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ १२६० ॥** मुखतःकृत्य गतः । मुखतःकृत्वा मुखतःकारम् । मुखतोभूय गत इति । मुखतोभूत्वा । मुखतोभावम् ॥

सुबो०—स्वांगे तस्प्रत्यये कृभ्वोः । तस्प्रत्ययांते स्वांगे उपपदे डुकृञ् करणे । भू सत्तायाम् । आभ्यां णम् स्यात् तस्प्रत्ययो यस्मात्तत् तस्प्रत्ययं तस्मिन् । तस्प्रत्यये किम् । मुखे तस्यतीति मुखतः कृत्वा गतः । तसु उपक्षयेऽस्मात् क्विपि कृते धातुत्वादिह अत्वसोः सावििति दीर्घो न भवति ॥

**नाधार्थप्रत्ययान्ते च्व्यर्थे कृभ्वोः क्त्वाणमौ वा ॥ १२६१ ॥** अनाना नानाकृत्य नानाकृत्वा नानाकारम् । विनाकृत्य विनाकृत्वा

विनाकारम् । नानाभूय नानाभूत्वा नानाभावम् । अनेकद्रव्यमेकं कृत्वा एकधाकृत्य एकधाकृत्वा एकधाकारम् । एकधाभूय एकधाभूत्वा एकधाभावम् । प्रत्ययग्रहणं किम् । हिरुक्कृत्वा । पृथग्भूत्वा ॥

सुबो०-नाधार्थप्रत्ययांते च्व्यर्थे कृभ्वोः क्त्वाणमौ वा । नाधार्थप्रत्ययान्ते च्व्यर्थे विषये उपपदे कृभूभ्यां क्त्वाणमौ वा स्तः । विनञ्भ्यां नानाञाविति नानाञौ प्रत्ययौ । संख्यायाः प्रकारे धा इति धाप्रत्ययः । द्वित्रिभ्यामेधाध्यमुञौ चेति एधाध्यमुञाविति । नाधार्थप्रत्ययाः । एवं द्वैधं कृत्येत्यादि । प्रत्ययग्रहणं किम् । हिरुक् कृत्वा । पृथक् कृत्वा । " हिरुक् मध्ये विनार्थे च " इति रुद्रः । " हिरुगुक्तं च सामीप्ये" इत्यमरमाला । "पृथक् विनांतरेणर्ते हिरुक् नाना च वर्ज्जने ।" इत्यमरः॥

तूष्णींशब्दे भुवः क्त्वाणमौ ॥ १२६२ ॥ तूष्णींभूय गतः । तूष्णींभूत्वा तूष्णींभावम् ॥

सुबो०-तूष्णींशब्दे भुवः क्त्वाणमौ।तूष्णींशब्दे उपपदे भूधातोः क्त्वाणमौ स्तः॥

अन्वक्शब्दे भुवः क्त्वाणमौ वा ॥१२६३॥ आनुकूल्ये गम्ये । अन्वग्भूयास्ते । अन्वग्भूत्वा । अन्वग्भावम् । अग्रतः पार्श्वतः पृष्ठतो वानुकूलो भूत्वा आस्ते इत्यर्थः । आनुकूल्ये किम् । अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वेत्यर्थः ॥

सुबो०-अन्वक्शब्दे भुवः क्त्वाणमौ वा । अन्वक्शब्दे उपपदे भुवः क्त्वाणमौ वा स्तः ॥

वर्णात्कारः ॥ १२६४ ॥ अकारः । इकारः । वकारः ॥

सुबो०-वर्णात्कारः । वर्णनिर्देशे वाच्येऽक्षरात् कारप्रत्ययः स्यात् । निर्देशोऽनुकरणम् । कारप्रत्ययमाह । बहुलग्रहणमत्र कर्त्तव्यम् । तेन क्वचिन्न ॥

तत्त्व०-वर्णात्कार इति । प्रयोगस्य वर्णवाचिनः कारप्रत्ययः अतः अः केशवे विरच्येवेत्यादौ प्रयोगस्थ[illegible] कारप्रत्ययो नेति वासुदेवेनोक्तं तन्न । अकारो वासुदेवः स्यादित्यादौ हसस्वरसमुदा[illegible] कारप्रत्ययो न स्यात् । अतो वर्णनिर्देश इत्यनुवर्त्य वर्णमात्रानुकरण इत्यर्थे आकारस्यो[illegible] अनुकार्यत्वात् । यत्तु लघुभाष्ये न एव नकार इत्यादौ समुदायात्कारप्रत्ययाभावेन [illegible] करण कार इति व्युत्पत्त्यैव सिद्धेरेवमकारादिसिद्धौ वर्णात्कार इति वार्तिकं व्यर्थमि[illegible] । [illegible] अकारप्रकरणं न सिध्येत् । करोतेः पौनरुक्त्यादिसार्थकं वार्तिकमित्युक्तम् । [illegible] । [illegible]मित्यत्र यडन्तकरोतेरुच्चारणार्थत्वे पौनरुक्त्याभावात् ॥

रादिफो वा ॥ १२६५ ॥ रेफः । रकारः॥

सुबो०-रादिफो वा । रकाराक्षराद्वा इफप्रत्ययः स्यात् ॥

**लोकाच्छेषस्य सिद्धिः ॥ १२६६ ॥ यथा मातरादयः ॥**

सुबो०-लोकाच्छेषस्य सिद्धिः । उक्तादन्यः शेषः । अत्रानुक्तस्य सि साधनं लोकादन्यव्याकरणात् ज्ञातव्यम् । यथा । माता च पिता चेति मातरौ तरौ । मातरेति निपातनादिति ॥

श्रीमत्पाठकधुर्यभक्तिविनया नंदंति सद्विद्यया
नानाशास्त्रविचारजातपरमानंदाः स्वभावोज्ज्वलाः ॥
संवेगादिगुणैर्वशीकृतजना विख्यातकीर्तिप्रभा-
स्तेषामस्ति विचक्षणो विनयवान् शिष्यः सदानंदकः ॥ १ ॥
निधिनंदार्वभूवर्षे ( १७९९ ) सदानंदः सुधी मुदे ॥
सिद्धांतचंद्रिकावृत्तिं कृदंते कृतवानृजुम् ॥ २ ॥

इति श्रीसिद्धान्तचंद्रिकाया व्याख्या सुबोधिनीसमाख्याता सदानंदी समाप्ता ।

तत्त्व०-धातूनामानंत्यात्तेभ्यश्चोत्पद्यमानानां कृतामप्यानन्त्यमतो न सर्वशः शब्दा व्युत्पादयितुं शक्य इत्याह । लोकादिति । शेषस्य उक्तादन्यस्य सिद्धिर्निष्पत्तिर्लोकादनादिवृद्धशब्दप्रयोगाद्व्याकरणान्तराच्च ज्ञेयेत्यर्थः । सिद्धिशब्दो मगलवाचक इत्यन्ते प्रयुक्तः । आदिमध्यावसानेषु मंगलमाचरणीयमित्युक्तेः समगलानि शास्त्राणि प्रथन्ते वीरपुरुषकाराण्यापुण्यपुरुषकाराणि भवंत्यध्येतारश्चास्य वर्द्धन्ते । एवं चैतदध्येतॄणां कार्यसिद्धिः स्यादिति ध्वनितम् ॥

लोके शंकरसंज्ञेन श्रीक्षेमकरसूनुना । मुदे भूयादुमाशभोर्विहिता तत्त्वदीपिका ॥ १ ॥
चन्द्रवेदहयभूमिसयुते ( १७४१ ) वत्सरे नभसि मासि शोभने ।
शुक्लपक्षदशमीतिथावियं दीपिका बुधप्रदीपिका कृता ॥ २ ॥
श्रीचण्डिकायाश्चरणारविन्दप्रसादतो यल्लघुदीपिकाभूत् ।
मनीषयापीह भवत्वमुष्या अध्येतुरध्यापनहेतुराशु ॥ ३ ॥

इति श्रीमद्रामकरपौत्रश्रीक्षेमकरसूनुलोकेशंकरविरचिता सिद्धान्तचान्द्रिका-
व्याख्या तत्त्वदीपिका समाप्ता ।

---

पुस्तक मिलनेका ठिकाना-
गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापाखाना,
कल्याण-मुंबई.

